ॐ

परमप्रभावकानुयोगाचार्य(पं०)श्रीउमेदविजयगणीश्वरविजयवीरसूरीश्वरपादकमलेभ्यो नमः ॥

श्रीजयसिंहसूरिग्रथितं-

# कुमारपालभूपालचरित्रं महाकाव्यम् ।

सम्पादकः संशोधकश्च-अनुयोगाचार्य(पं०)श्रीक्षान्तिविजयो गणिः ।

प्रकाशिका

अनुयोगाचार्य (पं०) श्रीक्षान्तिविजयगणिप्रवरोपदिष्ट-

शा. भाईचंद नगीनभाई मंछुभाई अने शा. मणीलाल मोतीलाल मुलजी.

मेनेजिंग ट्रस्टीओ श्रीविजयदेवसुरसङ्घसंस्था ( पेढी ) गोडीजी जैनउपाश्रय पायधुनि मुम्बापुरी.

मोहमय्यां निर्णयसागरमुद्रणयन्त्रे कोलभाटवीथ्यां २६-२८ तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४५२, ईस्विसन् १९२६, मूल्यं २॥ सार्धरूप्यकद्वयम् प्रतयः १००० विक्रमसंवत् १९८२,

कलिकालसर्वज्ञ-
श्री हेमचन्द्रसूरिः

जन्म वि. सं. ११४५.
दीक्षा वि. स. ११५४
सूरिपदं वि सं ११६६.
निर्वाण वि सं. १२२९.

श्रीहेमचन्द्रसूरिकृतत्रि-
शष्टीयचरित्रस्य ताडपत्र-
प्रत्यां 'पाटण' भाण्डा-
गारसत्कायां वि. सं. १२९४
वर्षे चित्रिते इमे द्वे मूर्ती




परमार्हतश्री-
कुमारपालभूपालः

जन्म वि सं ११४९
राज्याभिषेक वि सं ११९९

श्रीसम्यक्त्वमूल
द्वादशव्रतस्वीकारः
वि स १२१६

स्वर्गगमन वि सं.
१२३०

प्रकाशमां लावनार अनु-
योगाचार्य (प) क्षान्ति-
विजयजी गणि.

स्वर्गस्थः बालब्रह्मचारी तीर्थोद्धारकः अनुयोगाचार्य ( पं. ) श्रीउमेदविजयजी गणिः

जन्म वि सं १९०३

दीक्षा वि सं १९२६

गणिपदं वि. सं १९४९

पंन्यासपदं वि सं १९५२

स्वर्गगमनं वि सं. १९६४

अनेकदेशोमा विहारकरी उपदेशद्वारा अनेकजीवोने धर्मप्राप्ति करावनार विसमीसदीना महात्मा





बालब्रह्मचारी विद्वद्रत्नं अनुयोगाचार्य (पं.) श्री क्षान्तिविजयजी गणिः

जन्म वि. सं १९४१

दीक्षा वि सं १९५९.

गणिपदं वि सं १९७९

पंन्यासपदं वि सं १९७९

पं श्री उमेदविजयजी गणिमुख्यशिष्य मुंबईमा वि सं १९८० तथा ८१ मा भगवती सूत्र व्याख्याता तथा कुमारपाल चरित्रना व्याख्याता संशोधक अने संस्कर्ता

परमप्रभावकजैनाचार्यश्रीमद्विजयवीरसूरीश्वरगुरुपादपद्मेभ्यो नमः ।

## प्रस्तावना ॥

वीरो वीरमणिः सदा विजयते वीरं जिनेशं श्रये, वीरेणाभिहता भवार्णवततिर्वीराय तस्मै नमः ।
वीरात् सञ्चलितं सुतीर्थविमलं वीरस्य दासोऽस्म्यहं, वीरे मे मनसो मुदस्तु सततं श्रीवीर ! मुक्तिं दिश ॥१॥ शार्दू०॥
प्राज्ञो हेमशशी सदैव जयति श्रीहेमचन्द्रं भजे, हेमेनाशु कृता श्रुतिद्युतदिनी हेमाय कुर्वे नमः ।
हेमान्नास्ति परायणं कलियुगे हेमस्य बोधो महान्, हेमे चित्तलयः सदा भवतु मे हे हेम ! मामुद्धर ॥ २ ॥शार्दू०॥
सकलसमयवेत्ता ब्रह्मभूषाविभर्त्ता, बुधजनहितकर्त्ता धर्मवंशावतंसः ।
भुवनललितलक्ष्मीक्रोडलीलाविधाता, जयति स विजयान्तोमेदपूर्वो गणीशः ॥ ३ ॥ मालिनी ॥
श्रुतगगनविहारी विश्वलोकोपकारी, विषयविषनिवारी कल्मषध्वंसकारी ।
सुगणिविजयलाभो यस्य शिष्योऽग्रचारी, जयतु विजयवीरः सूरिरानन्दकारी ॥ ४ ॥ मालिनी ॥
दीक्षादानविधावुमेदविजयो यस्य श्रुतज्ञो गुरु-र्वीराचार्यमुखाद् विशेषविधितो ज्ञानं सदा यो ललौ ।
भ्रान्त्वा देशमनेकदुर्गविषमं लब्ध्वा सुबोधोदयं, सोऽयं क्षान्तिगणिस्तनोति ललितां प्रस्तावनां भावतः ॥५॥ शार्दू० ॥

---

१ अभीष्टम्, २ भवभृतां, वा.

इह हि खलु जन्मजरामरणशोकादिघोरतिमितिमिङ्गिलतिमिङ्गिलगिलमकरादिजलचरावगाहमानमध्यस्थले, इतस्ततो वम्भ्रम्यमाणरागद्वेषादिभयङ्कराशीविषप्रचारभीषणेऽनवरतजाज्वल्यमानसकलदोषनिदानक्रोधवडवानले परस्परविरुद्ध-प्ररूपकबौद्धादिनानातीर्थिकतर्कवितर्कभयानकविहङ्गमविहारभयावहे तिर्यगादिचतुर्गतिचतुर्वेलायुते स्वोपार्ज्जितशुभाशुभ-कर्मजलाभिपूर्णे विचित्रविषयाभिलाषप्रबलतरतरङ्गतरङ्गिते कथञ्चिल्लभ्यमानस्वर्गादिसुखानेकनीलोत्पलनिकरनिकुरम्बिते, आशाशैलसञ्चारनिरन्तरे नानामनोरथशेवालजालजटिलेऽस्मिन् संसारपारावारे निमज्जतां भव्यजनानां श्रुतधर्मदृढ-यानपात्रतीर्थकरादिकर्णधारावन्तरेण कथं निस्तरणं भवेत् ? । अतस्तदुत्तितीर्षुभिः प्रभविष्णुभिरपि शास्त्रधर्मयानपात्र-मवश्यमेवाश्रयणीयम्, यच्चावलम्ब्य भूयांसोऽपि पूर्वभवोपार्ज्जितप्रबलतरपुण्यद्रविणसङ्क्रीतैहिकसुखसन्ततिसम्भारसम्मदाः क्षायिकसम्यक्त्वादिगुणधारकाः प्रतिपन्नमुक्तिवनिताप्रदूतीशिक्षाकाः सदाचरणसद्रत्नरोहणशिखरिणः समाचारीवरव-र्णिनीसौभाग्यविभूषकाः समयमीमांसामांसलमाल्यमालिनो भारतीधर्मपुत्रा विशुद्धविज्ञानप्रचण्डमार्तण्डप्रभाप्रणाशिता-शेषकुमतिध्वान्तनिकराः श्रीमज्जिनमतवारिधिवारिप्रसारणशीतदीधितयो बाह्याभ्यन्तरशत्रुजयोद्धतकन्धरा बद्धदेशसर्व-चारित्रधर्मपरिकराः परोपकारैकमानसा महात्मानः श्रावकाः सूरिवराश्च संसाराब्धिपारमगमन् जिगमिषन्ति गमिष्यन्ति च,

तेषां विद्वज्जनचेतश्चमत्कारीणि प्रचुराणि सुन्दरतराणि पूर्वसूरिभी रचितानि शुद्धबोधदायीनि यानपात्रसमानि श्रुतरू-पाणि चरित्राणि वर्तन्ते, परन्तु प्रतिसमयं हीयमानबुद्धिबलशरीरसामर्थ्यधर्मसाधनवैभवे परमविकरालकलिकालकौणपक-वलितानन्तपुरुषपुङ्गवे, उदीर्णकामादिपिशाचसञ्चारदोषदूषितेऽस्मिन्नवसर्पिणीदुषमारकेऽपि जिनशासनकमलाकरवि-

काशनदिनमणयो धर्मकृतौ निरन्तरदत्तैकचित्ता जिनमार्गानुयायिनः कृतानेकतीर्थोद्धृतिका विमलमन्त्रीश्वरादयः श्रावकाः श्रीबप्पभट्टिप्रभृतिकाः सूरिप्रवराश्च सञ्जातास्तेषामपि चरित्राणि विद्यन्त इति सुविदितमेव ।

तथापि भूतपूर्वोत्तमपुरुषानन्दश्रेणिकाद्याचरितश्राद्धधर्मादपि सातिशयशुद्धसम्यक्त्वमूलद्वादशव्रतपालने दृढनिश्चयस्याष्टादशदेशपरिमितभूमिभूषणस्य कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरीश्वरेण प्रतिबोधितस्य परमार्हत-परनारीसहोदर-राजर्षि-धर्मात्म-प्रभृतिविरुदालङ्कारालङ्कृतस्य श्रीकुमारपालभूपालस्य, तथा तत्प्रतिबोधकस्य निरतिचारचारुचारित्राचाराचरणचणस्य सार्द्धत्रिकोटिश्लोकप्रमाणग्रन्थानां निर्मातुः कलिकालसर्वज्ञविरुदधारकस्य श्रीहेमचन्द्रसूरिवरिष्ठस्य, तत्पूर्वेषाञ्च, भुवनभूषणतत्तदनेकसद्गुणवाचनश्रवणोत्पन्ननिरुपमभक्तिरससमुत्तेजित( प्रेरित )मनोभिः श्रीजयसिंहसूरिवरैः कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिसंदृब्धप्राकृतसंस्कृतद्व्याश्रयमहाकाव्य—सोमप्रभाचार्य( वि०सं० १२४१ वर्षे )रचितजिनधर्मप्रतिबोध( हेमकुमारचरित्र )-श्रीकुमारपालभ्रातृव्याजयपालमन्त्रियशःपालकृतमोहपराजयनाटक-श्रीचन्द्रप्रभाचार्यविरचितप्रभावकचरित्रादीनि विलोक्याऽविच्छिन्नपारम्पर्यागतं सतां मुखाच्छ्रुत्वा च साम्प्रतकालीनजीवानामत्यन्तोपकारकमित्यवधार्य स्वपरहितार्थं श्रीचौलुक्यवंशोत्पत्तिमूलभूतश्रीचुलुक्यवरपुरुषादारभ्यानेकतत्पूर्वपुरुषवर्णनवर्णनीयं प्रधानधार्मिकजनकथोपबृंहितं चतुर्विधपुरुषार्थप्रकाशनैकनैपुण्यधरं शुद्धाशुद्धदेवादिस्वरूपप्ररूपकं विशेषतोऽहिंसाख्यापकं तत्त्वबोधप्रद्योतकं पुराणादिगतकथानकाद्यविरहितं सर्वदर्शनाविरोधिधर्मप्रज्ञापकमाबालगोपालोपकारकारकं महामतिदानपुष्करावर्त्तकं वक्तृश्रोतृजनोत्साहवल्लीवार्षिकमेघायमानं धार्मिक–व्यावहारिक–नैतिक–सामाजिकादिविविधमार्गदर्शकं दृढयान-

पात्ररूपं श्रीकुमारपालमहाकाव्यनामकं शास्त्रमपूर्वं संक्षेपतो विरचितम्, तज्ज्ञापनार्थं प्रतिसर्गान्ते स्वकीयनामाङ्किता समाप्तिर्दर्शिता। अतो नानाविधच्छन्दोमयपुष्पस्तवकशोभाशोभितस्य प्रायशोऽनुष्टुप्छन्दःपर्णरचनारचितस्य सुललितवर्णविन्यासस्वादुफलफलितस्योपमोत्प्रेक्षाव्यतिरेकरूपकादिनानालङ्कारसुरभिगन्धगन्धितस्य दशसर्गदशमहाशाखाविस्तारविस्तृतस्य नैकप्रासङ्गिककथाकथनवद्वालवालस्य जिनधर्मनिरूपणनिचितमहामूलस्य भव्यजनहृदयाह्लादकस्यास्यैतिहासिकमहाकाव्यसहकारतरुवरस्य प्ररोपयितारः श्रीजयसिंहसूरयः सन्ति, ते च कीदृशाः? कदाच भूमण्डलं पावयाञ्चक्रुरिति जिज्ञासायाम्,

सकललोकालोकावभासिकेवलज्ञानश्रीधरस्य त्रिजगदुद्धारकस्य वर्त्तमानचतुर्विंशतिकान्तर्गतचतुर्विंशतितमतीर्थकृच्छ्रीमन्महावीरस्य प्रथमपट्टधरसुधर्मस्वामिनः परम्परायां ब्रह्मव्रतधरेषु शेखरायमाणः कोशाप्रतिबोधकस्त्रिजगत्प्रसिद्धश्चतुर्दशपूर्वधरः श्रीस्थूलभद्रसूरिः सञ्जातस्तस्य च शिष्यः सपादलक्षजिनचैत्यानां सपादकोटिजिनबिम्बादीनां च विधायकस्य श्रीसम्प्रतिभूपतेः प्रतिबोधकः श्रीसुहस्तिसूरिवरः सञ्जातः सुहस्तिसूरेश्च शिष्यो महाप्रभावकः श्रीगुप्तसूरिरभूद्, येन राशित्रयप्ररूपको रोहगुप्तनामकः स्वशिष्यः श्रीवीरनिर्वाणात् पञ्चशतचतुश्चत्वारिंशत्तमे ( ५४४ ) वर्षे सङ्घान्निःसारितो यः षष्ठो निह्नवः सञ्जातः,

चारणलब्धिनिलयाद् यस्माद् गुप्तसूरेश्चारणगणो विख्यातस्तस्य च चारणगणस्य वज्रनागरीचतुर्थशाखा स्थितिधर्मनामकं द्वितीयं कुलं चासीत् तत्र समस्तलब्धिसमवसथाः करुणासुधासिन्धवः श्रीकृष्णर्षिमुनीश्वराः समुत्पन्ना येषां

नाम्ना स्वसन्ततेः कृष्णगच्छ इति प्रसिद्धिः सञ्जाता, यैश्च मित्रव्ययदुःखाद् व्रतं गृहीत्वा घोरानभिग्रहांश्च लात्वाऽतिदुष्करं तपस्तेपे यतस्तेषां प्रतिवर्षं चतुस्त्रिंशद् (३४)दिनानि पारणवन्त्यभूवन्। ईदृक् तपसो महिम्ना स्वपादप्रक्षालनजलेन व्यालादिविषोद्धरणरूपा अनेकलब्धयस्तेषां समुत्पन्ना ये च श्रीवीरनिर्वाणत एकोनविंशत्यधिकसप्तशततमे(७१९)वर्षेऽमोघोपदेशबलेन नागपुरे नारायणश्रेष्ठितः श्रेष्ठं जिनचैत्यं निर्माप्यान्तिमजिनप्रतिष्ठापनादिशुभकार्यं कृतवन्तस्तद्वंशोत्पन्नमहाप्रभावकसूरिसमूहे श्रीविक्रमादेकोत्तरत्रयोदशशततमे ( १३०१ ) वर्षे मरुभूमौ मन्त्राकृष्टैर्जलसमूहैः सङ्घमुज्जीवयितारः श्रीमज्जयसिंहसूरयोऽभूवन्। ततः परं महाप्रभावकाः श्रीमन्तः प्रसन्नचन्द्रप्रभवो दिद्युतिरे, तदनु महम्मदसाहेर्लब्धप्रतिष्ठाः श्रीमहेन्द्रसूरयः सञ्जातास्तत्पट्टपूर्वाचलमण्डनैकभास्कराः श्रीकुमारपालभूभर्तृचरित्रस्य निर्मातारो द्वितीयाः श्रीमज्जयसिंहसूरयो जाता, ये च व्याकरणन्यायकाव्यादिरचनायां नैपुण्यधरास्तथा वादिमृगयूथवित्रासनलब्धैकलक्ष्याश्चाभूवन्।

यदुक्तं प्रस्तुतकुमारपालचरित्रप्रथमादर्शलेखकेन सप्तनयनिगमनिष्ठेन काव्येषु पुत्रीयमाणेन तेषां प्रशिष्येण हम्मीरमहाकाव्यरम्भामञ्जरीनाटिकादिकर्त्रा महाकविना श्रीनयचन्द्रसूरिणा स्वकृतहम्मीरमहाकाव्यस्य चतुर्दशसर्गे (प्रशस्तौ)—

"जयति जनितपृथ्वीसम्मदः कृष्णगच्छो, विकसितनवजातीगुच्छवत् स्वच्छमूर्त्तिः।
विविधबुधजनालीभृङ्गसङ्गीतकीर्त्तिः, कृतवसतिरजस्रं मौलिषु च्छेकिलानाम् ॥ २२ ॥ (मालिनी)

१ कृष्णर्षिगच्छ इत्यपि, "संवत् १५४२ वर्षे श्रावणे मासि श्रीकृष्णर्षिगच्छे श्रीजयसिंहसूरिशिष्येण नयहंसेनात्मपठनार्थं श्रीपेरोजपुरे (पञ्जाब) हम्मीरमहाकाव्यं लिलिखे कल्याणमस्तु भद्रं भूयात् सङ्घस्य ग्रन्थाग्रं १५६४" इति हम्मीरमहाकाव्यपुस्तकप्रान्तस्थोल्लेखेन ज्ञायते ॥

तस्मिन् विस्मयवासवेश्मचरितश्रीसूरिचक्रे क्रमा–ज्जज्ञे श्रीजयसिंहसूरिसुगुरुः प्रज्ञालचूडामणिः ।
पड्भापाकविचक्रशक्रमखिलप्रामाणिकाग्रेसरं, सारङ्गं सहसा विरङ्गमतनोद् यो वादविद्याविधौ ॥ २३ ॥ ( शार्दू० )
श्रीन्यायसारटीकां, नव्यं व्याकरणमथ च यः काव्यम् । कृत्वा कुमारनृपतेः,ख्यातस्त्रैविद्यवेदिचक्रीति ॥ २४ ॥ (आर्या)
पौत्रोऽप्ययं कविगुरोर्जयसिंहसूरेः, काव्येषु पुत्रतितमां नयचन्द्रसूरिः ।
नव्यार्थसार्थघटनापदपङ्क्तियुक्ति–विन्यासरीतिरसभावविधानयत्नैः" ॥ २७ ॥ ( वसन्ततिलका ) इति

अनेन ज्ञायते श्रीजयसिंहसूरिभिः पड्भाषाचक्री सारङ्गपण्डितो वादे विजितः । तथा तैरेव च श्रीन्यायसारटीका निर्ममे, कोऽसौ न्यायसारः ? इत्याशङ्कायामाचार्यश्रीभासर्वज्ञप्रणीतो न्यायसारनामको न्यायग्रन्थोऽस्ति यस्मिंश्च ग्रन्थे वैशेपिकाभिमते प्रत्यक्षानुमाने द्वे प्रमाणे तथाऽन्येषामपि नैयायिकादीनामभिमतानि प्रत्यक्षानुमानोपमानशाब्दानि चत्वारि प्रत्यक्षानुमानोपमानशाब्दार्थापत्तिनामानि पञ्च प्रभाकरभट्टमते तथा प्रत्यक्षानुमानोपमानशाब्दार्थापत्त्यनुपलब्धिकानि षड् वेदान्तिनां तथा चैतिह्यचेष्टाभ्यां पूर्वोक्तानि मिलितानीत्यष्टौ पौराणिकानामित्यादिप्रमाणविवादं

---

१ येन शार्ङ्गधरपद्धतिनामा साहित्यग्रन्थ कृत स च डा० पी पीटर्संन्साहिबेन मुद्रितः । शार्ङ्गधरनामा हम्मीरराजस्य पण्डितो दामोदरसुतो लक्ष्मीधरकृष्णयोर्ज्येष्ठ । तत्रैव पुस्तके, "तदा तदङ्गस्य विभाति सम्भ्रमम्" इति श्लोकः कस्यापीत्युक्तं. बी पुस्तके प्रत्यन्तरे तु गार्ग्यगोत्रसमुत्पन्नमहादेवतनूजस्य शार्ङ्गधरस्येत्युक्त । तथा च सारङ्गसमुच्चयः स एव ज्योति सारसमुचयः, तत्र तु "मुकुन्दवुद्धपुत्रेण" आशासिद्धिनिवासिना । सारङ्गपाणिना प्रोक्त, श्रीसारङ्गी समुच्चयः" ॥१४॥ पत्रे ११ अस्ति, एवं सति शार्ङ्गधराद्वय· सञ्जातास्तत्रायं हम्मीरपण्डित एव । नयचन्द्रसूरिकृते हम्मीरमहाकाव्ये मुद्रिते प्रस्तावनायां कोऽपि विशेपोऽस्ति ( इति रम्भामञ्जरीनाटिकाप्रस्तावनायां टिप्पनी )

परिभाव्य तेन प्रत्यक्षानुमानागमानि त्रीणि प्रमाणानि विस्तरतो निरूपितानीतरेषाञ्च तत्रैवान्तर्भावात् तथा पञ्चावयवानां हेत्वाभासानां वादजल्पवितण्डानां छलजातिनिग्रहस्थानानां तदन्येषामपि पदार्थानां निरूपणं कृतमस्ति

तस्य च ग्रन्थस्य मङ्गलवादादारभ्य महाविद्वद्वरिष्ठानां विपश्चितां चेतश्चमत्कारजनन्युक्तिप्रत्युक्त्युदाहरणप्रत्युदाहरणसहिता प्रसङ्गोपात्तान्यमतनिरूपणनिरसनपूर्विका सर्ववादिप्रतिवादिभेदादिप्रदर्शिका, यस्या अवलोकनमात्रत एव तेषमाचार्याणामलौकिकविद्वत्ता परिज्ञायते, एतादृशी न्यायतात्पर्यदीपिकानाम्नी व्याख्या तैरेवानेकग्रन्थकर्तृभिस्तथा प्रस्तुतश्रीकुमारपालचरित्रस्य निर्मातृभिः श्रीजयसिंहसूरिभिर्विहिता यया समलङ्कृतो न्यायसारो बङ्गदेशोत्पन्नेन महामहोपाध्यायसतीशचन्द्रविद्याभूषण एम् ए पी एच् डी इति प्रसिद्धविदुषा संशोध्य "एशियाटिकसुसाइटी ओफबेङ्गाल" इति कालिकत्ताराजधानीस्थया संस्थया सन् १९१० वर्षे प्रसिद्धिं नीतः। तथा नूतनं व्याकरणमपि तै रचितमस्ति परमदृष्टत्वात् तन्नामादिकं प्रकटयितुं न शक्यते, काव्यं चेदं तैरेव सूरिभिर्विहितमिति ज्ञातज्ञेयानां सुविदितमेवास्ति

एते च महापुरुषाः कदाऽभूवन्? इत्युत्कण्ठामेतच्चरित्रप्रान्तस्थश्लोकः स्थगयति यथा–

"श्रीविक्रमनृपाद् द्विद्वि–मन्वब्दे (१४२२) ऽयमजायत। ग्रन्थः ससप्तत्रिशती–षट्सहस्राण्यनुष्टुभाम् (६३०७)" ॥२७५॥

इत्यनेन ज्ञायते विक्रमपञ्चदशशताब्द्यामेते पूज्या भूमण्डलमलञ्चक्रुरिति। इदं चरित्रं यद्यपि जामनगरे हीरालालहंसरजश्रावकेण पूर्वं मुद्रितमस्ति तदपि पुनर्मुद्रणे हेतुर्यथा ग्रहर्षिनवचन्द्र (१९७९) संवत्सरे 'मीयाग्राम' इति नाम्नि ग्रामे श्रा-

वकाणामाग्रहेणैतच्चरित्रं सदसि व्याख्यातुमारब्धं तत्र चतुर्थसर्गव्याख्यासमये सम्बन्धत्रुटिर्ज्ञाता ततो लिखितपुस्तकगवेषणायां प्रथममेकं कियत्कालेन द्वितीयं च लब्धमुभाभ्यां सहास्य सम्मेलने केषुचिच्छ्लोकेषु शब्दान्तराणि दृष्टानि

यथा १ सर्गे २१ तमे श्लोके चतुर्थपादे मुद्रिते-'कीर्तिव्रजं' लिखिते-'संवत्सरं' इत्यादि ।

केषुचित् पादान्तरं यथा १ सर्गे५१तमे श्लोके- मुद्रिते-'तन्मन्दिरसमीपस्थे' । लिखिते-'समया मन्दिरं तस्य' इत्यादि

केषुचित् पादान्तरे यथा २ सर्गे २७७-२७८-२९१ तमेषु श्लोकेषु

मुद्रिते-तासु च नरकावासाः, प्राणिनां च भयङ्कराः । दुर्गन्धाः प्रसरत्पूति-वसारक्तादिपङ्किलाः ॥

लिखिते-तासां मध्ये क्रमेणैवा-थ त्रिंशत्पञ्चविंशतिः । पञ्चदश दश तिस्रो, लक्षा लक्षा च पञ्चमुक् ॥ २७७ ॥

पञ्चान्ये चतुरशीति-लक्षा निश्शेषसङ्ख्यया । दुर्गन्धाः प्रसरत्पूति-वसारक्तादिपङ्किलाः ॥ २७८ ॥

मुद्रिते-तप्तायःपुत्रिकाभिश्चा-लिङ्ग्यमानान् मुहुर्मुहुः । लिखिते-साक्षादाग्नेयकीलाभिः, पुत्रिकाभिः सहासकृत् ॥ २९१ ॥

केषुचित्पादान्तराणि, यथा ७ सर्गे १४८ तमे श्लोके-

मुद्रिते-किं बहूक्तया तथाऽऽचर्यं, युष्मद्भ्यां निजकर्मसु । यथाऽत्र युवयोः ख्याति-र्भवेल्लोकोत्तरैर्गुणैः ॥

लिखिते-किं बहूक्त्या तथा वत्सौ !, वर्त्तेयाथामतःपरम् । पूर्वानतिशयीयाथां, यथा लोकोत्तरैर्गुणैः ॥ १४८ ॥

अन्यच्च केषुचित्स्थलेषु श्लोका एव त्यक्ता दृष्टा यथा-

२ सर्गे २६ तमः श्लोकः, २७९ तमश्च । तथा ३९-४० तमौ श्लोकौ, ६१२-६१३ तमौ च ।

तथा ४ सर्गे ५८-५९-६०-तमाः श्लोकाः, ३५६-३५७-३५८-३५९ तमाः, १५३ प्रारभ्य २५२ पर्यन्ताश्च तथा ६सर्गे१४९प्रारभ्य२५३पर्यन्तान्(१०५)श्लोकान् त्यक्त्वा तत्स्थाने सम्बन्धमेलनायेव विंशतिः श्लोका अन्ये प्रक्षिप्ताः सन्ति,

तथा ७ सर्गे ३२० प्रारभ्य ५२३ पर्यन्ताः ( २०४ ) श्लोका न विद्यन्ते,

तथा ८ सर्गे १३६ प्रारभ्य २२५ पर्यन्ताः श्लोका न विद्यन्ते तत्स्थाने च सम्बन्धमेलनायेव २५ श्लोका नवीनाः प्रक्षिप्ताः सन्ति,

एवमन्यत्रापि बहुषु स्थानेषु शब्दविपर्यासपादविपर्यासश्लोकत्यजनमवलोकितमत्र च लेखामात्रं प्रदर्शितं सर्वं तु ग्रन्थावलोकनादेव विज्ञेयं, दधिमापभोजनतः कियन्तः क्रमयो विविच्यन्ते? इत्येवं बहुतरं वैपरीत्यं विलोक्य मा भूदस्य विपर्यासस्याग्रतोऽपि प्रसरणमिति, तथा श्रोतॄणां तच्छ्रवणेऽतीवोत्कण्ठां सम्भाव्य मुम्बापुर्यां भगवतीसूत्रवाचनानन्तरमेतदेव व्याख्यातुमारब्धं श्रोतृजनप्रेरणया च तस्य शुद्धपाठोल्लेखद्वारेण पुनर्मुद्रणे चिकीर्षोत्पन्नेति,

ग्रन्थस्यास्य विषयादिकं त्वनुक्रमणिकातोऽवसेयम्,

अस्य संशोधनाधारं पुस्तकत्रयं समासादितं तत्रैकं तावत् नातिशुद्धं प्रशस्तिरहितं बृहत्पत्तन(वडोदा)स्थाज्जैनाचार्यश्रीमद्विजयमोहनसूरीणां पुस्तकागारतः, अपरं च शुद्धप्रायं बृहत्पत्तनस्थादेव प्रवर्तकश्रीमत्कान्तिविजयमुनिपुङ्गवानां ग्रन्थागारात्, तृतीयं त्वशुद्धिबहुलं "वि० सं० १४९३ वर्षे पौषसु १५ रविदिने लिखितं ग्रन्थाग्रं ६३००" इति लेखान्वितं मुम्बापुर्यामेव मणिलालसूर्यमलश्रेष्ठिनः पार्श्वादिति,

एतत्पुस्तकत्रयेण संशोधने साहाय्यं लभमानोऽहं पुस्तकदातृमहाशयसत्कां महतीं परोपकृतिं स्मृतिगोचरतां नयामि, एतत्पुस्तकत्रयाधारेण महता प्रयासेन संशोधितेऽप्यत्र ग्रन्थेऽस्मद्दृष्टिदोषेण बुद्धिमान्द्येन वा सीसकाक्षरयोजकदोषेण वा यन्त्रदोषेण वा यत्र क्वचनाशुद्धिर्जाता कृता वा भवेत् सा च कृपावद्भिर्विपश्चिद्भिः पराकरणीयेति प्रार्थ्यते,

द्व्यधिकाष्टनवेलाब्दे ( १९८२ ), ज्यैष्ठ्यां च तिथौ दितीजगुरुवारे ।
श्रीक्षान्तिविजयगणिना, सूर्यपुरे प्रस्तावना दृब्धा ॥ १ ॥ आर्या ॥ } सूर्यपुरस्थः क्षान्तिविजयो गणिः

प्रथमाऽऽयासोऽयं मे, लिखने संशोधने च संस्करणे ।
यदि चापशब्दयोगो, विबुधैः संशोधनीयः सः ॥ २ ॥ आर्या ॥

यतः– गच्छतः स्खलनं क्वापि, भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः ॥ ३ ॥

यावद् व्योमसरःक्रोडे, रविहंसो विराजते, विबुधैर्वाच्यमानोऽयं, ग्रन्थस्तावत्प्रनन्दतु ॥ ४ ॥

शुभं भवतु कल्याण–मस्तु मङ्गलकारकम् । चरित्रं श्रीकुमारस्य, दयाधर्मैकजीवनम् ॥ ५ ॥

का[1] शैलस्य सुता? मयूरवचने किं[2] वा भवेत् कारणं?, को[3] रामस्य पिता? नभो व्रजति कः[4] शक्रस्य को[5] वै सुतः? ।
को[6] हंता जगतो? विवेकदहना का[7]? का जनैर्दुःसहा[8]?, को[9] दण्डं कुरुते? कं[10] वा? जगति वै किं[11] जीवनं? पातु सः ॥६॥ शार्दूल० ॥

---

१ उमा. २ मेघ. ३ दशरथः. ४ वि.–पक्षी. ५ जयन्तः. ६ यम.. ७ मदिरा. ८ हानिः. ९ राजा. १० जने. ११ जीवनं–जलम्. एतेषामेकादशोत्तराणामाद्याक्षरसम्मेलने उमेदविजयमहाराजजी इति प्रसिद्धनामा स गुरुर्युष्मानस्मांश्च पातु–रक्षतु ॥

# अस्य ग्रन्थस्य सविस्तरविषयानुक्रमणिका ।

## प्रथमः सर्गः १

## द्वितीयः सर्गः २

## तृतीयः सर्गः ३

## चतुर्थः सर्गः ४

## पञ्चमः सर्गः ५

## सप्तमः सर्गः ७

अष्टमः सर्गः ८

## नवमः सर्गः ९

## दशमः सर्गः १०

## ॥ शुद्धिपत्रकम् ॥

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १ | २ | ६ | क्षोदिष्ट | क्षोदिष्ठ |
| २ | २ | ४ | न्यायवान् | न्यायवाञ्[1] |
| २ | २ | ५ | वध्वा | वद्ध्वा |
| ४ | १ | १ | दृढयतु | द्रढयतु[2] |
| ४ | १ | ४ | दिव्यद् | दीव्यद् |
| ४ | २ | ४ | सत्वेन | सत्त्वेन[3] |

१ एवमन्यत्रापि सर्वत्र तत्र तत्र स्थलेषु स स सन्धिः स्वयमूह्यः. २ एवमन्यत्रापि दृढिमा दृष्टुम् दृढयित्वा दृष्टा दृढयति अदृढन् इत्यत्र दृ इत्यस्य स्थाने द्र इति दृश्यम्. ३ एवमन्यत्रापि दत्तातत्त्वमहत्त्वादिषु तकारद्वित्वं ज्ञेयम्.

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४ | २ | ७ | ऊर्ध्वे | ऊर्द्ध्वे[1] |
| ८ | २ | ७ | तदचीकथत् | तदची(च)कथत्[2] |
| ८ | २ | १२ | तान्यवी | तान्न्यवी |
| ९ | १ | १३ | परिचार्यौ | परिचार्य्यौ |
| १० | १ | ५ | संधेन | संघेन |
| १० | १ | १४ | निरुद्ध्य | निरुध्य[3] |

१ एवमन्यत्रापि ध्व स्थाने द्ध्व बोध्यः. २ कथमचीकथदिति, ये गणयतेरन्येषामपि पूर्वस्य यथादर्शनमीत्त्वमिच्छन्ति तन्मते भविष्यति, प्रकृत्यन्तर वाऽन्वेष्यमिति क्रियारत्नसमुच्चये. ३ एवमन्यत्राप्यावद्धपसिद्धयन्त्यादिषु धकारैकत्वं प्रबोध्यम्.

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ११ | १ | ११ | सछाया | सच्छाया |
| ११ | २ | ६ | शाड्वल | शाद्वल |
| १४ | १ | ११ | तस्येच्छं | तस्येत्थं |
| १४ | २ | २ | व्रंश्या | व्रंश्याः |
| १५ | १ | ४ | सेस्थीयेते | सेस्थीयते (तेष्ठीयेते) |
| १७ | १ | १४ | धायतां | धाय तम् |
| १७ | २ | ८ | जुहुपन् | जुहूपन् |
| १८ | १ | १४ | भिच्छत्वा | भिछत्वा |
| १८ | २ | १४ | अहल्लात | अद्वात |
| १९ | १ | १४ | भभस्स | भस्स |
| २२ | १ | १० | गुणोल्वणः | गुणोल्वणः |

१ एवमग्रेऽपि च्छ स्थाने च्छः. २ पृषोदरादित्वाद् वकारोऽपि साधु.

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २३ | १ | ४ | भूमिपतो | भूमीपतौ |
| २४ | १ | ६ | दिव्यत्तम | वीव्यत्तम |
| २५ | १ | ११ | प्राघूर्णक | प्राघूर्णिक |
| २५ | २ | ३ | ईफुर्ज | स्फूर्ज[1] |
| २६ | १ | ८ | विशिष्मिये | विसिष्मिये |
| २६ | २ | ८ | सध्यग्द | सध्यक्, |
| २६ | २ | १४ | इव | इव |
| २८ | १ | १४ | सूर्यः | तेजःसमूहः |
| २८ | २ | ३ | दुर्जस्वि | दूर्जस्वि |
| २८ | २ | ११ | दृशत् | दशत् |
| २९ | १ | ५ | वारिरिव | वारीरिव |

१ 'स्फूर्जेर्वा दीर्घः सर्वत्र' इति परवाक्यात् स्फूर्जकः स्फुर्जकश्च इति स्फूर्जक शब्दे शब्दकल्पद्रुमे.

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ५२ | १ | १४ | माठे | मठे |
| ५३ | २ | १४ | श्मसा | श्मशा |
| ५५ | १ | १० | पृछ्यताम् | पृच्छ्यताम् |
| ५५ | १ | १२ | काससंकाश | काशसंकाश |
| ५५ | २ | १४ | पराक्रम् | बलातिशययुक्ता गर्जना |
| ५६ | २ | १० | सेसिच्यामास | सेसिच्या(चा)मास |
| ५८ | २ | १४ | स्वर | स्वर् |
| ५९ | २ | ४ | शम्नाति | शम्याति |
| ६० | १ | ३ | ष्टान | प्रान |
| ६० | १ | ९ | देवभूयं | दैवभूयं |
| ६० | १ | १४ | वपभ | वृपभ |
| ६२ | १ | ५ | ऽप्रही(हि)ष्ट | ऽप्रहीष्ट |
| ६२ | २ | ८ | हालिका, | हालिका– |
| ६५ | १ | ११ | संधायासन | संधानासन |
| ६५ | १ | १२ | संधायासनं | संधानासनं |
| ६६ | १ | १ | आर्द्रेदु– | आर्द्रेदू– |
| ६६ | २ | २ | सुराष्ट्रा– | सुराष्ट्र– |
| ६७ | १ | २ | मणी | मैणी |
| ६७ | १ | २ | रुचिरें | रचिरें |
| ६७ | १ | १४ | चन्द्रः | चन्द्रः×विशुत् |
| ७० | १ | ५ | सेसिच्यामास | सेसिच्या(चा)मास |
| ७० | १ | ८ | द्रुवत् | द्रवत् |
| ७१ | १ | ११ | यत्त्वय्यपि प्रेम, | यत्त्वय्यपि प्रेम– |
| ७१ | २ | ५ | प्राघूर्णे | प्राघूर्णि |
| ७४ | १ | ९ | (प्रजिघ्मिवान्) | (प्रजिघ्यिवान्) |
| ७४ | २ | ११ | तस्थितवान् | तस्थिवान् |

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ८१ | १ | १३ | तांबूलम् , प्र. | तांबूलम् |
| ८४ | १ | १३ | महाराजिका | माहाराजिका |
| ८७ | २ | १३ | देवबोधितः | दीपकात् |
| ९१ | १ | १२ | निरालंव | निरालंब |
| ९२ | १ | १४ | स्थितेन वायुना भ्रान्त | स्थिते वायुभ्रांते |
| ९४ | २ | ९ | दौष्टवम् | दौष्ठवम् |
| ९४ | २ | १२ | द्युते | द्युतेः |
| १०० | २ | ७ | गलत्कुष्टानपि | गलत्कुष्ठानपि |
| १०१ | १ | १२ | रुक्मादि | रुक्मादि |
| १०१ | २ | १३ | श्रीसद् | श्रीसदस् |
| १०१ | २ | १३ | अज्ञानसू | अज्ञानम् |
| १०८ | २ | १३ | पदै उच्चारितै | पदैरुच्चारितै |
| १०९ | १ | १३ | गृहीतु | ग्रहीतु |
| ११० | १ | २ | सज्जाया | सज्जया |
| ११० | २ | १४ | किन्नर— | किन्नरः— |
| ११४ | २ | १२ | तद्गृहीता | तद्ग्रहीता |
| ११८ | २ | १४ | यस्या सा | यस्याः सा |
| १२० | २ | ४ | सङ्गी | सङ्गि |
| १२१ | २ | ८ | कार्योनि | कार्याणि |
| १२२ | १ | १४ | श्रीदोः—धनदोः | श्रीदो—धनदो |
| १२४ | १ | ८ | विवेचिनी | विवेचि(कि)नी |
| १२६ | १ | ८ | मज्जना | मज्जना(ज्ञा) |
| १२६ | २ | ९ | धार्मिकः ! | धार्मिक ! |
| १३० | १ | १३ | स्फाराव् | स्फारान् |
| १३० | २ | ४ | देपुणां | देपुणा |
| १३१ | २ | १३ | हाराव्, हारान् | हारान, हाराव् |
| १३५ | २ | ७ | माधवि | माधवी |
| १३५ | २ | ७ | भिषेण | मिषेण |

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १३८ | २ | १० | ऽतिदुर्लं(लें)भः | ऽतिदुर्लभः |
| १३९ | १ | ८ | सतः | सतैः |
| १४१ | २ | ९ | नन्दनींम् | नन्दिनीम् |
| १५४ | २ | १४ | मद्योन्मत्तः | मद्योन्मत्तः |
| १५८ | १ | ५ | गन्तु | गन्तुं |
| १५८ | १ | ५ | पंगू | पंगु |
| १५८ | १ | ८ | द्वौं सहस्रौ | द्वौ०(द्वे सहस्रे) |
| १६१ | १ | १४ | परः | परे |
| १६४ | २ | १२ | प्रवर | प्रवरा |
| १६४ | २ | १३ | जाग्रत्या | जागर्त्या |
| १६५ | २ | ९ | सूंरिः | सूरि |
| १६५ | २ | १३ | भतल्लिका | मतल्लिका |
| १६५ | २ | १३ | विघ्राः | निघ्राः |
| १६५ | २ | १३ | सूंत्रे | सूत्रें |

| पत्रम् | पृष्ठम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १६८ | १ | ९ | नन्दनी | नन्दिनी |
| १६८ | १ | १३ | ऊर्मिकां | ऊर्मिका |
| १७० | १ | ९ | शीलगन्धेन, | शीलगन्धेभ— |
| १७१ | २ | ३ | रत्नीपल्लम | रत्नीपल्लंभ |
| १७१ | २ | १३ | वृषयोर्मेथु | वृषयोर्मैथु |
| १७२ | १ | ३ | त्वत्प्रशंसामिमं | त्वत्प्रशंसामिमां |
| १७२ | २ | ५ | रत्नंमंजर्यां | रत्नमंजर्यां |
| १७६ | १ | ७ | परिस्कृतान् | परिष्कृतान् |
| १७७ | २ | ८ | ( या ) | ० |
| १७९ | २ | १४ | तैस | न्तैस |
| १८२ | १ | १२ | कृत्वा | कारयित्वा |
| १८२ | २ | ११ | प्रदक्षणा | प्रदक्षिणा |
| १८२ | २ | १२ | प्रदक्षणा | प्रदक्षिणा |
| १८४ | २ | १० | नरिलति | नरिनर्त्ति |

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १८६ | २ | १३ | पित | पीत |
| १८८ | २ | २ | पणौ | पाणौ |
| १९१ | २ | १३ | रोघः | रोधः |
| १९५ | १ | ४ | मात्मः | मात्म– |
| १९५ | १ | ५ | वासिताशय– | वासिताशयः |
| १९६ | २ | १४ | तुरुस्क | तुरुष्क |
| २०५ | २ | ३ | आकुला | आकुलाः |
| २०९ | १ | ३ | निर्घृणो | निर्घृणो |
| २०९ | १ | १० | चैर्योण | चौर्येण |
| २१० | १ | १ | वत्रव | वत्रैव |
| २१० | १ | ५ | ध्वनि | ध्वनिं |
| २१४ | १ | ८ | ईपलभं | ईपलंभं |

| पत्रम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २१४ | १ | ९ | दुष्पाप | दुष्प्राप |
| २१६ | २ | ७ | वसव् | वसन् |
| २१६ | २ | ९ | भ्रमव् | भ्रमन् |
| २१८ | २ | १४ | ( ह्री ) | ( ह्रि ) |
| २१९ | १ | १ | प्रतिष्ठाय | प्रतिष्ठाग(प्य) |
| २१९ | १ | ३ | कैरुक्, | कैरुक्– |
| २१९ | २ | २ | टिप्पण. | टीप्पण |
| २१९ | २ | ५ | देवेन्द्रसेवाभृतः | जम्ब्वादिसूरीश्वराः |
| २१९ | २ | ६ | भूमिविभूषको जनगुरुः साम्राट्सु- | जैनजगद्गुरुः सुखकरः सम्राट्प्र- |
| २२० | २ | १३ | रतिपतिः | रतिविलासः |

## सूचना.

श्रीहेमचन्द्रसूरिदीक्षाविचारः प्रथमसर्गे "माघमासस्य धवले, पक्षे चातुर्दशेऽहनि ॥ १६१ ॥
रोहिण्यां शनिवारे च, रवियोगे त्रयोदशे । समग्रहबलोपेते, वृषलग्ने शुभेंऽशके" ॥ १६२ ॥

ननु माघशुक्लचतुर्दश्यां रोहिणीभं न सम्भवति, "साऽस्मिन्पौर्णमासीति" नियमादतो रोहिणीस्थाने पुष्यभं चेत्तदा "पुष्यर्क्षे शनिवारे च" इति पाठे त्रयोदशो रवियोगोऽपि सङ्गच्छते । तथाच प्रभावकचरिते—"माघे सितचतुर्दश्यां, ब्राह्मे धिष्ण्ये शनेर्दिने ॥ ३२ ॥
धिष्ण्ये तथाऽष्टमे धर्म-स्थिते ( हृश्ये ) चन्द्रे वृषोपगे । लग्ने बृहस्पतौ शत्रु-स्थितयोः सूर्यभौमयोः" ॥ ३३ ॥

माघसुदिचतुर्दश्यां शनौ धिष्ण्ये-स्तुले, ब्राह्मे-अभिजिन्मुहूर्त्ते-विजयमुहूर्त्ते, अष्टमे धिष्ण्ये-पुष्यभे, धर्मदृश्ये चन्द्रे-अर्थात्तृतीयस्थेऽब्जे, वृषलग्नस्थे गुरौ, शत्रुस्थितयोः सूर्यभौमयोः-अर्थोच्चयोः शत्रुः-शनिस्तद्राशिः कुम्भस्तत्रस्थयोरेतेनैवंविधा कुण्डली कल्प्यते-यदि कल्पनान्तरं कश्चिद् विपश्चिद् विज्ञापयिष्यति- तर्हि सानन्दं सम्पादकः स्वीकरिष्यति,

॥ श्रीहेमचन्द्रसूरीणां दीक्षाकुण्डली ॥



अर्हम्

परमगुरुश्रीअनुयोगाचार्य (पं) श्रीमद्-उमेद विजयगणिगुरुपादपद्मेभ्योनमः

तपोगणगगनमणिश्रीकृष्णर्षीयश्रीजयसिंहसूरि प्रणीतं

# ॥ श्री परमार्हत श्रीराजर्षिकुमारपालभूपालचरित्रम् ॥

चिदानंदैककंदाय । नमस्तस्मै परात्मने ॥ शिवश्री रमते यस्मिन् । हंसीव सरसीरुहे ॥ १ ॥ श्रीनाभेयो जिनः सोऽव्याद् । भुक्तिमुक्त्युपदेशतः ॥ यः सतां दर्शयामास । द्विविधामपि [1]निर्वृतिं ॥ २ ॥ [2]अभ्रांतस्थितिरोचिष्णुः । शश्वत्[3]कौमुदमेधयन् ॥ मृगलक्ष्मा जिनाधीश—स्तमःस्तोमं निरस्यतु ॥ ३ ॥ कृष्णवर्णोऽपि यो ध्यातः । पुष्णाति परमां श्रियं ॥ सोऽद्भुतैकनिधिर्भूयाद् । भूत्यै श्रीनेमिनायकः ॥ ४ ॥ अ[4]मादिवांतरे यस्य । मूर्ध्नि भाति परं महः ॥ स्फूर्जत्फणिमणिव्याजात् । स श्रीपार्श्वः श्रियं क्रियात् ॥५॥ श्रीवीरः शिवतातिः स्तात् यस्य ज्ञानप्रभाकरः ॥ आसीत्तमोऽपहत्वेन ।

१ सुखम्. २ अ-भ्रान्ता-भवभ्रमणरहिता-स्थितिः-अवस्थान तया रोचिष्णु शोभमानः-पक्षे-अभ्रस्य गगनस्यान्ते स्थितिः तया शोभमानः. ३ कौ-पृथिव्याम् ४ न भाति-इति-अमात्.

संतां सन्मार्गदर्शकः ॥ ६ ॥ तपसा लब्धयो यस्य । वश्या दास्य इवाभवन् ॥ श्रीगौतमः स मे तुष्या—दग्रणीर्गणधारिणां ॥ ७ ॥ यस्य नाम्नि निलीनेव । कलेर्भीता द्युसद्गवी ॥ ध्यातॄणां सर्वकामाप्तेः । स श्रीकृष्णमुनिर्मुदे ॥ ८ ॥ कविस्तोमकृतोपास्ति—र्जनतापापहारिणी ॥ नालीकस्थितिरोचिष्णुः । पुनीयान्मां सरस्वती ॥ ९ ॥ प्राप्तक्षायिकसम्यक्त्वाः । श्रावकाः श्रेणिकादयः ॥ भूयांसोऽपि बभूवांसः । प्रभावाढ्याः प्रभावकाः ॥ १० ॥ अमारिकारकत्वेन । तेषु मुख्योऽस्ति वस्तुतः ॥ कुमारपालः क्ष्मापालो । धाम्ना धिष्ण्येषु चंद्रवत् ॥११॥ ततोऽस्य चरितं किंचि—द्रच्म्यहं स्वपुपूषया॥ प्रेरितस्तद्गुणग्राम—रामणीयकसंपदा ॥ १२ ॥ क्व क्षोदिष्टमतिः सोऽहं । क्वैतस्य चरितं महत् ॥ ततोंगुलैः प्रमित्सामि । व्योमनिःसीमर्मोहतः ॥ १३ ॥ गुरुप्रसादादीशिष्ये । यद्वा तद्वृत्तवर्णने ॥ कुरंगः किं विधूत्संग—संगतः खे न खेलति ॥ १४ ॥ चौलुक्यवंशोत्तंसोऽभूत् । कुमारक्ष्मापतिस्ततः ॥ ऐतिह्यतस्तदुत्पत्तिः । प्रथमं प्रथ्यते पृथुः ॥ १५ ॥ पुरा मुरारिवद्विश्व—विश्वोद्धारधुरंधरः ॥ चुलुक्य इति विख्यातः । संजातः क्षत्रियोत्तमः ॥ १६ ॥ धैर्यगांभीर्यचातुर्यौ—दार्यशौर्यादयो गुणाः ॥ श्रांता इव जगद्भ्रांत्या । यत्राश्रांता विशश्रमुः ॥ १७ ॥ यः सांग्रामिककर्मकर्मठमतिर्दैत्यानिव प्राणिनां । रौद्रोपद्रवकारिणोऽरिनिकरानुज्जास्य तीक्ष्णासिना ॥ निर्मायाप्यकुतोभयं कुवलयं स्वाराज्यवैहासिक—श्रीकं राज्यमतिष्ठिपत् किल मधूपद्माभिधे पत्तने ॥ १८ ॥ चौलुक्य इति वंशोऽभू—त्तन्नाम्ना विश्वविश्रुतः ॥ आकरो नररत्नानां । सुपर्वश्रेणिसंकुलः ॥ १९ ॥ तद्वंश्या विश्वशस्याभा । बभूवुर्भूधना घनाः ॥ वल्गत्त्रिवर्गसंसर्ग—प्रियंभावुकवैभवाः ॥ २० ॥ श्रीसिंहविक्रम इति क्षितिभृत्क्रमेण । जज्ञे महेश्वरवितीर्णसुवर्ण-

१ स्तुत्यो, प्र. २ स्वीममोहित°, प्र.

सिद्धिः ॥ यः क्षोणिचक्रमनृणं विरचय्य दानैः । संवत्सरं निजमवीवृतदासमुद्रं ॥ २१ ॥ पुस्फोर वीरकोटीर—स्तत्पुत्रो हरिविक्रमः ॥ स्वकीर्तिकेतकैर्येन । सुरभीचक्रिरे दिशः ॥ २२ ॥ पंचाशीतिर्नृपास्तस्मा—द्विसापकविभा बभुः ॥ न सेहे यत्प्रतापाग्निः । शकवंशैर्दंढैरपि ॥ २३ ॥ तदन्वयेऽभवत्क्षुण्ण—खरदूषणवैभवः ॥ रामो राम इव न्याय—सदनं मेदिनीश्वरः ॥ २४ ॥ ततः सहजरामोऽभाद्योऽश्वलक्षत्रयेश्वरं ॥ हत्वा शकपतिं पत्ति—मिव विश्वेऽप्यभूद्भटः ॥ २५ ॥ अदीप्यत श्रिया श्रीदः श्रीदंडकस्तदात्मजः ॥ यः पिपासाख्यराष्ट्रेशं । गजं सिंह इवाजयत् ॥२६॥ भूपालः कांचिकव्या-ल—स्तद्राज्यमथ भेजिवान् ॥ यद्दानैरर्थिनोऽप्यासन् । दानशौंडाः सुरद्रुवत् ॥२७॥ राजा राजिरथाजिराजिविजयी राजेव रेजे शुचि—र्यो यात्रां विरचय्य देवनगरे श्रीसोमनाथोक्तितः ॥ वंश्यां गुर्जरशासनस्य भगिनीं सामंतसिंहप्रभो—र्लीलाख्यां जगदेकवीरजननीं लक्ष्मीमिव व्यूढवान् ॥२८॥ तयोः सूनुरनूनश्री—र्मूलराज इति श्रुतः ॥ अयोनिसंभवत्वेन । सच्चमत्कारकारणं ॥ २९ ॥ सामंतसिंहमतुलं निजमातुलं यः । शक्त्या निहत्य किल गुर्जरराज्यमाप ॥ लक्षं तथा समरकर्मणिबद्धकक्षं । सोमेशवैभववशाद्दलयांबभूव ॥ ३० ॥ रेजे चामुंडराजोऽथ । यश्चामुंडावरोद्धुरः ॥ सिंधुरेंद्रमिवोन्मत्तं । सिंधुराजं मृधेऽवधीत् ॥ ३१ ॥ तस्माद्वल्लभराजोऽभू—द्यत्प्रतापातितापितः ॥ मुंजोऽवंतीश्वरो धारा—यंत्रेऽपि न धृतिं दधौ ॥३२॥ अधाद्दुर्लभराजस्त—द्राज्यं न्यायवनांबुदः ॥ निर्मथ्य लाटनाथं य—स्तद्रमां सक्षमां ललौ ॥ ३३ ॥ तद्भवो भीमदेवोऽभा—द्यन्माहात्म्यहिमागमे ॥ युक्तमंभोजवद्भोज—भूजानिर्म्लानिमानशे ॥३४॥ भीमदेवस्य पुत्रौ द्वा—वभूतां भिन्नमातृकौ ॥ क्षेमराजस्तयोराद्यः । कर्णः कर्ण इवापरः ॥ ३५ ॥ पित्रा दशरथेनेव । तन्मात्रे प्राक्प्रतिश्रुतं ॥ क्षेमराजो

१ वंश्यै =प्र. २ दंडक –प्र. ३ वंश्याम् प्र. ४ तन्नामान राजानं. ५ युद्धे.

ददौ राज्यं । कर्णायात्मीयबंधवे ॥ ३६ ॥ तनूजः क्षेमराजस्य । राजमानमहोदयः ॥ देवप्रसाद इत्यासी—द्देवव्रतसेवकप्रियः ॥ ३७ ॥ कर्णो वितीर्णवांस्तस्य । भक्तिस्मेरस्य भुक्तये ॥ प्रसादमिव मूर्तं स्वं । स्थानं नाम्ना दधिस्थलीं ॥ ३८ ॥ तत्र देवप्रसादस्य । तनयो विनयोज्ज्वलः ॥ नाम्नाभवत् त्रिभुवन—पालः काल इव द्विषाम् ॥ ३९ ॥ कर्णस्य मयणल्लास्त्री कुक्षिशुक्त्येकमौक्तिकं ॥ तनयो न्यायवान् जज्ञे । जयसिंहो महीपतिः॥४०॥ कृत्वा विग्रहमुग्रसैन्यनिवहैर्यो द्वादशाब्दप्रमं । प्राग्द्वारं विदलय्य पट्टकरिणा भंक्त्वा च धारां पुरीं ॥ बध्वा श्रीनरवर्मभूधवमदःपादाग्रचर्मार्जितं । कोशं स्वं परिधाप्य खड्गमभवत्तीर्णप्रतिज्ञाभरः ॥ ४१ ॥ महोबकपुराधीशा—ज्जितान्मदनवर्मणः ॥ कोटीः षण्णवतिं हेम्नां । यस्तन्मानमिवाददे ॥ ४२ ॥ यः कासारमुदारवारिलहरीलीलाभिरभ्रंलिहं । साक्षात्पार्वणचंद्रमंडलमिव श्रीपत्तनेऽचीकरत् ॥ तत्प्रांते च शिवाद्रिकांतमनिलोद्वेल्लत्पताकांचलं । कीर्तिस्तंभमतिष्ठिपद्यश इव स्वं मूर्ततामाश्रितं ॥ ४३ ॥ भुजौजसा पराजित्य । दुष्टं बर्बरकं सुरं ॥ यः सिद्धचक्रवर्तीति । नामान्यन्मान्यमानशे ॥ ४४ ॥ सिंचन् वात्सल्यकुल्याभि—श्छिंदन् रौद्रानुपद्रवान् ॥ आरामिक इवारामं । स पालयति भूतलं ॥ ४५ ॥

अथ श्रीकोटिकगण—द्रुमे व्याप्तदिगंतरे ॥ वज्राभिधायां शाखायां । चंद्रगच्छोऽस्ति गुच्छवत् ॥ ४६ ॥ तत्रासीद्वादिवित्रासी । स्वदासीकृतमन्मथः ॥ चारित्रेण पवित्रेण—वित्तः श्रीदत्तसूरिराट् ॥ ४७ ॥ मृद्वीका इव मृद्वीका । अपि यद्वाणीभंगयः ॥ दुर्भेदमपि मोहाद्रिं । चित्रं बिभिदिरे सतां ॥ ४८ ॥ सोऽन्येद्युर्विहरन् सूरि—र्भव्यांभोरुहभा-

१ सत्, प्र. २ त-प्र.

स्करः ॥ प्राप वागडदेशस्थं । वटपद्रपुरं परं ॥ ४९ ॥ तत्र स्वामी यशोभद्र–नामा भद्रंकरः सतां ॥ राजानकोऽस्ति राजन्य–राजिराजितसन्निधिः ॥ ५० ॥ समया मंदिरं तस्य । प्रासुके क्वचिदाश्रये ॥ स्थित्वा श्रीदत्तसूरींद्रो । भव्यान् धर्म-मबूबुधत् ॥ ५१ ॥ विज्ञाय तत्र तं सूरिं । साक्षात्पुण्यमिव स्थितं ॥ नमस्यामास सोऽभ्येत्य । यशोभद्रःपुरेश्वरः ॥५२॥ धर्मो-पदेशयोग्योऽय-मिति मत्वा स सूरिराट् ॥ उपादिशज्जिनोपज्ञं । धर्मं मर्माविधं शुचां ॥ ५३ ॥ पततां नरकोत्संगे । धर्म एवावलंबनं अकूपार इवापारे । बोहित्थमिव देहिनां ॥ ५४ ॥ धर्मो माता पिता धर्मो । धर्मो नृणां सहोदरः ॥ धर्मः स्वामी सुहृद्धर्मो । धर्मः स्यादंगरक्षकः ॥ ५५ ॥ ये विना धर्ममीहंते । हंत राज्यादिसंपदः ॥ कलयंति फलास्वादं । ते व्यपास्यैव पादपं ॥ ५६ ॥ मनोरथतरुस्ताव–ज्जायते नायतस्थितिः ॥ यावन्न वर्षति प्रौढ–पुण्यवार्षिकवारिदः ॥ ५७ ॥ दुर्लभं नृभवं लब्ध्वा । मुग्धो यस्तं न सेवते ॥ क्लेशार्सं स्वर्मणिं सोऽब्धौ । पातयत्येव विप्रवत् ॥ ५८ ॥

तथाहि निःस्वतादाहि–कमलाकमलाकरः ॥ अस्ति प्रतिष्ठानपुरं । गोदातीरैकमंडनं ॥५९॥ मुनिसुव्रतनाथस्य । यस्मिं-श्चैत्यमनुत्तरं ॥ भविनां भवपाथोधौ । पततां यानपात्रति ॥ ६० ॥ विष्णुशर्माऽवसत्तत्र । ब्राह्मणो ब्रह्मपारगः ॥ चंद्रस्य रोहिणीवासी–त्तस्य शीलवती प्रिया ॥ ६१ ॥ कलाकलापभाजोऽपि । तस्य प्राक्कर्मदोषतः ॥ लक्ष्मीर्न संमुखीभूता । दुर्भ-गस्येव भामिनी ॥ ६२ ॥ श्रीवाग्देव्योर्मिथो वैर–मिति सत्यैव लोकवाग् ॥ कुतोऽन्यथा त्यजत्येव । लक्ष्मीर्वाग्वल्लभान् जनान् ॥ ६३ ॥ न कुलेन न रूपेण । न गुणेन न विद्यया ॥ श्रीरियं रज्यति प्रायः । पण्यस्त्रीव दुराशया ॥ ६४ ॥

१ यशोभद्र नरेश्वर', प्र.

दरिद्रस्याभवंस्तस्य । मूर्तार्थितालता इव ॥ विपत्तय इवाध्यक्षा । भूयस्यस्तनयाः क्रमात् ॥ ६५ ॥ दरिद्रत्वेन कन्यानां । बहुत्वेन च पीडिता ॥ एकदा दीनवदना । प्रोचे शीलवती प्रियं ॥६६॥ त्वमात्मना द्वितीयोऽभूः । पूर्वं तेन यथातथा ॥ कणादियाच्ञयापीश? । प्राणाधारो व्यधीयत ॥ ६७ ॥ इदानीं त्वभवन् कन्या । बह्वयस्तत्पाणिपीडनं ॥ धनं विना कथंकारं । त्वया कारिष्यते ननु ॥ ६८ ॥ गृहस्थता धनाभावे । स्वामित्वं न्यायविप्लवे ॥ चारित्रं च कुशीलत्वे । कथं संगतिमंगति ॥ ६९ ॥ वरमंधो वरं मूको । वरं पंगुर्वरं कुणिः ॥ सर्वथा दुर्विधो नैव । निःशेषविपदास्पदं ॥७०॥ गृही सधन एवार्च्यो । मुनिर्निर्धन एव च ॥ द्वयं त्विदं विपर्यस्तं । न प्रशस्तत्वमंचति ॥ ७१ ॥ तदुद्यच्छस्व हे स्वामिन् । द्युम्नमूर्जितमर्जय ॥ उद्यमे नास्ति दारिद्र्यमिति लोकश्रुतिर्यतः ॥ ७२ ॥ तत्प्रियोक्तं वचः श्रुत्वा । विष्णुशर्मा परामृशत् ॥ अहो मे मंदभाग्यत्वं । यदाजन्मापि दुःस्थता ॥ ७३ ॥ निःस्वता धनवत्ता वा । नैकांतोऽन्येषु वीक्ष्यते ॥ मम त्वधनतैवैका । हताशः करवाणि किं ॥७४॥ गुणा यांति ध्वंसं नयविनयदाक्ष्यार्जवमुखाः । न मान्यत्वं लोके प्रसरति न कीर्तिर्विलसति ॥ कुटुंबं पार्थक्यं प्रथयति विरज्यंति तनयाः । न कांतापि स्नेहं कलयति धिगेतामधनतां ॥ ७५ ॥ मृत्युनिःस्वतयोर्मध्ये । वरं मृत्युर्न निःस्वता ॥ पूर्वस्मादल्पदुःखत्वं । परस्माच्च पदे पदे ॥ ७६ ॥ तद्धनं धनमानेष्ये । श्रित्वा देशांतरं स्वयं ॥ ध्यात्वेति विष्णुशर्माथ । प्रतस्थे पृथुधीर्गृहात् ॥७७॥ क्रमात् क्रामन् धनान् देशान् । भ्रमन् रत्नाकरानपि ॥ प्रकाशयन् कलाः सर्वा[3] । दातृनावर्जयन्नपि ॥७८॥ तथापि क्वापि न प्राप । स विप्रः श्रेयसीं श्रियं ॥ देशांतरेऽपि यद्वा स्यात् । प्राक्तनं कर्म नान्यथा ॥७९॥

१ दु स्वता॰ प्र. २ पूर्वत्र यत्र दीनत्वं परत्रच पदे पदे, प्र. ३ सर्वं दातृन् प्र. ४ प्राकृत, प्र.

युग्मं ॥ विधत्तां वाणिज्यं श्रयतु नरनाथं प्रविशतु । द्युलोकं पातालं व्रजतु भजतां वा धनपतिं ॥ अधीतां शास्त्रौघं दृढयतु तपोऽभ्यस्यतु कला-स्तथापि प्राक्कर्म स्फुरति न कदापि ह्यपरथा ॥ ८० ॥ अस्तशर्मा ततो विष्णु-शर्मा स्वां दुर्दशां वदन् ॥ दक्षं जरद्द्विजं कंचि-त्पप्रच्छ द्रविणेच्छया ॥ ८१ ॥ सोऽभ्यधाद्वारिधौ रत्न-द्वीपे रत्नखनीश्वरी ॥ आराद्धा देवता दत्ते । रत्नं भाग्यानुमानतः ॥ ८२ ॥ मंदभाग्योऽपि देव्याप्त-दिव्यद्रत्नप्रभावतः ॥ भव्यं विभवमासाद्य । सद्यो माद्यति भूपवत् ॥ ८३ ॥ तस्योपदेशतः सोऽपि । यानेन मनसेव तां ॥ रत्नखानिसुरीं प्राप्य । प्रसादयितुमादृतः ॥ ८४ ॥ स्नातः कृतोपवस्त्रश्च । धौतचीवरपीवरुक् ॥ पुष्पैरभ्यर्च्य तां देवीं । विप्रः प्रोचे कृतांजलिः ॥ ८५ ॥ कल्पवल्लीमिव श्रुत्वा । त्वां दारिद्र्यविदारिणीं ॥ देव्यहं भूयसीभक्तिः । प्राप्तो लक्ष्मीसमीहया ॥ ८६ ॥ सद्यस्तथा प्रसीद त्वं । यथाहं स्यां श्रियां निधिः ॥ नो चेत्तवोपरि प्राणान् । मुंचाम्यश्मकणानिव ॥ ८७ ॥ इत्युक्त्वा विष्णुशर्माथ । पुरस्तस्या निषेदिवान् ॥ तदेकतानहृद्भूय । योगींद्र इव निश्चलः ॥ ८८ ॥ युग्मं ॥ तस्यैवं ध्यायतो देवी-मेकविंशतिवासरे[1] ॥ तडिद्दंडप्रचंडाभा । प्रादुर्भूय बभाण सा ॥ ८९ ॥ त्वं रे पूर्वभवे पुण्य-पण्यं नागण्यमार्जयः ॥ वीजेनेव विना तेन । नोल्लसंतीप्सितांकुराः ॥ ९० ॥ तत्त्वं सत्वरमुत्तिष्ठ । याहि मंदालयाद्बहिः ॥ न चेद्वारिधिमध्ये त्वां क्षेप्स्याम्युत्पाट्य लोष्ठवत् ॥ ९१ ॥ विष्णुशर्मा प्रणम्योचे । प्रार्थनाकल्पपादपे? ॥ अभिधत्से त्वमप्येवं । यदि तर्हि मृतोऽस्म्यहं ॥ ९२ ॥ किंच पुण्येन यद्यर्थ-स्तव किं देवि ? वैभवं ॥ रोगी पथ्येन नीरुक्चेत् । साहाय्यं भिषजः किमु ॥ ९३ ॥ प्रसादाद्देवतादीनां ।

१ रैः, प्र. २ मद्गेहतो बहिः, प्र.

निष्पुण्योऽप्यश्नुते श्रियं ॥ किं स्पर्शोपलवेधेन । नायः श्रयति हेमतां ॥९४॥ पुरा कल्पद्रुमीभूय । सेवकानां सुरोत्तमे ! ॥ अधुना वद्धमुष्टित्वं । दधाना किं न लज्जसे ॥९५॥ अचेतना अपीष्टं चे–द्ददते स्वर्द्रुमादयः ॥ सचेतने ! कथं तर्हि । त्वं न मे ददसे वद ॥९६॥ तत्तुष्टा देवि ! मे देहि । चिंतारत्नं तदुत्तमं ॥ श्रीदामि यत्प्रसादेन। नो चेत्पश्य कृतं मम ॥९७॥ इत्युदीर्य स्फुरद्वीर्यः । क्षुर्या निशितधारया ॥ कुष्मांडवन्निजं शीर्षं । द्विजश्छेत्तुं प्रचक्रमे ॥ ९८ ॥ तुष्टोच्चैस्तेन सत्वेन । सा देवी मूर्तपुण्यवत् ॥ दत्वा देवमणिं तस्मै । जलरेखेव जग्मुषी ॥९९॥ विष्णुशर्मापि सिद्धार्थ–स्ततः स्वसदनोत्सुकः ॥ यानमारुह्य वेगेन । प्रतस्थे वार्धिवर्त्मना ॥ १०० ॥ जलधौ व्रजतस्तस्य । निशि राकानिशाकरः ॥ नाविकानां तमोलुप्तं । वर्त्म व्यक्तुमिवोद्ययौ ॥ १०१ ॥ प्रेक्ष्यापत्यं विधुं वार्धिः । परिरब्धुमना इव ॥ ऊर्ध्वं प्रासारयल्लोलान् । कल्लोलान् स्वकरानिव ॥१०२॥ चंद्रं सांद्रद्युतिं दृष्ट्वा । दीप्रोऽयं किमु मन्मणिः ॥ इति ध्यात्वा करेऽकार्षीद् । द्विजातिस्तं विलोकितुं ॥ १०३ ॥ पश्यतोऽनेकशस्तस्य । चंद्रबिंबं मणिं च तं ॥ यानबाह्यात्कराच्च्युत्वा । पयोधौ पेतिवान् मणिः ॥ १०४ ॥ च्युते चिंतामणौ तस्मिन् । जीवितव्य इवात्मनः ॥ उचितं चेतनाशून्यो । द्विजः समजनि क्षणं ॥ १०५ ॥ कथंचिच्चेतनां प्राप्य । मुहुर्निंदन् स्वमुग्धतां ॥ मुष्टवत् पर्यदेविष्ट कष्टतः सुचिरं द्विजः ॥ १०६ ॥ यथा मुग्धो द्विजः सोऽब्धौ । गमयामासिवान्मणिं ॥ तथा नृजन्म निर्धर्मो । गमयत्येव मानवः ॥ १०७ ॥ ततस्त्वयाधिगम्यैत–न्मानवं जन्म मानवं[1] ॥ यशोभद्र ! स्वभद्राय । श्रेयः संचेयमुच्चकैः ॥ १०८ ॥ गुरोरित्युपदेशेन । सौरभेणेव वासितः ॥ स धर्मं

१ लक्ष्म्या-अपूर्वम्.

तत्ववन्मेने । हितं को हि न मन्यते ॥ १०९ ॥ विहृतेऽपि गुरौ तस्मि–न्निधानमिव निर्धनः ॥ धर्मं गुरूदितं नैव । स मुमोच कदाचन ॥ ११० ॥ अन्यदा प्रावृडारंभे । केकारवमनोहरे ॥ निर्जगाम यशोभद्रः । क्षेत्रक्षोणिदिदृक्षया ॥ १११ ॥ तदा क्षेत्रेषु मूलानि । भृत्येषु ज्वालयत्स्वयं ॥ दृष्टवान् गर्भिणीमेकां । निर्दग्धां पन्नगप्रियां ॥ ११२ ॥ दध्यौ च धिगिदं क्षेत्रं–कर्मनिर्माणमंगिनां ॥ म्रियंते जंतवो हंत । यत्र पंचेंद्रिया अपि ॥११३॥ न मोक्षः क्वापि जीवाना–मेकजीववधादपि ॥ भूरिजीववधे जाते । का गतिर्भविता हहा ॥११४॥ जनैरारंभसंरंभः । कुटुंबार्थं विधीयते ॥ क्लिश्यते नरकोत्संगे । स त्वेकस्तद्भवांहसा ॥११५॥ कथमेताः प्रपूर्येरन् । नरकक्षोणयोऽखिलाः ॥ अस्मादृशा भवेयुश्चे–त्पापीयांसो न भूरिशः ॥११६॥

सप्तैव नरकावन्यः । श्रूयंतेऽर्हन्मते ततः ॥ ईदृक्पापकृतः कुत्र । समुत्पत्स्यामहे वयं ॥ ११७ ॥ ते धन्यास्ते विवेकज्ञाः । समस्तारंभवर्जनात् ॥ श्रित्वा भागवतीं दीक्षां । निष्पाप्मानश्चरंति ये ॥ ११८ ॥ ध्यात्वेति श्रावकामात्यं । सहादाय स हारभृत् ॥ यशोभद्रो ययौ तं स्वं । गुरुं डिड्वाणकस्थितं ॥ ११९ ॥ नत्वा श्रीदत्तसूरिं तं । स्वं तत्पापं निवेद्य च ॥ तत्प्रायश्चित्तमप्राक्षी–दश्रुमिश्रविलोचनः ॥ १२० ॥ व्याजहाराथ निर्व्याजं । सूरिर्देव? निशम्यतां ॥ जंतुघातोद्भवमघं । सर्वाघादतिरिच्यते ॥ १२१ ॥ तत्रापि यो वधः पंचें–द्रियाणां स वधो महान् ॥ यस्माज्जंतुरधो याति । शैलशृंगच्युताश्मवत् ॥ १२२ ॥ अमुष्मात्पापतो मोक्ष–स्तच्चारित्रं विना न ते ॥ किमपास्य सुधापानं । जीव्यते विषभक्षणात् ॥ १२३ ॥ तन्निशम्य स निर्विण्णो । हारेण जिनमंदिरं ॥ विधाप्य व्रतमादत्त । श्रीदत्तगुरुसन्निधौ ॥ १२४ ॥ गुरोः पुरो व्रताद्देऽसौ ।

१ त्रं–प्र. २ डिंडाणक. प्र.

त्यक्त्वा षड् विकृतीर्ललौ ॥ एकांतरोपवासानां । यावज्जीवमभिग्रहं ॥ १२५ ॥ सोऽधीयन् सर्वसिद्धांतं । दुश्चरं च तपश्चरन् ॥ सूरिणा स्वपदेऽन्यासि । क्रमाद्गीतार्थतां गतः ॥ १२६ ॥ शमयंस्तमसां स्तोमं । भव्यपद्मान् विकाशयन् ॥ भासां पतिरिवाभासीत् ॥ श्रीयशोभद्रसूरिराट् ॥ १२७ ॥ आयुःप्रांतं स विज्ञाय । विज्ञानातिशयान्निजात् ॥ त्रयोदशोपवास्याप । दिवं रैवतकाचले ॥ १२८ ॥ प्रद्युम्नसूरिस्तत्पट्टे । व्यद्योतिष्ट पटिष्ठधीः ॥ प्रद्युम्नं जितवान् स्वस्य । नामसाम्यरुषेव यः ॥१२९॥ सूरिः श्रीगुणसेनोऽथ । तद्गणश्रियमाश्रयत् ॥ यो विश्वं नायकीभूय । जिगाय गुणसेनया ॥ १३० ॥ पदे तस्यापि शस्यात्मा । दीप्यते स्म गतस्मयः ॥ सूरिः श्रीदेवचंद्राख्यः । कृतव्याख्यः सुरैरपि ॥ १३१ ॥ स्थानांगवृत्ति–श्रीशांति–चरित्राद्या अनेकशः ॥ प्रथंते यत्कृता ग्रंथा । ज्ञानांशा इव देहिनः ॥ १३२ ॥ स सूरिर्विहरन्नाप । मूर्तो धर्म इव स्वयं ॥ पुरं गुर्जरदेशीयं । धंधूक इति विश्रुतं ॥ १३३ ॥ तद्वास्तव्यः समस्तोऽपि । संघः कमलखंडवत् ॥ सूर्यालोकवशादासी–दुचितं स्मेरतांचितः ॥ १३४ ॥ तत्र मोढान्वयः प्रौढ–दृढिमा सुरशैलवत् ॥ आसीत् श्रेष्ठमतिः श्रेष्ठी । धर्मिष्ठश्चाचिगाह्वयः ॥ ॥ १३५ ॥ गुणेष्वसत्सपत्नेषु । संसजत्येष सर्वदा ॥ इतीव रुषिता दोषाः । यं कदापि न पस्पृशुः ॥ १३६ ॥ गेहिनी देहिनीव श्रीस्तस्याभूद्भाग्यभंगिभूः ॥ पाहिनी कामहृत्कील–शीललीलावगाहिनी ॥ १३७ ॥ अन्येद्युः सुखसुप्ता सा । स्वप्ने चिंतामणिं शुभं ॥ लब्ध्वा दत्वा गुरुभ्यश्च । जागरामास तत्क्षणं ॥ १३८ ॥ तया स्वप्नफलं पृष्टो । देवचंद्रप्रभुर्जगौ ॥ भावी तव सुतः कोऽपि । भद्रे ? लोकोत्तरस्थितिः ॥ १३९ ॥ चिंतारत्नं गुरुभ्यो य–द्ददौ तेन तु वेद्म्यहं ॥

१ गाढ. प्र. २ गुण. प्र. ३ स्यानाद्. प्र.

त्वत्सुतः सूरिराड् भावी । जैनशासनभासनः ॥ १४० ॥ तामाचम्य गुरोर्वाचं । सुधामिव मनोरमां ॥ अनभ्राच्छकुन-ग्रंथिं । सैवमस्त्विति वादिनी ॥ १४१ ॥ तस्यामेव निशीथिन्यां । तस्याः कुक्षाववातरत् ॥ कोऽपि पुण्यनिधिर्जीवः । सरस्यां राजहंसवत् ॥ १४२ ॥ समये परिपूर्णेऽथ । साऽसूत सुतमुत्तमं ॥ यथा मेरुमही कल्प-द्रुमं विश्वजनेप्सितं ॥ १४३ ॥ तदा वागशरीरासी-द्व्योम्नि भाव्येष तत्त्ववित् ॥ जिनवज्जिनधर्मस्य । स्थापकः सूरिशेखरः ॥ १४४ ॥ जन्मोत्सवं समापय्य । द्वादशाहेऽथ तत्पिता ॥ चाचिगश्चंगदेवेति । नाम पुत्रस्य तेनिवान् ॥ १४५ ॥ लघीयसोऽपि तस्यासी-त्प्रज्ञा विश्वातिशायिनी ॥ अभ्युद्यतोऽपि किं भानो-र्न भवेदद्भुता प्रभा ॥ १४६ ॥ मोढचैत्येऽन्यदा देव-चंद्रसूरौ समेयुषि ॥ आजगाम तदा तत्र । पाहिनी चंगदेवयुक् ॥ १४७ ॥ गुरुः प्रदक्षिणीकृत्य । यावद्देवान्नमस्यति ॥ तावद्गुर्वासने बाल्या-च्चंगदेवो न्यविक्षत ॥ १४८ ॥ तं दृष्ट्वा सूरिराचष्ट । तत्सवित्रीं स्मरस्यदः ॥ स्वप्ने चिंतामणिं लब्ध्वा । गुरवे त्वं प्रदास्यसि ॥ १४९ ॥ स्वयमेवाधुना तेऽसौ । सुतस्तदुचितं व्यधात् ॥ पुण्यनैपुण्यजः स्वप्नः । प्रायो भवति नान्यथा ॥ १५० ॥ तदयं दीयतां भद्रे! । पुत्रोऽस्मभ्यं पवित्रधीः ॥ यथार्हद्धर्मसाम्राज्यं । जनयेज्जगतीतले ॥ १५१ ॥ त्वद्गेहे तस्थिवानेष । ज्ञास्यते कुत्रचिन्न वा ॥ सूरिर्जातस्तु विश्वेऽपि । यावच्छ्रीजिनशासनं ॥ १५२ ॥ इत्युक्ता सूरिणा प्रोचे । पाहिनी भक्तिवाहिनी ॥ युक्तमुक्तमिदं किंतु । प्रार्थ्यतां जनकोऽस्य सः ॥ १५३ ॥ ततस्तं चाचिगं सूरिः । प्रतिबोध्य कथंचन ॥ सर्वस्वमिव तद्वंश-श्रियस्तत्पुत्रमग्रहीत् ॥ १५४ ॥ तं चंगदेवमादाय । दायादं तेजसा रवेः ॥ देव-चंद्रप्रभुः स्तंभ-तीर्थं प्रति विचेरिवान् ॥ १५५ ॥ प्रज्ञातिशयमालोक्य । तस्य वाचस्पतेरिव ॥ शास्त्राब्धिपारदृ-

श्वत्वं । श्रीसूरिः समभावयत् ॥ १५६ ॥ महस्वितेव माणिक्ये । पुष्पे सुरभितेव च ॥ शास्त्रप्रवेशतस्तास्मि-श्चातुरी व्यलसत्स्वयं ॥ १५७ ॥

अथ श्रीमालवंशीयं । जिनशासनवत्सलं ॥ आहूयोदयनामात्यं । देवचंद्रो गुरुर्जगौ ॥ १५८ ॥ श्रेष्ठिचाचिगपुत्रोऽयं । चंगदेवो व्रतेऽस्तिधीः ॥ त्वया विधाप्यतामस्य । मंत्रिन्? दीक्षामहामहः ॥ १५९ ॥ तदात्मनीनं विज्ञाय । स्पृहयालुः शुभाय सः ॥ पुण्याकृष्टिमिवोत्कृष्टां । तत्सामग्रीमचीकरत् ॥ १६० ॥ अथ श्रीवर्धमानस्य । प्रासादे सादितांहसि ॥ माघमासस्य धवले । पक्षे चातुर्दशेऽहनि ॥ १६१ ॥ रोहिण्यां शनिवारे च । रवियोगे त्रयोदशे ॥ सप्तग्रहबलोपेते । वृषलग्ने शुभेंशके ॥ १६२ ॥ श्रीसूरिमंत्रस्मरण-स्मेरातिशयशालिना ॥ सूरिणा निजहस्तेन । चंगदेवः स दीक्षितः ॥ १६३ ॥ त्रिभिर्विशेषकं ॥ यशसा वदनेनापि । द्विरनेन जितः शशी ॥ इतीव सूरिस्तस्याख्यां । सोमचंद्र इति व्यधात् ॥ १६४ ॥ पापं लुनीहि लक्ष्मीं स्वां । पुनीहि सुकृतं श्रय ॥ तद्दीक्षामहमातत्य । चकारोदयनो न किम् ॥ १६५ ॥ अपर्यध्ययनीभूय । सोमचंद्रोऽथ सांद्रधीः ॥ अध्येतुं प्रावृतत्सर्व-शास्त्राणि गुरुसन्निधौ ॥ १६६ ॥ गुरुरप्यन्यशिष्येभ्य-स्तमुच्चैरध्यजीगपत् ॥ सत्पात्र एव हि प्रायः । प्रयासं श्रयते सुधीः ॥ १६७ ॥ अल्पीयसापि कालेन । सोऽधीयन्नप्रमद्वरः ॥ प्रज्ञायानेन संजज्ञे । पारीणो वाङ्मयांबुधेः ॥ १६८ ॥ पदानुसारिप्रज्ञाढ्यान् । सूरीन् श्रुत्वान्यदाग्रिमान् ॥ विद्वद्वृंदारकोऽप्येष । चिंतयामास चेतसि ॥ १६९ ॥ स्तुत्याः सर्वेऽपि पूर्वे ते । सूरयो गुणभूरयः ॥ बुद्ध्या पदानुसारिण्या । ये पूर्वाण्यध्यगीपत ॥ १७० ॥

१ शुभाशयः, प्र २ इत्याशिष ददौ सूरि सचिवायाऽपि प्रौढवाक्–प्र.

ऐदंयुगीनानस्मान् धिक् । सर्वथा मंदमेधसः ॥ क्लिश्नन्ति ये गुरून् गाढं । विदंति च न किंचन ॥ १७१ ॥ ततो यद्यपि शास्त्रज्ञो । जज्ञेऽहं तदपि स्वयं ॥ श्रित्वा कश्मीरदेशं तं । तोषयिष्यामि भारतीं ॥ १७२ ॥ सोमचंद्रेण विज्ञप्ते । स्वेप्सिते तस्य तद्गुरुः ॥ प्रपेदेऽतिशयात् ज्ञात्वा । शारदासंमुखागमं ॥ १७३ ॥ उज्जयंतावताराख्ये । चैत्येऽथ प्रवरे दिने ॥ कश्मीरान्प्रति स स्मेरः । प्रस्थाने स्थितवान्मुनिः ॥ १७४ ॥ मांत्रिकं स्नानमाधाय । स्मरन् ज्योतिर्मयं महः ॥ तस्यामेव निशि ध्यानं । स सारस्वंतमादधौ ॥ १७५ ॥ विश्वस्याभयदां न्यस्त-पुस्तिकां वामके करे ॥ भक्तेभ्यो वरदां साक्ष-माला-मपि च दक्षिणे ॥ १७६ ॥ कर्पूरपूररोचिष्णु-द्युतिद्योतितदिङ्मुखीं ॥ उन्निद्रपद्मपत्राभ-नेत्रकांतिविलोकिनीं ॥ १७७ ॥ हृदये ध्यायतस्तस्य । भास्वरां वागधीश्वरीं ॥ कृष्टेव तेन ध्यानेन । सा साक्षादजनि क्षणात् ॥ १७८ ॥ त्रिभिर्विशेषकं ॥ ब्रह्मपुत्री सवित्रीव । हक्पातैः स्नेहसांद्रितैः ॥ प्रसादं बोधयंतीव । सैवमाचष्ट तं मुनिं ॥ १७९ ॥ कश्मीरान् मास्म यासीस्त्वं । वत्स । मत्तोषहेतवे ॥ त्वद्भक्तिप्रणिधानाभ्यां । प्रीतास्म्यत्रापि संप्रति ॥ १८० ॥ सिद्धसारस्वतो भूयाः । प्रसादेन ममाधुना ॥ इत्युदीर्य तीरोऽधत्त । देवी विद्युदिव क्षणात् ॥ १८१ ॥ तदा च स्फुरितस्फार-सारसारस्वतोदयात् ॥ प्रज्ञा सर्वपथीनाभू-त्तस्य भानोरिव प्रभा ॥ १८२ ॥ अतिवाह्य निशाशेषं । सरस्वत्याः स्तवैर्नवैः ॥ कृतकृत्यः समायासीत् । प्रातः स गुरुसन्निधिम् ॥ १८३ ॥ वाक्प्रसादात्तमालोक्य । दीप्रमप्रीयतोच्चकैः ॥ गुरुर्भृंग इवोन्निद्रं । पद्मं शूरप्रकाशतः ॥ १८४ ॥ विज्ञप्ते रात्रिवृत्तांते । सोमचंद्रं गुरुः स्वयं ॥ तुष्टस्तुष्टाव कः पात्रं । न स्तुवीत गुणोत्तरं

१ कान्त्यव. प्र. २ स्पष्टमाचष्ट. प्र.

सकलं गुणौघं ॥ असंतमप्यानयति व्रजंती । नयत्यमुं संतमपि क्षणेन ॥ १९९ ॥ सुखसर्वंकषं तस्य । दारिद्र्यमभवत्तथा ॥ यथा भोजनमात्रेऽपि । संदेहः सर्वतोऽस्फुरत् ॥ २०० ॥ धनदश्रेष्ठिना सूनु-सनाथेन ततः स्वयं ॥ निधिस्थानानि सर्वाणि चख्निरे द्रविणेप्सया ॥ २०१ ॥ बहिर्निष्काश्य सोऽद्राक्षी-द्यं यं स्वर्णमयं निधिं ॥ स सोऽङ्गारमयो जज्ञे । तस्याभाग्यविजृंभितैः ॥२०२॥ अथाघ्नानो निजं वक्षः । स्फोटयन्मस्तकं तथा ॥ रुष्टाहिदष्टवत्सद्यो । मूर्छालः सोऽपतत् क्षितौ ॥२०३॥ कथंचिज्जातचैतन्यो । व्यलापीच्चेति विह्वलः ॥ हहा दैव! त्वया चक्रे । किमेतद्दारुणं मम ॥ २०४ ॥ हृत्वा बहिश्चरीं लक्ष्मीं । मुमुदानो न किं हृदि ॥ यदंतःस्थानपि निधी-नीदृक्षान् विदधे भवान् ॥ २०५ ॥ बहिर्धने गते मेऽन्तर्द्धनं ह्युपकरिष्यति ॥ मयेति या कृता बुद्धिः । सापि चक्रे त्वया वृथा ॥ २०६ ॥ तावन्मतिः स्फुरति वल्गति शास्त्रमंतः शौंडीर्यमुल्लसति भाति महत्वमुच्चैः ॥ यावन्मनोरथरथप्रथिमाद्रिमार्गे । न प्रातिकूलिकतमत्वमुपैषि[1] दैव! ॥ २०७ ॥ यद्वा भवत्स्वभावोऽय-मस्तिमाननगारिवत् ॥ निःस्वो भवति निःस्वस्तु । चक्रीव कमलानिधिः ॥ २०८ ॥ एवं विलप्य धैर्येण । सन्नह्य हृदयं निजं ॥ तानंगारान् बहिःशाला-कोणके क्षिपतिस्म सः ॥ २०९ ॥ ततः स धनदश्रेष्ठी । लज्जमानो महाजने ॥ कथंचिद् दुःखविवशान् । दिवसानत्यवाहयत् ॥ २१० ॥ सोमचंद्रयुतोऽन्येद्यु-र्वीरचंद्रोगणिर्भ्रमन् ॥ तस्य वेश्माविशल्लातुं । भिक्षां भंक्तुमिवापदं ॥ २११ ॥ तदा च सपरिवारो । धनदो निर्धनाग्रणीः ॥ कष्टितोत्थितवत्पेयां । पयोरूपां पिबन्नभूत् ॥ २१२ ॥ चतुर्दिक्षु गृहं प्रेक्ष्य । तदीयं तच्च भोजनं ॥ सोमचंद्रो गणिं

---

१ मुपैति दैवम्. प्र.

प्रोचे । शनैः पश्चादवस्थितः ॥ २१३ ॥ श्रेष्ठ्ययं किं समृद्धोऽपि । पेयां पिबति निःस्ववत् ॥ महीश इव नाश्नाति । शस्यां रसवतीं कथं ॥ २१४ ॥ गणिर्जगौ त्वमिभ्यानां । धिष्ण्यादानीय मोदकान् ॥ अश्नासि तन्न जानासि । निःश्रीकाणां किल स्थितिं ॥ २१५ ॥ प्रतिवेश्मनि दुःस्थानां । त्वमस्थास्यः कदापि चेत् ॥ तदाज्ञास्यः सुखेनैव । समस्तामपि तां मुने ! ॥ २१६ ॥ सोमचंद्रः पुनः प्रोचे । निःस्वोऽयं कथ्यते कुतः ॥ यदस्य वेश्मकोणेषु । पश्यामि कनकोत्करान् ॥ २१७ ॥ ते क्व संतीति तत्पृष्टः । स तस्मै द्रागदीदृशत् ॥ स्वर्णदीनारराशींस्तान् । दीप्रान्मंगलतारवत् ॥ २१८ ॥ दृष्ट्वा तान् विस्मितोऽत्युच्चै—र्गणिः श्रेष्ठ्यपि तद्वचः ॥ संनिकृष्टतया श्रुत्वा । किं वक्ति शिशुरित्यवक् ॥ २१९ ॥ न किंचिदिति जल्पाकों । गणिः पृष्टो महाग्रहात् ॥ सोमचंद्रोदितं सर्वं । श्रेष्ठिने तदचीकथत् ॥ २२० ॥ क्षुल्लकस्य दृशांगारान् । स्वर्णीभूतान्निभाल्य तान् ॥ तावन्नवीनद्रविण—लाभेनेव स पिप्रिये ॥ २२१ ॥ लगित्वा पादयोस्तस्य । स्वं वृत्तांतं निवेद्य च ॥ उज्जीवित इव श्रेष्ठी । तमभाषिष्ट शिष्टधीः ॥ २२२ ॥ मन्ये मुने ! त्वमेवासि । ग्रामणीः पुण्यशालिनां ॥ प्रभाववैभवं यस्य । शिशुत्वेऽपि प्रकाशते ॥२२३॥ किंच यत्स्वर्णतोयेन । त्वमेव स्तनयित्नुवत् ॥ तृषार्त्तं चातकमिव । मत्कुटुंबमजीवयः ॥ २२४ ॥ परं प्रसद्य दीनाराः । स्पृश्यंतां निजपाणिना ॥ यथा त्वयि गतेऽप्येते । दधते नान्यरूपतां ॥ २२५ ॥ दयया सोमचंद्रेण । तदुक्ते विहिते सति ॥ तद्दृष्टावेव धनदः । स्वकोशे तान्यवीविशत् ॥ २२६ ॥ ततो मुनियुतः श्रेष्ठी । समेत्य गुरुसन्निधौ ॥ नत्वा च सोमचंद्रीयं । तं प्रभावं न्यवेदयत् ॥ २२७ ॥ ऊचे च कनकं तत्ते । त्वच्छिष्यातिशयोदयात् ॥ प्रभो ! प्रसद्य मां शाधि । कुत्र कुत्र व्ययेऽधुना ॥ २२८ ॥ गुरुर्जगाद निर्लोभः । तन्नेदृग्भक्ति-

रस्ति चेत् ॥ निर्मापय जिनेंद्रस्य । विमानमिव मंदिरं ॥ २२९ ॥ तुष्टस्तया गिरा श्रेष्ठी । चैत्यं निर्माप्य सत्तमं ॥ तेनैव च प्रतिष्ठाप्य । वीरबिंबं न्यवेशयत् ॥ २३० ॥ पौरास्तेन चरित्रेण । चेतस्युच्चैश्चमत्कृताः ॥ तुष्टुवुः सोमचंद्रं त—मेवं माग-धवन्मुहुः ॥२३१॥ श्रीसोमचंद्रमुनिरत्र चिरं स नंद्या—द्यन्नेत्रमात्रपतनादपि शैशवेऽपि ॥ अंगारकेषु भवतिस्म सुवर्णभावो । लोहेषु सिद्धरससंगमतो यथैव ॥२३२॥ देवचंद्रप्रभुस्तस्मा—त्पुराच्चरणरेणुभिः ॥ पावयन् पृथिवीपीठं । प्राप्तोऽणहिल्लपत्तनं ॥२३३॥ तत्रास्ति सोमचंद्रस्य । मित्रं देवेंद्रसूरिराट् ॥ चंद्रस्य कैरवमित्र । चित्रं न जडिमास्पदं ॥२३४॥ शुश्रुवे कर्हिचित्ताभ्यां । गौडदेश्यजनाननात् ॥ कलानामाकरो गौड—देशो वारामिवार्णवः ॥ २३५ ॥ ततस्तौ मंत्रयेतेस्म । गौडदेशं प्रति स्वयं ॥ गत्वा कोऽपि कलाभ्यासः । क्रियते कौतुकास्पदं ॥२३६॥ यद्बालोऽपि कलायोगा—न्महतामेति मान्यतां ॥ स्पष्टोऽत्रार्थेऽस्ति दृष्टांतो । महेश्वरशिरःशशी ॥ २३७ ॥ अचेतनमपि द्रव्यं । वर्धते चेत्कलांतरात् ॥ सचेतनः कथं तर्हि । न वर्धेत ध्रुवं ततः ॥ ॥ २३८ ॥ ततः कथंचिदापृच्छ्य । स्वगुरू तावुभौ मुनी ॥ प्रस्थाय पत्तनात् सायं । खिरालूग्राममीयतुः ॥ २३९ ॥ तयोः स्थितवतोस्तत्र । यतिः कोऽपि जरत्तरः ॥ विद्यासिद्ध इवाभ्येत्य । कुतोऽपि मिलितः स्वयं ॥ २४० ॥ स प्रोचे तौ कृतौचित्यौ । ब्रूतं क्व प्रस्थितौ युवां ॥ कथिते सत्यभिप्राये । ताभ्यां वृद्धोऽभ्यधात् पुनः ॥ २४१ ॥ कलार्थमयमारंभो । युवयोर्श्रेद्विजृंभते ॥ तर्हि देशभ्रमं मास्म । कार्ष्ट कष्टावहं तनोः ॥ २४२ ॥ अहमेव प्रदास्ये वां । कलास्ताः सकलाः कलोः ॥ ताभिर्भृतोऽस्त्ययं कायो । राकाशीतांशुवन्मम ॥ २४३ ॥ परं मामुज्जयंताद्रिं । कथंचिन्नयतं युवां ॥ परिचार्यौ-

१ पद्म. प्र. २ मनोहरा.

पधीः कुर्वे । यथाहं युष्मदीप्सितं ॥२४४॥ सत्पात्रविद्यान्यासेन । समाहितमनास्ततः ॥ साधयामि परं लोकं । भवत्कृतांति-मक्रियः ॥ २४५ ॥ ततस्तौ हृपितौ ग्रामा—धीश्वरेण सुखासनं ॥ तद्वाहकांश्च प्रगुणी—कार्य रात्रौ निदद्रतुः ॥ २४६ ॥ क्षणं सुप्तोत्थितौ तौ स्वं । रैवताद्रिशिरःस्थितं ॥ समालोक्य परं चित्रं । वहतः स्म हृदंतरे ॥ २४७ ॥ क्व स ग्रामः क्व तद्धाम । क्व स वृद्धतपोधनः ॥ क्वावां क्व चोज्जयंतोऽयं । किमेतत्सर्वमद्भुतं ॥ २४८ ॥ ध्यायंताविति तौ साधू । काचिद्देवी तदावदत् ॥ खंडितोद्दंडमार्तंड—रोचिर्मंडलमंडिता ॥ २४९ ॥ कलासु लालसं चित्तं । वीक्ष्य वां तत्प्रदित्सया ॥ प्रासास्म्यहं भवद्भाग्यैः । कृष्टा शासनदेवता ॥ २५० ॥ प्रपंचोऽयं समस्तोऽपि । वृद्धसाध्वागमादिकः ॥ चक्रे मयैव युवयो—रत्रानयनवांछया ॥ २५१ ॥ इदं किल महातीर्थं । श्रीनेम्येतस्य नायकः ॥ अत्रौपधानि दिव्यानि । मंत्राश्चाति-फलावहाः ॥ २५२ ॥ इत्युक्त्वा सा नृपाकृष्टि—देवाकृष्टिपटीयसः ॥ मंत्रान् पठितसंसिद्धां—स्ताभ्यां तुष्टा व्यशिश्रणत् ॥ ॥२५३॥ सद्यः प्रत्ययकारीणि । वश्यादावौपधान्यपि ॥ भ्रामं भ्रामं गिरेः शृंगे । देवी तौ पर्यचीचयत् ॥ २५४ ॥ मास्म विस्मरतामेतौ । मंत्राद्यमिति सा मुनी ॥ कमंडलुं करे कृत्वा । सुधापानार्थमार्थयत् ॥२५५॥ न सुधापानमप्यर्हे । रात्राविति विविक्तधीः ॥ नैपीद्देवेंद्रसूरिस्त—दहो सस्पृहता व्रते ॥२५६॥ उत्सर्गं चापवादं च । विचार्य चतुराशयः ॥ अकुंठोत्कंठया कंठम् । सोमचंद्रस्तु तां पपौ ॥२५७॥ सोमचंद्रः सुधापानात् । तत्सर्वं स्मृतवान् हृदि ॥ तद्विनान्यस्तु न तथा । मति-र्भाग्यानुसारिणी ॥२५८॥ ततस्तौ तीर्थनमनात् । कृतार्थौ सैव देवता ॥ निशाशेषे समुत्पाट्य । मुमोच गुरुसन्निधौ ॥२५९॥ अत्याश्चर्यकरं प्रात—श्चरित्रं तन्निवेद्य तौ ॥ स्वगुरू संघमप्युच्चै—श्चक्रतुः प्रमदास्पदं ॥ २६० ॥ सोमचंद्रं गुरुरथ ।

ज्ञात्वा गच्छधुरंधरं ॥ तस्मै सूरिपदं दातु—मुदतिष्ठत सौष्ठवात् ॥ २६१ ॥ संघानुज्ञां समासाद्य । गणकानुपवेश्य च ॥ लग्नं व्यचीचरत्सूरि—र्विश्वस्यापि शिवंकरं ॥ २६२ ॥ अथ माधवमासस्य । तृतीयस्यां तिथौ शुचौ ॥ कर्कलग्ने गुरौ मूर्तौ । राहौ कन्याव्यवस्थिते ॥२६३॥ भौमे धनुःस्थिते शुक्रे । मीनस्थे सबुधे रवौ ॥ मेषाश्रिते तुषारांशौ । शनौ च वृषसंगते ॥२६४॥




लग्नेऽमुष्मिन् विधोर्गेहे । होराद्रेष्काणयोरपि ॥ वर्गोत्तमे नवांशे च । द्वादशांशेऽतिशोभने ॥ २६५ ॥ कवेस्तृतीये त्रिंशांशे । क्षणेऽस्मिन् क्षेमकारिणि ॥ श्रीसंघेन प्रहृष्टेन । कार्यमाणे महामहे ॥ २६६ ॥ नंदिविधिं विधायाग्र्यम् । सोमचंद्राय दत्तवान् ॥ जिनशासनसर्वस्व—मिवाचार्यपदं गुरुः ॥ २६७ ॥ पंचभिः कुलकं ॥ हेमवत्कांतिमांश्चंद्र । इवाह्लादकरोऽस्त्ययं ॥ इतीव हेमचंद्रेति । नाम तस्य गुरुर्व्यधात् ॥ २६८ ॥ वादित्राणि तदा रेणु—दिक्कुक्षिंभरिभिः स्वनैः ॥ ज्ञापयंतीव सूरींद्रं । नवं मोहस्य भीतये ॥ २६९ ॥ हर्षादनर्तिषुः केऽपि । केऽपि गीतमगासिषुः वाद्यान्यवीवदन् केऽपि । केऽपि चास्ताविषुर्गुणान् ॥ २७० ॥ स्वर्णद्रविणधाराभि—र्वर्षंतो व्यवहारिणः ॥ प्रमोदं प्रापयन्नर्थी—केकिनः स्तनयित्नुवत् ॥ २७१ ॥ तदा भवो विभायेव । ननाशेवाशुभोदयः ॥ निदद्राविव मिथ्यात्वं । प्रोवासेव कुवासना ॥ २७२ ॥ ननर्तेव मुदा धर्मः । पुस्फोरेव च संयमः ॥ जगर्जेव तपो ज्ञान—मुन्मिमीलेव सर्वतः ॥ २७३ ॥ पर्यटन् राजपाट्यां सो—ऽन्येद्युः सिद्धधराधिपः ॥ हेमाचार्यं पुरोऽद्राक्षी—दायांतं राजवर्त्मनि ॥ २७४ ॥ तन्मूर्तिस्फूर्तिमालोक्य । चौलुक्यश्चित्रितांतरः ॥ निरुद्ध्य स्वगजं किंचि—दाचक्ष्वेति तमूचिवान् ॥२७५॥ दृष्ट्वा नृपं निरुंधंतं । गजेंद्रप्रसरं

रयात् ॥ तत्कालोचितमित्यूचे । निःक्षोभः प्रभुरप्यथ ॥ २७६ ॥ सिद्धराज! गजराजमुच्चकैः कारय प्रसरमेतमग्रतः ॥ संत्रसंतु हरितां मतंगजा–स्तैः किमद्य भवतैव भूर्धृता ॥ २७७ ॥ चित्ते चमत्कृतः काम—मुत्त्म्यात्यद्भुतया तया ॥ भूपोऽभापत मत्पार्श्वे । सदागम्यं त्वया प्रभो ! ॥ २७८ ॥ ततो गत्वा निशं सूरि—र्मध्याह्ने सिद्धभूधवं ॥ रंजयामास पीयूष—सध्रीचीभिः स्वसूक्तिभिः ॥ २७९ ॥

अथ श्रीसिद्धराजेन । शुद्धं धर्मं बुभुत्सुना ॥ षड्दर्शनीं समाह्वाय्यं । तत्स्वरूपमपृच्छचत ॥ २८० ॥ ततो दर्शनिनः सर्वे । निंदंतो दर्शनांतरं ॥ धर्मं निजनिजान्मार्गा—ज्जगदुर्जगदुत्तमं ॥ २८१ ॥ स्वस्वमार्गप्रतिष्ठान—निष्ठैस्तदुदितैर्नृपः ॥ संशयालुर्भृशं धर्मे । हेमाचार्यमदोऽवदत् ॥ २८२ ॥ सर्वज्ञोपज्ञधर्मज्ञो । निर्द्वेषोऽप्यसि च प्रभो ! ॥ तद्यथावस्थितं धर्म–स्वरूपं मे प्ररूपय ॥ २८३ ॥ यथा तदहमाराध्य । साधयामि समीहितं ॥ धर्मं विना नृजन्मद्रु–रवकेशी यतः स्मृतः ॥ २८४ ॥ यदयं संशयो धर्मे । त्वयि सत्यपि सन्मुनौ ॥ चिंतारत्नेंतिकस्थेऽपि । तद्दारिद्र्यमहो ध्रुवं ॥ २८५ ॥ चातुर्विद्यनिधिः सूरिः । पुराणोक्तां कथामथ ॥ नृपाग्रे वक्तुमारेभे । सद्धर्मज्ञापनेच्छया ॥ २८६ ॥ पुरा शंखपुरं नाम । पुरं परमवैभवं ॥ आसीत्पौलस्त्यपुरवद् । भूरिपुण्यजनान्वितं ॥ २८७ ॥ तत्र शंख इवोन्मील–न्नैर्मल्यः साधुशब्दभूः ॥ श्रेष्ठी शंखाभिधानोऽभू–च्चित्रं न कुटिलाशयः ॥ २८८ ॥ पत्नी यशोमती तस्य । प्रेमैकनिलयालसत्–लावण्यरससंसिक्त–मकरध्वजपादपा ॥ २८९ ॥ तस्यां शुश्रूषमाणाया–मपि दोषात्कुतश्चन ॥ विरज्य तत्पतिश्चक्रे । सद्रूपामपरां

१ समानाय्य. प्र. २ तेऽथ. प्र. ३ करस्थे. प्र.

स्त्रियं ॥ २९० ॥ तया नवीनया पत्न्या । कार्मणादिककर्मणा ॥ स्वपतिश्चतुरोऽप्युच्चै-श्चक्रे दासवदात्मसात् ॥ २९१ ॥ नवपत्नीरतः शंखः । पूर्वां दृष्ट्यापि नैक्षत ॥ यद्वा स्वभाव एवायं । लोको नवनवप्रियः ॥ २९२ ॥ दूना पत्यपमानेन । सपत्न्या चावहीलिता ॥ दवानलेन दग्धेव । हृदि दध्यौ यशोमती ॥ २९३ ॥ वरं गेहत्यागो वरमुरुविरागो भवसुखे । वरं क्ष्वेडग्रासो वरमभिनिवासो वनभुवि ॥ वरं कंठे पाशो वरमखिलनाशो मृगदृशां । न तु प्रेयान् दृष्टः कथमपि सपत्नीवशगतः ॥ २९४ ॥ ततः पतिं वशीकर्तुं । दुःखार्ता पृच्छति स्म सा ॥ तोषयित्वान्नपानाद्यैः । कलाप्रौढान् परःशतान् ॥ ॥ २९५ ॥ समाजगाम तद्धाम । कर्हिचिद्गौडदेशतः ॥ कलावान् कोऽपि निष्णातः । पतिसंवननादिषु ॥ २९६ ॥ आवर्ज्योर्जितया भक्त्या । तं शशंस यशोमती । नस्योतवृषवद्धीमन् ! । मत्पतिं कुरु मत्करे ॥ २९७ ॥ मध्येप्सानमिदं देयमितो भावि तवेप्सितं ॥ उक्त्वेति स ददौ धूर्त-स्तद्धस्ते किंचिदौषधं ॥ २९८ ॥ सा हर्षात्तदुपादाय । क्षयाहे समुपेयुषि ॥ निक्षिप्य परमान्नं चं । स्ववल्लभमबूभुजत् ॥ २९९ ॥ सौरभेयोऽभवत्सद्य-स्तस्मिन्नशित एव सः ॥ आत्तान्यभववत्सापि । तं तथा वीक्ष्य विस्मिता ॥ ३०० ॥ दध्यौ च स मयाऽयाचि । नस्योतवृषवन्मम ॥ वशीकुरु प्रियं दुष्टः । स चक्रे वृषमेव तं ॥ ३०१ ॥ छलयित्वा स सछद्मा । वाक्छलेन पिशाचवत् ॥ कथं विडंबयामास । हा मां विश्वस्तमानसां ॥ ३०२ ॥ पतिवश्यत्वमिच्छंत्याः । पतिरप्यगमन्मम ॥ जातं सत्यमिदं लाभम् । लिप्सोर्मूलमपि च्युतं ॥ ३०३ ॥ अविमृश्य विधत्ते यः । कार्यमार्जवयोगतः ॥ स बाढं दह्यते मद्व-त्पश्चात्तापकृशानुना ॥ ३०४ ॥ तत् ज्ञात्वा तां सपत्न्यूचे । किमका-

१ मितः-प्र. २ संवननं-वशीक्रिया. ३ नासिकाया कृतछिद्रायां रज्जुबद्धो यो वृषभस्तद्वत्. ४ प्सानस्य-भोजनस्य मध्ये इति मध्येप्सानम्. ५ क्षयाहे क्षयतिथौ.

पौंरदः खले ! ॥ येन गोत्वं मम पतिः । प्रापत्प्राणप्रियंकरः ॥३०५॥ नो [1]पिशाचकिनी नो वा । वातकिन्यपि कर्हिचित् ॥ कुकर्मेदं विनिर्माति । त्वं निर्मासिस्म यत्कुधीः ॥ ३०६ ॥ कार्मणादीनि कर्माणि । चक्रिरे प्रागपि स्त्रियः ॥ [2]प्रांष्ठौह्यं प्रेयसः स्वस्य । त्वद्वच्चक्रे न काचन ॥ ३०७ ॥ पापाय स्यात्परस्यापि । कृतमीदृग्विडंबनं ॥ भुज्यते यस्य सर्वस्वं । प्रेयसस्तस्य किं पुनः ॥ ३०८ ॥ सपत्न्या [3]क्रुश्यमानेत्थं । सा पत्युर्गोत्वनाशकं ॥ प्रतीकारमजानाना । नानासंतापमा[4]पुंषी ॥ ३०९ ॥ रज्ज्वा ततस्तमाबद्ध्य । नीत्वा च पुरगोचरं ॥ मृदून् दूर्वांकुरान् शश्वच्चारयामास सा स्वयं ॥ ३१० ॥ भीष्मे ग्रीष्मेऽन्यदा मध्यं-दिने तं पतिशांकरं ॥ चारयंती क्वचिद्वृक्ष-मूले शाड्वलभूतले ॥ ३११ ॥ स्मारं स्मारं कुकर्म स्वं । मग्नेव व्यसनांबुधौ ॥ करुणं पर्यदेविष्ट । सुचिरं सा यशोमती ॥ ३१२ ॥ युग्मं ॥ दैवात्तदा विमानाधि-रूढो गौर्यान्वितः शिवः ॥ नभसा रभसाद्गच्छ-न्नश्रौषीत्तद्विलापकान् ॥ ३१३ ॥ संजातकृपया गौर्या । पृष्टस्तद्दुःखकारणं ॥ यथावस्थितमाचख्यौ । हरस्तद्वृत्तमादितः ॥ ३१४ ॥ ईदृगस्ति भवज्जाति—र्यद्वशे पतितो हहा ॥ मर्त्योऽपि जायतेऽनड्वा-नित्युक्त्वाऽहासयच्च तां ॥ ३१५ ॥ लज्जाश्चर्यमयी गौरी । तं प्रोचे प्रिय! शंस मे ॥ किमप्यस्त्यौषधं वा न । येनायं ना पुनर्भवेत् ॥ ३१६ ॥ तन्निर्बंधादुवाचेशः । प्रियेऽस्यैव तरोस्तले ॥ अस्त्यौषधं यदर्शितं । त्वरितं मर्त्यतार्पकं ॥ ३१७ ॥ श्रुत्वा तत्तरुमूलस्थं । सर्वं दूर्वांकुरादिकं ॥ लावं लावं वृषास्ये सा । क्षिपतिस्म यशोमती ॥ ३१८ ॥ अज्ञातेनापि वक्रस्थे-नौषधेनाशु तेन सः ॥ वृषोऽभून्मनुजो देव । इव वैक्रियरूपभाक् ॥ ३१९ ॥ दृष्ट्वा गां स्वप्रियं जातम् ।

1 नो पिशाची शाकिनी नो, प्र. 2 प्रांष्ठौह्य-वृषभत्व-पोठीयापणु. इति. भाषा. 3 क्रुश्यमानेत्थम्-प्र. 4 मीयुषी. प्र.

हृष्टा पृष्टा च तेन सा ॥ तत्कुकर्म निवेद्य स्वं । क्षमयामासुषी मुहुः ॥ ३२० ॥ तिरोधीयत दर्भाद्यै-र्यथा दिव्यं तदौषधं ॥ तथा ऽमुष्मिन् युगे सत्यो । धर्मो धर्मान्तरैर्नृप ! ॥ ३२१ ॥ परं समस्तधर्माणां । सेवनात्कस्यचित्क्वचित् ॥ जायते शुद्धधर्माप्तिः । दर्भच्छन्नौषधाप्तिवत् ॥ ३२२ ॥ तत्त्वं विधत्स्व निःशेष-धर्माराधनमादरात् ॥ येन संपद्यते सद्यः । सिद्धिर्द्वेधापि ते नृप ! ॥ ३२३ ॥ श्रुत्वा सूरेरिमां वाचं । सर्वधर्माविरोधिनीं ॥ जहर्ष पर्षदप्युच्चैः । किं वाच्यः सिद्धभूधवः ॥ ३२४ ॥ पुनः पप्रच्छ पृथ्वीशः । शंस मे सूरिसत्तम ! ॥ को धर्मः सर्वसामान्यो । मान्यस्त्रिजगतामपि ॥ ३२५ ॥

अथोवाच प्रभुर्वाचं । सर्वप्राणिप्रियंकरः ॥ धर्मः प्रोक्तः कृपामूलः । प्रतिकूलः कुकर्मणां ॥ ३२६ ॥ न वार्देन विना वृष्टि-र्न विना बीजमंकुरः ॥ न भानुना विना घस्रो । न धर्मः करुणां विना ॥ ३२७ ॥ स स्फुरत्युपकारेण । माणिक्येनेव भूषणं ॥ भजते यत्र कारुण्य-तारुण्यमविनश्वरं ॥ ३२८ ॥ उपकारव्रते यत्नो । बुधैः शश्वद्विधीयतां ॥ पद्मे पद्मेव पुण्योपनिषद्यत्र निषीदति ॥ ३२९ ॥ विवदंते व्रतेऽन्यत्र । सर्वे दर्शनिनो मिथः ॥ उपकारव्रते त्वस्मिन् । केचिन्नैव विवादिनः ॥ ३३० ॥ उपकुर्वन् यथा पूर्व-मभयंकरचक्रभृत् ॥ आसीदसीमश्रीधाम । तथा सम्यग् निशम्यतां ॥ ३३१ ॥ अस्त्यपाच्यविदेहेषु । विजयः पुष्कलावती ॥ पुरंदरपुरश्रीभृत्तत्पुरी पुंडरीकिणी ॥ ३३२ ॥ यत्र कुट्टिमविन्यस्तै-र्माणिक्यैः कांतकांतिभिः ॥ दीपालिर्विफलीचक्रे । निशि क्षोणीशवेश्मसु ॥ ३३३ ॥ प्रजाक्षेमंकरस्तत्र । क्ष्मापः क्षेमंकरोऽजनि ॥ सांयुगीनतया योऽगा-द्वीरकोटीरहीरतां ॥ ३३४ ॥ यस्य प्रतापं वडवानलेन । मन्ये विरंची रचयांचकार ॥ कुतोऽ-

१ कारुण्यं प्र.

न्यथाऽवर्धत सोऽरिनारी–नेत्रोदकं क्षारतरं निपीय ॥ ३३५ ॥ सदाप्यमरसेनेव । बहुलाभरणान्विता ॥ आसीदमरसेनेति-
तत्प्रिया प्रेमशालिनी ॥ ३३६ ॥ अंगाभंगुरशृंगार–संगरंगदनंगयोः ॥ तयोर्निर्विशतोः सातं । कियान् कालोऽगलत् किल
॥३३७॥ शयाना तत्प्रियाऽन्येद्यु–रुद्यदुद्दामसंमदान् ॥ चतुर्दश ददर्शैतान् स्वप्नानस्वप्नदुर्लभान् ॥३३८॥ [1]सिंहेभ[2]वृ[3]षप[4]लक्ष्मींदु-
रविदामध्वजांबुधीन् ॥ सरोविमानरत्नौघ–पूर्णकुंभविभावसून् ॥ ३३९ ॥ युग्मं ॥ तदैवोत्थाय चाख्याय । तान् प्रियाय
प्रियंकरान् ॥ एभ्यो भावि फलं किंचे–त्यपृच्छत्तमतुच्छधीः ॥३४०॥ तदुदर्कं वितर्क्योच्चै–र्भव्यं भूभृदभापत ॥ एभिर्देवि ! ध्रुवं
भावी । चक्रवर्ती सुतस्तव ॥ ३४१ ॥ एवमस्त्विति हर्षेण । पतिवाक्यानुमोदिनी ॥ गर्भं बभार सा रत्न–गर्भेव निधिमु-
त्तमं ॥ ३४२ ॥ पतिप्रपूरितोद्दाम–दोहदाऽसूत सा सुतं ॥ प्राचीवाहस्करं चंच–न्मरीचिचयचुंबितं ॥ ३४३ ॥ किं चित्रं
तत्पिता तस्य । जननोत्सवमातनोत् ॥ यत्तं तदुद्भवप्रीति–गौराः पौरा अपि व्यधुः ॥ ३४४ ॥ विश्वाभयंकरो भावी ।
विभाव्येतीव भूपतिः ॥ अभयंकर इत्याख्यां । स्वसुतस्य न्यवीविशत् ॥ ३४५ ॥ अपासितुं पुरोत्तापं । दयादाक्ष्यादयो
गुणाः ॥ तस्मिन्नुल्लासमासेदु–र्वसंते पादपा इव ॥ ३४६ ॥ कलाकलापं कलय–न्नयन् कुवलयं मुदं ॥ पूर्णेंदुरिव सौंदर्य-
वर्यं भेजे स यौवनं ॥३४७॥ तारुण्यपुण्यं तद्रूपं । दृष्ट्वा स्वःस्त्रैणमोहनं ॥ पौंस्त्वाय स्पृहयामासुः । कामिन्यः का न मानसे ॥
॥ ३४८ ॥ नि[3]शांते स नि[4]शांतेऽपि । सुप्तो भूपतिनंदनः ॥ वनांतस्थ–वनांतःस्थ–[5]मन्यदा स्व[6]मवैक्षत ॥ ३४९ ॥ किमेत-
दिति संभ्रांत–स्वांतं भूकांतनंदनं ॥ दिव्यमूर्तिधरः कोऽपि । पुमान् विस्पष्टमूचिवान् ॥३५०॥ कुमार ! मास्म विस्मेरो ।

१ मे पप्रच्छ, प्र. २ परोत्तापं, प्र. ३ रात्र्यवसाने. ४ गृहे ५ जलान्ते जलाशयावसाने स्थित वनमध्यस्थम्. ६ आत्मानं.

भवस्त्वमहृथा मया ॥ अपहारनिमित्तं च । क्षणोऽध्वंमवभोत्स्यसे ॥ ३५१ ॥ श्रुत्वा तन्मुदितः किंचि-द्यावज्जल्पति
भूपभूः ॥ विद्युल्लीलायितं कुर्व-स्तावदंतरधत्त सः ॥ ३५२ ॥ भास्वत्यभ्युदिते भूप । इव सन्मार्गदर्शिनि ॥ अनीतिरिव
सर्वापि । शर्वरी नाशमानशे ॥ ३५३ ॥ तमःस्तोमः समस्तोऽपि । तदा भानुभयादिव ॥ कौशिकस्याविशन्नेत्रे । तदंधत्वं
कुतोऽन्यथा ॥३५४॥ सुसंमप्याश्रयेऽभ्येत्य । स्वयं सति दिनोदये ॥ इति ज्ञान् ज्ञापयंतीव । श्रीः पद्माकरमाश्रयत् ॥३५५॥
देशांतरागतं कांत-मिव भास्वंतमीक्षितुं ॥ पद्मिनी प्रमदाच्चक्रे । पत्रनेत्रविकाशनं ॥ ३५६ ॥ सुप्रातं जातमालोक्य ।
कुमारोंतर्वणं भ्रमन् ॥ बभौ सर इवान्विष्य-न्नमधुं तत्राखिलर्तुनि ॥ ३५७ ॥ दृक्स्तंभिनीं श्रियं पश्यन् । काननीं नांद-
नीमिव ॥ स्वमानसमिव स्वच्छं । सोऽपश्यन्मानसं सरः ॥३५८॥ जलाधिष्ठायिनीनां य-न्मुखलक्ष्मीनिरीक्षणे ॥ सहजौज्ज्वल्ययो-
गेन । रत्नादर्शायतेऽनिशं ॥३५९॥ यत्पीयूषमयत्वेन । तापनिर्वापणेन च ॥ दधौ राहुभयत्रस्त-पौर्णमास्येंदुविभ्रमं ॥ ३६० ॥
स्नानीयं तत्र पानीयं । मत्वा कृतशुचिस्ततः ॥ भ्राम्यन् पुनर्वने क्वापि । मठं श्रेष्ठं स दृष्टवान् ॥ ३६१ ॥ स तस्याग्रक्षणं
प्राप्तो । भास्वंतमिव दीप्तिभिः ॥ अंतर्द्रष्टुमिवात्मानं । कुड्मलीकृतलोचनं ॥ ३६२ ॥ एकाकिनमपि स्फूर्त्या । सदोमध्यमि-
वाश्रितं ॥ मूर्तं योगमिवाद्राक्षी-द्योगींद्रं ध्यानकर्मठं ॥ ३६३ ॥ युग्मं ॥ तं नत्वा भूयसीभक्ति-र्निविष्टः सोऽभयंकरः ॥
ध्यानं मुक्त्वैनमाशास्त । महात्मापि प्रसन्नदृक् ॥ ३६४ ॥ तयोः कुशलपृच्छाद्या । कथाभूत्पृथुला मिथः ॥ शिष्टो हि
श्रेष्ठगोष्ठीना-माकरः साधुसंगमः ॥ ३६५ ॥ जगाद सादरं योगी । तवैव हितकाम्यया ॥ अत्रानीतो विनीतस्त्वं । तत्प-

१ निरुद्यममपि पुरुषं. २ दिनशब्दोऽत्र भाग्ये लाक्षणिकः. ३ लक्ष्मी', पक्षे शोभा. ४ पद्मवनं. ५ वसतर्तुम्. ६ अखिला ऋतवः यस्मिन् तत्तस्मिन् वने.

श्चात् प्रथयिष्यते ॥ ३६६ ॥ इत्युक्त्वा ध्यानमाधाय । दिव्यां रसवतीं पुरः ॥ स्वशक्त्याऽऽनाय्य चायाचीत् स तं भोजनहेतवे ॥ ३६७ ॥ कुमारस्तमभाषिष्ट । त्वद्दर्शनसुधारसैः ॥ मह्यमाकंठतृप्ताय । स्वदते किंचनापि न ॥ ३६८ ॥ अनया रसवत्या स्यात् । सौहित्यं[1] स्वल्पकालिकं ॥ त्वत्कथाऽमृतपानात्तु । यावज्जीवं ममास्ति तत् ॥ ३६९ ॥ इत्यादिवादिनं भूपतनयं बहुयुक्तिभिः ॥ मानयित्वा समं तेन । भुक्तवान् स कलानिधिः ॥ ३७० ॥ जाते चाचमने व्योम-प्राप्तभृंगारपाथसा ॥ हुंकारेण पुनः प्रैषीत् । स तत्सर्वं क्षणादपि ॥ ३७१ ॥ ददौ च तस्मै तांबूलं । कर्पूराद्यतिपेशलं ॥ चिंतामणिमयेनेव । स्वप्रभावेण संभृतं ॥३७२॥ स्फुरत्ततादिवादित्रं । गीतामृतझरप्लुतं ॥ स्पष्टदृष्टादिभावात्त-मंगहावपरिष्कृतं[2] ॥३७३॥ कुमारप्रीतये नाट्यं । विधाप्य व्यंतरैर्जनैः[3] ॥ पुनर्विसृष्टवान् योगी । बपुरे योगवैभवं ॥ ३७४ ॥ युग्मं ॥ दैवतस्येव तस्यैवं । विमृश्य स्फूर्तिमद्भुतां ॥ प्रभावराशिर्मूर्तोऽय-मित्यध्यासीन्नृपात्मजः ॥ ३७५ ॥ तादृक्कौतुकतुष्टस्य । तस्यागात्तद्दिनं द्रुतं ॥ सतां हि समयः सौख्य-मयो गच्छति हेलया ॥ ३७६ ॥ अथोष्णदीधितिस्तेने । पश्चिमाब्धौ निमज्जनं ॥ अपारव्योमकांतार-भ्रमश्रमवशादिव ॥ ३७७ ॥ विस्तार्य क्ष्मांगणे तेजो-राशीनाकर्षतो रवेः ॥ पश्चात्स्थितास्तदीयांशा । इव दीपा बभुस्तदा ॥ ३७८ ॥ विशंकेऽहं तमःपंके । मग्नं गोमंडलं ततः[4] ॥ उद्धर्तुमुद्यतो विष्णु-रिवप्रौढकरः शशी ॥ ३७९ ॥ विश्वं तुषारांशुकरैः परीतं । किं चंदनस्यंदिरसैरसेवि[5] ॥ कर्पूरपूरैः किमपूरि मूर्च्छद्-दुग्धाब्धिवीचीभिरहो किमांचि ॥ ३८० ॥ अथाभयंकरं स्माह । योगी संति मदंतिके ॥ विद्याः परःशतास्ताश्च । यथास्थानं निवेशिताः

१ तृप्ति, २ स्पष्टदृष्ट्यादिभावाद्य-मगहारपरिष्कृत-प्र. ३ व्यतरीजनैः, प्र. ४ तम पकात्. ५ चि, प्र.

॥ ३८१ ॥ अद्यापि विद्यते विद्या । खड्गसिद्धिकरी परं ॥ त्रिविष्टपजनाजय्यो । यच्छक्त्या जायते नरः ॥ ३८२ ॥ अयोगाद्योग्यपात्रस्य । न्यास्थं क्वापि न तामहं ॥ विद्यां न्यस्यन् यदस्थाने । तद्वांस्तद्धपातकी ॥ ३८३ ॥ ईदृग्विद्योचितः कश्चि-च्चास्त्यायुस्त्वल्पमेव मे ॥ इति चिंताचितं सैव । विद्याऽभ्येत्य बभाण मां ॥ ३८४ ॥ मास्म चिंतां कृथा वत्स ! । प्रातः कोऽपि नृशेखरः ॥ मयाऽत्रानेष्यते तस्मै । मां दत्वा त्वं सुखी भव ॥ ३८५ ॥ उक्त्वेति चेटकं प्रेष्य । त्वमत्रानाय्यथास्तया ॥ गृहाण तदिमां विद्यां । चिंतां मे निगृहाण च ॥ ३८६ ॥ न्यस्ता सुपात्रे विद्या स्या-द्गौरवाय गुरोरपि ॥ सुक्षेत्रे निहितं बीजं । धनिकस्यातिवृद्धये ॥३८७॥ विद्यापि पात्रयोगेन । माहात्म्यमधिगच्छति ॥ शुक्त्याश्लेषेण मुक्तात्वं । लभते सलिलं किल ॥ ३८८ ॥ किं चेयं त्वद्गुणक्रीती । कनीव त्वय्यरज्यत ॥ एतद्दाने त्वहं हेतु-मात्रं तस्मादिमां भज ॥ ३८९ ॥ कुमारस्तमथावादी-न्मम त्वद्दर्शनादपि ॥ अभवन् सिद्धयः सर्वाः । खड्गसिद्ध्या किमेकया ॥ ३९० ॥ इहलोकफलं स्वापं । चिंतारत्नादिदर्शनं ॥ लोकद्वयफलं त्वेतद्—दुरापं साधुदर्शनं ॥ ३९१ ॥ अघौघं प्राचीनं विघटयति पुण्यं प्रथयति । प्रसूते सद्बुद्धिं नवनवकलाः पल्लवयति ॥ हरत्यज्ञानांध्यं दिशति परमब्रह्मपदवीं । सतां संगः कल्पद्रुम इव न किं किं वितनुते ? ॥ ३९२ ॥ अनिच्छतोऽपि तस्येच्छं । खड्गविद्यां निवेद्य सः ॥ तदाराधनमामूल-चूलं तथ्यमचीकथत्॥३९३॥अभंगं भाग्यमेवैकं।नृणां कामितकामधुक् ॥ यंतः शये शयालु स्याद्-दुरापमपि वस्तु सत्॥३९४॥ तत्रैव सिद्धविद्यत्वा-त्कुमारं स्फारसंमदं ॥ अचिराच्चेटकैर्योगी । पुनः स्वस्थानमापिपत् ॥ ३९५ ॥ ततः क्षेमंकरोऽपि

१ भाग्यात्. २ हस्ते. ३ तातः, प्र.

स्वं । समीक्ष्य सुतमागतं ॥ जानन् पुनर्जातमिव व्यधत्तातुच्छमुत्सवं ॥ ३९६ ॥ अभ्यधत्त च वत्सेदं । राज्यं त्वामुपतिष्ठतां ॥ कुलधुर्ये सुते नास्म-द्वंश्या शंस्याः स्ववेश्मनि ॥ ३९७ ॥ सुधाकिरागिरा भक्ति-वल्लीं पल्लवयन्निव ॥ अथ व्यजिज्ञपत्तातं । सुतो विनयवामनः ॥ ३९८ ॥ द्वेधापि नरकांतेन । मम राज्येन किं प्रभो ! ॥ सुरकांतमिदं याव-ल्लभे त्वद्भक्तिवैभवं ॥ ३९९ ॥ त्वत्पदांभोरुहे मह्यं । सदसद्व्यक्तिकारणं ॥ रोचते राजहंसत्वं । न राजत्वं कलंककृत् ॥ ४०० ॥ इति वत्समनिच्छंत-मपि राज्ये नियुज्य तं ॥ क्षेमंकरः स्वयं क्षेमं-करीं दीक्षामशिश्रियत् ॥ ४०१ ॥ भास्वत्यभ्युदिते तस्मिन् । सच्चक्रानंदकारिणि ॥ पद्मायितं सुहृद्भिर्द्राग् । द्विपद्भिः कुमुदायितं ॥ ४०२ ॥ तस्मिन्नरेश्वरे शश्व-न्नीतिरीतिपरेऽप्यलं ॥ अनीतिरेव सर्वोऽपि । जनोऽजायत कौतुकं ॥ ४०३ ॥ अथ पुष्पपुरस्वामी । नृसिंहाख्यो महीपतिः ॥ अभयंकरमास्थानी-स्थितं नत्वा व्यजिज्ञपत् ॥ ४०४ ॥ दावपावकदग्धानां यथोल्लासी घनागमः ॥ तथा विरोधिध्वस्तानामुद्धर्ता त्वमसि प्रभो ! ॥ ४०५ ॥ निपेतुषां द्विपेंद्राणां । यथाधारो धरोध्धुरः ॥ पदच्युतानां भूपानां । तथा त्वं देव ! दीव्यसि ॥ ४०६ ॥ तगरानगरीशेन । घनवाहनभूभुजा ॥ निष्कारणद्विषा भ्रष्ट-राज्योऽहं विदधेऽधुना ॥ ४.७ ॥ यथोपतिष्ठते मित्रं । राजा गलितमंडलः ॥ निजोदिधीर्षया तद्व-दहं त्वामस्म्युपस्थितः ॥ ४०८ ॥ तद्दत्वा खड्गसिद्ध्यादिसाहाय्यं मां तथोर्जय ॥ यथाऽत्योजायमानोऽरिं । हत्वा स्वीयां श्रियं श्रये ॥ ४०९ ॥ नृपः प्रपद्य तत्सद्य-स्तमुत्तारार्थमादिशत् ॥ ततो व्यजिज्ञपन्मंत्री सुमतिः स्वामिनं प्रति ॥ ४१० ॥ देव ! दाक्ष्यं किमेतत्ते । वलमात्राभिलापिणे ॥ अस्मै

वितरितुं खड्ग–सिद्धिं यत्प्रतिशुश्रुवान् ॥ ४११ ॥ वासार्थिने नावसथ–मारामं न फलार्थिने ॥ धेनुं दुग्धार्थिने नैव । कोऽपि यच्छत्यतुच्छधीः ॥ ४१२ ॥ को दत्ते हेलया खड्ग–विद्यां विश्वविजित्वरीं ॥ सतामपि हि सद्विद्या दुरापा स्वर्णसिद्धिवत् ॥४१३॥ जगादाथ क्षमानाथ–स्तद्वचः सचिवोचितं ॥ परं तामेव मामेष । ययाचे करवै किमु ॥४१४॥ विद्यापि स्थेयसी पात्र––दत्ता स्यान्नात्मनि स्थिता ॥ सेस्थीयते शिवन्यस्ता । कला चांद्री नहीतरा ॥ ४१५ ॥ कला च कमला च स्यात् । क्लेशलब्धापि निष्फला ॥ परेषामुपयोगाय । या चिराय न जायते ॥ ४१६ ॥ एवं प्रबोध्य मंत्रींद्रं । खड्गसिद्धिं बलान्वितं ॥ वितीर्य च नृपः प्रैषी––न्नृसिंहं विद्विषं प्रति ॥ ४१७ ॥ नृसिंहोऽप्यतिसिंहौजा । राजानं घनवाहनं ॥ जित्वा तत्प्राज्यराज्याढ्यं । स्वराज्यं लीलया ललौ ॥ ४१८ ॥ निर्विवेश विशामीशः । स पुनर्निस्तुषं सुखं ॥ उष्णतेव जलानां स्याद् । दुर्दशा क्षणिका सतां ॥४१९॥ द्विषद्गृहीतसर्वस्वो । भूपोऽथ घनवाहनः ॥ दध्यौ दोदूयमानांतः । शाखापतितकीशवत् ॥४२०॥ अहो स्वप्नेऽपि मे नासी––न्मानसे यद्भ्रमां मम ॥ हरिष्यति नृसिंहोऽयं । नृसिंहीभूय विक्रमैः ॥४२१॥ यद्वा दोषो न तस्यास्ति । कृतप्रतिकृतेरयं ॥ ममैव यत्खलीचक्रे । स मया राज्यमोचनात् ॥४२२॥ अहो सत्यमसंतोषो । मूलं नाशतरोर्महत् ॥ परराज्यं बुभुक्षोर्मे । स्वराज्यमपि यद्ययौ ॥ ४२३ ॥ श्रिया स्वार्जितया तृप्यं । नेह्यान्यश्री विवेकिना ॥ कांक्षन् परश्रियं लुब्धो । मद्वत्प्रभ्रश्यति स्वतः ॥ ४२४ ॥ किं करोमि क्व गच्छामि कं स्मरामि श्रयामि कं ॥

१ प्रतिश्रुतवानित्यर्थं २ अवसथम्-गृहं ३ अतिशयेन स्थिरा. ४ पुनः पुनः अतिशयेन वा स्थीयते. ५ कस्य वायोरपत्यं पुमान् किः–हनुमान् स ईशः यस्य स कीश. वानरस्तद्वत्. ६ ऊचे-प्र.

पुनर्लभे कथं स्थानं । करप्रभ्रष्टरत्नवत् ॥ ४२५ ॥ हुं ज्ञातं यद्बलादेष । नृसिंहो मामहारयत् ॥ अभयंकरभूपालं । तमेवाहमपि श्रये ॥ ४२६ ॥ इति ध्यात्वा च गत्वा च । नगरीं पुंडरीकिणीं ॥ क्षेमंकरात्मजं क्ष्मापं । नत्वोचे घनवाहनः ॥४२७॥ रूढिमात्रमिदं धात्रीं । शेषाद्या धारयंति यत् ॥ तदुद्धारधुरीणस्तु । स्यादेको ह्युपकारकः ॥ ४२८ ॥ के ह्यात्मंभरयो नेह । वडवानलसन्निभाः ॥ परार्थबद्धबुद्धिस्तु । कोऽपि स्यात् स्तनयित्नुवत् ॥ ४२९ ॥ वृथैव यौवनान्तं तं । जननी मासजीजनत् ॥ याचते यः परं दीनः । शक्तो नावति यश्च तं ॥ ४३० ॥ देव ! त्वद्बलमासाद्य । नृसिंहेनातिदृप्यता ॥ जित्वा दैगंबरीं दीक्षां । नीतोऽहं सर्वमोचनात् ॥ ४३१ ॥ एतन्मां प्रति कर्तुं ते । युक्तं नासीद्दिशांपते ! ॥ यतः शीतांशुवत्संतः । सदृक्षाः पक्षयोर्द्वयोः ॥४३२॥ कुमुदाय श्रियं दत्तां । कृष्ट्वा राजा जडांबुजात् ॥ त्वं तु राजन् ! बुधस्तस्मै । कथं दत्से रमां मम ॥ ४३३ ॥ ततोऽस्मि त्वामुपायातो—ऽगदंकारमिवातुरः ॥ तथा प्रसद्यतां सद्यो । यथा स्यां सौख्यसख्यभाक् ॥ ॥ ४३४ ॥ तन्निशम्य नृपः प्रोचे । लज्जालुर्घनवाहनं ॥ मत्प्रमादेन यत्तेभू—द्दहितं मे क्षमस्व तत् ॥ ४३५ ॥ मा च त्वं दुर्मनायिष्ठाः । काम्यस्वाम्यकृते कृतिन् ! ॥ अधुनैव करिष्ये त्वां । सुरेश्वरसमश्रियं ॥ ४३६ ॥ इत्युदीर्य श्रितौदार्यः । स तदैवाभयंकरः ॥ सोदर्यवन्निजे राज्ये । यावत्तमभिषिंचति ॥ ४३७ ॥ तावद्व्यजिज्ञपन्मंत्री । देव ! कीदृक् तवौचिती ॥ तृणवत्पैतृकं राज्यं । यदस्मै प्रणिदित्ससे ॥४३८॥ नृपाणां राज्यमेव श्री—स्तत्त्यागेनाधनंति ते ॥ किं कासारे परित्यक्ते । स्फूर्जंति कमलाकराः[1] ॥ ४३९ ॥ राजापि पूज्यते ताव—द्यावल्लक्ष्मीरभंगुरा ॥ स्वे[2]ऽपि त्यजंति तं निःस्वं । शुष्कं शालमि[3]-

१ कमलसमूहाः  २ स्वकीया.  ३ वृक्षं.

वांडजाः ॥ ४४० ॥ न केवलं नराणां श्रीः । सुराणामप्यहो प्रिया ॥ यस्माक्रमंति हेमाद्रि–मभितो भास्करादयः ॥४४१॥ ते संति हंत भूयांसो । जीवंतो जीवयंति ये ॥ मृतान्[2] या जीवयत्याशु । सैका श्रीस्त्रिजगत्यपि ॥ ४४२ ॥ दत्वा देशादिकं कंचि[3]–त्तदेतं परितोषय ॥ प्राणेभ्योऽप्यधिकं राज्यं । मुधा त्वं मासजीगमः ॥ ४४३ ॥ अथाभयंकरः स्माह । मंत्रिंस्त्वं सत्यमभ्यधाः ॥ परमस्याभवद्राज्य–भ्रंशो मद्बलकर्तृकः ॥४४४॥ अमुष्मै भृशमार्ताय[1] । स्वराज्यं न ददे यदि ॥ तदा मंदाक्षमंदो[4]ऽहं । दर्शयेऽमुं कथं मुखं ॥ ४४५ ॥ वैभवं पात्रविन्यस्तं । स्फारीभूय निवर्तते ॥ किं द्रव्यं सद्गुणिग्दत्तं । वर्धित्वा समुपैति न ॥ ४४६ ॥ सद्भ्यो धनं यत्तदपि प्रदत्तं । लोकोत्तरं द्राक्फलमादधाति ॥ गोभ्यो वितीर्णस्तृणपूलको हि । मुग्धं न किं यच्छति दुग्धपूरं ॥ ४४७ ॥ किंच मंत्रादिमाहात्म्या–त्स्याच्चलाप्यचला क्वचित् ॥ ततोऽप्यधिकचापल्या । राज्यलक्ष्मीरियं पुनः ॥ ४४८ ॥ या रज्यते गुणैर्नैव । न नेद्धाप्यवतिष्ठते ॥ कीदृक्स्यान्ममता तस्यां । श्रियां पण्यस्त्रियामिव ॥४४९॥ प्राणानपि प्रयच्छंति । केचनोपचिकीर्षया ॥ न श्रीमात्रमहं दद्यां । यदि तन्मम का गतिः॥४५०॥ राज्यश्रीर्भूभुजां मूलं । तन्मूलं सुकृतं पुनः ॥ उपकृत्यार्जतस्तन्मे । वद कीदृगनौचिती ॥ ४५१ ॥ धीसखं बोधयित्वेत्थं । स भूभृद्घनवाहनं ॥ न्यवीविशन्निजे राज्ये । क्वटरे दातृता सतां ॥ ४५२ ॥ येषां परार्थमाधातुं । राज्यं वहु तृणायते ॥ प्राणाश्च कर्करायंते । धीराः स्तुत्या न कस्य ते? ॥४५३॥ पवित्रेण चरित्रेण । तेन क्षेमंकरात्मजः ॥ महतामपि नो केषां । चित्रीयामास मानसे? ॥ ४५४ ॥ चतुरंगवलप्राज्यं । तद्राज्यं समवाप्य सः ॥ नाम्नार्थेनापि सत्योऽभूद् । भूपतिर्घनवा-

१ रोगिण. इत्यर्थः. २ मृतप्रायान्. ३ किं-प्र. ४ मदाक्षेन-लज्जया मंदः–संकुचितः. ५ सुन्दरं. ६ विद्युत्. ७ विद्युत.. ८ वद्धा-प्र. ९ मतिः,प्र,

हनः ॥ ४५५ ॥ तेन भूमिभृताऽजस्रं । सेव्यमानो गृहे स्वयं ॥ निश्चिंतो मुनिवत्तस्था—वभयंकरभूपतिः ॥ ४५६ ॥ तत्त-त्तीर्थनिनंसार्थ—मन्येद्युरभयंकरः ॥ कृपाणपाणिरेकाकी । निरगान्नगरान्निजात् ॥ ४५७ ॥ पौरामात्यादयोऽभ्येत्य । पृष्ठेथ स्रवदश्रवः ॥ इति विज्ञपयांचक्रु—र्योजितांजलिमंजुलाः ॥ ४५८ ॥ पर्यत्याक्षीः पुरा राज्य—मिदानीं पुरमप्यदः ॥ अस्मांश्च सेवकान् हित्वा देव ! त्वं क्व प्रतिष्ठसे ॥ ४५९ ॥ प्रस्थिते सति देवेऽस्मा—त्पुरमेतत्प्रपत्स्यते ॥ वसंतोल्लासनिर्मुक्तो—द्यानसादृश्यदृश्यतां ॥ ४६० ॥ देवे देशांतरं प्राप्ते । म्लास्यत्येष जनोऽखिलः ॥ चंद्रे द्वीपांतरस्थे हि । न स्मेरः कुमुदाकरः ॥ ४६१ ॥ अकुंठोत्कंठताऽथास्ते । तीर्थान् द्रष्टुं प्रभो ! यदि ॥ तदादिश यथा यामो । वयं स्वस्वामिना सह ॥ ४६२ ॥ युग्यं[3] न योग्यं नो भृत्यः । कृत्यविन्न धनं घनं ॥ केयं रीतिरहो नाथ ! । प्रस्थानं प्रति संप्रति ॥ ॥ ४६३ ॥ तस्मात्प्रसद्यतां सद्यः । प्रस्थानाच्च विरम्यतां ॥ यदि वा सह यानाय । जनोऽयमनुगृह्यतां ॥४६४॥ सिंचन्निव सुधावृष्ट्या दृष्ट्याथाचष्ट तान्नृपः ॥ भवद्भिः सर्वमप्येत—द्विज्ञप्तं प्रणयोचितं ॥४६५॥ परं तीर्थनमस्याभि—रंहोराशिर्भिदेलिमः ॥ पचेलिमं च पुण्यं स्या—त्तेन तत्रायमुद्यमः ॥ ४६६ ॥ एतत्पुरं च युष्मांश्च । राजाऽयं घनवाहनः ॥ चातकानिव पाथोदः । प्रीणयिष्यति मत्समः ॥ ४६७ ॥ सिंहः सत्पुरुषश्चापि । श्रयन् देशांतरं किल ॥ नान्यसाहाय्यकामः स्यात् । स्थितिरेषा महस्विनां ॥४६८॥ वृथा पथश्रमो वः स्या—न्मम च क्रमबंधनं ॥ सह यानादतोऽत्रैव । यूयं तिष्ठत सौष्ठवात् ॥ ४६९ ॥ इत्यवस्थाप्य मंत्र्यादीन् । पृष्ट्वा च घनवाहनं ॥ प्रतस्थे तीर्थयात्रार्थ—मेकाक्येव स पार्थिवः ॥४७०॥

१ श्रव-प्र. २ प्राप्स्यति. ३ वाहनं ४ स्वयं भिद्यमान स्यात्. ५ स्वयंपक्वं.

लतालास्यकलाचार्यः । पुष्पसौरभतस्करः ॥ सरःसीकरशीतात्मा । सिषेवे तं मरुत्पथि ॥ ४७१ ॥ नमस्यंस्तानि तीर्थानि । वरिवस्यन् जिनेश्वरान् ॥ तपस्यंश्च यथाशक्ति । प्रेयःश्रेयश्चिकाय सः ॥ ४७२ ॥ इत्थं पृथ्वीं भ्रमन्नेष । क्वचिद्भूधरगह्वरे ॥ निशि दूरप्रसृमरं । शुश्राव करुणस्वरं ॥ ४७३ ॥ रोरुदीत्यत्र को रात्रौ । निर्जने गिरिगह्वरे ॥ गत्वा वीक्षे विमृश्येति । भूपस्तध्वनिमन्वगात् ॥ ४७४ ॥ तत्रापश्यन्नृपो दीप्र—वह्निकुंडांतिकस्थितां ॥ रक्तचंदनलिप्तांगीं । करवीरस्रजांचितां ॥ ॥ ४७५ ॥ स्मरजित्वररूपेण । योगिनैकेन केनचित् ॥ उद्गूर्णखड्गोदग्रेण । मृत्युनेव कटाक्षितां ॥ ४७६ ॥ कोऽप्यस्ति? वीरकोटीरो । रत्नगर्भे! विभाव्यतां ॥ यमस्येवास्य वक्त्रान्मां । यः कर्षति कृपालुहृत् ॥ ४७७ ॥ जगच्चक्षुरसीति त्वां । याचे सूर्य! न चेदिह ॥ मत्राता कश्चन द्वीपां—तरादानय तर्हि तं ॥ ४७८ ॥ इति प्रलापजाताद्रि-प्रतिध्वनिभृतांवरां ॥ अश्रुमिश्रमुखीं कांचि—त्कांदिशीकां मृगीदृशीं ॥ ४७९ ॥ पंचभिः कुलकं ॥ रतिप्रतिकृतिं तां स्त्रीं । तदवस्थां च तादृशीं ॥ दृष्ट्वा दयालुर्भूपालो । योगिनं जगिवानिति ॥ ४८० ॥ स्फूर्त्यानया न योगी त्वं । किंतु कोऽपि महांस्ततः ॥ निर्मितससे कुकर्मैत—न्महत्वाऽनुचितं किमु ॥ ४८१ ॥ चरंत्यनुचितं कर्म । संतः प्राणात्ययेऽपि न ॥ छेदेऽपि नोद्गिरंत्येव । दुर्गंधं चंदनद्रुमाः ॥ ४८२ ॥ तदियं दयया देव! । मुच्यतां चारुलोचना ॥ आगस्यपि सतामस्त्रं । न हि स्त्रीषु प्रगल्भते ॥ ४८३ ॥ तया सुधामुचा वाचा । सा स्त्री सिक्तेव सर्वतः ॥ वीरोत्तंसं नृपं दृष्ट्वा । जीविताशां पुनर्दधौ ॥ ४८४ ॥ अथालपन्नृपं योगी । देव! त्वमपि लक्षणैः ॥ चक्रवर्त्युचितैरेभि—र्न सामान्योऽसि सर्वथा ॥ ॥ ४८५ ॥ अयोग्योऽपि वधः स्त्रैणो । योऽयं त्वमवधायतां ॥ अवधारय मद्वाक्यात् । न ह्यकथ्यं भवादृशां ॥४८६॥

वैताढ्येऽस्त्युत्तरश्रेण्यां । पुरं श्रीरथनूपुरं ॥ विद्याधरेश्वरस्तत्र । रत्नचूडो महीपतिः ॥ ४८७ ॥ निष्कलंकेंदुलेखेव । तत्प्रिया रत्नमंजरी ॥ अहं तयोस्तनूजोऽस्मि । मणिचूडाख्यया श्रुतः ॥ ४८८ ॥ ममापराजिताख्येति । कुलविद्यास्त्यव द्यभित् ॥ साक्षात् सिद्धिमिवाराद्धु—महं तामुपचक्रमे ॥ ४८९ ॥ जापघस्रेष्वपूर्णेषु । तदधिष्ठायिनी सुरी ॥ प्रत्यक्षी- भूय मामाख्य—द्विद्युदाकारधारिणी ॥ ४९० ॥ गंगोत्तुंगतरंगश्री—रंगभंगविदग्धया ॥ तुष्टास्म्यभीष्टदानाय । वत्स ! त्वत्सेवयाऽनया ॥ ४९१ ॥ द्वात्रिंशल्लक्षणां नारीं । नरं वा ज्वलने परं ॥ हुत्वा वरं वृणीथा मां । दास्ये सिद्धिं त्वदीप्सितां ॥ ४९२ ॥ मम प्रीत्यर्थमेताव—त्त्वया कारिष्यते न चेत् ॥ पक्वालुंकवत्तर्हि । भेत्स्यते त्वच्छिरो ध्रुवं ॥४९३॥ आमे (मि)- त्यभ्युपगम्यैत—द्देव्युक्तं स्वार्थसिद्धये ॥ प्राप्तुं यथोदितां कन्या—मपश्यं काश्यपीमहं ॥ ४९४ ॥ एतां सल्लक्षणां कन्यां । दृष्ट्वा सिंहपुरेशितुः ॥ इहानीय च देव्यर्थं । जुहुपन्नस्मि संप्रति ॥४९५॥ तदिमां मोचयन् देव ! । मत्सिद्धिं ध्वंससे कथं ? ॥ ध्वंसंते हंत नो संतः । परार्थं स्वार्थवत् क्वचित् ॥ ४९६ ॥ एकस्य ध्वस्यतेऽवश्यं । कृत्यमन्यस्य तन्यते ॥ नासौ सतां मतो धर्मः । सर्वत्र समचेतसां ॥ ४९७ ॥ किंच स्त्रीमात्रमेतत्ते । प्रियमात्मोदरंभरि ॥ न पुनर्नृपपुत्रोऽहं । भूयसामुपका- रकः ॥ ४९८ ॥ अथाभयंकरोऽभाणी—द्यद्यप्येवं तथापि ते ॥ नैष योषिद्वधः श्रेया—न्नरकोत्संगसंगकृत् ॥ ४९९ ॥ तया सिद्ध्या च किं ? कार्यं । या स्फुरेज्जंतुघाततः ॥ तया श्रियापि पर्याप्तं । या स्यात् प्राणप्रयाणतः ॥ ५०० ॥ सिद्ध्यंति सिद्धयः सर्वा । धर्मान्नाधर्मतः पुनः ॥ अंभोधरभवा नद्यो । न वर्धंते तपागमात् ॥ ५०१ ॥ यद्येकजंतुघातेन । सिद्धिः स्यात्तर्हि ता घनाः ॥ वधकानां कथं ? न स्यु—र्जंतुसंतानघातिनां ॥ ५०२ ॥ किं च न स्त्रीवधाद्देवी—तुष्टिर्दृष्टाऽथवा

श्रुता॥ केवलं वंचितोऽसि त्वं । तया कूटपटिष्ठया ॥५०३॥ अथ देव्युदितं तथ्यं । तथापि स्त्रीतमामिमां ॥ हित्वा हुत्वा
च मच्छीर्षं । कार्यमार्य! निजं कुरु ॥ ५०४ ॥ एवं कृते कृतिन्! विद्या—देवता तव तोक्ष्यति ॥ जीविष्यति मृगाक्षीयं ।
ममातिथ्यं च वत्स्यंति ॥ ५०५ ॥ मणिचूडोऽवददेव! । केयं तव विदग्धता ॥ यदेकस्त्रीकृते कायं । मुंचसे चक्रितोचितं
॥ ५०६ ॥ किं रक्षिता मृगाक्षीय—मसाध्यं साधयिष्यति ॥ त्वं तु जीवन् पुनः शश्व—द्विश्वं पास्यसि तातवत् ॥५०७॥
आत्मकायव्ययेनैतां । यत्त्वं त्रातुं समीहसे ? ॥ तद्रत्नकोटिदानेन । द्दपत्खंडं जिघृक्षसे ॥ ५०८ ॥ अल्पव्ययादनल्पं हि ।
गृह्णन् स्यान्मतिमान् पुमान् ॥ विपर्यस्तं वितन्वंस्तु । मूर्धन्यो मंदमेधसां ॥ ५०९ ॥ तमभ्यधात्पुनर्भूपः । प्रांशुदंतांशुकैः-
तवात् ॥ हृद्युद्वेलं दयाक्षीर—नीरधिं दर्शयन्निव ॥५१०॥ स्नेहोचिता तवेयं वा—च तु धर्मोचिता सखे! ॥ प्राणैरपि परत्राणं।
कार्यं धर्मो ह्ययं महान् ॥५११॥ किंच संस्नपितो लिप्तो । भूषितो भोजितोऽपि च ॥ खलवत्खलु कायोऽयं । नात्मसात्क-
र्हिचिद्भवेत् ॥५१२॥ कृमयो भस्म वा यस्या—वसानं तन्निजं वपुः ॥ परार्थं व्ययमानस्य । मम कास्त्यविदग्धता ॥५१३॥
रुजां पात्रेण गात्रेण । सुकृतं संचिनोति यः ॥ प्राणघ्नेन विषेणैष । संगृह्णीते सुधारसं ॥ ५१४ ॥ शुचि बहुमलाढ्येन ।
स्थेयः क्षणातिपातिना ॥ सहचरमिहस्थेन । श्रेष्ठं निकृष्टमेन च ॥ ५१५ ॥ स्ववश्यमितरायत्ते—नोद्यत्सुखं सुवैरिणा ।
सुकृतममुनांगेनाऽऽदत्ते कृती नु कश्चन ॥ ५१६ ॥ *युग्मम्* ॥ इह कीर्तिमये देहे—ऽमुत्र धर्ममये पुनः ॥ सतामास्था मन-
स्यस्ति । न त्वस्मिन् क्षणभंगुरे॥५१७॥ व्यापारे हीयतां कोऽपि । कोऽपि याति प्रगल्भतां ॥ जिजीविषा परं तुल्या । स्त्रिया
वा पुरुषस्य वा ॥ ५१८ ॥ तदयं दीयतां खड्ग—श्छित्वा येन शिरोऽर्पये ॥ चिरं जीवत्वियं योषा । तव सिद्धिश्च सिद्ध्यतु

॥५१९॥ इत्युक्तोऽपि यदा नादात् । खड्गं विद्याधरात्मजः ॥ अनिच्छतोऽपि तस्मात्तं । तदा भूपोऽग्रहीद् ग्रहात् ॥५२०॥ स सौम्यदर्शनो भूभृत् । करालकरवालभाक् ॥ भेजे भुजंगमाश्लिष्ट—चंदनद्रुमतुल्यतां ॥ ५२१ ॥ ततोऽव्यापारयत् स्कंधे कृपाणं स्वेन पाणिना ॥ नृपः स्मेरमुखः काष्ठे । कुठारमिव वर्धकिः ॥ ५२२ ॥ नृपस्कंधः कृपाणेन । सुहृदेव सुहृत्तदा ॥ संश्लिष्य पुष्यति स्मोच्चै । रोमांचं मूर्तहर्षवत् ॥५२३॥ अथ व्यापार्यमाणोऽपि । भुजः शक्तोऽपि भूभुजः ॥ शिरश्छेत्तु-मलंभूष्णु—र्नाभूत् कीलितवत्किल॥५२४॥प्राक्पटिष्ठोऽपि मत्तेभ—कुंटस्थलविपाटने॥ अकिंचित्करतामांची—दधुना मत्करः किमु॥५२५॥ ध्यात्वेति तेन हस्तेन । भृत्येनेव प्रभुद्रुहा ॥ दह्यमानो नृपः खड्गे । वामं व्यापारयत्करं ॥५२६॥ युग्मं ॥ तेन व्यापारितः खड्ग—स्तीक्ष्णधारोऽपि तत्क्षणं ॥ आस्फालित इव ग्राव्णि । कलयामास कुंठतां ॥ ५२७ ॥ दोर्मांद्यखड्गकुंठत्व—दीनो लीनव्यथश्चिरं ॥ अदंदह्यत भूपोंत—र्मंत्रस्तंभितभोगिवत् ॥ ५२८ ॥ दध्यौ च वीक्षापन्नः सन् । धिग्मे भंगुरभा-ग्यतां ॥ असावुपचिकीर्षापि । यत्सिद्धिं नाधिरोहति ॥ ५२९ ॥ धन्यास्ते प्राणिनो येषां । भवत्युपकृतिस्पृहा ॥ ते तु धन्यतमा येषां । सा सद्यः सिद्धिमश्नुते ॥ ५३० ॥ नृपोऽथ शीर्षच्छेदार्थं । यावद्याचति योगिनं ॥ तावत्सोऽप्यति मूर्च्छाल—श्छिन्नद्रुरिव पेतिवान् ॥ ५३१ ॥ अहो अस्यापि किं जात—मिति दुःखोत्थमूर्च्छया ॥ भूपः शून्य इवाश्रौषी—द्धाकारं दिवि दैवतं ॥ ५३२ ॥ लब्धसंज्ञः क्षणात् क्षोणी—भृदैक्षत निजाग्रतः ॥ कादंबिनीमिवोक्षंतीं । कमंडलुगलज्जलैः ॥
॥ ५३३ ॥ घ्नंतीं संतमसं दीप्त्या । प्रदीपकलिकामिव ॥ दिव्याभरणभंगीभि—र्भांतीं कल्पलतामिव ॥ ५३४ ॥ सेव्यमानां

१ कट, प्र. २ अतिशयेन अदह्यत. ३ वि-विविधप्रकारा ईक्षा-मति ता आपन्नः, ४ प्राप्नोति ५ प्राप्नोति. ६ मेघमालावत् सिंचन्तीं.

सुरस्त्रीभि—र्भृंगीभिरिव पद्मिनीं ॥ इंदुलेखामिवानंद—दायिनीं सौम्यदर्शनात् ॥ ५३५ ॥ स्नेहार्द्राभ्यां मुहुर्दृग्भ्यां । पश्यंतीं जननीमिव ॥ कांचनद्युतिरोचिष्णु—कायां कांचनदेवतां ॥ ५३६ ॥ चतुर्भिः कलापकं ॥ सा स्माह वत्स ! सैवाहं । देवताऽस्म्यपराजिता ॥ त्वत्साहसेन तुष्टाऽस्मि । प्रार्थयस्व यथारुचि ॥५३७॥ नत्वाऽभयंकरोऽभाणीत् । तुष्टाऽसि यदि देवि ! मे ॥ निशुंभं तर्हि दोःस्तंभ—स्तंभं संभावितत्वरं ॥ ५३८ ॥ यथा स्वशीर्षदानेन । त्वद्भक्तस्यास्य योगिनः ॥ विद्यासिद्धिं वितन्वेऽहं । कार्यं राज्यादिना न मे ॥ ५३९ ॥ अथ कर्तुमिदं मात—र्नालंकर्माणिविक्रमा ॥ विद्याधरसु-तस्याऽस्य । तर्हि सिद्धिर्विधीयतां ॥ ५४० ॥ देव्यूचे नास्य पापस्य । वितितीर्षाम्यसूनपि ॥ सिद्धिर्दूरेऽस्तु थे नैष । प्रारब्धः स्त्रीवधोऽधमः ॥ ५४१ ॥ नेयताऽपि स्थितः सोऽयं । किंतु ते विश्वरक्षिणः ॥ ध्वंसात्कल्पद्रुमस्येव । स्वार्थं फलमिवेहते ॥ ५४२ ॥ इदं शिष्टं मयाऽनिष्टं । कृत्यं सत्त्वं परीक्षितुं ॥ अयं तु हंतुमेव स्त्रीं । प्रावर्तिष्ट निकृष्टधीः ॥ ५४३ ॥ अतस्तव भुजं खड्ग—मपि स्तंभितवत्यहं ॥ ईदृशीं दुर्दशां चैनं । लंभयामासुषी रुषा ॥ ५४४ ॥ स्त्रीवधे बद्धबुद्धेस्त—त्सिद्धिरस्य कुतो भवेत् ॥ पापीयसां न सिध्यंति । कला हि कमला इव ॥ ५४५ ॥ निर्मंतुजंतुहंतृणा—मालस्योल्लासशालिनां ॥ सत्त्वरेचितचित्तानां । न स्युर्धर्मार्थसिद्धयः ॥ ५४६ ॥ हेतोस्तदस्य दुष्टस्य । नैव त्वं हंतुमर्हसि ॥ न हि रक्षांकृते कोऽपि । दहति त्रिदशद्रुमं ॥ ५४७ ॥ क्रियेताकृत्यमप्येत—दस्य चेत्स्या-दुपक्रिया ॥ न ह्यूषरस्यं जायेत । वृष्टियोगेऽपि योग्यता ॥ ५४८ ॥ अथावदन्नृपो देवि ! । सिद्धिरस्य ममेप्सिता ॥ त्वं

१ दूरीकुरु. २ कार्यकरणसमर्थपराक्रमा. ३ वितरितुं-दातुमिच्छामि. ४ नीचधी ५ प्रापितवती. ६ क्षार, प्र, क्षारकंभसस. ७ क्षार ( भूमेः ) देशस्य.

निषेधसि तामेव । मह्यं तुष्टा कथं? वद ॥ ५४९ ॥ ईदृशोऽप्येष चात्मीयो—ऽनुग्राह्योऽस्ति तव ध्रुवं ॥ विरज्यते किमीशो हि । संश्रिताद् भुजगादपि ॥ ५५० ॥ किंचास्य सिद्धिविध्वंसा—त्संगरो भंगुरो मम ॥ तेन "प्राणव्ययेनेव ।" जीवन्नपि मृतोऽस्म्यहं ॥ ५५१ ॥ मास्मभूत् स मनुष्योऽपि । निंदनीयो मनस्विनां ॥ प्राणेभ्योऽप्यधिकं स्वीयं । यः प्रतिज्ञातमुज्झति ॥ ५५२ ॥ यथेच्छं गच्छ तद्देवि! । वह्नौ वेक्ष्याम्यहं पुनः ॥ इत्युक्त्वा नृपतिस्तत्र । झंपां दातुं प्रचक्रमे ॥ ५५३ ॥ तत्तथा वीक्ष्य भूपोऽयं । मदर्थं म्रियते हहा ॥ धिग्मामितिवचाः सापि । स्त्री मूर्च्छालाऽपतद् भुवि ॥ ५५४ ॥ अथाकृष्याग्नितः क्ष्माप—माख्यद्देवी तथोच्चकैः ॥ तुष्टाऽस्मि त्वत्कृते पश्य । जीवितौ द्वाविमौ मया ॥ ५५५ ॥ उक्त्वेति कामंडलवैः । सलिलैरमृतैरिव ॥ सिक्त्वा सा मणिचूडं तं । कुमारीमप्यजीवयत् ॥ ५५६ ॥ जीवंतं नृपतिं प्रेक्ष्य । हृषिता सा कनी हृदा ॥ तं पतीचक्रुषी[3] का हि । नेहते तादृशं वरं ॥ ५५७ ॥ नृप ! त्वदुपरोधेन । योगिनोऽस्य प्रसेदुषी[4] ॥ उदित्वेति ददौ देवी । तस्मै सिद्धिं चिरेप्सितां ॥ ५५८ ॥ भानुस्तदोदयामास । तादृशाद्भुतकर्मणः ॥ अभयंकरभूपस्य । मुखं द्रष्टुमिवोच्चकैः ॥ ५५९ ॥ प्रभाते स्फुरितेऽकस्मा—द्रोदसीभेदसोदरं[5] ॥ विश्वंद्रीचं[6] कलकलं । कलयामासिवान्नृपः ॥ ५६० ॥ किमेतदिति संभ्रांतो । भूकांतो यावदीक्षते ॥ तावदाविरभूदग्रे । चतुरंगकलं बलं ॥ ५६१ ॥ एकश्छेकः पुमानेत्य । तस्माद्विस्मापयन् गिरा ॥ व्यजिज्ञपन्महीजानिं । तमेवं योजितांजलिः ॥ ५६२ ॥

अस्ति लक्ष्मीपुरं लक्ष्मी—लीलाढ्यं दानवांरिवत् ॥ नाम्नारिकेसरी तत्र । नृपोऽरिद्विपकेसरी ॥ ५६३ ॥ यत्प्रताप-

१ प्रतिज्ञा. २ तवो, प्र. ३ कृतवती. ४ प्रसन्नाजाताऽहं. ५ स्वर्गभूमिभेदसमानं—स्वर्गभूमिभेदकम्. ६ सर्वदिग्गामिनं कोलाहल—अव्यक्तशब्दम्. ७ देववत्.

बृहद्भानो—वैरिवंशान् दिधक्षतः ॥ शौर्यमूर्जस्वलं भेजे । वात्याव्यतिकरायितं ॥ ५६४ ॥ तस्मिन् गते त्रुलललना—लोल-लोचनलेह्यतां ॥ निर्नाथत्वेन तद्राज्यं । भेजे संध्यानभस्तुलं ॥ ५६५ ॥ ततः सुमित्रमंत्र्याद्यैः । कुलदेव्यपराजिता ॥ प्रसादिता समादिक्ष—द्राज्याहं त्वामिह स्थितं ॥ ५६६ ॥ तदादेशाद्बलद्वैन्यं । सैन्यं त्वामिदमाश्रितं ॥ राज्यश्रीर्भवता सेयं । स्पर्धतां द्यां सवासवां ॥५६७॥ अरिकेसरिभूभर्तु—स्तस्यैवाहं क्रमागतः ॥ प्रज्ञालोकात्र्यो मंत्री । त्वामेतद्वक्तुमेतवान् ॥ ५६८ ॥ उदित्वेति निवृत्तेऽस्मिन् । देवता साऽपराजिता ॥ आसयित्वाऽऽसने हैमे । तत्रैवाभ्यषिचन्नृपं ॥ ५६९ ॥ दत्वा तां भूभृते कन्यां । सा तिरोधत्त देवता ॥ उपकारः कृतस्तस्य । तदैवासीत् फलेग्रहिः ॥ ५७० ॥ हरति विपदं, सूते कीर्तिं, निकृन्तति वैरितां । जनयति जने मानाधिक्यं, वशीकुरुते रमां ॥ मदयति दयासारं धर्मं, तनोति महोदयं । किमिवँ सुधियां नाधत्ते ऽसौ परोपकृतिः कृता ॥ ५७१ ॥ मणिचूडोऽपि संपन्न—सिद्धिर्भूधवमभ्यधात् ॥ मत्पुण्यैरेव ते देव । जैनिः समजनि ध्रुवं ॥ ५७२ ॥ सिद्धिर्ममास्तु दूरेऽमी । प्राणा अपि तुषा इव ॥ उड्डीयेरन् सुरीरोष—वात्यया त्वां विना यतः ॥ ५७३ ॥ न केवलं त्वया स्त्रीयं । त्राता प्राणप्रयाणतः ॥ किंतु स्त्रीघातसंजात—पातकादहमप्यहो ॥ ॥ ५७४ ॥ निःस्पृहत्वेन सर्वेषा—मुपकुर्वन् स्वकर्मणा ॥ परार्थीकृतसर्वस्वो । नंद चंदनवत्ततः ॥ ५७५ ॥ स्वदर्शनामृतैः सिक्त्वा । पितृनार्त्तानुपैम्यहं ॥ विज्ञप्येति नृपं प्राप । मणिचूडः स्वमंदिरं ॥ ५७६ ॥ अथारिकेसरीयास्ते । मंत्रिप्रभृतयोऽखिलाः ॥ तं नवस्तूपवन्नेसु—रमंदानंददायिनं ॥ ५७७ ॥ ततस्तैर्विनयानम्रैः । पुरयानार्थमर्थितः ॥ प्रतस्थे पार्थिवः संतो ।

---

१फलयुक्त.—सफल इत्यर्थः. २ छिनत्ति. ३ किमित्यर्थः. ४ जन्म. ५ सुरेरोष.

॥ २० ॥

ह्यर्थनाभंगभीरवः ॥ ५७८ ॥ स्वधैर्यनिर्जयात्[1] सेवा–हेतवे समुपागतं ॥ नगेंद्रमिव तुंगांग–मुपवाह्यं गजं श्रितः॥ ५७९ ॥
सितच्छत्रेण पर्वेंदु–गर्वसर्वस्वहारिणा ॥ मूर्तेन यशसेवोच्चै–रधिमूर्द्ध विभूषितः॥ ५८०॥ रोचिश्छटाद्वयेनेव[2]। मुखेंदोः सर्प-
ताऽभितः ॥ चामरद्वितयेनारा–द्वीजितः श्वेतदीप्तिना ॥ ५८१ ॥ प्राप्तोऽस्म्यहं नृपो नंतुं । मामेतेत्यन्तिकान्नृपान्[3] ॥
ज्ञापयन्निव तूर्यौघै–र्दिक्कुक्षिंभरिनिःस्वनैः ॥५८२॥ भट्टोदितैर्जयारावै–र्जनान् बधिरयन्निव॥ सैन्योत्खातरजःपूरैः। रोदसीं
स्थगयन्निव ॥ ५८३ ॥ स्नेहार्द्रदृष्टिदानेन । पौरानुज्जीवयन्निव ॥ स्वदर्शनेंदुना पौरी–रागाब्धिं क्षीवयन्निव ॥ ५८४ ॥
पश्यन् लक्ष्मीपुरं पौरो–त्तंभितस्वर्णतोरणं ॥ अभयंकरभूमीपः । प्राप क्ष्मापतिमंदिरं ॥ ५८५ ॥ षड्भिः कुलकं ॥ तत्र हेमा-
सनासीनं पूर्वाद्रिस्थमिवारुणं ॥ नत्वा सीमालभूपालाः । प्राभृतैरुपतस्थिरे ॥ ५८६ ॥ अथ सिंहपुरस्वामी। सुतावृत्तमवेत्य
तत् ॥ तत्राभ्येत्य च तां तेन । भूभुजा पर्यणीनयत् ॥ ५८७ ॥ साऽपि काममिवोद्दाम–कामनीयकधाम तं॥ लब्ध्वा पतिं
रतिरिव। श्रियं कांचिदशिश्रियत्[4] ॥ ५८८ ॥ तौ प्रागुपकृतौ भूपौ। नृसिंहघनवाहनौ ॥ मणिचूडः कृतज्ञैक–चूडो विद्या-
धरः स च ॥ ५८९ ॥ परेऽपि भूभुजोऽभ्येत्य । तं भूभुजमपूपुजन् ॥ रत्नाद्यैः प्राभृतैर्दिव्यैर्देवा देवाधिपं यथा ॥ ५९० ॥
युग्मं ॥ इति नानानृपानीतो–पायनैस्तस्य वैभवं॥ ववृद्धेंभो यथांभोधेः।सिंधुप्रापितवारिभिः॥५९१॥ आयुधागारिकोऽन्येद्यु-
रुपसृत्याभयंकरं ॥ चक्रित्वोचितया चक्र–रत्नप्राप्त्याऽभ्यवीवृधत् ॥ ५९२ ॥ तं सत्कृत्य मुदा भूपः। शस्त्रागारमुपेत्य च॥
चक्रं ददर्श मार्तंड–मंडलश्रीविखंडनं[5] ॥ ५९३ ॥ आर्चित्वा चंदनाद्यैस्त–च्चक्रे चाष्टाह्निकामहं ॥ महांतः किमु मुह्यंति।

१ नगेन्द्र ( मेरुपर्वत ) धैर्यनिर्जयात्. २ किरणकान्तिप्रवाहद्वयेन. ३ समीपे. ४ अनिर्वचनीया शोभा. ५ विडंबनं. प्र–

पूज्यपूजनकर्मणि ॥ ५९४ ॥ तस्यान्यान्यपि रत्नानि । सेनान्यादीनि जज्ञिरे ॥ अगण्यपुण्यपण्यानां । किमिवास्ति दुरासदं ॥ ५९५ ॥ ततश्चक्रानुगश्चक्री । दिक्चक्रविजिगीषया ॥ चचाल चालयंश्चक्रै—रचलानचलानपि ॥ ५९६ ॥ महीमाक्रममाणस्य । चक्रभृत्सैन्यनीरधेः ॥ अमज्जन् भूभृतोऽप्यंतः । परेषां गणनापि का ॥५९७॥ स्वतेजसैव द्विषतः । पिपतस्तस्य चक्रिणः ॥ न कोऽपि संमुखस्तस्थौ । तिग्मांशोरिव कौशिकः ॥ ५९८ ॥ पट्खंडं विजयं जित्वा । वशीकृत्वा निधीश्च ॥ व्यावृत्तः स्वपुरं प्राप—दभयंकरचक्रभृत् ॥ ५९९ ॥ चक्रभृत्त्वाभिषेके च । जाते द्वादशवार्षिके ॥ स वदान्यतया चक्रे । याचकान् धनदानिव ॥ ६०० ॥ सदानभोगतां बिभ्र—द्विबुधाश्रितसन्निधिः ॥ शक्रवच्चक्रवर्ती स । चिरं राज्यमपालयत् ॥ ६०१ ॥ अथागमं गुरोर्ज्ञात्वा । स शिष्य इव हर्षुलः ॥ गत्वा नत्वा च तत्पार्श्वे । देशनामिति शुश्रुवान् ॥ ॥ ६०२ ॥ मनीषिणा तदाचर्यं । येन स्याच्छाश्वतं सुखं ॥ तन्मुक्तौ तदुपायस्तु । व्रतं प्रोचे जिनेश्वरैः ॥ ६०३ ॥ व्रतं तु सर्वसावद्य—योगत्यागोऽभिधीयते ॥ यस्मादत्रार्च्यता लोके । मोक्षलक्ष्मीः परत्र च ॥ ६०४ ॥ जातोऽस्ति यदि ते सिद्धि—संगमो हृदयंगमः ॥ तदादत्स्व व्रतं येन । सिद्धिरेति स्वयंवरा ॥ ६०५ ॥ चक्रवर्ती निशम्येति । मुक्तिसंगमनोत्सुकः ॥ राज्ये न्यस्य सुतं तस्य । गुरोः पार्श्वे व्रतं ललौ ॥ ६०६ ॥ सुदुस्तपेन तपसा । कुठारेण शितेन सः ॥ लुलाव सकलं मूलात् । पूर्वदुष्कर्मकाननं ॥ ६०७ ॥ केवलज्ञानमासाद्य । प्रबोध्य च घनं जनं ॥ अभयंकर यत्याप । निष्पापः

१ पुण्याना. प्र-२ रचलामचलामपि–प्र. निश्चलां पृथ्वीमपीत्यर्थं . ३ निश्चलान् पर्वतानपीत्यर्थः. ४ दातृत्वेन. ५ दानेन सहितः सदानः, सदानः भोगो यस्य स सदानभोगः तस्य भावस्तत्तातांबिभ्रत्, पक्षे. सदा नमसिगच्छतीति सदानभोगस्तस्य भावस्तत्तातांबिभ्रत्. ६ विद्वांसः पक्षे. देवाः ७ शुश्राव इत्यर्थः ८ शाश्वतंसुखं. ९ मुक्त्युपाय :

परमं पदं ॥ ६०८ ॥ उपकारमयाद्धर्मा—दभयंकरचक्रिणः ॥ मत्वा महत्त्वमीदृक्षं । सिद्धेश ! कुरु संततं ॥ ६०९ ॥ इति निशम्य गुरोर्गिरमादरात् । स जयसिंहनृपः कृपयांचितः ॥ हृदि निवेश्य परोपकृतिव्रतं । रुचिरमाचरति स्म तदन्वहं ॥ ॥ ६१० ॥ इत्थं सुगोभिर्जयसिंहदेव—संदेहसंदोहतमांस्यपास्यन् ॥ उज्जृंभयन् जैनमतांबुजन्म । श्रीहेमसूरिः शुशुभे स भास्वान् ॥ ६११ ॥

इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरिते महाकाव्ये तत्पूर्वज श्रीहेमसूरिजन्मवर्णनो नाम प्रथमसर्गः ।

## ॥ अथ द्वितीयः सर्गः प्रारभ्यते ॥

अथ पुर्यां दधिस्थल्यां । स्वाः प्रजाः परिपालयन् ॥ स बभूव त्रिभुवन—पालः श्रीद इव श्रिया ॥ १ ॥ अस्ताघे मानसे तस्य । धर्मः सत्पक्षलक्षितः ॥ विलासान् कलयामास । राजहंस इवानिशं ॥ २ ॥ करे तदीये करवालवल्ली । द्विषद्भिदा शोणितशोणरोचिः ॥ रणाजिरे रागभराभिरामा । मूर्ता जयश्रीरिव राजते स्म ॥ ३ ॥ तस्यासीत् प्रेयसी प्रीति—स्थेयसी श्रेयसी गुणैः ॥ नाम्ना कश्मीरदेवीति । श्रीरिवांगश्रिया स्वयं ॥ ४ ॥ या सतोऽपि परिष्कारान् । हित्वा बाह्यानशाश्वतान् ॥ अंतरंगं स्थिरं चांगे । शीलमंडनमाश्रयत् ॥ ५ ॥ तया समं त्रिभुवन—पालो वैषयिकं सुखं ॥ श्रियेव श्रीवरयिता । सस्वदे स्मेरितस्मरः ॥ ६ ॥ प्रजानां भूतयेऽन्येद्यु—स्तत्प्रिया गर्भमादधौ ॥ अंतर्गूढं यथा वीज—मुष्टिं क्षेत्रवसुंधरा ॥ ७ ॥ आसमुद्रं क्षितेस्त्राणं । प्राणिनामभयार्पणं ॥ व्यसनानां निषेधं च । साऽकांक्षच्छुभगर्भतः ॥ ८ ॥ पत्याऽतिप्रीतिपात्रेण । परिपूरितदोहदा ॥ समयेऽसूत सा सूनुं । द्वितीयेव निशाकरं ॥ ९ ॥ तदोच्चचार वाग्व्योम्नि । सत्त्वाद्युग्रगुणोल्बणः ॥ एष जित्वा धरां धर्म—साम्राज्यं जनयिष्यति ॥ १० ॥ बालदेहप्रभाजालै—र्विशालैर्गलितौजसः ॥ तदारिष्टस्थिता दीपा । हारिताला इवालसन् ॥ ११ ॥ तज्जन्मनि जनानां किं । प्रमोदः प्रणिगद्यते ॥ पूरप्युच्चैर्ननर्तेव । वातवेल्लद्ध्वजैः करैः ॥१२॥ कुमारं इव विक्रांतः । पालयिष्यत्ययं क्षितिं ॥ ततः कुमारपालेति । नाम तस्य पिता व्यधात् ॥ १३ ॥ पितरौ तन्मुखालोक—रसं पीयूषपूरवत् ॥ कर्णेहृत्य पिबंतौ तौ । परमां प्रीतिमापतुः ॥ १४ ॥ पुत्रोऽपि चेद्वहिरिवा-

---

१ अस्तपापे, पक्षे स्ताघरहिते. २ रणागणे. ३ भूषणानि. ४ अरिष्ट—सूतिकागृहं. ५ कार्तिकेयः. ६ अद्धाप्रतिघातं कृत्वा—अतिशयेनेत्यर्थः.

विनीत—स्तदा दहत्येव कुलं समस्तं ॥ स एव विस्तेरकलः शशीव । महेशमौलावपि लालसीति ॥ १५ ॥ ध्यात्वेति पित्रा साक्षेपं । शस्त्रे शास्त्रे च शिक्षितः ॥ तारुण्यं स्फारलावण्यं । कुमारः स्वेनं तेनिवान् ॥ १६ ॥ स्थैर्यं मेरुगिरिर्मतिं सुरगुरुर्गांभीर्यमंभोनिधिः । सौम्यत्वं शशभृत्प्रतापमरुणः शौर्यं च पंचाननः ॥ औदार्यं त्रिदशद्रुमः सुभगतां कामः श्रियं श्रीनिधिर्नूनं ढौकयतिस्म यौवनपदे दृष्ट्वा कुमारं स्थितं ॥ १७ ॥ पित्रा भोपलदेवीं स । धन्यां कन्यां विवाहितः ॥ तया समं सुखं भेजे । रत्या श्रीतनयो यथा ॥ १८ ॥ अन्यावपि त्रिभुवन—पालस्यास्तां सुतावुभौ ॥ महीपालकीर्तिपाल—नामानौ मानशालिनौ ॥ १९ ॥ सुता प्रेमलदेवीति । जाता देवीव दिव्यरुक् । तां पिता कृष्णदेवेन । सोत्सवं पर्यणाययत् ॥२०॥ परा देवल्लदेवी च । पुत्री सौंदर्यमंदिरं ॥ पित्रा शाकंभरीनाथा-र्णोराजाय व्यतीर्यत ॥ २१ ॥ एवं पुत्रैस्त्रिभिर्धर्म—कामार्थैरिव देहिभिः ॥ श्लाघनीयस्त्रिभुवन—पालस्त्रिभुवनेऽभवत् ॥ २२ ॥ कुमारपालः सोऽन्येद्युः । पत्तनं समुपेयिवान् ॥ जयसिंहनृपोपांते । हेमाचार्यं व्यलोकत ॥ २३ ॥ कलानिधिरयं कोऽपि । ध्यात्वेति विनयोल्वणः ॥ हंसः पद्मवनस्येव । तस्य सेवां स तेनिवान् ॥ २४ ॥ गुणगोष्ठ्यां प्रवृत्तायां । को गुणेष्वग्रणीर्गुणः ॥ इति पृष्टः कुमारेण । हेमाचार्यस्तमूचिवान् ॥ २५ ॥ गुणेषु सत्त्वमेवैकं । मन्येऽहं सार्वभौमति ॥ अमी सर्वेऽपि धावंति । यत्पृष्ठे जात्यभृत्यवत् ॥ २६ ॥ सत्त्वमोजायतामेकं । किमन्यैर्बहुभिर्गुणैः ॥ संपत्संपद्यते सद्यो । यस्माच्चिंतामणेरिव ॥ २७॥ व्यसनांभोधियादोऽपि । सत्त्वेन श्रयति श्रियं ॥ अजापुत्रो यथा पूर्वं । श्रूयतां तत्कथाऽधुना ॥ २८ ॥

१ शस्त्रे शास्त्रेश्च-प्र. २ आत्मना. ३ सूर्यः. ४ गुणाः.

इहैव जंबूद्वीपेऽत्र । क्षेत्रे च भरताभिधे ॥ स्वःस्पर्धिवर्धिसर्वर्द्धि—रासीच्चंद्रानना पुरी ॥ २९ ॥ शिवानुयातो भूतभू-रिभूतिः । संपन्न[3]भोगो वृषबद्धरागः ॥ महेशलीलाकलितोऽपि यत्र । चित्रं न कोऽप्यस्ति जनो विषादी ॥ ३० ॥ चंद्रा-पीडो नृपस्तत्र । चंद्रापीड इवापरः ॥ चकासामास शौर्येण । चित्रं नोग्रत्वभाजनं ॥ ३१ ॥ महीविजयहेतवे चलति यत्र भूमिपतौ । जलस्य च तृणस्य चाघटत नास्तिता सर्वतः ॥ यदुग्रबलधूलिभिः स्थगितमोद्यमंतर्यं[10] पुन—र्गृहीतमरिभिर्गृहे स्वमवितुं रदाग्रार्पणात् ॥ ३२ ॥ पुरे तत्रैव विप्रोऽभू—द्धर्मोपाध्यायसंज्ञया ॥ यः कलानिधिरप्युच्चै—र्न कुरंग[11]प्रसंगभृत् ॥ ॥ ३३ ॥ रंगत्प्रेमतरंगासी—द्गंगा तत्सहचारिणी ॥ शुचिता रसवत्ता च । यस्यां विश्राममाश्रिते ॥ ३४ ॥ निर्विशंकं [12]निर्वि-शतो—स्तयोरपतुषं सुखं ॥ अजनिष्ट जनेष्टश्री—स्तनूजो मनुजोत्तमः ॥ ३५ ॥ पंचोच्चग्रहयोगेन । प्राज्यराज्यरमाप्रदं ॥ तज्जन्मलग्नं विज्ञाय । विज्ञस्तज्जनकोऽमृशत् ॥ ३६ ॥ अहो मम तनूजोऽय—मेतल्लग्नानुसारतः ॥ भविता राज्यमासाद्य । माद्यन् ब्रह्मक्रियोज्झितः ॥ ३७ ॥ नैवास्योप[13]नयो नापि । सांगवेदादिदक्षता ॥ न क्रतु[14]प्रक्रियाकांड—तांडवं न विवेकिता ॥ ॥ ३८ ॥ पापात् प्रकृतसंतापात् । बह्वारंभादितो पि च ॥ अयं भूत्वाऽपि मत्पुत्रो । गंता ही नारकीं भुवं ॥ ३९ ॥ नवरं स्वयमेवायं । पाप्मभिर्निरयंगमी ॥ एतत्संतानिनोऽप्येवं । धिग्धिग् दुष्टविधेर्विधिं ॥ ४० ॥ वर्धमानः सुतस्तस्मा—दयमुच्छे-त्स्यते कुलं ॥ स्फा[15]यमानो यथा प्लक्ष—प्ररोहो देवमंदिरं ॥ ४१ ॥ तदेनं त्याजयाम्याशु । ध्यात्वेत्यूचे द्विजः प्रियां ॥

१ निरुपद्रवयुतः, पक्षे पार्वतीयुतः. २ विभूतिरैश्वर्यं, पक्षे, रक्षा-भस्म. ३ सर्प.. ४ धर्मः, पक्षे वृषभ.—बलीवर्दः. ५ श्रेष्ठी-धनाढ्यः, पक्षे शंकरः. ६ सखेदः पक्षे विषभक्षी. ७ शंकरः ८ हरिद्-प्र. ९ जल. १० तृणं. ११ कुत्सितानद -कुरंगः शोक, पक्षे मृगः १२ मुंजानयोः. १३ यज्ञोपवीतप्रदानं. १४ यज्ञक्रिया. १५ वृद्धिं प्राप्नुवन्.

भद्रेऽयं जातमात्रोऽपि । त्यज्यतां बहिरात्मजः ॥ ४२ ॥ दग्धा वाचा तया दाव–ज्वालयेव समंततः ॥ धर्मोपाध्यायमाचख्यौ । गंगाऽगंःपरिवर्जिता ॥ ४३ ॥ स्वामिन् ! किमिदमादेशि ?। तनुजाऽपि न सुत्यजा ॥ इंदुवन्नयनानंदी । किं वाच्यस्तनयः पुनः ॥ ४४ ॥ चिंतामणिश्च पुत्रश्च । द्वयमेतत्सुदुर्लभं ॥ तत्कथं ? त्यज्यते नाथ ! । प्राप्तं सुकृतयोगतः ॥ ४५ ॥ परः शतान्यौपयिका–न्यहो यस्याप्तयेऽनिशं ॥ बुधैरपि विधीयंते । कः कृती तं त्यजेत् सुतं ? ॥ ४६ ॥ प्रियः प्रियामथाचष्ट । शिष्टे ! त्वं सत्यमूचुषी ॥ परं पुत्रः स पाल्यः स्या–द्वर्धयेद्यः कुलं निजं ॥ ४७ ॥ असौ कुलक्षणत्वेन । कुलक्षयकरः पुनः ॥ तस्माद्बहिस्त्यजैनं द्राग् । विचारं मा कृथा वृथा ॥ ४८ ॥ पुत्रादपि कुलस्त्रीणां । श्रेयः प्रेयोवचः खलु ॥ ध्यात्वेति सा गलद्रंगा । गंगाऽऽदाय निजं सुतं ॥ ४९ ॥ सिंचंत्यश्रुभरैर्वक्षः । स्तन्यैश्च क्षितिमंडलं ॥ मुहुर्मूर्धनि चुंबित्वाऽत्याक्षीद्रत्नमिव क्वचित् ॥ ५० ॥ युग्मं ॥ पथि तं पतितं बाल–मजा प्राग्जन्मनः प्रसूः ॥ तद्दर्शनात् क्षरत्क्षीरा । निजं स्तन्यमपीप्यत ॥ ५१ ॥ अजापृष्ठस्थितो दृष्ट्वाऽ–जापालो वाग्भटोऽथ तं ॥ दयालुत्वादुपादाय । पुत्रत्वेनार्पयत् स्त्रियै ॥ ५२ ॥ निष्पुत्रा प्राप्य तं पुत्र–मजापालप्रियाऽपि च ॥ तृषातुरा नीरमिव । संमदाद्वैतमासदत् ॥ ५३ ॥ सदैव दैवमेवैकं । स्तुमहे महिमोद्धतं ॥ प्रगल्भते यतो नान्यः । संपद्यपि विपद्यपि ॥ ५४ ॥ त्याजयित्वा पुरा येन । मातापितृकरोदरात् ॥ अजापालगृहे बालः । स तदैव न्यवेश्यत ॥ ५५ ॥ अजाविनिर्मितस्तन्य–पानदर्शनहेतुना ॥ अजापुत्राख्ययाऽऽख्यायि । पितृभ्यां सोऽर्भको मुदा ॥ ५६ ॥ गुणालयोऽतिश्रीपात्रं । भाव्यपि प्राच्यकर्मणा ॥ अजापालकुले सोऽर्भः । पंके पद्म



१ गगा रंगापवर्जिता-प्र. २ पुत्री. ३ रक्तवती. ४ प्राग्जननप्रसूः, प्र.

इवावृधत् ॥ ५७ ॥ स्तनंधयोऽपि स[1] स्वस्य । जगिवान् राज्ययोग्यतां ॥ तेजोभरैर्जगज्जैत्रै । रविवद्दिनकर्तृतां ॥ ५८ ॥
तस्मिन् वसंतवत्सर्व-गुणद्रुषु विवर्धिषु ॥ रसालवद्धिशालत्वं । भृशं सत्त्वमशिश्रियत् ॥ ५९ ॥ यत्नं विनापि तच्चित्ते ।
जलाशय इवामले ॥ सकलोऽपि कलाव्यापः[2] । संक्रांतः शशिबिंबवत् ॥ ६० ॥ जनके ज्वरितेऽन्येद्यु-स्तदादेशवशंवदः ॥
अजाव्रजं चारयितु-मजापुत्रो बहिर्ययौ ॥ ६१ ॥ निजेच्छया चरंतीषु । छागीषु पुरगोचरे ॥ स वट[3]च्छायामाश्रित्य ।
निषसाद विषादमुक् ॥ ६२॥ तदा तत्पुरराट् चंद्रा—पीडश्चंद्रवितंद्ररुक् ॥ प्राप पापर्धितस्ताप-तापितस्तं तरुं गुरुं ॥ ६३ ॥
तरुच्छायां श्रिते तस्मि-न्नृपतौ सपरिच्छदे ॥ प्रादुर्भूयावदत्काचि-द्देवी दिव्यत्तमद्युतिः ॥६४॥ असावजासुतो राजन्! ।
लक्षसैन्येशतां श्रितः ॥ हत्वा त्वां द्वादशाब्यंते । भविताऽत्र पुरे नृपः ॥ ६५ ॥ देव्यां गतायां तत्प्रोच्य । शोच्यं वीक्ष्य च तं
शिशुं ॥ तृणीकृतजगद्दर्पा-चंद्रापीडो व्यचिंतयत् ॥६६॥ असंबद्धमिदं देव्या । जगदे मे पुरः किमु ? ॥ यत्तेजसाऽतिसिंहं
ही । हंता मामेष मेषरुक् ॥ ६७ ॥ पंगुश्चेन्मेरुमारोहे—त्तरेच्च कुणिरर्णवं ॥ तर्ह्यसौ कर्हिचिन्नूनं । हंतुमीशीत मां शिशुः ॥
॥ ६८ ॥ इति तूष्णींस्थितं भूपं । प्रोचे सुमतिमंत्रिराट् ॥ शिशावपि रिपौ स्वामि—न्नोपेक्षां कर्तुमर्हसि ॥ ६९ ॥ यद्व्या-
धिश्च विरोधी च । द्वावेतौ संमतौ समौ ॥ उपेक्षितौ प्रवृद्धौ च । दुरुच्छेदौ बुधैरपि ॥ ७० ॥ त्वद्गृह[4]ह्यैवामरी काचि-
दियं त्वद्धितमूचुषी[5] ॥ दृषलेखा स्थिरा नैव । देव्युक्तिश्च भवेन्मृषा ॥ ७१ ॥ अपकर्तुं यदप्येष । द्वेषी नेष्टे शिशुत्वतः ॥
निर्वास्यतां तथाप्यस्मा-द्देशात्तस्करवत् क्वचित् ॥ ७२ ॥ आलोचितं तदुचितं । मत्वा भूमान् स्वमंत्रिणः ॥ क्वाप्यरण्ये

---

१ सत्त्वस्य जगिमवान्-प्र. २ विस्तारः. ३ वरछायं-प्र. ४ त्वद्गृहासक्ता. ५ उक्तवती.

तदैवास्मै-रजापुत्रममूमुचत् ॥ ७३ ॥ मातापितृपरित्यक्तो । महारण्ये निपेतिवान् ॥ वालोऽप्यवालमतिश्च-दध्यावितथम-
जात्मजः ॥ ७४ ॥ अहो मंतुर्न मे कश्चित् । कुतोऽनेन महीभृता ॥ स्थानान्निर्वासितः स्वस्रा-त्सापराध इवाधमः ॥ ७५ ॥
हुं ज्ञातमनया देवी-गिरा प्रोद्धुरभीभरः ॥ स्वं राज्यं च परित्रातुं । मामसौ निरवासयत् ॥ ७६ ॥ जीवितव्यं च राज्यं
च । किमपीष्टतमं नृणां ॥ यत्कृते कृतिनोऽप्युच्चै-रकृत्यानि प्रकुर्वते ॥ ७७ ॥ किमनेन नृकीटेन । सत्त्वमेकं प्रसीदतु ॥
हत्वा येनेदृशान् पापान् । गृह्यते राज्यमूर्जितं ॥ ७८ ॥ इत्थं विचार्य धैर्येण । दृढयित्वा च मानसं ॥ अजापुत्रः प्रतस्थे-
ऽग्रे । पारींद्र इव निर्भयः ॥ ७९ ॥ अरण्ये गच्छतस्तस्य । श्वापदा भीषणा अपि ॥ तत्सत्त्वविभवध्वस्ता-श्चित्रन्यस्ता इवा-
भवन् ॥ ८० ॥ वन्यैः फलैः कृताहार-स्तिष्ठंस्तरुतले शुचौ ॥ भवपारं तपस्वीव । प्रांतरप्रांतमाप सः ॥ ८१ ॥ अरण्यांते
पुरीं दृष्ट्वा । हृष्टोऽसौ तां प्रति व्रजन् ॥ तदर्वाग्यक्षवेश्मैकं । रश्मिस्मेरमुदैक्षत ॥ ८२ ॥ अग्निगर्तां च तत्पार्श्वे । ज्वलंतीं
परितश्च तां ॥ ददर्श चतुरो मर्त्यान् । यामिकानिव संस्थितान् ॥ ८३ ॥ कोपीनवसनान् दीनान् । दृष्ट्वा तान् श्यामला-
ननान् ॥ विस्मेरः सन्नजापुत्रः । पप्रच्छ स्वच्छधीरिति ॥ ८४ ॥ गर्तोऽस्ति केयमाग्नेयी ? । भवंतः के ? किमीदृशाः ? ॥
यद्यस्ति मह्यमाख्येयं । तदाख्यात महाशयाः ! ॥ ८५ ॥ तैरूचे गर्भरूपस्त्वं । कार्यमत्यूर्जितं च नः ॥ ततः किं कथ्यते
तुभ्यं । त्वयेदं नैव सिद्ध्यति ॥ ८६ ॥ अजापुत्रो जगादैता-न्नैतत्तथ्यं भवद्वचः ॥ महतैव महत्कार्यं । सिद्ध्यत्यल्पेन नेति
यत् ॥ ८७ ॥ अल्पीयानपि तत्कार्यं । कुर्याज्जातु न यन्महान् ॥ कुंतासाध्यं दृषद्भेदं । टंकः किं ? कुरुते न हि ॥ ८८ ॥
श्रुत्वा तस्योर्जितं तादृ-ग्विस्मेरास्ते तमूचिरे ॥ यद्येवं श्रूयतां तर्हि । साधोऽस्माकं चिकीर्षितं ॥ ८९ ॥

अस्त्यकंपा पुरी चंपा । तस्यां स्नेहलमानसाः ॥ अवतिष्ठामहे शिष्टा-श्चत्वारः सोदरा वयं ॥ ९० ॥ सोदर्यस्याऽस्य तुर्यस्य घनैरौपयिकैः कृतैः ॥ पुत्रः पवित्रधीर्जातः । शातकुंभसमद्युतिः ॥ ९१ ॥ सोऽन्यदा तीव्ररोगार्त्तो—ऽगदंकारैः परःशतैः ॥ हठाच्चिकित्स्यमानोऽपि । सौष्ठवं नाधितष्ठिवान् ॥ ९२ ॥ परैरप्युपचारा ये । तच्चारुत्वकृते कृताः ॥ तेऽपि वैयर्थ्यमासेदुः । सत्कारा इव दुर्जने ॥ ९३ ॥ तच्चिंतार्णवयादस्सु । तदाऽस्मासु दयालुहृत् ॥ एत्य वैदेशिकः कश्चित् । स्वपूर्वज इवादिशत् ॥ ९४ ॥ पचेलिमं वह्नितरोः । फलमस्मै वितीर्यतां ॥ तदास्वादात् सुधास्वादा—दिवासौ भविताऽपरुक् ॥ ॥ ९५ ॥ स च कादंबरारण्य-प्रांते यक्षालयांतिके ॥ ज्वलंत्यां वह्निगर्तायां-मास्ते वह्निमहीरुहः ॥ ९६ ॥ अभिज्ञानान्वितं स्थान-मिदं ज्ञात्वा तदाननात् ॥ वयमत्रागमाम द्रा-गद्राक्ष्म च यथोदितं ॥ ९७ ॥ कृत्वा कोपीनमेतस्यां । पितसंवोऽप्युत्सुकत्वतः ॥ नापप्ताम वयं ज्वाल-जालदाहभवद्भियः ॥ ९८ ॥ तेनेमां परितो गर्ता-मार्त्ता वर्तामहे वयं ॥ किंकर्तव्यजडत्वेन । परस्परनिरीक्षकाः ॥ ९९ ॥ अजापुत्रः कृपालुस्ता-नूचे तास्यत मास्म भोः ॥ अहमादाय दास्ये वः । फलं वह्नितरोरितः ॥ १०० ॥ अवोचंस्ते प्रवेष्टुं ते । वह्निगर्ते न युज्यते ॥ कः परार्थे समर्थोऽपि ?। प्रविशेन्मृत्युसंकटे ॥१०१॥ इतः कृशानुतरुतो । यत्त्वया फलकर्षणं ॥ तत्प्राघूर्णकहस्तेन । नियतं सर्पमारणं ॥ १०२ ॥ आचर्यतां निजं कार्य-मार्यवर्य ! ततस्त्वया ॥ फलं त्वानेष्यते कश्चि—देको बंधुचतुष्टये ॥ १०३ ॥ आजेयः पुनरप्यूचे । मैवं वोचत सत्तमाः ! ॥ परार्थ एव हि स्वार्थो । महतां पर्यवस्यति ॥ १०४ ॥ उद्यच्छंते परार्थाय । संतः स्वार्थविवर्जनात् ॥ किं न पश्यत ? मेघा-

१ शुष्ठु च., प्र. २ वह्नितरः, ३ पतितुमिच्छव., ४ स्वार्थे-प्र.

दीन् । विश्वोल्लासनलालसान् ॥ १०५ ॥ किंचानेन शरीरेण । बहुविघ्नेन किं फलं ? ॥ स्वस्येव न परस्यापि । येनोपक्रि- यते हहा ॥ १०६ ॥ इति संबोध्य तानग्नि—गर्तायां जलकुंडवत् ॥ पतित्वा तत्फलद्वंद्वो । निरयासीदजासुतः ॥ १०७ ॥ सिद्धवत्तमदग्धांगं । फलद्वयकरं च ते ॥ विलोक्य स्फुर्जदाश्चर्याः । स्तुवंतिस्मेति वंदिवत् ॥ १०८ ॥ शंसनीयः सतांमंत- स्त्वमेवैकोऽसि सात्विक ! ॥ चंदनस्येव यस्येत्थं । परतापापहं वपुः ॥ १०९ ॥ कतिनाम न संतीह । क्षुद्राः स्वार्थसमर्थकाः ? परार्थसाधकः कश्चि—त्त्वमेकः सहकारवत् ॥ ११० ॥ स्तुत्वेति तमथापृच्छन् । कथ्यतां तथ्यमुत्तम ! ॥ नाग्निना त्वं कथं ? दग्धो- ऽगृह्णाश्च द्विफलीं कथं ? ॥ १११ ॥ अजासुतोऽवदत्काचि—देवी वह्नितरुस्थिता ॥ ददौ मह्यं फले ते च । लात्वाऽहं निर्गतोऽक्षतः ॥ ११२ ॥ अजापुत्राय ते दत्वा । फलमेकं बलादपि ॥ द्वितीयेन निजं पुत्र-मुज्जीव्य मुदमासदन् ॥ ११३ ॥ पुरः पुरीं प्रति प्रीत्या । प्रस्थितोऽजासुतस्ततः ॥ तडागं पांथदृग्दत्त-रागं प्रैक्षिष्ट कानने ॥ ११४ ॥ शैत्य-श्वैत्य-रसांभोज-गंध-भ्रमर- झंकृतैः ॥ यः सुधाकुंडवत्पंचें-द्रियग्रामप्रमोदकृत् ॥ ११५ ॥ पालिद्रुमालिप्रस्कन्नश्वेतसूनोरुमौक्तिकः ॥ यो धत्ते वृत्त- रोचिष्णु-भूकांताकुंडलाकृतिं ॥ ११६ ॥ फलं वस्त्राञ्चले बद्ध्वा । मुक्त्वा तच्च सरोंतिके ॥ उदन्यादैन्यमुच्छेत्तुं । पयः पातुं स लेगिवान् ॥ ११७ ॥ तावत्कोऽपि कपिः कंठे । स्फारमौक्तिकहारभृत् ॥ भ्राम्यन्नितस्ततो दैवा-त्सरःपरिसरं श्रितः ॥ ११८ ॥ विज्ञाय तत्फलं स्फार-सौरभैर्नासिकंधयैः ॥ वस्त्राल्लात्वा च तत्कालं । काकनाशं ननाश सः ॥ ११९ ॥ पयः पीत्वा निवृत्तोऽजा-तनूजः फलमंचले ॥ अपश्यन् हृतसर्वस्व । इवापश्यच्चतुर्दिशं ॥ १२० ॥ अध्यासीच्च वनेऽमुष्मिन् ।

१ पतित्वाऽऽत्तफलद्वन्द्वो. प्र. २ शीत-श्वेत, ३ पतित. ४ पिपासादैन्यं.

विजने न जनागमः ॥ सुरद्रुफलवत्केन । फलमेतत्तदाददे ॥ १२१ ॥ धिग्दैवं येन मे सेहे । नैतावदपि वैरिवत् ॥ अथवा
मंदपुण्यानां । करस्थमपि याति ही ॥ १२२ ॥ कटीतटे फलं बद्धा । यद्यपास्यमहं पयः ॥ तर्ह्ययास्यदिदं नैव । यद्वेद्दग्भ-
वितव्यता ॥ १२३ ॥ ध्यायन्निति हृदा शून्यो । यावत्तिष्ठति तत्र सः ॥ हारहारिगलः कोऽपि । पुमांस्तावत्तमूचिवान्
॥ १२४ ॥ अहं कपिस्तवोपात्त-फलवृंताशनादपि ॥ द्युसद्वरादिवेदानीं । जातोऽस्मीद्दग्नरोत्तमः ॥ १२५ ॥ आजग्मिवान्
भवानत्र । मद्धितायैव केवलं ॥ भवेद्भवांतरप्राप्त्याऽ-न्यथा कथमियं नृता ॥ १२६ ॥ तदक्षतं फलमिदं । हारं च प्राभृतं
मम ॥ अंगीकृत्यायमात्मीय-दासत्वेन कृतार्थ्यतां ॥ १२७ ॥ कपिमर्त्योऽभ्युदीर्येति । तस्मै हारफले ददौ ॥ अजापुत्रोऽपि
तत्प्राप्ति-तुष्टः स्वीययति स्म तं ॥ १२८ ॥ तत्फलं हृदि निश्चित्य । तिरश्चां नरताकरं ॥ प्रभावः कोऽप्यमुष्येति । विमृशन्
स विशिश्मिये ॥ १२९ ॥ गच्छेदेको न पंथान-मिति स्मृतिमिव स्मरन् ॥ सहायीकृत्य तं मर्त्यं । प्रतस्थे स स्थिरः
पुरः ॥ १३० ॥ गच्छन्मार्गमवच्छिन्न-मेकं देवकुलं कलं ॥ दिनांतेऽजासुतः प्रेक्ष्य । विश्रांत्यै तत्र तस्थिवान् ॥ १३१ ॥
महस्विनो[1]ऽपि दैवाज्ञां । न लंघितुमधीशते ॥ इतीव[2] ज्ञापयन् विज्ञां-स्तदाऽस्तं प्राप भास्करः ॥ १३२ ॥ यावद्दिनं[3] भवेत्ताव-
दहं स्थां गुणवत्स्वपि[4] ॥ इतीव कथयंती श्रीः[5] । सायं[6] पद्माकरं[7] जहौ ॥ १३३ ॥ अस्तमीयुषि मार्तंडे । प्रदीपे विश्ववेश्मनः ॥
युक्तं दृशामनायुष्यं । तमःकैवल्यमुत्थितं ॥ १३४ ॥ मुक्ताफलभृतं नील-रत्नपात्रमिवोच्चकैः ॥ चकासामास गगनं ।
तारकोत्करदंतुरं ॥ १३५ ॥ शश्वत्क्षिपत्यपि मयि । ध्वांतमेति मुहुः कुतः ॥ इतीवोरुरुषा रक्त-स्तदा शीतांशुरुद्ययौ

१ महस्वंतो. प्र. २ इति वि॰प्र. ३ दिवस॰, पक्षे भाग्यं. ४ कमलतन्तुवत्सु, पक्षे-गुणशालिषु. ५ शोभा-पक्षे-लक्ष्मीः. ६ दिनान्ते. ७ कमलं पक्षे लक्ष्मी.

॥ १३६ ॥ निशीदृशि प्रसर्पत्यां । सुप्ते च कपिपूरुषे ॥ अंतर्देवकुलं ज्योति–रजापुत्रो न्यभालयत् ॥ १३७ ॥ इयच्चिरमिह
ज्योतिर्नैक्षि संप्रत्यभूत्कुतः ? ॥ किं दैवं ? किमुताग्नेयं ? । किं भुजंगमणीभवं ? ॥१३८॥ पश्यामीति गतो ज्योति–र्दृष्ट्वा तद्विव-
रस्थितं ॥ जिज्ञासमानस्तन्मूलं । स विवेश तदंतरे ॥ १३९ ॥ युग्मं ॥ तस्मिन् प्रविष्टमात्रेऽपि । ज्योतिस्तद् द्रागधोऽगमत् ॥
सोऽपि तत्पृष्ठलग्नोऽगा–त्तेन मूढमना इव ॥१४०॥ तत्खेदार्थमिवामुष्मि–न्नधोऽधो याति तेजसि ॥ अनुगच्छन्नजापुत्रो ।
ललंघे महतीं महीं ॥ १४१ ॥ पुरः प्राप्ता समा भूमि–र्ज्योतिस्तच्च तिरोऽभवत् ॥ अजाभूरपि तद्देशे । पुरीं प्रेक्ष्य परामृ-
शत् ॥ १४२ ॥ क तद्देवकुलं ? तन्मे । क मित्रं ? क च तन्महः ? ॥ केयं भूमिः ? पुरी केयं ? । वपुरे विधिवल्गितं ॥१४३॥
मार्गदर्शीव तज्ज्योति–स्तिरोऽभूत्तदयं पुरः ॥ कथं गंतेति कारुण्या–द्दिवाकोंऽभ्युदितस्तदा ॥ १४४ ॥ भास्करेऽभ्युदि-
तेऽनेश–ल्लोकांधंकरणं तमः ॥ किं तेजस्तमसोः क्वापि । श्रूयते वा सह स्थितिः ॥१४५॥ चूर्णीकृत्य फलं हार–स्सभ्यङ्‌ कव्यां
निवेश्य तत् । चचाल कौतुकोत्ताल–स्ततोऽजातनुजः पुरः ॥१४६॥ पुरीपरिसरे वीक्ष्य । शृगालादीन् भ्रमत्तमान् ॥ किमुद्व-
सा ? वसंती ? वाऽ–स्त्येपेत्येप व्यतर्कयत् ॥१४७॥ मध्ये पुरं गतो लोकं । सशोकं हतबंधुवत् ॥ श्रीपथं शून्यवत्पश्यन् । राजद्वार-
मवाप सः ॥१४८॥ दुःखदग्धानिव श्याम–मुखान् दौवारिकानपि ॥ प्रेक्ष्य प्रक्षोभनिर्मुक्त–स्तानप्राक्षीदजासुतः ॥१४९॥ केयं
पुरी ? नृपः कोऽत्र ? । कुतो लोकः सशोकहृत् ? ॥ कस्माद्यूयमपीदृक्षाः ? । दक्षाः ! मे ख्यात तत्त्वतः ॥१५०॥ तेऽवोचन् स्वः-
पुरीवैषा । पुरी नाम्ना शिवंकरा ॥ अत्रास्ति नृपतिः प्रौढ–स्थाम्ना नाम्ना च दुर्जयः ॥१५१॥ सोऽन्यदा वर्द्धिपापर्द्धिः । पापर्द्ध्यै
निर्ययौ बहिः ॥ नैकैरनीकैः सोत्सेकै–राकंपितमहीतलः ॥ १५२ ॥ क्षेत्रपाला इव ध्याना–श्रिता रौद्राश्च केचन ॥ उद्यतपर-

श्वधाः स्थूलो—दराः केऽपि गणेशवत् ॥ १५३ ॥ अधःकृतवृषाः शूल—पाणयः केऽपि शंभुवत् ॥ गदाव्यग्रकराः श्याम—कायाः केऽपि मुरारिवत् ॥ १५४ ॥ मंडलाग्रकराः प्रौढो—त्साहाः केऽपि जिगीषुवत् ॥ नृपभृत्या बभुस्तर्हि । मृगव्याबद्धबुद्धयः ॥ १५५ ॥ त्रिभिर्विशेषकं ॥ क्ष्वेडाभेरिधनुर्ध्वानै—रपि व्याप्तदिगंतरः ॥ कीनाश इव वन्याना—मवनीशो वनेऽविशत् ॥ १५६ ॥ सारंगोऽवाप्तभंगो, रुरुरथ भयभृत्कृष्णसारोऽस्तसारो । गोमायुस्त्याजितायुः, कपिरपगतमुत्, खंडितांगश्च शंडः ॥ मातंगस्त्यक्तरंगः, किरिरपि निपतद्विक्रमः, क्रोधसांद्रः । पारींद्रस्तत्र भूपे किरति शरभरं तत्क्षणं जायतेस्म ॥ १५७ ॥ तत्सैन्या अपि भूयिष्ठ—तरवारिप्रहारतः ॥ श्वापदानापदाक्रांतां—श्चक्रिरे वारिवाहवत् ॥ १५८ ॥ इत्थं मृगयया भव्य—स्त्रियेवापहृताशयः ॥ विमुच्यानीकमात्मीयं । नृपो दूरतरं ययौ ॥ १५९ ॥ स ललाटंतपे पूष्णि । तृष्णाभरकदर्थितः ॥ नीरार्थं काननेऽभ्राम्य—द्धनार्थमिव निर्धनः ॥ १६० ॥ शिलोच्चये रत्नमिव । सौजन्यमिव दुर्जने ॥ मरुस्थले चूतमिव । स तत्र ह्रदमैक्षत ॥ १६१ ॥ हृष्टस्तस्य सुधाकुंड—स्येव दर्शनतो नृपः ॥ विवेश हंसवत्तत्र । पानीयं पातुमातुरः ॥ १६२ ॥ पानादेवांबुनस्तस्य । स दुर्जयमहीपतिः ॥ वैयाघ्रं रूपमापेदे । जलोर्जितमहो महत् ॥ १६३ ॥ किमप्यमृतमप्यंभ—स्तपस्तेज इवोज्ज्वलं ॥ दुराश्रयवशादासी—त्तस्यानर्थसमर्थकं ॥ १६४ ॥ तेनांभसा नृपं व्याघ्री—भवंतं चान्वगाप्तवान् ॥ तत्सुतो नरसिंहाख्यो । निरैक्षिष्ट ससैनिकः ॥ १६५ ॥ हा मे तातस्य किं जात—मित्यसातनिपा-

१ कुठारयुता . २ धर्मः, पक्षे, वलिवर्द., ३ मंडलाग्र.-खड्गविशेष. ४ मृगव्यं-मृगया तत्र आ-समन्ताद्बद्धा-योजिता बुद्धि -मतिर्यैस्ते तथा. ५ क्ष्वेडाभेरै , प्र ६ रुरु रुरुभयभृत् ।, प्र. ७ उत्सुकः ८ अन्वच् अन्वग् अनुगामी.

तिहृत् ॥ जवातिपातितमरु-न्नरसिंहोऽभ्यधावत ॥१६६॥ तावन्निरीय स व्याघ्र-स्त मेवात्मसुतं क्षुधा ॥ जग्रसेऽत्युग्रवदनः । क्व तैरश्च्ये विवेकिता ? ॥ १६७ ॥ तथाभूतं नृपं दृष्ट्वा । तज्जग्धं च तदात्मजं ॥ अदेविषत तद्वर्ग्या । रोदःकुक्षिंभरिस्वराः ॥ १६८ ॥ धावंतं च क्रुधावंतं । जग्धुमन्यानपि स्वकान् ॥ शृंखलाभिर्विशालाभि-स्तं नियम्य कथंचन ॥ १६९ ॥ क्षिप्त्वा च पंजरे लौहे । महानर्थमिवांगिनं ॥ मंत्रिणोऽत्र समानीय । मध्ये सौधमतिष्ठिपन् ॥ १७० ॥ युग्मं ॥ तस्य व्याघ्रत्वमुच्छेत्तुं । मंत्रयंत्रौषधादिकं ॥ मंत्रिणः कारयांचक्रु-स्तद्दुष्कर्मेव नागमत् ॥ १७१ ॥ मंत्रादिस्मरणं शुभानुसरणं पृथ्वीपसंसेवनं । शास्त्राद्यभ्यसनं गुणाधिगमनं सद्देवताराधनं ॥ शत्रुप्रोद्दलनं परोपकरणं रत्नाकरोल्लंघनं । दैवे हि प्रतिकूलतां कलयति व्यर्थं समस्तं नृणां ॥ १७२ ॥ स्वामिकष्टेन तेनायं । लोकः शोकवशंवदः ॥ विधौ विधुंतुदग्रस्ते । स्मेरः किं तत्करोत्करः ॥ १७३ ॥ तत् श्रुत्वाऽजासुतोऽवोच-द्यद्येवं तर्हि दर्श्यतां ॥ स व्याघ्रः शीघ्रमेवाहं । वितनोमि यथा नरं ॥ १७४ ॥ दौवारिकास्तदावेद्य । मंत्रिणे तन्निदेशतः ॥ अजानंदनमानैषु-रुपकारमिवांगिनं ॥ १७५ ॥ तमभ्युत्थाय मंत्रींदु-रमंदानंदतुंदिलः ॥ निवेश्य चासनेऽनर्घ्ये । सप्रश्रयमदोऽवदत् ॥ १७६ ॥ प्राप्तरूप ! त्वया भूप—स्वरूपं यादृशं पुरा ॥ द्वाःस्थाननादवाधायि । विद्यते तादृगेव तत् ॥ १७७ ॥ अद्य चास्य नृपस्याम्रि—द्रुमस्था कुलदेवता ॥ आराद्धा श्रद्धया स्वप्ने । समागत्येदमूचुषी ॥ १७८ ॥ मा खिद्यथा वृथा मंत्रिन् ! । प्रातरस्य महीभृतः ॥ न्यक्करिष्यति तिर्यक्त्व-मजापुत्रः पवित्रधीः ॥१७९॥ कोऽसावजासुतो ? देवि ! । संप्रति क्वावतिष्ठते ? ॥ कथं ? चायास्यतीत्युक्ता । सा पुनः

१ तैरश्चो-प्र. ( तिरश्चो ). २ दूरी करिष्यति.

प्रत्यवोचत ॥ १८० ॥ महीमितस्ततो भ्राम्य—ज्ञानादेशादिदृक्षया ॥ प्रांतरप्रांतविश्रांते[1] । सोऽस्ति देवकुलेऽधुना ॥१८१॥
ज्योतिःप्रपंचमाधाय । तदालोकनलालसं ॥ अहमेव तमानेष्ये । का चिंता भवतामिह ॥ १८२ ॥ एवमाश्वासितो देव्या।
सांतःपुरपरिच्छदः ॥ त्वन्मार्गं मार्गयन्नस्मि । रोगीव भिषगुत्तमं ॥ १८३ ॥ अस्मद्भाग्यैरिवाकृष्टो । दिष्ट्येदानीं त्वमागमः॥
भंक्त्वा च भूभुजः कष्टं । राज्यमेतत्सनाथय ॥ १८४॥ इत्युक्तः सचिवेनाजा-सुतो व्याघ्रांतिकं गतः ॥ वह्निद्रुमफल-
क्षोदं । दत्वा मर्त्यं व्यधत्त तं ॥ १८५ ॥ बालवद्दुर्जयनृपः । स्वस्वरूपस्य न स्मरन् ॥ किमेतदिति ? पप्रच्छ । विस्मितः
सचिवोत्तमं ॥ १८६ ॥ वृत्ते तेनोदिते तस्मिन् । श्रुत्वा स्वेन हतं सुतं ॥ वज्राहत इव क्ष्मापो । मूर्च्छामानर्च्छ तत्क्षणं
॥ १८७ ॥ चंदनादिद्रवैः सिक्त्वा । चैतन्यं प्रापितो नृपः ॥ स्मारं स्मारं गुणान् पौत्रान् । पर्यदेविष्ट कष्टतः ॥ १८८ ॥
हा सुजात ! क्व यातोऽसि ? । निजं तातं विमुच्य मां ॥ वत्स ! वेत्सि न किं ? सोऽयं । मद्विना नैव जीवति ॥ १८९ ॥
लोके शास्त्रेऽप्यसिद्धं प्राग् । वैयाघ्रमिदमद्भुतं ॥ तवैव मृत्यवे मन्ये । दैवेन मम निर्ममे ॥ १९० ॥ स्वयं विनाश्य
वत्स ! त्वां । कमिदानीमुपालभे ? ॥ उपालभ्यो भवत्यन्यो । न ह्यर्थे स्वेन नाशिते ॥१९१॥ स्वयं स्वपुत्रहननं । न म्लेच्छै-
रपि जन्यते ॥ कृतिन् ! कृतवतस्तन्मे । गतिः कीदृग्न संविदे ॥ १९२ ॥ विलपन्निति भूमीपः । सचिवाद्यैः प्रबोधितः ॥
पुत्रौर्ध्वदेहिकं चक्रे । नेत्राश्रूणि निर्वापयन्[2] ॥ १९३ ॥ अथामात्यमुखाद् ज्ञात्वाऽ—जापुत्रं स्वोपकारिणं ॥ तद्दर्शनादपि
प्रीतः । प्रोचे तमिति दुर्जयः ॥ १९४ ॥ महःस्तोम[3]स्तवैवोच्चैः । सखे ! यद्भास्वता त्वया ॥ आशु प्रणाशयामासे । ममेह-

१ अरण्यान्तसस्थिते. २ पातयन्. ३ सूर्यः.

ग्दुर्दशानिशा ॥१९५॥ तवोपकर्तुरनृणः । कथं ? स्यां सर्वदोऽप्यहं॥ यज्जीवितप्रदस्यास्ति । निष्क्रयो न जगत्यपि ॥१९६॥
उपकर्तुर्न समः स्यात् । प्रत्युपकर्तोपकारशतकृदपि ॥ कुरुते यददृष्टगुणः । प्रथमोऽन्यः पुनरवाप्तगुणः ॥ १९७ ॥ तथापि
स्फूर्जदुर्जस्वि-वैभवाभोगभागिदं ॥ मम राज्यं समासाद्य । मां मनागप्यपर्णय ॥ १९८ ॥ अजासुतस्ततः प्रोचे । साधु
साधु धराधिप ! ॥ यस्यैवं श्रीरिवांभोजे । कृतज्ञत्वेऽस्ति धीरहो ॥ १९९ ॥ तव राज्यं ममैवैत-द्यथेच्छं भुज्यतां त्वया ॥
नवरं सूत्र्यतां मैत्री । सतां सा हि प्रियंकरा ॥ २०० ॥ वितरति मतिं हंति क्लेशं, निगूहति दूषणं । प्रथयति गुणव्रातं,
सातं तनोति धिनोति च ॥ रचयति यशः, सूते धर्मं,प्रसारयति श्रियं, सृजति महतां मैत्री किं ? न प्रियं सुरधेनुवत्॥२०१॥
प्रतिपद्य तदुक्तं तत् । स्नेहासिंधुः स्वबंधुवत् ॥ भोगैर्नवनवैर्दिव्यै—र्भूपतिस्तमतूतुषत् ॥ २०२ ॥ सिद्धवद्दर्शयन् राज्ञे ।
कलाकौशलमद्भुतं ॥ अजापुत्रोऽपि तत्रस्थः । कियत्कालमगालयत् ॥ २०३ ॥ वैयाघ्रकारि तद्वारि-विलोकनकृतेऽर्थितः ॥
आजेयेन तदन्वीतः । प्रतस्थे दुर्जयः पुरात् ॥ २०४ ॥ श्लोका इव कवेर्वक्त्रा-न्मार्गणा इव कार्मुकात् ॥ अश्ववारास्तर-
स्वंत-स्तत्पृष्ठे निरयासिषुः ॥ २०५ ॥ महीं महीयसीं क्रांत्वा । क्वचिदंतर्वणं नृपः ॥ ह्रदं स्वसुहृदश्छन्न—वार्धिवत्तमदी-
दृशत् ॥ २०६ ॥ सच्चित्तमिव गंभीर-मपि कुग्र(ग्रा)हसंगतं ॥ मुनिवद्वृत्तसंयुक्त-मपि श्रितकुशासनं[3] ॥ २०७ ॥ स्वच्छां-
बुमपि नीलाब्ज-लीनालित्विड्भरादिव ॥ अंतःप्रतिफलद्व्योम-संगादिव शितिद्युतिं ॥ २०८ ॥ स्वोत्संगलालितैः पद्मैः ।
पुत्रैरिव परिष्कृतं ॥ जीवनप्राप्तिसंतुष्टैः । खगैर्भटैरिवाश्रितं ॥ २०९ ॥ अजापुत्रस्तमालोक्य । ह्रदं हृदि परामृशत् । जड-



१ समासज्य, प्र २ कुत्सितग्रह ( कदाग्रह ) युक्तं, पक्षे, कुत्सितजलजंतुयुक्तं. ३ कुप्रवर्तनं, पक्षे, दर्भ (डाभ.) असन.—वृक्षविशेषः. ४ प्रतिबिम्बीभवत्. ५ कृष्णं.

स्याप्यस्य कीदृक्ष—महो महिम वल्गति ॥ २१० ॥ चतुर्भिः कलापकं ॥ अभ्यधाद्भूधवः पश्य । तद्वयस्य ! पयः पुरः[1] ॥ व्याघ्रत्वं येन कृत्वा मे । त्वं मित्रं समगम्यथाः ॥ २११ ॥ यद्यज्ञानवशादेत—न्नापास्यत मया पयः ॥ अलप्स्यत कथं ? तर्हि । त्वादृग्मित्रं सुदुर्लभं ॥ २१२ ॥ स प्रोचेऽन्योदकादस्य । न रूपे किंचिदंतरं ॥ शक्तिः कस्मादियं यद्वा । विचित्रा वस्तुनिर्मितिः ॥ २१३ ॥ तयोर्वार्तयतोरित्थ—मुन्ममज्ज हृदात्तदा ॥ कोऽपि द्विपः पयोराशे—रैरावण इवापरः ॥ २१४ ॥ वारिरिव[2] कराघातै—र्भूयसीर्लहरीर्दलन् ॥ शेवालावलिमाकर्षन् । पल्ययां श्रृंखलामिव ॥ २१५ ॥ हृदमध्यात्स निर्गत्य । मायामय इव द्विपः ॥ अजासूनुं[3] समाकृष्य । विवेश सहसांभसि ॥ २१६ ॥ युग्मं ॥ पश्यतोहरवन्मित्रं । हृत्वा हस्तिन् ! क यासि ? रे ॥ इत्युक्त्वात्तकृपाणस्त—त्पृष्ठेऽधाविष्ट भूधवः ॥ २१७ ॥ नीरे करी पुरो याति । पृष्ठे भूपो निषादिवत् ॥ अधोऽधो व्रजतोरेवं । तयोर्दंती तिरोऽभवत् ॥ २१८ ॥ अपश्यन् काश्यपीशस्तं । सवयस्यमपि द्विपं ॥ फालच्युत इव द्वीपी । विषादपदमादधौ ॥ २१९ ॥ पश्यत्येव मयि क्वायं । जग्मिवानिति विस्मयात् ॥ पुरः सर्पन्निरैक्षिष्ट । सौधं स्वर्णमयं नृपः ॥ २२० ॥ चंचत्कांचननिर्यातैः । कांतिपूरैः प्रसृत्वरैः ॥ बालार्करश्मिभिरिव । पिंजरीकृतदिङ्मुखं ॥ २२१ ॥ विमानमिव निर्धूत—रजस्कं सुमनः श्रितं ॥ दृष्ट्वा तन्मंदिरं माद्य—दिन्दिरं व्यमृशन्नृपः ॥२२२॥ युग्मं ॥ क्व स हस्ती ? क्व तन्मित्रं ?। हृदः क्व स ? पयः क्व तत् ? ॥ क्वेयं ? भूर्मंदिरं क्वैतत् ? । किमिदं ? स्वप्नसन्निभं ॥२२३॥ तस्मिन् सौधे प्रविश्याथ । क्षमानाथस्तदंतरे ॥ ददर्श चंडिकां देवीं । दिव्यपूजां ननाम च ॥ २२४ ॥ दंतिना ही हृतं मित्रं । मदग्रेऽत्रायि नो मया ॥

---

१ पुरः, प्र. २ वारिः—गजबन्धनरज्जुः. ३ व्याघ्रः.

धिग् मामित्यनुतापाग्नि—तप्तस्वांतः स दुर्जयः ॥ २२५ ॥ तस्याः पुरः शिरःपद्मं । तत्सपर्याचिकीरथ ॥ खड्गेन छेत्तु-मारेभे । कापि मैत्री सतामहो ॥ २२६ ॥ युग्मं ॥ छिनत्ति नृपतिर्याव—च्छिरः कमललीलया ॥ तावद्देवी पुरो-भूय । तमाचष्ट प्रकृष्टरुक् ॥ २२७ ॥ हहा मास्म कृथा राजन्! शिरश्छेदं सुहृत्कृते ॥ संगंस्यते तवावश्यं । षण्मास्यंते स पुण्यतः ॥ २२८ ॥ ततः कर्णे प्रविश्याऽस्य । समादिश्य च किंचन ॥ वितीर्य चौषधं दिव्यं । देवी स्वपदमासदत्॥२२९॥ तावता स्त्रितमा काचि—दर्चोपकरणान्विता ॥ देवीं पूजयितुं तत्र । प्राप शृंगारभारिणी ॥ २३० ॥ तां निपीय नृपो दध्यौ । नूनमेषा न मानवी ॥ यन्मां दृष्टुमिवैतस्या । निर्निमेषा दृशोर्द्वयी ॥ २३१ ॥ यद्वाऽसौ रतिरेवास्ते । लावण्यैक-निकेतनं ॥ यदस्या दर्शनेनापि । कामः स्फुरति सर्वतः ॥ २३२ ॥ इति ध्यायति धात्रीशे । चंडिकां परिपूज्य सा ॥ स्मराशुगैरिवाऽकृष्टै—स्तं कटाक्षैरऽमूमुहत् ॥ २३३ ॥ तस्या नृपस्य पश्यंत्या । वक्त्रेंदुं कांतिकोमलं ॥ उद्वेलतां दधारोच्चै-रुचितं रागसागरः ॥ २३४ ॥ नृपदर्शनमात्रेऽपि । सा स्त्री स्मरभरातुरा ॥ कांक्षेण प्रेक्षमाणा तं । यथागतमगात्ततः ॥२३५॥ केयं? कस्मादकस्माद—प्यायाता? मां च किं? मुहुः ॥ स्मेरस्मरं निरैक्षिष्ट । न्यस्यंती स्नेहले दृशौ ॥२३६॥ इति ध्यायंतमंतस्तं । नृपमागत्य सुंदरी ॥ काचिदूचे क्षरंतीव । सुधां भणितिभंगिभिः ॥ २३७ ॥ राजन्निहास्ति मत्तेभ—गामिनी स्वामिनी मम ॥ सर्वांगसुंदरी नाम्ना । धात्रा च व्यंतरी किल ॥ २३८ ॥ देवीं पूजयितुं साऽत्र । प्राप्ता रतिपते-रिव ॥ तवालोकाद् दृढप्रेमा । त्वामाह्वयति वेश्मनि ॥ २३९ ॥ तत्प्रसीदाधुनैव त्व—मलंकुरु तदालयं ॥ तत्कृतं सत्कृतं

१ रिव. प्र. २ सर्ग. २ श्लो० २२७ उत्तरार्द्ध. ३ निरीक्ष्य. ४ कुत्सितं अक्षं नेत्रं अत्र को कादेश. कटाक्षेण इत्यर्थः. ५ देहेन. ६ व्यंतरदेवी.

सर्वे । गृहाणानुगृहाण च ॥ २४० ॥ अहो मे भाग्यमत्युग्र—मिति हर्षप्रकर्षभाक् ॥ दुर्जयस्तां पुरस्कृत्य । जग्मिवान्
व्यंतरीगृहं ॥ २४१ ॥ तन्मध्ये क्वापि सोत्पद्माः । स्फाटिकीः केलिदीर्घिकाः ॥ क्वापि पुष्पभ्रमद्भृंगी संगीतमुखरा वनीः
॥ २४२ ॥ क्वापि प्रसूनशय्याति—शीतलान् कदलीगृहान् ॥ क्वापि दासीः समुद्दीप्य—मानाभरणडंबराः ॥ २४३ ॥
क्वापि कीरान् सुधासिक्त—सूक्ताभ्यसनलालसान् ॥ क्वापि हेलाकृतोत्फाल—लीलान् कस्तूरिकामृगान्[1] ॥ २४४ ॥ क्वापि
कर्पूरकस्तूरी—श्रीखंडघुसृणोत्करान्[2] ॥ पश्यन् नृपोऽतिविस्मेरो । व्यंतरीपार्श्वमाश्रयत् ॥ २४५ ॥ चतुर्भिः कलापकं ॥
व्यंतर्याऽथ तया दिव्यैः । स्नानवस्त्रासनादिभिः ॥ वितत्य तथ्यमातिथ्यं । जगदे दुर्जयप्रभुः ॥ २४६ ॥ देव! त्वद्दर्शने-
ऽप्याप्त[3]—स्फीतप्रीतिरहं हृदि ॥ त्वामर्थये प्रसीदात्र भोगान् भुंक्ष्व मया समं ॥ २४७ ॥ इदं सौधमियं लक्ष्मी—रेषाऽहं
प्रीतिरीतिभृत् ॥ अयं च मत्परीवारः । सर्वं स्वीयं विमृश्यतां ॥ २४८ ॥ तदंगीकृत्य रंगेण । शृंगारभरभासुरां । नृपस्तां
रमयामास । देवो देवीमिवोन्मदां ॥ २४९ ॥ स वसंस्तादृशे स्थाने । रमयन् व्यंतरीं च तां ॥ नामन्यत तृणायापि ।
स्वर्गे संतं शचीपतिं ॥ २५० ॥ दैवे सत्यनुकूले स्या—द्विपत्तिरपि संपदे ॥ न चेत्तस्य कथं जातं? । सातं हृदनिपाततः
॥ २५१ ॥ तत्रानंदमयस्यापि । दुर्जयस्य हृदन्वहं ॥ एकं[4] दुःखं करोति स । वयस्यविरहो महान् ॥ २५२ ॥ अथाजात-
नयं हृत्वा । गत्वा चाधोहृदाध्वना ॥ स करी व्यंतरावास—भूमौ मुक्त्वा तिरोदधे ॥ २५३ ॥ अदृष्टपूर्वां तामूर्वीं । सर्वां
नानामणीमयीं ॥ पश्यन् स्वमानसे मेने । रत्नराशिखनीमसौ ॥ २५४ ॥ कोऽसौ करी किमर्थं मा—मिहामुंचत् स्वयं क्व

१ कस्तूरिकाहेतुर्मृगः—कस्तुरिकामृगः, २ केसर—कुंकुम. ३ वृद्ध. ४ एको दुःखाकरोति स. प्र.

सः ॥ इति ध्यायंतमाजेयं । व्यंतरः कोऽपि दृष्टवान् ॥ २५५ ॥ अहो मनुष्यकीटोऽयं । कथमत्रेति कौतुकात् ॥ स सुरो
व्यंतरेंद्रस्य । स्थानमानयति स्म तं ॥ २५६ ॥ स्वर्णप्राकाररोचिष्णुं । रत्नोच्चकपिशीर्षकं ॥ मणिनद्धतलोर्वीकं । रंगदुत्तुंग-
तोरणं ॥ २५७ ॥ क्रीडास्थानमिव श्रीणां । रतिसद्मेव चेतसां ॥ स्तंभौपधमिवाक्ष्णां स व्यंतरद्रङ्गमैक्षत ॥ २५८ ॥ युग्मं ॥
तत्र द्विधापि सच्छायान् । द्विधापि प्रेक्षणोचितान् । द्विधाप्यतुल्यकल्याणान्—पश्यन् वैयंतरान् गृहान् ॥ २५९॥ लाव-
ण्यानामधिष्ठात्रीः । शृंगारस्यैकजीविकाः ॥ प्राणान् कुसुमचापस्य । व्यंतरीः स्वेन मोहयन् ॥२६०॥ देवीविरचितस्फीत-
संगीतकुतुकामृतं ॥ अदृष्टपूर्वं स्वप्नेऽपि । स्वादयन् लोचने भृशं ॥ २६१ ॥ देवद्रुमसुमोत्पन्नै—रामोदैर्नासिकंधयैः ॥
सानंदो नंदनोऽजाया । व्यंतरेंद्रगृहेऽविशत् ॥२६२॥ चतुर्भिः कलापकं ॥ तत्रेंद्रपरिषत्सर्व—श्रीगर्वपश्यतोहरे ॥ प्राचीनादी-
नपुण्यद्रु—फले च सदसि स्थितं ॥ २६३ ॥ अंतराले दिविपदां । दीप्यमानं महौजसां ॥ तारकाणां समुदये । शारदोच्चैः-
शशांकवत् ॥ २६४ ॥ करुणारसपाथोधिं । दाक्षिण्यैकनिकेतनं ॥ सेवकेप्सितकल्पद्रुं । व्यंतरेंद्रं स दृष्टवान् ॥ २६५ ॥
त्रिभिर्विशेषकं ॥ प्रणेमिवांसं तं प्रीति—मांसलो व्यंतरेश्वरः ॥ कस्त्वं? कथमिहायासी—रिति प्रश्नितवान् स्वयं ॥२६६॥
वृत्तांते तेन विज्ञप्ते । व्यंतरेशस्तमूचिवान् ॥ स्वपितुर्वेश्मनीवेह । तिष्ठ त्वमकुतोभयः ॥ २६७ ॥ स्वाम्यादेशादसौ देवै—
र्देवीभिश्च स्वबंधुवत् ॥ स्नापितोऽलंकृतो दिव्यं । भोजनं च विधापितः ॥ २६८ ॥ बहुप्रकारैः सत्कारै—रुदारैरादरात् सदा ॥
पितेव व्यंतरेंद्रस्त—मजापुत्रममूमुदत् ॥ २६९ ॥ सुधासधर्मया, धर्म—गोष्ठ्या कौतूहलैः कलैः ॥ सोऽभवत् सर्वदेवीनां ।

१ आतपाभावेन,कान्त्या च, सहितान् २ नृत्योचितान् दर्शनोचितांश्च. ३ प्रचुरसुखान्, प्रचुरसुवर्णांश्च, ४ महौजसा, प्र

निजात्मेवातिवल्लभः ॥ २७० ॥ शुश्रूष्यमाणो देवीभि—र्दिव्यवस्त्रासनादिभिः ॥ स मानी मन्यते स्म स्वं, नरमप्यमरं हृदि ॥ २७१ ॥ अजापुत्रोऽन्यदाऽप्राक्षी—द्व्यंतरेंद्रं कुतूहलात् ॥ एतस्या व्यंतरक्षोणे—रधस्तादस्ति किं? प्रभो ! ॥ २७२ ॥ स स्माह सप्त नरका, दुःखापवरका इव ॥ नारका येषु तिष्ठंति, विपक्किमविपन्मयाः ॥ २७३ ॥ कथं पश्याम्यहं तानि—त्युक्ते तेनातिकौतुकात् ॥ गुरुवत् स्वकरं न्यास्य—त्तन्मूर्ध्नि व्यंतरेश्वरः ॥ २७४ ॥ तत्प्रभावादसौ सिद्धां—जनन्यासादिव क्षणात् ॥ ज्ञानीव दिव्यचक्षुस्त—द्दर्शने शक्तिमानभूत् ॥ २७५ ॥ रत्नप्रभादयः सप्त । नरकक्षोणयः क्रमात् ॥ अधोऽधो विस्तृतास्तेन । तदा वीक्षांबभूविरे[1] ॥ २७६ ॥ तासां मध्ये क्रमेणैवा—थ त्रिंशत्पंचविंशतिः ॥ पंचदश दश तिस्रो—लक्षा लक्षा च पंचमुक् ॥ २७७ ॥ पंचान्ये, चतुरशीति—लक्षा निःशेषसंख्यया ॥ दुर्गंधाः प्रसरत्पूति—वसारक्तादिपंकिलाः ॥ २७८ ॥ रत्नप्रभादित्रितये, भृशोष्णा ज्वलनादपि ॥ चतुर्थ्यामूर्ध्वमत्युष्णा—घनाः शीतास्त्वधोऽल्पकाः ॥ २७९ ॥ पंचम्यां वहवोऽत्युष्णाः, स्तोकाः शीता हिमादपि । पष्ठ्यां सप्तम्यां च क्ष्मायां, शीता एव समंततः ॥ २८० ॥ गर्भावासा इवादृष्ट—निर्गमास्तमसावृताः ॥ अजापुत्रेण नरका—वासास्ते व्यालुलोकिरे ॥ २८१ ॥ पंचभिः कुलकम् ॥ अंवाद्यैर्निर्दयैस्तत्र । परमाधार्मिकैः सुरैः ॥ आरोप्यमाणान् शूलासु । क्षिप्यमाणांश्चिताऽग्निषु ॥२८२॥ आस्फाल्यमानान् वज्राश्म—कंटकेषु शितेष्वलम् ॥ आरादिभिर्विंध्यमानान्, वद्ध्यमानांश्च रज्जुभिः ॥ २८३ ॥ पर्शुत्रिशूलकुंतासि—कृपाणीशक्तितोमरैः ॥ आकृष्यमाणोदरहृ—द्वसामांसांत्रकालकान् ॥ २८४ ॥ भज्यमानशिरोवाहु—कटीपाणिक्रमांगुलीन् ॥ पच्यमाना-

[1] वुभुजिरे-प्र । वुभूविरे-प्र.

न्महाकुंभी-कुंडपचनकादिषु ॥ २८५ ॥ तेषामेव शरीरेभ्य-श्छित्वा छित्वा क्षुरादिभिः ॥ मांसखंडानि सास्थीनि । स्वाद्यमानान्मुहुर्मुहुः ॥ २८६ ॥ असिपत्रवनं नीतां-श्छायार्थं तन्निपातिभिः ॥ खड्गाद्यैश्छिद्यमानौष्ठ-नासाकर्णकरक्रमान् ॥ २८७ ॥ त्रटत्त्रटदिति स्पष्ट-स्फुटदस्थिरवोल्वणम् ॥ भृज्यमानांश्च धानाव-दत्युष्णे वालुकोच्चये ॥२८८॥ वैतरिण्या वसापूति-केशास्थिरुधिरस्पृशः ॥ तप्तत्रपुप्रवाहेषु । क्रीड्यमानाननेकधा ॥ २८९ ॥ पाय्यमानान् भृशोष्णानि, तैलताम्रत्रपूणि च । वज्रास्यकीटिकाभिश्च, सीव्यमानोष्ठपल्लवान् ॥ २९० ॥ साक्षादाग्नेयकीलाभिः । पुत्रिकाभिः सहासकृत् ॥ वज्रकंटकशय्यासु । शाय्यमानान् बलादपि ॥ २९१ ॥ अधोमुखानूर्ध्वपदान् । लंबयित्वा पशूनिव ॥ भृष्टान् विधाय वज्राग्नौ । कर्त्यमानप्रतीककान् ॥२९२॥ चूर्ण्यमानान्महामुष्टि-घातैः पर्पटकूटवत् ॥ करपत्रैर्निशिताग्रैः । स्फाट्यमानांश्च काष्ठवत् ॥ २९३ ॥ आयसैर्लकुटैः स्फोट्य-मानान्निर्जीर्णभांडवत् ॥ आहन्यमानान् रजक-वस्त्रवन्निविडाश्मसु ॥ २९४ ॥ एष मे प्राच्यवैरीति । संकल्पानल्पकोपतः ॥ मिथःशस्त्रशताघात-पातजातकदर्थनान् ॥ २९५ ॥ अतिव्यथाऽऽतुरत्वेन । वात्योच्छालितपत्रवत् ॥ योजनानि पंचशती-मूर्द्धमुच्छलतस्तलात् ॥ २९६ ॥ सप्तसु क्षेत्रसंभूतां, विना शस्त्रैर्मिथः कृताम् ॥ पंचसु क्ष्मासु शस्त्रोत्थां, तिसृष्वमरनिर्मितां ॥ २९७ ॥ दशप्रकारामन्यां च । क्षुत्तृष्णाद्यां

१ नेरइया णं दसविहं वेयणं पच्चणुभवमाणा विहरति, तंजहा—सीयं १ उसिणं २ खुहं ३ पिवासं ४ कंडुं ५ परज्झं ६ भयं ७ सोगं ८ जरं ९ वाहिं १० वेदना-पीडा तत्र शीतस्पर्शजनिताशीता ताम् सा च चतुर्थ्यादिनरकपृथ्वीषु इति १ एवमुष्णा प्रथमादिषु २ क्षुधं-बुभुक्षाम् ३ पिपासा-तृषम् ४ कंडूं-खर्जूम् ५ परज्झंति-परतंत्रताम् ६ भयं-भीतिम् ७ शोकं-दैन्यम् ८ जरा-वृद्धत्वम् ९ व्याधिं-ज्वरकुष्ठादिकमिति १०

महाव्यथाम् ॥ सहमानान्निमेषार्ध-मपि सौख्यपराङ्मुखान् ॥ २९८ ॥ श्यामान् जुगुप्स्यान् लूनांगा-न्निर्गतांत्रभयंकरान् ॥
नारकांस्तनयोऽजाया। निन्ये दृक्पथपांथताम् ॥२९९॥ अष्टादशभिः कुलकम् । तद्दुःखदर्शनात्तस्य । साक्षादनुभवादिव ॥
अजापुत्रोऽतिमूर्छालो । मृतवन्न्यपतद् भुवि ॥ ३०० ॥ व्यंतरप्रकृतैः शीतो-पचारैः प्राप्य चेतनाम् ॥ निर्वेदमेदुरोऽध्या-
सी-च्चेतसीति भवस्थितिम् ॥ ३०१ ॥ धिग्धिग्भवमिमं यस्मिन्, मधुबिंदूपमं सुखम् ॥ दुःखं त्वर्णवविस्तीर्णं, लभंते हंत
जंतवः ॥ ३०२ ॥ धिग्धिग्जंतूनिमान् वह्वा-रंभसंरंभिणोऽन्वहम् ॥ ये नुन्ना इव तज्जात-पातकैर्निपतंत्यधः ॥ ३०३ ॥
आपातमात्रसरसं, परिणामेऽतिनीरसम् ॥ किंपाकफलवद् दुष्टं, धिग्धिक् पापतरोः फलम् ॥३०४॥ तावन्न शांतिमायाति ।
तापः पापभवो भवे ॥ यावद्धर्मामृतं मन्ये । मनोहृत्य न पीयते ॥ ३०५ ॥ तत्प्राप्य स्वपदं किंचि-दात्मनीनं करोमि
तत् ॥ ममात्मा येन शांतः सन् । सर्वतो निर्वृतो भवेत् ॥ ३०६ ॥ अथाजातनयोऽत्यर्थ-मभ्यर्थ्य व्यंतरेश्वरम् ॥ आप-
पृच्छे सरस्तीरं, गंतुमुत्कंठुलाशयः ॥ ३०७ ॥ गुटीं रूपपरावर्त-प्रवणां व्यंतराधिपः ॥ वितीर्य तं सरस्तीरे । व्यंतरैः
स्वैरमूमुचत् ॥ ३०८ ॥ अथापश्यन्नजापुत्र-स्तत्र तं दुर्जयं नृपम् ॥ तद्दिदृक्षार्थमारुक्षत् । पक्षिवत्पालिपादपम् ॥ ३०९ ॥
नृपसैन्यास्तदा दैन्यात्, तं पप्रच्छुर्भृशोत्सुकाः । असन्महीपतिः क्वेति, न जानामीति सोऽप्यवक् ॥ ३१० ॥ तेऽवोचंस्त्वां

---

१ संकप्पो संरंभो, परितावकरो भवे समारंभो ॥ आरंभो उद्दवओ, सव्वनयाणं वि सुद्धाणं ॥ १ ॥ प्राणातिपातं करोमीति य संकल्पः स संरंभ ,परस्य परितापकरो य व्यापार· स समारंभ·, अपद्रावयतः-जीवितात् पर व्यपरोपयतः व्यापार· आरंभः, एतच्च समारंभादित्रितयं सर्वनयानामपि शुद्धाना प्राकृतत्वात् अशुद्धानां वा सम्मतं,
२ श्रद्धाप्रतिघातं कृत्वा इत्यर्थ·.

सरस्तीरात् । कृष्ट्वा मग्ने द्विपेऽम्भसि ॥ तत्पृष्ठतोऽन्वधाविष्ट । नृपः कष्टमयाशयः ॥ ३११ ॥ अनुहृदं तटे भूपं, शरीर इव देहिनम् ॥ सेवका मृगयांचक्रुः, परं नालप्सत क्वचित् ॥३१२॥ अस्माभिरपि देशेऽस्मिन् । बंभ्रमद्भिरविश्रमम् ॥ नालभ्यत नृपो धर्म । इवाभव्यात्मभिर्भवे ॥ ३१३ ॥ नृपाप्राप्त्याखिलः पौर—वर्गः संसार्गितः शुचा ॥ निर्जीव इव वैकल्यं, कलयन्नस्ति सर्वतः ॥ ३१४ ॥ हाहा किं मत्कृते जातं,कृतिनस्तस्य तत्स्वयम् ॥ उपेत्य व्यंतरेशं तं, पृष्ट्वा च मृगये नृपम् ॥ ३१५ ॥ अजासुतो विमृश्येति । जलकेलिचिकीरिव ॥ ह्रदंतरे ददौ झंपां, शंपासंपातसन्निभाम् ॥३१६॥ युग्मम् ॥ त्रैलोक्योपकृतौ कृतीति तपने प्रीतिं व्यधाद्वासर—स्तेनाप्यस्य पृथुप्रकाशजननी काऽपि प्रतिष्ठा ददे ॥ अस्तं यांतममुं विलोक्य विकलः सोऽप्येतदास्तिंघ्नुते । मैत्री घस्रपतंगयोरिव भवेत् पुण्यात् कयोश्चिद् दृढा ॥ ३१७ ॥ विना व्यंतरसाहाय्यं । मज्जन् ह्रदजलांतरे ॥ अजासुतः कटीं याव—न्मकरेणाशु जग्रसे ॥ ३१८ ॥ तावद् ह्रदांबुमाहात्म्या—दर्धो व्याघ्रीबभूव सः ॥ शशाक कवलीकर्तु, मकरोऽपि न तं ततः ॥ ३१९ ॥ अजासुतकटीसत्क—चूर्णव्यामिश्रवारिणः ॥ आस्यप्रवेशतः सोऽपि । मकरः समभून्नरः ॥ ३२० ॥ स तादृगर्धे मनुजो, व्याघ्रोऽर्धे चापचेतनः । लहरीप्रेरितस्तीरे, लग्नो हा विधिवल्गितम् ॥३२१॥ ध्यायत्यन्यत्पुमांश्चित्ते । विधत्तेऽन्यत्पुनर्विधिः ॥ गच्छन्नृपार्थमाजेयो । यत्स्वयं व्यसनेऽपतत् ॥३२२॥ सुधीरपि समर्थोऽपि । किं ? विधत्ते हहा नरः ॥ विनैव कारणं यस्य । विधिर्वैरायतेऽन्वहम् ॥ ३२३ ॥ तदा च दैवयोगेन । क्ष्मातलाद् रंतुमागताः ॥ दास्यः सर्वांगसुंदर्यो । व्यंतर्यस्तं व्यलोकयन् ॥३२४॥ रूपं नरद्वीपिमयं । किमिदं नरसिंह-

१ अस्मिन् ह्रदतटे-प्र. २ विद्युत्. ३ सूर्ये. ४ दिवसः. ५ सूर्येण, ६ वासरस्य ७ सूर्ये, ८ वासरः ९ अस्तं. १० प्राप्नोति. ११ दिवससूर्ययो .

वत् ॥ इत्याश्चर्येण तं नीत्वा । ताः स्वामिन्याः पुरोऽमुचन् ॥ ३२५ ॥ तत्रस्थो दुर्जयो राजा । तं निभाल्य तथाऽद्भुतम् ॥ किमेतदिति चित्तांत—श्चंडिकावाचमस्मरत् ॥ ३२६ ॥ शिरश्छेदक्षणे तर्हि । देव्योक्तमभवन्मम ॥ षण्मास्यंते वयस्यं त्वं, द्रष्टा नृद्वीपिरूपिणम् ॥ ३२७ ॥ ततः [1]क्षितिक्षिता देवी—दत्तौ[3]षधरसोक्षितात् ॥ अजासुतो विनिर्यातो, नृभूतमकराननात् ॥ ३२८ ॥ मकरस्तु तथैवास्था—न्मानवाकारधारकः ॥ जातौ च देवयोगेन । तावुभावपि चेतनौ ॥ ३२९ ॥ अजापुत्रः परिज्ञाय, राज्ञा ऽऽश्लिष्यत निर्भरम् । अंतर्वेशयितुमिव, तद्वियोगव्यथातुरम् ॥३३०॥ मिथोऽद्भुतस्ववृत्तांत—कथनामृतसेचनैः ॥ तावुभौ चक्रतुः प्रीति-वल्लीपल्लवनं चिरम् ॥३३१॥ देव्या सर्वांगसुंदर्या । भूभुजाऽपि सगौरवम् ॥ स्थापितोऽजासुतस्तत्र । तस्थिवान् मकरान्वितः ॥ ३३२॥ अजापुत्रोऽन्यदाऽवादीत् । प्रीतस्तं दुर्जयं प्रति ॥ सांद्रदंतस्फुरज्ज्योत्स्ना—धवलीकृतदिङ्मुखः ॥ ३३३ ॥ देव ! पश्चाद्भवद्राज्ये । भावत्कविरहार्त्तितः ॥ अस्त्यग्निमग्नवद् दुःखी । समस्तोऽपि परिच्छदः ॥ ३३४ ॥ तद्गम्यतां निजं स्थानं । स्वदर्शनसुधारसैः ॥ सितांशुनेव देवेन । स द्रुतं परिषिच्यताम् ॥ ३३५॥ श्रुत्वा तत् स्वपुरं गंतुं । विंध्यं गज इवोत्सुकः ॥ सर्वांगसुंदरीदेवी—मापपृच्छे महीपतिः ॥ ३३६ ॥ भविष्यद्विरहार्त्त्या सा । चक्रवाकीव विक्लवा ॥ [4]मन्यूत्पीडस्खलद्वाक्यं । नृपमेवं व्यजिज्ञपत् ॥ ३३७ ॥ देव ! त्वां सरसस्तीरे । स्थितं रूपातिमन्मथम् ॥ दृष्ट्वा रिरंसया प्राप्ता । दास्यो मह्यं न्यवीवदन् ॥३३८॥ त्वद्रूपश्रवणादेव । प्राच्यजन्मवधूरिव ॥ संजाताऽहं त्वयि प्रेम—मदनोन्मादसादरा ॥ ३३९ ॥ ततस्त्वामनलंभूष्णु—र्हर्तुं पुण्यवतां मणिम् ॥ अहार्षं करिरूपेण । त्वन्मित्रं

१ सर्ग० २ श्लो० २२९. २ क्षितिमीष्टे इति क्षितिक्षित्, तेन-क्षितिक्षिता-भूपेन-दुर्जयराजेन इत्यर्थ. ३ सर्ग० २ श्लो० २२९ ४ र्त्ता-प्र. ५ शोक.

त्वयि पश्यति ॥ ३४० ॥ तद्दुःखेन त्वमत्रागा, राजन् ! मद्भाग्ययोगतः ॥ इयच्चिरं त्वया सार्धं, भुक्तं लोकोत्तरं सुखम्
॥ ३४१ ॥ यियाससि निजं स्थानं, यदि त्वं तर्हि किं ब्रुवे ॥ यियासुश्च मुमूर्षुश्च, निषिद्धौ हि न तिष्ठतः ॥ ३४२ ॥ परं
मम मनः स्वामिं—स्त्वया सार्धं समेष्यति ॥ प्रस्थिते हि मनोनाथे । मनस्तिष्ठेन्न भृत्यवत् ॥३४३॥ किंच जन्मोत्तमं नृणां।
शश्वत् स्वैरविहारिणाम् ॥ स्त्रीणां तु गर्हितं याव—ज्जीवं परवशात्मनाम् ॥ ३४४ ॥ जन्माभावो वरं भूया—न्मोक्ष-
सौख्यैककारणम् ॥ न तु जन्मांबुजाक्षीणां । सर्वदुःखासिलग्नकम् ॥३४५॥ योगे सति सुखं स्वल्पं । वियोगे दुःखमुल्बणम् ॥
विदन्नपीति हा मूढो । जनः संसजति प्रिये ॥३४६॥ दवीयस्यपि मंतव्या । देवाहं स्ववशंवदा ॥ च्युतोचितं च यत्किंचि-
त्तन्मे क्षंतव्यमव्यथम् ॥ ३४७ ॥ इत्युक्त्वा भूषयित्वा च । दिव्यनेपथ्यभूषणैः ॥ नृपादींस्त्रीन् सरस्तीरेऽ-मुंचत् सर्वांगसुं-
दरी ॥ ३४८ ॥ आत्ततद्व्याघ्रताकारि—सलिलं तमजासुतम् ॥ लात्वा मकरमर्त्यं च । प्रतस्थे नृपतिस्ततः ॥ ३४९ ॥ महा-
मात्यैः सुमत्याद्यैः । कृतप्रावेशिकक्रियः ॥ दुर्जयः क्ष्मापतिः प्राप । समित्रोऽपि निजास्पदम् ॥ ३५० ॥ तत्र स्थित्वा किय-
त्कालं, हठादापृच्छ्य दुर्जयम् । तद्दत्तं रत्नहेमादि, तृणवत् परिमुच्य च ॥ ३५१ ॥ प्रस्थितस्तनुजोऽजाया, लात्वा मक-
रपूरुषम् ॥ यक्षसद्म तदेवागा—त्तेनैव विवराध्वना ॥ ३५२ ॥ युग्मम् ॥ उत्थाप्य तं कपिनरं । नरद्वययुतस्ततः ॥ अजा-
पुत्रः प्रतस्थेऽग्रे । नगरीं प्राग् यियासिताम् ॥३५३॥ सोऽपश्यत्पुरतो मेघ—घट्टनेन दिवश्च्युताम् ॥ मंडलीमिव पूर्णेंदोः ।
स्फाटिकीं केलिदीर्घिकाम् ॥ ३५४ ॥ ददर्श परितस्तां च । कांतिजालजटालितान् ॥ विमानानतनुश्रीकां—स्तारकानिव

१ स्त्रीणाम्. २ गतोचित—औचित्यरहितम्. ३ व्यथारहितं यथास्यात्तथा.

भूरिशः ॥ ३५५ ॥ तत्र वाप्यामपश्यच्च । रतेरभिनयानिव ॥ सध्रीचीरिव पौलोम्या । लक्ष्म्याः प्रतिकृतीरिव ॥ ३५६ ॥ भृत्वांऽञ्जलीन् जलभरै–र्व्यावहासीपुरस्सरम् ॥ व्यात्युक्षीं परितन्वानाः, काश्चित्कमललोचनाः॥३५७॥ युग्मम् ॥ मानव्यः किमिमाः संति । त्रिदश्यो वेति संशयम् ॥ आजेयस्य निराचक्रे । तद्दृग्निमिषणं मुहुः ॥ ३५८ ॥ स्त्रीदृष्टिगोचरं हित्वा । तल्लावण्यं निपीय च ॥ अजासुतश्चिरं दध्यौ । विस्मयस्मेरलोचनः ॥३५९॥ एतासां वदनद्युतिर्यदि तदा मंदायते चंद्रिका । कायश्रीर्यदि कांचनं श्रयति तद्विच्छायतां कांचन ॥ भावार्द्रा यदि दृष्टयो विदधते ताः किं सुधावृष्टयो । निःपीता भणितिर्यदि प्रभवति प्रीत्यै न वीणाक्कणः ॥ ३६० ॥ अथ तासां किलंतीनां । कोकिलालापकोमलम् ॥ आलापमिति शुश्राव । स नेदीयानजासुतः ॥ ३६१ ॥ सख्योऽद्याष्टापदं गंतु–मतिकालो महानभूत् ॥ देवेंद्रः सुरदेवीयुग् । भावी तत्रागतोऽधुना ॥ ३६२ ॥ तन्मुच्यतामियं केलि–र्बहिर्निर्गम्यतां द्रुतम् ॥ पद्मान्यादाय वापीतो । विमानैश्चल्यतामितः ॥ ३६३ ॥ ताभिर्विद्याधरस्त्रीभि–रित्युदीर्य तथा कृते ॥ दध्यावजासुतोऽप्येव—ममंदानंदसुंदरः ॥ ३६४ ॥ मया विहरमाणेन । मर्त्यलोको व्यलोक्यत ॥ व्यंतरेंद्रप्रभावेण । दृष्टास्ते नरका अपि ॥ ३६५ ॥ अधुना पुनरालोक्या । नानावैमानिकाः सुराः॥ सुख(ष)मा येषु निस्सीमा । विश्राम्यति समं श्रिया ॥ ३६६ ॥ ताविमौ हारनीराभ्यां, सह त्यक्त्वेह मानवौ ॥ व्यंतरार्पितया गुट्या, भ्रमरीभूय च स्वयम् ॥ ३६७ ॥ स्त्रीपाणिस्थितपद्मेषु, स्थायं स्थायं निजेच्छया ॥ तीर्थमष्टापदं यामि, नयामि स्वं कृतार्थताम् ॥ ३६८ ॥ इति ध्यात्वा च कृत्वा च । तदैवाजातनूरुहः ॥ विद्याधरप्रियापाणि—पद्ममध्यास्य चेलिवान्

१ परसरहसनपुरस्सरम्. २ परस्परसेचनरूपा जलक्रीडामित्यर्थः.

॥ ३६९ ॥ पंचभिः कुलकम् ॥ परिभ्राम्यन् स भृंगात्मा । स्वैरं स्त्रीपाणिपंकजे ॥ मंजुस्वगुंजितैस्ताः स्त्री-र्मुहुर्मुहुरमूमुहत्
॥ ३७० ॥ कर्णामृतैकसारण्या । झंकृत्या लोभिताशयाः ॥ अत्रैहि द्रुतमत्रैही—त्यवदंस्तं स्त्रियोऽध्वनि ॥ ३७१ ॥ सोऽपि
तद्भावमाभाव्य । सिद्धवत्तत्तदाश्रयात् ॥ ववर्षेव सुधां स्निग्धैः । स्वरैस्तत्कर्णवीथिषु ॥ ३७२ ॥ इत्थं विद्याधरस्त्रीभिः,
कल्यमानः पदे पदे ॥ अभ्रंकषाग्रशिखरं, प्राप सोऽष्टापदं गिरिम् ॥ ३७३ ॥ परिखाभूतगंगांबु—संक्रांतप्रतिबिंबतः ॥
कामनीयकमात्मीयं, पश्यंतमिव संततम् ॥ ३७४ ॥ चैत्याधारतयोद्भूष्णु—पुण्येनेव विसर्पिणा ॥ यशसेवाथवा शुद्धं ।
स्फुटस्फटिकवर्ष्मणा ॥ ३७५ ॥ सर्वरत्नमयत्वेन । शिलोच्चयजयोद्भवाः ॥ वहंतमिव सत्कीर्ती—र्मूर्ता निर्झरकैतवात्
॥ ३७६ ॥ तमष्टयोजनोत्सेधं, स्फुरत्सोपानकाष्टकम् ॥ अष्टापदगिरिं विष्व—गजापुत्रो न्यभालयत् ॥ ३७७ ॥ चतुर्भिः
कलापकम् ॥ तत्रोच्चत्वेन कांत्या च, प्रासादान् सकलान् भुवि ॥ तर्जयंतमिव प्रौढ-पताकांगुलिकंपनैः ॥ ३७८ ॥
जात्यकार्तस्वरोद्योति—ज्योतिष्पटलपिंजरम् ॥ वहिः प्रक्लृप्तकालेय—विलेपनमिवाभितः ॥ ३७९ ॥ धात्रीतलेऽत्र कोऽप्यस्ति ।
प्रासादो मत्समो न वा ॥ इतीव द्रष्टुमारूढं । तुंगं शृंगं महीभृतः ॥ ३८० ॥ चतुर्द्वारं त्रिकोशोच्चं, योजनायामविस्तृतम् ॥
हैमं सिंहनिषद्याख्यं, चैत्यं सोऽपुश्यदद्भुतम् ॥३८१॥ चतुर्भिः कलापकम् ॥ किमिदं श्रेयसां राशिः । किं परात्ममयं महः ॥
किं वा निर्वृतिसद्मेत्थ—माजेयस्तद्व्यतर्कयत् ॥३८२॥ सौरभोदारमंदार—प्रसूनोन्निद्रसंमदैः ॥ वाचालमिव झंकार—कारिभि-
र्भ्रमरोत्करैः ॥ ३८३ ॥ माणिक्यमयरूपाभिः । पांचालीभिः समंततः ॥ कौतुकान्निश्चलांगीभि—र्देवीभिरिव शोभितम्
॥ ३८४ ॥ पंचवर्णस्फुरद्रत्न-कोटिघट्टितकुट्टिमम् ॥ प्रासादमध्यमध्यास्त, स भृंगात्मैव कौतुकात् ॥ ३८५॥ युग्मम् ॥ तत्र

पूर्वादिदिक्षु द्वि—चतुरष्टककुम्भितान् ॥ स्वस्ववर्णप्रमाणाढ्यान् । रत्नपीठप्रतिष्ठितान् ॥ ३८६ ॥ नाभेयप्रमुखान् देवान्, पूजयित्वा यथाविधि ॥ भक्त्या प्रास्तुवत स्तोतुं, विद्याधरसुलोचनाः ॥ ३८७ ॥ युग्मम् ॥ तावदिंद्रोऽपि सांद्रश्रीः । शच्याद्युरुपरिच्छदः ॥ तत्रापतद्वपुस्तेजः—स्तोमैः संतर्जितार्यमा ॥ ३८८ ॥ अदूष्यदेवदूष्यश्री—र्दिव्याभरणभासुरः ॥ मुदा देवान्वितः शक्रः । कुसुमांजलिपूर्वकम् ॥ ३८९ ॥ जिनानां स्नात्रमाधाय । विधाय विविधार्चनाः ॥ रंगमंडपमध्यास्त । प्रेक्षणक्षणहेतवे ॥३९०॥ युग्मम् ॥ गायत्सु तुंबवाद्येषु । कोकिलस्वरभास्वरम् ॥ वाद्येषु वाद्यमानेषु । गीततालभृशोचितम् ॥ ३९१ ॥ शचीप्रभृतयो देव्य—श्चतुर्धाभिनयान्वितम् ॥ लास्यतांडवभेदेन । विचित्रं ननृतुस्तमाम् ॥३९२॥ युग्मम् ॥ देव-संसदि मर्त्यः स्या—द्रत्नौघे काचखंडवत् ॥ इत्याजेयोऽपि तत्सर्वं । भृंगात्मैव न्यभालयत् ॥३९३ ॥ नृत्यांते पुनरादेशि ।

---

१ धातुमातुसमायुक्तं, गीतमित्युच्यते बुधैः-तत्र नादात्मको धातु-र्मातुरक्षरसंचयः ॥१॥ इति ॥ तथा-गीतं च द्विविधं प्रोक्तं, यंत्रगात्रविभागतः । यंत्रं स्याद्वेणु-वीणादि, गात्रं तु मुखजं मतम् ॥१॥ तथा-निबद्धमनिबद्धं च, गीतं द्विविधमुच्यते । अनिबद्धं भवेद्गीतं, वर्णादिनियमं विना ॥१॥ यद्वा गमकधातुस्थै-रनिबद्धं विनाकृतम् । निबद्धं च भवेद्गीतं, तालमानरसान्वितम् ॥२॥ छंदोगमकधातुस्थै-र्वर्णादिनियमैः कृत मित्यादि. २ गीतकालक्रियामानं, अथ स्वरः, द्रुतकालं गेयः, द्रुतकालं विलंबितम्, द्रुतकालं द्रुतम्, द्रुतकालं मध्यमम्, इति बोधयितुम् ईदृशैर्हस्तैरंगुल्याकुंचनप्रसारणादिभिः नर्तितव्यं गातव्यं चेति कालक्रिययोः प्रमाणं तालः, तस्य भेदाः एकाधिकं शतं, तेषु मुख्याः षष्ठितालाः । ३ हृद्गतभावव्यंजकशरीरचेष्टादिरभिनयः, अभिनेय ( अनुकरणीय ) पदार्थस्य शरीरचेष्टाभाषणादिभिरनुकरणं वाऽभिनयः, यदुक्तं-भवेद-भिनयोऽवस्थाऽनुकारः स चतुर्विधः । आंगिको वाचिकश्चैव-माहार्यः सात्त्विकस्तथा ॥१॥ इति नटैरंगादिभिः रामयुधिष्ठिरादीनामवस्थाऽनुकारोऽभिनयस्तत्र अंगेषु-शिरोहस्तवक्षः पार्श्वकटिचरणेषु अक्षिभ्रुकुटिनासाधरकपोलचिबुकेषु च नियुक्तः आंगिकः, वाचि नियुक्तः वाचिकः, आह्रियते-वेषादिना साम्यं अभिक्रियते इत्या-हार्यं -वेषादिना साम्यानुकरणमित्यर्थः, सत्त्वेन जितः संस्कृतो वा सत्त्वे वा नियुक्तः इति सात्त्विकः, सत्त्वं च रजस्तमोभ्यां शून्यस्य मनसः काप्यवस्था, सात्त्विकश्च स्तंभस्वेदादिभावात्माऽभिनय इति. ४ पुंनृत्यं तांडवं प्रोक्तं, स्त्री नृत्यं लास्यमुच्यते.

गातुं शक्रेण तुंबरुः ॥ एतदेव हि रम्यत्व—रूपं यद्रोचते मुहुः ॥ ३९४ ॥ अत्रांतरे सदस्यस्मिन् । कलया स्वं प्रकाशये ॥ अप्रकाशस्य पुंसः स्यात् । पशोरिव जनिर्वृथा ॥ ३९५ ॥ ध्यात्वेति भृंगतां हित्वा । जगौ तुंबरुरूपभाक् ॥ अजासुतः स्वर-ग्राम—मूर्छनोच्छेदमेदुरम् ॥ ३९६ ॥ युग्मम् ॥ तन्मुखोत्था श्रुतिः साक्षात् । सिंचंतीवामृतप्लवैः ॥ सदःसदां हृदि प्रीति—वल्लरीमपपल्लवत् ॥ ३९७ ॥ तद्गीतास्वादतस्तुष्टे । श्रोत्रे दृष्ट्वा सभासदाम् ॥ तदविज्ञतया मेने । वंचनेवापरेंद्रियैः ॥३९८॥ गीतेन यदि तुष्यंति । विकर्णा अपि पन्नगाः ॥ सकर्णास्तर्हि किं वाच्या—स्तद्रसास्वादसादराः ॥३९९॥ पीत्वा तद्गीतिमाधुर्यं । व्यचारींद्रादिभिस्तदा ॥ ईदृशी तुंबरोरद्य । कंठसुस्वरता कुतः ? ॥४००॥ तं गेयाद्यैर्गुणैस्तुल्यं । दृष्ट्वा ऽहो तुंबरुर्नवः ॥ कोऽसावित्यतिविस्मेर—स्तदा तुंबरुरप्यभूत् ॥ ४०१ ॥ अथ प्रसाददानार्थं, संहूतो हरिणा स्वयम् ॥ हित्वा तुंबरुतां मर्त्यी—भूय चाग्रे स तस्थिवान् ॥ ४०२ ॥ विस्मेरेषु सभासत्सु । विस्मेरेण विडौजसा ॥ कोऽसीति पृष्टोऽजा-

१ सप्तस्वरास्त्रयो ग्रामा, मूर्च्छनाश्चैकविंशतिः । तथाहि—षड्जर्षभौ च गान्धारो, मध्यमः पंचमस्तथा । धैवतश्च निषादश्च, ते स्वराः सप्त नामतः ॥ १ ॥ स्वराणां संदोहो ग्राम इत्यभिधीयते-षड्जग्रामो भवेदादौ, मध्यमग्राम एव च । गान्धारग्राम इत्येतत्, ग्रामत्रयमुदाहृतम्॥१॥ नन्दावर्तोऽथ जीमूतः, सुभद्रो ग्रामकास्त्रयः । षड्ज-मध्यमगान्धारास्त्रयाणां जन्महेतवः ॥ २ ॥ तेषां सप्त स्वरविशेषयोगात् एकविंशतिमूर्च्छनाहेतुत्वं—क्रमात्स्वराणां सप्तानां—मारोहश्चावरोहणं । सा मूर्छनोच्यते ग्राम-स्था एताः सप्त सप्त च ॥१॥ स्वरः संमूर्च्छितो यत्र, रागतां प्रतिपद्यते । मूर्च्छनामिति तां प्राहु—कवयो ग्रामसंभवाम् ॥ २ ॥२ इदानीं षड्जग्रामस्य मूर्च्छनाः क्रियंते—प ऋ ग म प ध नि इति षड्जस्य, मपौ धनी प ऋ ग इति मध्यमस्य, ऋगौ (?) मपौ धनी प इति गान्धारस्य मूर्च्छना ।१ प ऋ ग म प ध नि । २ नि प ऋ ग म प ध । ३ ध नि प ऋ ग म प । ४ प ध नि प ऋ ग म । ५ म प ध नि प ऋ ग । ६ ग म प ध नि प ऋ । ७ ऋ ग म प ध नि प । इति मूर्च्छनाः सप्त षड्जजाः। मध्यमग्रामजास्त्वेवं, मूर्च्छनाः परिकीर्तिताः । मकारादिक्रमेणैव, गकारान्तास्तु ता मताः ॥१॥ इत्यादि.

पुत्रः, स्वस्वरूपं न्यरूपयत् ॥ ४०३ ॥ तस्य तादृग्गुणग्राम—मोहितः सुरनायकः ॥ दिव्यवस्त्रादिदानेन । स्फारसत्कारमाचरत् ॥ ४०४ ॥ अहो रूपमहो रोचि—रहो विभववैभवे ॥ अहो शच्यादयो देव्यः । सर्वं लोकोत्तरं ननु ॥ ४०५ ॥ इति निस्सीमया शक्र—श्रियाऽपहृतमानसः ॥ अजासुतस्तमप्राक्षी—दीदृक्षा श्रीः कुतस्तव ? ॥४०६॥ युग्मम् ॥ स्वर्गे स्थानं विमाने वसतिरनुपमे ज्योतिरुद्योतिदेहं, पारेवाग्वर्ति वीर्यं नवनवविलसद्रूपनिर्माणसिद्धिः । लक्ष्मीस्त्रैलोक्यकाम्या गतिरनुपहता गीतनृत्यादिरम्यं, शच्याद्या भोगपात्रं मम सुकृतवशाज्जातमैश्वर्यमेतत् ॥ ४०७ ॥ यद्वा शक्रादिपदवी । धर्मद्रोः कुसुमं किल ॥ फलं पुनश्चिदानंद—मयं तत्पदमव्ययम् ॥ ४०८ ॥ तस्य धर्मस्य निस्सीमं । महेम महिमाद्भुतम् ॥ यो दत्ते श्रितमात्रोऽपि । नरामरशिवश्रियः ॥४०९॥ इति शक्रोपदेशेन । तल्लक्ष्मीदर्शनेन च ॥ अजासुतस्य धर्मेऽभू—न्निस्तुषाऽऽस्तिक्यवासना ॥ ४१० ॥ अजासुतं निजं स्थानं । नेतुमेकं दिवौकसम् ॥ समादिश्याथ देवेशो । दिविषत्पदमासदत् ॥४११॥ भूरिभावनया सोऽपि । कृततीर्थनमस्कृतिः ॥ उत्पाट्य तेन देवेन । वापीतीरे व्यमुच्यत ॥ ४१२ ॥ आपादमस्तकं शस्ये । निवेश्यामरवाससी ॥ पार्श्वे तयोः स्वनरयोः । स्वपतोः सोऽथ सुप्तवान् ॥ ४१३ ॥ दिव्यवस्त्रावृतः कोऽय—मिति चिंतापरौ नरौ ॥ अतिविस्मापयामास । प्रकाश्य स्वमजासुतः ॥ ४१४ ॥ अपेतपंकः कुर्वाणो । वहुंधान्यविवर्धनम् ॥ साधुलोक इव प्रेयान् । शरत्कालस्तदापतत् ॥ ४१५ ॥ शोभंते शालयो यत्र । विस्फुरत्कमलाकराः ॥ नमंतः फलभारेण । धात्रीं[3]

---

१ कालपक्षे वहु धान्यविवर्धनं, साधुलोकपक्षे वहुधा अन्य ( धार्मिकजन ) विवर्धनम्. २ पुत्रपक्षे शस्य—सुखस्य. आलयः—पंक्तयः—सततय इति यावत्. ३ पृथ्वीम्—पक्षे. मातरम्.

सत्तनया इव ॥४१६॥ केकिकेकाः परुषतां, माधुरीं हंसनिःस्वनाः ॥ तदा निदधिरे के वा, सर्वदा रम्यताऽऽस्पदम् ॥४१७॥ श्रीविशालाः सरलतां । पुष्णंतः पंकवर्जिताः ॥ सज्जना इव सेव्यत्वं । मार्गाः शरदि दध्रिरे ॥ ४१८ ॥ गगनं प्रोन्ननामेव । दिशः पश्चाद्गता इव ॥ प्रससारेव रोदोऽन्त—र्निवृत्ते मेघमंडले ॥ ४१९ ॥ अर्थकामयुतो धर्मं, इव मर्त्यद्वयान्वितः ॥ अथाजातनयः सर्पन्, पुरीं स्वमनसाऽमृशत् ॥ ४२० ॥ द्वाभ्यां जगत्त्रयी दृष्टा । मया लेभे च दुर्लभम् ॥ तिरश्चां नृत्वदं चूर्णं । नृणां तैरश्चदं जलम् ॥ ४२१ ॥ चूर्णयोगेन तिर्यंचौ । मानवीभावमाश्रितौ ॥ सेवकाविव वर्तेते । मदादेशवशंवदौ ॥ ४२२ ॥ ततो मे सफलं जन्म । भाग्यभंग्यप्यभंगुरा ॥ इति प्रमोदपूर्णोऽसौ । जयंतीं नगरीं ययौ ॥ ४२३॥ मानसस्तंभनीं पश्यं—स्तदीयां सर्वतः श्रियम् ॥ वहुबुद्धिवणिग्गेह—मजासूनुः स जग्मिवान् ॥ ४२४ ॥ श्रेष्ठी श्रेष्ठं तमालोक्य । ददौ स्थानं स्वसद्मनि ॥ सोऽप्यात्मना तृतीयोऽस्थात् । सतां कुत्र न गौरवम्? ॥४२५॥ रक्षार्थं श्रेष्ठिने हारं । चूर्णं कपिनराय च ॥ दत्त्वा स नखशुद्ध्यर्थं । नापितस्य कुटीं ययौ ॥ ४२६ ॥ निर्गच्छतस्तत्सदना—दाजेयस्य कटीतटात् ॥ तद्वासोयुगलं दिव्यं । न्यपतद्दैवयोगतः ॥ ४२७ ॥ करोपेकर्ष तल्लात्वा । नापितः स्पर्शमार्दवात् ॥ ज्ञात्वा च देवलोकीयं । द्रव्येण वणिजे ददौ ॥४२८॥ राजार्हं तत्परिज्ञाय । वाणिजोऽप्युपदाऽऽस्पदे ॥ श्रीविक्रमनरेंद्रस्य । स्वपुरीस्वामिनो ददात् ॥ ४२९ ॥ तदा च कृशकायस्य । कामस्य वलवृद्धये ॥ रसायनमिवोदग्रं । वसंततुर्व्यजृंभत ॥ ४३० ॥ वालप्रवालजालेन । शोणिता शुशुभे वनी ॥ प्रकटीकृतरागेव । वसंतं स्वपतिं प्रति ॥४३१॥ मधुपानोन्मदा भृंगा । झंकारमुखरा वभुः ॥

१ उत्तमपुत्रा इव. २ हस्तसमीपकर्षणं यथास्यात्तथा. ३ स्वामिने प्र.

भट्टा इवर्तुराजस्य । वदंतो बिरुदावलिम् ॥४३२॥ वियुक्तवनितास्वांते । वसंतं विरहानलम् ॥ संधुक्षितुमिवामंदं । ववौ मलयमारुतः ॥ ४३३ ॥ चलैर्दलैः सनृत्येव । सस्मितेव सुमैर्वनी । संगीतेवालिसंरावै—र्ऋतुपत्यागमेऽस्फुरत् ॥ ४३४ ॥ विश्वग्वनानि ससुमान्यलिनोऽतिमत्ता—स्ताम्रेक्षणाः कलरवाः पवनः सुगंधिः ॥ शीतांशुरुज्ज्वलरुचिर्मदनः सतेजाः । प्राप्ते वसंतसमये न कथं प्रमोदः ॥ ४३५ ॥ कल्पितानल्पनेपथ्य—स्तदा पौरजनोऽखिलः ॥ जगामारामसुद्दामं । वसंतोत्सवहेतवे ॥ ४३६ ॥ ते निवस्यांशुके दिव्ये । प्रेयसीभिः परिष्कृतः ॥ श्रीविक्रममहींद्रोऽपि । प्रापारामं रिरंसया ॥ ४३७ ॥ बहुबुद्धितनूजोऽपि । संज्ञया मतिसागरः ॥ अजाभूहारसश्रीको । दैवात्तत्रैव जग्मिवान् ॥ ४३८ ॥ तं हारं नृपतिस्तस्य । कंठे दृष्ट्वोपलक्ष्य च ॥ आकारयत् स्वपुरुषैः । परुषैर्मतिसागरम् ॥४३९॥ अपृच्छच्च कुतस्तेऽयं । हारः स्फाररुचिर्वद ॥ अब्रुवन्नुत्तरं सोऽपि । मूकवन्मौनमानशे ॥ ४४० ॥ बद्ध्वा दृढं नृपभटैः । कुट्टितो यष्टिमुष्टिभिः ॥ रक्तं वमन् स भूपीठे । लुलोठ गतजीववत् ॥ ४४१ ॥ हारव्यतिकरं श्रुत्वा । बहुबुद्धिः सुबुद्धिभाक् ॥ अजापुत्रं गृहीत्वैव । नृपपार्श्वमशिश्रियत् ॥४४२॥ कस्यायमिति च पृष्टः । सशाचष्ट महीपते ! ॥ हारोऽस्त्यजासुतस्यास्य । कस्मान्मम सुतो हतः ॥ ४४३ ॥ विमोच्य श्रेष्ठिनः पुत्रं । भूपोऽजांगजमूचिवान् ॥ किमचोरि त्वया हारः ? । स्माहाऽऽमेति स कौतुकात् ॥ ४४४ ॥ अरेरे हन्यतामेष । मेषवत्तस्करो भटाः ! ॥ इत्यादिष्टे नृपेणोचे । स देव ! शृणु मद्वचः ॥४४५॥ परवस्त्वपहर्ता यः । स वध्यो भवतां नयः ॥ अयं विलेख्यतां पत्रे । स्तेनोऽस्त्यन्योऽपि यन्ननु ॥ ४४६ ॥ तदाशयापरिज्ञाना—द्राज्ञाऽस्मिन् लेखिते

१ कोकिलाः. २ श्री. अ. ३ सदातारक्तत्वम.पे इतिभावः

रुषा ॥ निर्वाह्योऽयं नयो राज—न्नित्यजातनुजो जगौ ॥ ४४७ ॥ ओमित्युक्तवति क्ष्मापे । सोऽवदद्भवदंतिके ॥ ममैते वाससी तेन । स्तेन[1]स्त्वमपि वर्तसे ॥ ४४८ ॥ यदि त्वमवलेपेन[2] । मदुक्तं मन्यसे मृषा ॥ राजंस्तदाऽनयोः प्राप्ति—पारंपर्यं विचारय ॥ ४४९ ॥ राज्ञा तदर्पकः पृष्टः । कस्यैते वसने ? इति ॥ अकीर्त्तयद्दीवाकीर्तिः । सोऽप्यजातनुजस्य च ॥ ४५० ॥ श्रुत्वा तद्विक्रमक्ष्मापः । किंचिन्म्लानस्तमूचिवान् ॥ परदत्तगृहीतत्वा—दहं नैवास्मि तस्करः ॥ ४५१ ॥ आजेयोऽपि जगौ स्मित्वा । यदेवं देवधीस्तदा ॥ स्तेनोऽहमपि नैव स्यां । गृह्णन् हारं परार्पितम् ॥ ४५२ ॥ ततो नृपेण हारार्थं । पृष्टः कोशाधिपोऽभ्यधात् ॥ अलंकारकृते देव ! । त्वत्पुत्र्यै तमदामिति ॥ ४५३ ॥ पुत्रीमपि समाहाय्य । पप्रच्छ नृपविक्रमः ॥ वत्से ! त्वत्सविधे हारः । सांप्रतं विद्यते न वा ? ॥ ४५४ ॥ साऽवोचन्नगरीबाह्ये । केलिवाप्यां पितर्मयि ॥ किलं[3]त्यां हारमादाय । नेशिवान् केलिमर्कटः ॥ ४५५ ॥ सोऽन्वेषितोऽपि सर्वत्र । न लेभे स्तेनवत् क्वचित् ॥ बिभ्यती तातपादाग्रे । न चाहमिदमभ्यधाम् ॥ ४५६ ॥ आकर्ण्य कपिमर्त्यस्त—द्वीक्ष्य राजसुतां च ताम् ॥ पुनः कपित्वमैहिष्ट । स्वजातिः खलु दुस्त्यजा ॥४५७॥ स तैरश्चयकरं नीरं । पीत्वा कापेयमाप्य च ॥ कृतोत्फालतयोत्तालः । सोऽगाद्राजसुतांऽन्तिकम् ॥४५८॥ स्वं केलिमर्कटं राज—तनूजा ऽप्युपलक्ष्य तम् ॥ उत्संगे स्थापयामास । मेने स्नेहो हि कारणम् ॥४५९॥ किमेतदिति विस्मेरे । भूपतौ परिपृच्छति ॥ कापेयं वृत्तमाख्याय । ददौ हारमजांगजः ॥४६०॥ भूपोऽपि हारमादाय । दत्त्वा दिव्यांशुकद्वयम् ॥ क्षमयित्वाऽर्चयित्वा च । मुदाऽऽजेयं विसृष्टवान् ॥ ४६१ ॥ एवं पुरि प्रकाश्य स्वं । गृहीत्वा चूर्णपाथसी ॥ समं मकरम-

१ चौर २ गर्वेण. ३ कलंत्सा, प्र. ४ तत्, प्र.

र्त्येण । चलितोऽजासुतस्ततः ॥४६२॥ द्रोणंपत्तनसंबाध—ग्रामाकरसमाकुलाम् ॥ धरां सिद्ध इव भ्राम्यन् । दृशोः साफल्यमाप सः ॥ ४६३ ॥ अन्येद्युर्गच्छतस्तस्य । कांतारे दिनयौवने ॥ द्विपेंद्रापहृतः कोऽपि । पुमान् दृष्टिपथं ययौ ॥४६४॥ तं नरं कुंभिकुंभाग्रे । दृष्ट्वा निश्चेष्टवत् स्थितम् ॥ स तत्स्वास्थ्यचिकीरासी—त्सतामेतद्धि लक्षणम् ॥४६५॥ व्रजंतं तीव्रवेगेन । गजं तं धर्तुमक्षमः ॥ अग्निद्रुफलचूर्णेन । तेने मर्त्यमजासुतः ॥४६६॥ शीतोपचारैश्चैतन्यं । लंभयित्वा स पूरुषः ॥ कोऽसीति पृष्टः स्वं वृत्तं । वक्तुं तस्मै प्रचक्रमे ॥ ४६७ ॥ अस्तीह विजयेत्याख्यं । कृतव्याख्यं बुधैः पुरम् ॥ तत्र भूपो महासेनो । महासेन इवौजसा ॥ ४६८ ॥ यन्निस्त्रिंशयमीधारा—जले निमज्ज्य शत्रवः ॥ सुखादनिमिषीभावं । बिभरांचक्रिरे रणे ॥४६९॥ तत्प्रिया शीलवत्यस्ति । भूमिष्ठेव शची स्वयम् ॥ तनूरुहोऽस्मि तस्याहं । नाम्ना विमलवाहनः॥४७०॥ आरूढोऽहं वशीकर्तुं । मदावस्थामुपेयुषा ॥ अनेन करिणा प्रेत—पतिनेव हृतो रुषा ॥ ४७१ ॥ नाम्नः समानं मातंग—भावं व्यक्तुमिव द्विपः ॥ मामसौ मृतदेशीयां । दशां निन्ये श्रमादिभिः ॥ ४७२ ॥ निश्चेष्टं काष्ठवत् क्लेशा—वेशात्त्यक्तमिवासुभिः ॥ त्वयोज्जीवयता मां नु । किं नैवोपकृतं सखे ॥४७३॥ कुलीनो धनवान् विद्वान् । धनुष्मान् विनयी नयी ॥ सुलभः पुरुषो लोके । दुर्लभस्तूपकारकः ॥४७४॥ अथ भोजितपाथेयौ । गृहीत्वा सह तौ नरौ ॥ अजापुत्रः पुरो गच्छ—न्निशि देव-

---

१ द्रोण॰–सिंधुवेलावलयितं नगरं–समुद्रप्रवाहवेष्टितं नगरमित्यर्थः, पत्तनं—नानादेशागतपण्यस्थानम्, जलस्थलनिर्गमप्रवेशम्,–जलस्थलयोरन्यतरेण पर्याहार (निर्गम) प्रवेशं ( नगरं ) उक्तं च–पत्तन शकटैर्गम्यं, घोटकैर्नौभिरेव च । नौभिरेव तु यद् गम्यं, पट्टणं तत्प्रचक्षते ॥१॥ जलपत्तनं स्थलपत्तनं च, संबाधः–बहुलोकमीलनस्थानम् ( मेळो ). २ बृहत्सेनाधिपतिः ( इन्द्र. ). ३ यमसंबंधि, पक्षे संयमीसंबंधि. ४ नरीभूतहस्तिराजकुमारौ.

कुले स्थितः ॥ ४७५ ॥ सुप्तेष्वन्येषु भूपाल—पुत्रो विमलवाहनः ॥ आर्द्रदुःखीति नो निद्रां । लेभे निःस्व इवार्चनाम् ॥ ४७६ ॥ तदा देवकुले तत्र । स कीरमिथुनस्वरम् ॥ श्रुत्वा तदंतिकं गत्वा । शुश्रूषुर्निभृतं स्थितः ॥ ४७७॥ इयच्चिरं स्थितः क्व त्वं । कथं वा छुटितस्ततः ॥ इति पृष्टः शुकः प्रोचे । शुकीं प्रति मनुष्यवाग् ॥४७८ ॥ शबरो मां तदा धृत्वा। नीत्वा च विजयं पुरम् ॥ राजदासीकरे क्रूरो । विक्रीणीते स्म भृत्यवत् ॥ ४७९ ॥ दासी भूपमहासेन—पत्नीशीलवतीकरे ॥ अर्पयामास मां साऽपि । दृष्ट्वा तुष्टवती हृदि ॥ ४८० ॥ श्रुत्वाऽसौ मानुषीं वाणीं, व्यक्तान् श्लोकांश्च मन्मुखात् । न्यधान्मां पंजरे हैमे, गुणाधिक्यं हि बंधनम् ॥ ४८१ ॥ यच्छंती मधुरं भोज्यं । सूक्तान्यध्यापयंत्यपि ॥ स्वपुत्रमिव सा नैव । मां मुमोच करोदरात् ॥ ४८२ ॥ एकदा नृपतेः पट्ट—हस्ती प्राप्योन्मदिष्णुताम् ॥ आलानस्तंभमुन्मूल्य । कंदवन्निरगाद्बहिः ॥४८३॥ अंकुशं स्कंधतो व्योम्न्यु—च्छालयंस्तृणपूलवत् ॥ क्षिपन् हस्तिपकान् दूरे । कर्करानिव रोषतः ॥ ४८४ ॥ यमदंडाग्रवच्छुंडा—मुदस्यन् दलितुं खगान् ॥ पुरो मानवदर्शं च । पेष्टुं धावन् कृतांतवत् ॥ ४८५ ॥ प्रलयक्षुब्धपाथोधि—तुलनां नगरं नयन् ॥ विहर्तुमिव स स्वैरं । प्रतस्थे विपिनं प्रति ॥ ४८६ ॥ त्रिभिर्विशेषकम् ॥ निषिद्धोऽपि जनैर्भूप—पुत्रो विमलवाहनः ॥ कपिर्द्रुममिवारोह—त्तं गजं सांत्वनेच्छया ॥ ४८७ ॥ यावत्तं शिक्षयत्येष । तावत्प्रेताप्तवद् द्विपः ॥ जनानां पश्यतामेव । धावित्वा जग्मिवान् क्वचित् ॥ ४८८ ॥ तन्निशम्य महासेनो । गतचैतन्यवन्नृपः ॥ न राज्यादिकथां कांचि—द्वितेने शून्यमानसः ॥ ४८९ ॥ तदाकलय्य भूपालाः । सीमालाः पूर्ववैरिणः ॥ एत्य सैन्यैरदैन्यैस्त—त्पुरं त्रिःप-

१ नरीभूतहस्ति-मकरपुरुष-अजापुत्रेषु. २ निश्चल-गुप्तं यथास्यात्तथा.

र्यवेष्टयन् ॥ ४९० ॥ महासेनोऽपि सेनाभिः । समं तान् युध्ययोधयत् ॥ पराभवं सहंते हि । सिंहवन्न महस्विनः ॥४९१॥ सैन्यभंगे सति स्वेन । युध्यमानोऽप्यनेकधा ॥ बलिभिश्छलिभिर्द्विड्भिः । महासेनो न्यहन्यत ॥ ४९२ ॥ भास्वतीव गते तस्मि—न्नृपेऽस्तं दैवयोगतः ॥ लोकेऽन्धकरणः शोक—तमःस्तोमस्तदाऽस्फुरत् ॥ ४९३ ॥ ततो बुद्धिबलो नाम । मंत्री बुद्धिबलोद्धुरः ॥ पिधाप्य विशिखाः सर्वाः । पौररक्षामचीक्लृपत् ॥४९४॥ कृपां मनसि कृत्वोच्चैः । कारागार निवासिनः ॥ जनान् सोऽमूमुचत् सर्वान् । प्रस्तावज्ञा हि तादृशाः ॥ ४९५ ॥ राज्ञीमृत्या समायासी—न्ममापि मरणं हहा ॥ इत्युदीर्यैकया दास्या । मुक्तोऽहं पंजरात्प्रिये ! ॥४९६॥ विना तमेकं भूपाल—पुत्रं विमलवाहनम् ॥ मृतप्रायमभूत्सर्वं । भोज्यहीनं यथा वपुः ॥४९७॥ कीदृशं राज्यमासीत्तत् । प्रथमं सांप्रतं पुनः ॥ कीदृगस्ति हहा दैवा—दनित्याऽहो ? भवस्थितिः ॥ ४९८ ॥ अंतर्मंत्रचणो मंत्री । लक्षसैन्या द्विषो बहिः ॥ किं किं भावि पुरो वेद । भगवान् कोऽपि नापरः ॥ ४९९ ॥ अधुनैव समायान्तं । विद्धि मां तत्पुरादिह ॥ शुकीमिति शुकः प्रोच्य । मुनिवन्मौनमातनोत् ॥ ५०० ॥ श्रुत्वा तद्दुःश्रवं तात—वृत्तं विमलवाहनः ॥ शस्त्राहत इवोद्दीप्त—मूर्छश्चैत्यादधश्च्युतः ॥ ५०१ ॥ तत्पातजातनिर्घाता—दजापुत्रोऽपनिद्रितः ॥ अपश्यन् संनिधौ भूभृत्—पुत्रं तं द्रष्टुमुत्थितः ॥ ५०२ ॥ इतस्ततो भ्रमंश्चैत्य—पश्चाद्भागेऽतिमूर्छितम् ॥ दृष्ट्वा राजसुतं सोऽभू—द्दवालीढ इवाकुलः ॥५०३॥ शीतैरौपयिकैराशु । स्वस्थयित्वा कथंचन ॥ तव जज्ञे किमेतत्त—मित्यप्राक्षीदजासुतः ॥ ५०४ ॥ परिस्रुताश्रुमिश्राक्षः । कथंचिद्वाचमुच्चरन् ॥ वृत्तं शुकोदितं तस्मै । जगौ विमलवाहनः ॥ ५०५॥ अजासुतस्तमूचेऽथ । स्नेहलो निजबंधुवत् ॥ मा रोदीर्मास्म शोचीश्च । विभाव्य भवचेष्टितम् ॥ ५०६ ॥ पितरः कस्य

जीवंति । चिरं कस्यानिशं सुखम् ॥ रुरुधे कस्य नो राज्यं । मंथिभिः प्रतिपंथिभिः ॥ ५०७॥ उदयः पतनाय स्या—ज्जीवितव्यं च मृत्यवे ॥ विरोधः सुखनाशाय । स्थितिरेषा सनातनी ॥ ५०८ ॥ तावदेवोदयः पुंसां । यावद्भाग्यमभंगुरम् ॥ शुक्लपक्षक्षये जाते । सुधांशुर्वर्धते कियत् ॥ ५०९ ॥ तच्छोकशंकुमुन्मूल्य । धीरतां हृदि धारय ॥ व्यसने सति यो धीरः। स धीर इति मे मतिः ॥ ५१० ॥ अगाधे व्यसनांभोधौ । महतोऽपि निपेतुषः ॥ नवरं धीरतैवैका । तदुत्तारे तरीयते ॥ ५११ ॥ इति संबोधितः सूक्तै—र्महासेनतनूरुहः ॥ अधुना किं करोमीति ? । पृच्छति स्म तमुत्सुकः ॥ ५१२ ॥ अजासुतो बभाषे तं । मा भैषीस्त्वं द्विषद्गणात् ॥ वराका मे पुरः केऽमी ? । मृगेंद्रस्य यथा मृगाः ॥ ५१३ ॥ किंतु यावदहं यामि । तावल्लेखः प्रहीयताम् ॥ शुकेनानेन तेन स्यात् । स्वस्थो मंत्री यथा हृदि ॥५१४॥ इत्युक्त्वा कीरमाकार्य । प्रोचेऽजातनयो मृदु ॥ पश्य त्वं नृपतेः पुत्रः। सोऽयं विमलवाहनः ॥५१५॥ यद्येतज्जननीस्नेहा—त्त्वमानृण्यं समीहसे ? ॥ तदेतदुपकाराय । मंत्रिणोलेखमर्पय ॥ ५१६ ॥ इत्यर्थितः शुकस्तेन । लेखं लात्वा तदर्पितम् ॥ तदैव देववद्गत्वा । ददौ बुद्धिबलाय तम्॥५१७॥यस्य तस्यापि कृपतः स्या—दुपकारः फलेग्रहिः ॥ पश्य कस्यां हि वेलायां। शुकः स पत्रमार्पिपत्॥५१८॥ दृष्ट्वाऽपि कृतहृल्लेखं । तं लेखं प्राप्य मित्रवत् ॥ स्वयं बुद्धिबलो मंत्री । वाचयामास तद्यथा ॥५१९॥ स्वस्तिश्रीमन्महासेन—सूनुर्विमलवाहनः ॥ भुजोपपीडमालिंग्य । मंत्रिणं निगदत्यदः ॥ ५२०॥ अस्तीह निस्तुषं स्वस्ति । तत्रत्या निखिला कथा ॥ मयाऽज्ञायि शुकादस्मात् । स्वस्मादनुचरादिव ॥ ५२१ ॥ वैक्लव्यं न त्वयाऽऽलंब्यं । जातं यज्जातमेव तत् ॥ अहमायात एवास्मि । तावद्द्रक्ष्यं निजं पुरम् ॥ ५२२ ॥ इति लेखार्थबोधेन । बुद्ध्वा भूपभवागमम् ॥ धीसखः सुखमापेदे । सनायक

इवोच्चकैः ॥५२३॥ अस्मिन् क्षणे यथा कीर !। भवतोपकृतं मम ॥ तथा न वंधुनाऽपीति । मंत्री तं प्रत्यचीकथत् ॥५२४॥ कुमारः क्षिप्रमेवात्र । प्रेष्य इत्यनुशिष्य तम् ॥ प्राहिणोच्च शुकः सोऽपि । कुमाराय तदाख्यत ॥ ५२५ ॥ गुटीयोगेन कृत्वाऽथ । रूपं भारंडपक्षिणः ॥ स्वार्भानिव कुमारादीन् । क्षिप्त्वा पक्षांतरेऽखिलान् ॥ ५२६ ॥ आजेयो नभसा तस्मा-दुड्डीय विजयं पुरम् ॥ क्षणेनैकेन संप्राप । कटरे सिद्धिरुत्कटा ॥५२७॥ युग्मम् ॥ स्वस्थीकृत्य द्विपध्वंसो-पायोक्त्या नृप-नंदनम् ॥ अजासूनुः समं तेन । पुरद्वारमशिश्रियत् ॥ ५२८ ॥ द्वाराध्यक्षेण संबोध्य । कुमारागममंतरा ॥ मंत्रिणा दर्शिताध्वाऽसौ । भूधवावासमासदत् ॥५२९॥ कुमाराद् ज्ञातवृत्तांतो । धीसखस्तमजासुतम् ॥ पूर्वजादधिकं मेने । प्रियः कस्य हि नोपकृत् ॥ ५३० ॥ प्रातर्न्यधादजापुत्रो । राज्ये विमलवाहनम् ॥ अचीकरच्च रुचिरं । नगरे मंत्रिणा महम् ॥ ५३१ ॥ राजन्यभ्युदिते तस्मिं-स्तद्राज्यं व्योमवद्बभौ ॥ कैरवाकरवल्लोको-ऽभवत् प्रमोदमेदुरः ॥ ५३२ ॥ तस्य राज्योपवेशे ये । बभुवुर्वाद्यनिःस्वनाः ॥ त एव वैरिणां प्राण-प्रयाणपटहस्वनाः ॥ ५३३ ॥ अजासुतानुमत्याऽरीन् । दूतेनावीवदन्नृपः ॥ अधुनैव धराधीशाः !। युद्धे सन्नह्यतामिति ॥ ५३४ ॥ अजापुत्रं बभाषे च । यस्त्वया प्राग्नरीकृतः ॥ पट्टहस्ती स मे स्याच्चे-त्तर्ह्यरीन् हन्मि हेलया ॥ ५३५ ॥ तदैव देववत्तेन, पट्टहस्ती नराकृतिः । ह्रदांभसा पुनर्हस्ती-कृत्य राज्ञे समर्पितः ॥ ५३६ ॥ अथाजेयो वहिर्गत्वा । चूर्णं क्षिप्त्वा सरोंऽभसि ॥ तत्पायनान्नरीचक्रे । द्विपां सर्वहयद्विपान् ॥ ५३७ ॥ तान् भटानुत्कटान् लक्ष-संख्यान् स निजसन्निधौ ॥ कृत्वा मकरमत्यैंण । भूपं प्रत्यभ्यधादिति ॥ ५३८ ॥ पट्टहस्तिनमास्थाय । त्वं ससैन्योऽपि निर्भयः ॥ मृगानिव निजारातीन् । मश्नीयाः मृगराजवत् ॥ ५३९ ॥ लक्षसंख्यैर्भटैः साक-मह-

मस्मि बहिःस्थितः ॥ त्वत्तः प्रणश्यतः शत्रून् । हंतारो मद्भटा इमे ॥ ५४० ॥ भूत्वा तथैव संनद्धो । नृपो विमलवाहनः ॥ दावपावकवत्तीव्रः । पेतिवान् रिपुकानने ॥ ५४१ ॥ तद्धस्ती बलवांस्तुंगः । प्रक्षरन्मदनिर्झरः ॥ मंथाद्रिवन्ममंथोच्चै-स्तं द्विषत्सैन्यसागरम् ॥५४२॥ पदमर्दनतः कांश्चित्, कांश्चिच्छुंडाग्रघाततः ॥ दंताद्रिपाततः कांश्चि-च्चूर्णपेषं पिपेष सः ॥५४३॥ नृपोऽप्यलक्षिताकर्ष-संधानपरिमोक्षणैः ॥ चक्रे स्फारं शरासारं । प्रावृषेण्यपयोदवत् ॥ ५४४ ॥ तन्मुक्ताभिः शरालीभि-र्विष्वद्रीचीभिराचिंताः[1] ॥ द्विषो द्विधापि तं जिष्णुं । मेनिरे निजमानसे ॥ ५४५ ॥ बाणैररुंतुदै[2]र्भूप-स्तथांध्यं विद्विषां व्यधात् ॥ निनंक्षवोऽपि ते मंक्षु । यथा नैक्षंत निर्गमम्[3] ॥५४६॥ हास्तिका[4]श्वीयराहित्यात् । तान् नृपानपि पत्तिवत् ॥ जित्वा वशंवदान् स्वस्य । चक्रे विमलवाहनः ॥ ५४७ ॥ ततो जयरमाश्लेष-सुभगंभावुको नृपः ॥ समेत्य तैः समं सम्य-गजा-पुत्रं[5] प्रणेमिवान् ॥५४८॥ तं चक्रिणमिवालोक्य । लक्षसैन्यसमन्वितम् ॥ नृपाः परेऽपि परमं । विस्मयं प्रतिपेदिरे ॥५४९॥ स्वसद्मनि तमानीय । महोत्सवपुरस्सरम् ॥ ऊचे स्नेहांचितां वाचं । भूमान् विमलवाहनः ॥ ५५० ॥ प्राक् त्वया ददिरे प्राणाः । सांप्रतं राज्यसम्पदः ॥ सर्वस्वस्यापि मे देव !, त्वमेव प्रभवस्यतः ॥ ५५१ ॥ सत्त्वोत्सेकस्तव छेकः । कोऽप्यसौ येन[6] हेलया ॥ राज्यमप्यर्प्यतेऽन्यस्मै । स्वयं किंचिन्न चेप्स्यते ॥५५२॥ तथापि स्वगुणक्रीतं । भुंक्ष्व राज्यमिदं सुखम्[7] ॥ अहं तु त्वामुपासिष्ये । श्रीरामं हनुमानिव ॥ ५५३ ॥ अजासुतस्तमूचे त्वं । यद्येवं भक्तिमानसि ॥ तर्हि मे निखिलं सिद्धं । राज्यदानेन किं मुधा ॥ ५५४ ॥ यदुपकृत्य परस्य न गृह्णते । किमपि सत्पुरुषास्तदवैम्यहम् ॥ भवतु मेति यदे-

१ आचिताः-व्याप्ताः. २ अरुंतुदै -मर्मपीडकैः. ३ मार्गम्. ४ हस्तिनां समूहः हास्तिकम्, अश्वानां समूह. आश्वीयम्. ५ अजापुत्रम्. ६ सत्त्वोत्सेकेन. ७ सुखं यथास्यात्तथा.

भिरवक्रयः[1] । स्वचरितस्य शुभस्य समाददे[3] ॥५५५॥ नृपाभ्यर्थनया तत्र । गुरुगौरवपूर्वकम् ॥ सोऽवात्सीदुत्सवैर्भव्यैः । प्रीयमाणः कियच्चिरम् ॥५५६॥ चंद्रापीडनृपोऽपज्ञ–मथ ध्यात्वा पराभवम् ॥ अजासुतः ससैन्योऽपि । प्रतस्थे तज्जिगीषया ॥ ५५७ ॥ आसन् ये कल्पिता[5] मर्त्याः । पूर्वं चूर्णप्रदानतः ॥ ते पुनर्हृदतोयेन । हस्त्यश्वीचक्रिरेऽमुना ॥ ५५८ ॥ पथि संचरतस्तस्य । सैनिकानां बहुत्वतः ॥ तृणमासीद् द्विपद्वक्त्रे । नीरं तत्स्त्रीदृशोर्यदि ॥५५९॥ वाहिनीशतसंकीर्णे[6] । तदीये सैन्यसागरे[7] ॥ मंक्त्वा[8] भूपैः सपक्षैर–प्यहो मैनाकितं न कैः ॥ ५६० ॥ जंगलोऽनूपतामाप[10] । तदीयेभमदोदकैः ॥ जंगलत्वमनूपस्तु । तद्धयोद्धूतधूलिभिः ॥ ५६१ ॥ वार्धिपूर इवोद्वेले । तत्सैन्ये प्रसरीसृति[12] ॥ वैतसीं वृत्तिमाश्रित्य । स्थितं यदि परं नृपैः ॥ ५६२ ॥ इतो निशात्यये चंद्रा–पीडः स्वमृतिबोधिनीम् ॥ वाचं देव्योदितां स्मृत्वा । दोदूयामासिवान् हृदि ॥ ५६३ ॥ सत्यनामानमाकार्य । प्रातर्गणकशेखरम् ॥ कुतो मे भविता मृत्यु–रिति प्रश्नितवान्नृपः ॥५६४॥ सोऽपि लग्नं विनिश्चित्य । प्रोचे देव ! तव ध्रुवम् ॥ पक्षांते मरणं भावि । लक्षसैन्यादजासुतात् ॥५६५॥ किंच भूपाल ! देवीनां । बालकानां तपस्विनाम् ॥ ज्योतिर्दृष्टमिव प्रायो । वाक्यं भवति नान्यथा ॥५६६॥ तद्दैवज्ञवचः श्रुत्वा । शल्यविद्ध इवोच्चकैः ॥ चंद्रापीडः स्फुरत्पीडः । क्ष्मातले सहसाऽपतत् ॥५६७॥ विषादप्यधिकं मन्ये । मृत्युरित्यक्षरद्वयम् ॥ तज्जग्ध्वा मूर्छति प्राणी । श्रुत्वाऽप्येतदहो यतः ॥५६८॥ यद्वैतदक्षरद्वंद्वं । सर्वदुःखमयं ध्रुवम् ॥ कुतोऽन्यथैतच्छ्रवणा–ज्जनता दुर्मनायते ॥५६९॥

---

१ गृहीतवस्तुभि . २ मूल्यम् ३ तमाददे, प्र–( स नाददे). ४ आदौ कृतम्. ५ रचिता . ६ सेना, पक्षे, नदी. ७ सेनानां संघ. सैन्यम्. ८ मूडयित्वा. ९ भूभृद्धि.–नृपैः, पर्वतैश्च. १० जलरहितप्रदेशः. ११ जलयुक्तप्रदेशताम्. १२ सृधातोर्यङ्लुगन्ताच्छतृप्रत्ययः, प्रसरीयति, प्र.

अथाजेयप्रवृत्त्यर्थं । चतुर्दिक्षु चरान्निजान् ॥ वंधूनिवातिविश्वस्तां—श्चंद्रापीडो विसृष्टवान् ॥ ५७० ॥ परं विज्ञाय तद्वृत्तं । देवतामोहिता इव ॥ व्यावृत्ता न चराः केचि–त्तेन स्वस्थोऽभवन्नृपः ॥ ५७१ ॥ तस्य कारयतः शश्व–दजासूनुगवेषणम् ॥ आयुःप्रांत इवागच्छत् । पक्षप्रांतः शनैः शनैः ॥५७२॥ तदा चागसि कस्मिंश्चि—च्चंद्रापीडेन कोपतः । सुबुद्धिरिति मंत्रींद्रः । स्वपुरान्निरवास्यत ॥५७३॥ नूनं तेन क्रुधांधेन । न सुबुद्धिः स धीसखः ॥ पुरान्निर्वासयांचक्रे । किंतु बुद्धिः स्वदेहतः ॥५७४॥ नृपापमानताध्मातो, वैरशुद्धिचिकीरसौ ॥ इतस्ततः परिभ्राम्य—न्नाजेयानीकमैक्षत ॥५७५॥ हास्तीयाश्वीयपादात—रथकोट्याकुलं बलम् ॥ वीक्ष्य पिंडीकृतं विश्व—मिव मेने स धीसखः ॥ ५७६ ॥ तं प्रस्थितं परिज्ञाय । चंद्रापीडनृपं प्रति ॥ आसीद्देवीवचः सत्य—मिति निर्णीतवानयम् ॥५७७॥ तस्मात् स्वसिद्धिमाध्याय । दृष्ट्वा च तमजासुतम् ॥ सुबुद्धिर्विलसद्बुद्धिः । स्वस्वरूपं न्यवोधयत् ॥५७८॥ विपक्षमपि सच्चक्रे । तं तथोच्चैरजासुतः ॥ यथा ऽसौ कथयामास । वधोपायं विरोधिनः ॥ ५७९ ॥ अथाजेयः पुरस्कृत्य । तं सुबुद्धिं स्वबुद्धिवत् । चंद्राननापुरीपार्श्वे । तस्थावर्वाक्तने दिने ॥५८०॥ पुरोपरोधं तिष्ठंतं । तं विलोक्य बृहद्बलम् ॥ चित्रत्रासविषादार्त्त—श्चंद्रापीडो व्यचीचरत्॥५८१॥ चरेषु कोऽपि तावत्सु । नास्योदंतमचीकथत् ॥ अयमायात एवात्र । दृष्टः किं व्योमतोऽपतत् ॥ ५८२ ॥ सत्यापनाकृते यद्वा । देवीदैवज्ञवाक्ययोः ॥ का ऽपि लोकोत्तरा दैवी–मायैवेह विजृंभते ॥ ५८३ ॥ भवत्वेवं तथाप्येनं । ध्वंसिष्ये स्वभुजौजसा ॥ इति धैर्यान्नृपः सैन्यान् । सेनान्या समनीनहत् ॥ ५८४ ॥ निशि मंत्री पुरं गत्वा । राज्यधुर्यानभाषत ॥

१ वैरि, प्र. २ समीप. ३ त्तं, प्र.

आसीद्देवीवचः सत्य—मजापुत्रो यदाययौ ॥ ५८५ ॥ प्रभाते लक्षसैन्योऽसौ । चंद्रापीडं हनिष्यति ॥ तद्यूयं भजत
द्राक्षं । जिजीविषत चेच्चिरम् ॥५८६॥ उदयी सेव्यते स्वामी । परोऽपि स्वोऽपि न क्षयी ॥ व्योमाप्याश्रयते सूर्यं । सोमा-
स्तसमये सति ॥ ५८७ ॥ नीतिसर्वस्वसंवित्तौ । छेकमेकं तमः स्तुमः ॥ छायाछलेन यद्दीपं । द्विपमाश्रित्य नंदति ॥५८८॥
अहं युष्मद्धितायैव । वक्तुमायामिदं ध्रुवम् ॥ एतदेव हि हार्दं यत्—प्रागेव हितशंसनम् ॥५८९॥ किंच वैदग्ध्यमप्येत—
दच्छुभायतिचिंतनम् ॥ को विशेषोऽन्यथा दक्षो । जडवद्दह्यते यदि ॥ ५९० ॥ ततो भवद्भिः सन्नह्य । स्थातव्यं सकलै-
रपि ॥ अजापुत्रेऽत्र संप्राप्ते । युष्मान्मेलयिताऽस्म्यहम् ॥ ५९१ ॥ आत्मनीने वचस्यस्मिन् । प्रधानैः स्वीकृते सति ॥ मंत्री
बहिस्तदैवैत्य । स्वनाथाय न्यवेदयत् ॥५९२॥ जातेऽथ तपने प्राच्या—ऽचलचूलाग्रचुंबिनि ॥ वाद्यमानेषु वाद्येषु । रिपु-
प्राणापहारिषु ॥ ५९३ ॥ अस्त्रैः सर्वांगसंलग्नैः । साक्षाल्लोहमयानिव ॥ सिंहनादैर्मुखोद्गीर्णैः । शब्दाद्वैतमयानिव ॥५९४॥
तेजःस्तोमानिवाप्तांगा—नुत्साहानिव चाक्षुषान् ॥ अहंकारानिवाग्रस्थान् । प्रतापानिव पिंडितान् ॥ ५९५ ॥ कृतोत्फा-
लान् रणोत्तालान् । वाचालान् जयनिःस्वनैः ॥ प्रसादितान् पुरस्कृत्य । पदातीन् पातितद्विषः ॥५९६ ॥ समरोन्मादिभिः
सादि—निषादिरथिकैर्घनैः॥ जगज्जग्धुं कृतानेक—रूपैः साक्षाद्यमैरिव॥५९७॥ अन्वितः स्फीतशौंडीर्यो। जैत्रमारुह्य कुंजरम्
अजासुतश्चचालाथ । द्विषदुन्माथकाम्यया ॥ ५९८ ॥ षड्भिः कुलकम् ॥ सुबुद्धिमंत्रिमंत्रेण । स पुरीद्वाररक्षकान् ॥ विना-
श्याग्रेतनानन्यां—स्तत्रात्मीयान्न्यवेशयत् ॥ ५९९ ॥ आजेये मध्यमायाते । प्रधाना मंत्रिभेदिताः ॥ समगंसत सर्वेऽपि ।
स्नेहला बांधवा इव ॥ ६०० ॥ राजद्वारं ततः प्राप्य । तत्रत्यानपि यामिकान् ॥ हत्वाऽन्यान् स न्यधान्नीते—रविश्वासो हि

जीवितम्॥६०१॥तद्विज्ञाय महापीड-श्चंद्रापीडो युयुत्सया॥ यावदायाति तावद् द्रा--ग्मध्येऽविशदजासुतः॥६०२॥द्वेधाऽपि
तद्बलं द्वैतं । स्वप्रधानांश्च तद्गतान् ॥ पीत्वा दृग्भ्यां भयभ्रांतः । सोऽभवद्विक्लवः क्षणम् ॥६०३॥ ततो लज्जिष्यते क्षात्र-
मित्यात्तोत्साहसाहसः ॥ स डुढौके वहन् खड्ग-माजेयेन सहाजये ॥ ६०४ ॥ अजापुत्रोऽपि कोपेन । धारालकरवालभृत् ॥
बभूवानभ्यमित्रीणः । सिंहवत्संहतोर्जितः ॥ ६०५ ॥ मल्लवद्बहु वलन्तौ । भ्रमंतौ चक्रवन्मुहुः ॥ क्षुदंतौ च महीपीठं ।
पादाग्रैर्वाजिराजवत् ॥६०६॥ यच्छंतौ वंचयंतौ च । खड्गघातान् परस्परम् ॥ युयुधाते भटौ तौ द्वौ । द्विपाविव मदोद्धतौ
॥६०७॥ युग्मम् ॥ कृतप्रतिकृतिप्रौढ-स्तयोः स समरोत्सवः ॥ वादिनोर्वादवत् कस्य । न प्रियंभावुकोऽभवत् ॥ ६०८ ॥
तयोर्विगृह्णतोरेवं । लब्धलक्षतयाऽसिना ॥ आजेयश्चिच्छिदे भूभृ-च्छीर्षं कमलनालवत् ॥६०९॥ आजेयस्य शिरस्यागात् ।
पुष्पवृष्टिर्नभस्तलात् ॥ भुवस्तलान्नभः प्राप । कीर्तिरामोदमेदुरा ॥६१०॥ ऊचिरे यान् जयारावां-स्तदा तं प्रति मागधाः॥
उच्चाटमंत्रफट्कारा-स्त एवासन् प्रतिद्विषः ॥ ६११ ॥ तदैव शोभने लग्ने । मूर्धनीव विरोधिनाम् ॥ राज्ये न्यवीविश-
न्मंत्री । सुबुद्धिस्तमजासुतम् ॥ ६१२ ॥ सुप्रीतेस्तस्य सर्वेऽपि । मंत्रिणो नागरा अपि ॥ प्रीत्याऽभिषेकमातेनु-राधिपत्य-
तरोरिव ॥ ६१३ ॥ महीपालाश्च सीमालाः । स्फारोपायनपाणयः ॥ प्राणंसिषुस्तमभ्येत्य । द्वितीयाचंद्रवन्मुदा ॥ ६१४ ॥
स्वयं स्वयंवरायाता । देवीर्भूमिगता इव ॥ परिणिन्ये नृपोऽनेका-श्छेका नृपतिकन्यकाः ॥ ६१५ ॥ इत्थमेकेन सत्त्वेन ।
चंद्रापीडं निहत्य सः ॥ स्वसात्कृत्वा च तद्राज्यं । कृतार्थोऽजन्यजात्मजः ॥ ६१६ ॥ रममाणः स्वपत्नीभि-र्देवीभिरिव

१ रहस्यम्. २ पराक्रमेण, सैन्येन, च. ३ सङ्ग्रामाय. ४ शत्रुसन्मुखगामीनः-शत्रुममि सामर्थ्येन गंता, ५ कृतस्य प्रतिकरणे प्रौढ., ६ क्षुद, प्र. ७ सुप्रासे, प्र. सुप्रातेः,प्र.

वासवः ॥ तृतीयपुरुषार्थाब्धि–पारीणत्वं स लब्धवान् ॥ ६१७ ॥ तस्यासन् द्विसहस्त्यूना । लक्षा स्फूर्जद्‌द्रया हयाः ॥ द्विसहस्री गजेंद्राश्च । रथाः पद्मास्त्वनेकशः ॥ ६१८ ॥ यौवनानंगशृंगारान् । शिशिराल्पीकृतौजसः ॥ नेतुं स्फूर्तिमिव स्फीतां । वसंतोऽथ समागमत् ॥ ६१९ ॥ जगच्छरव्यकरणा–त्याच्यपुष्पशरव्ययम् ॥ मत्वेव कुसुमास्त्रस्य । मधुस्तेने सुमोत्करान् ॥ ६२० ॥ मलयाहिविषव्याप्तः । किं ववौ तन्मरुत्तदा ॥ यदस्य स्पर्शतो मूर्च्छा–मानच्छुर्विरहातुराः ॥ ६२१ ॥ अस्त्यत्र नोत्तमा जाति–र्मान्याश्च मधुपायिनः ॥ इतीव न वसंतोऽभू–न्नवरं व्रतिनां प्रियः ॥ ६२२ ॥ अस्त्रस्तोममिव स्मारं । वसंतसुमनःस्रजः ॥ वनीपालोऽवनीपाल–स्योपायनमुपानयत् ॥ ६२३ ॥ वितीर्य नृपतिस्तस्मै । कनकं पारितोषिकें ॥ रिरंसया सरामः सन् । कृष्णवद्वनमाविशत् ॥ ६२४ ॥ पुष्पोच्चयपयःकेलि–प्रेंखाप्रेंखोलनादिभिः ॥ तत्राजेयश्चिरं रेमे । नंदने त्रिदशेंद्रवत् ॥ ६२५ ॥ नेत्रैकपेयं निर्मातुं । वनश्रीकमनीयकम् ॥ भ्राम्यन् शुश्राव भूमीशः । श्लोकमेकमिमं मुहुः ॥६२६॥ यत्र त्वमसि तत्रैव । तिष्ठंतीं जननीं निजाम् ॥ अदृष्ट्वैव यदश्नासि । तत्ते धिग्हंस ! हंसताम् ॥६२७॥ तच्छ्रुत्य नृपो दध्यौ । श्लोकेनानेन कोऽप्यसौ ॥ मामाचष्ट पुरेऽत्रैव । वसंतीं मम मातरम् ॥६२८॥ धिग्धिग्मामनिशं मत्तः । श्रिया मदिरयेव यः ॥ स्वमातुरपि नास्मार्षं । किमकार्षमहं हहा ॥ ६२९ ॥ आजीवितं सतां माता । भवतीति महद्वचः ॥ तस्मै जलांजलिर्दत्तो । मया विस्मृत्य मातरम् ॥ ६३० ॥ माता पिता कलादाता । भीतित्राता तथा प्रभुः ॥ येनैते

१ पारगंतत्वम्. २ लक्षा–शब्दः स्त्रीलिंगेऽप्यस्ति. ३ माघ–फाल्गुनौ. ४ विस्तृताम्. ५ चैत्र–वैशाखौ. ६ लक्ष्यम्. ७ विगमम्. ८ कामदेवस्य. ९ वसतः. १० वसंते. ११ ज्ञातिः, पक्षे–जाति (जाइ वृक्ष–) पुष्पाणि. १२ मद्यपायिनः, पक्षे, भ्रमराः. १३ स्मरसंबंधिनम्. १४ सश्लोकः, पक्षे, बलदेवयुक्तः. १५ नृत्यम्. १६ दोला.

न्यक्कृतास्तेन । सुकृतं न्यक्कृतं निजम् ॥६३१॥ तदैव नृपतिः प्रोचे । मंत्रिणं जननी मम ॥ पुरेऽस्ति क्वापि तामद्य । दृष्ट्वैवा-
श्नामि नान्यथा ॥ ६३२ ॥ वनक्रीडादिकं सर्वं । विहाय विषवन्नृपः ॥ स्वसौधमेत्य च प्रोचे । चरानिति चिरंतनान्
॥ ६३३ ॥ यमाद्वाहिर्याम्यदिशि । प्रष्टव्यो वाग्भटाख्यया ॥ पशुपालो भवत्सौधे । तनुजोऽजनि वा न वा ॥ ६३४ ॥
चरैस्तद्वाग्भटः पृष्टो । जगौ मेऽजनि नांगजः ॥ अस्त्वन्येकस्तु लब्धोऽभूत् । सोऽपि कुत्रापि जग्मिवान् ॥ ६३५ ॥ चरैस्त-
देत्य विज्ञप्तः । संशयालुरजासुतः ॥ पटहं वादयामास । मातृज्ञप्त्यर्थमित्यथ ॥ ६३६ ॥ अभिधत्ते वसंतीं यः । पुरेऽत्र नृप-
मातरम् ॥ विश्राणयति तस्येष्टं । यथेष्टं सैषं तुष्टहृत् ॥६३७॥ पटहे वाद्यमानेऽपि । कोऽपि नोवाच मातरम् । नृपस्तदपरि-
ज्ञानात् । खिन्नोऽप्यत्ति न सर्वथा ॥ ६३८ ॥ अभुंजानेऽथ भूजानौ । चिखिदे तत्परिच्छदः ॥ अदीप्यमाने दीपे हि । न
प्रकाशः प्रकाशभाग् ॥ ६३९ ॥ अथ स्त्री रोगिणी काचि—देत्य भूपं व्यजिज्ञपत् ॥ यदि त्वं मे गदं हंसि । तदा त्वज्ज-
ननीं ब्रुवे ॥६४०॥ आजेयस्तां मुदाऽऽचष्ट । दृष्टायां निजमातरि ॥ अहत्वा त्वद्गदं भद्रे ! । न पयोऽपि पिवाम्यहम्॥६४१॥
ततः सा वनिता कापि । गत्वा देवीव तत्क्षणम् ॥ गंगामानीय मातेय—मिति तस्मै समार्पिपत् ॥ ६४२ ॥ स्वपुत्रदर्शना-
देव । गंगायाः स्तनयुग्मतः ॥ स्तन्यमाविरभून्मूर्तं । प्रेमेव हृदयाद्वहिः ॥ ६४३ ॥ अजानतोऽपि भूजाने—र्जननीदर्शना-
दपि ॥ उद्धर्षच्छद्मना तेने—ऽभ्युत्थानमिव रोमभिः ॥ ६४४ ॥ स्तन्यच्युतिप्रत्ययतो । नृपो ज्ञात्वा स्वमातरम् ॥ उत्थाय
विधिवद्गोत्र—देवतामिव नेमिवान् ॥ ६४५ ॥ अप्राक्षीच्च क ? तातो मे । सा जगौ स्वर्गभागभूत् ॥ पुनः स पृष्टवान्

१ तिरस्कृताः. २ ददाति. ३ इच्छितवस्तु. ४ राजा. ५ आनन्दमिषेण.

साऽश्रुमिश्रमुखी प्राह । वत्स ! वेदविदां वरः ॥ धर्मोपाध्यायसंज्ञस्ते । तातो
मातः ! । पार्थक्यं कथमावयोः ? ॥६४६॥ नरकं मत्सुतो गंता । हहा राज्यभवांऽहसा
गंगाऽसि च प्रसूः ॥६४७॥ पिता त्वां जन्मलग्नेन । भूपं संभाव्य भाविनम् ॥ तदैव त्वां मया बलात् ॥६४९॥ युग्मम् ॥
॥ ६४८ ॥ एतत्संतानिनोऽप्येवं । निपतिष्यंति दुर्गतौ ॥ ध्यात्वेत्यत्याजयद्बाह्ये । पुनः पुण्यमिवात्मनः ॥ ६५० ॥ तन्निपीय नृप-
ततस्त्वं वृद्धवान् कस्य । वेश्मनीति न संविदे ॥ अद्य त्वां दृष्टवत्यस्मि । प्रैषीदंतःपुरांतरम् ॥६५१॥ अथाजेयः स्ववैद्येभ्यो । रोगिणीं
श्चित्ते । विमर्शन् कार्मिकीं गतिम् ॥ सत्कृत्य च सवित्रीं तां । क्रियतां क्षिप्रमौषधैः ॥ ६५२ ॥ तां निरीक्ष्य परीक्ष्यापि । ते सुराज्ञे व्यजिज्ञपन् ॥
तामदीदृशत् ॥ अचीकथच्च सज्जेयं । मांसखंडान्यनेकशः ॥ उद्वम्य विस्रगंधीनि
अंत्रशाटो बभूवास्याः साध्येयं तेन नैव नः ॥ ६५३ ॥ तदैव पुरतस्तेषां । तथाऽपि कृपया योग्यै-र्भैषजैरुपचर्यताम्
मृतप्रायेव साऽभवत् ॥ ६५४ ॥ पुनः प्रोचे नृपो वैद्या-नसाध्याऽस्ति यदप्यसौ ॥ सा मूर्च्छालाऽपतद् भुवि ॥ ६५६ ॥ नृपेण
॥ ६५५ ॥ तथा कृतेऽगदंकारै-र्नृपादेशवशंवदैः ॥ अत्युग्रौषधशोषेण । उल्लाघयिष्यते सेयं, कथमित्यातुरे
कार्यमाणैर-प्युपायैरतिशीतलैः ॥ कथंचिदपि चैतन्यं । सा प्रमीतेव नानशे ॥६५७॥ नरस्य रसना ऽऽमिषम् । यद्यस्यै
प्रभौ । वैदेशिको भिषक् कोऽपि, कुतोऽप्येत्यौषधं जगौ ॥ ६५८ ॥ अजादुग्धेन पुष्टस्य, न किं मया । इति हृष्टो नृपः शस्त्र्या,
दीयते तर्हि, स्यादवश्यमियं विरुक् ॥ ६५९ ॥ यद्येवं स्यादियं नीरुग्, लेभे तर्हि सहते जनहेतवे ॥६६१॥
स्वजिह्वां छेत्तुमुद्यतः ॥६६०॥ क्लिश्नाति स्वमपि प्रायः, साधुः परहितेच्छया। कर्पासो न कियत्कष्टं,

१ स्त्री. २ स्त्री. ३ सेयस्त्री कथं ? उल्लंघन प्रापयिष्यते—प्राप्स्यति वा—कथं निरामया भविष्यति इत्यर्थः.

यावच्छिनत्ति जिह्वाग्र—माजेयस्तावदंबरे । राजन् ! मा साहसं कार्षि—रित्युच्चैरुदितो ध्वनिः ॥ ६६२ ॥ ध्वन्यनंतरमेव द्रा—क्प्रादुरासीत्पुरः सुरी । रोगार्ता स्त्री च वैद्यश्च, तिरोऽभूतां पयोदवत् ॥६६३॥ संभ्रांतो भूधवो दध्यौ, क साऽऽर्ता स्त्री ? भिषक् क सः ? । कोऽयं दिव्यो ध्वनिः ? केयं ?, देवतेत्यद्भुतं किमु ? ॥ ६६४ ॥ सा देवी तमुवाचैवं, येयं चंद्रानना पुरी । अस्यधिष्ठायिनी तस्या—स्त्वय्याजन्मातिवत्सला ॥ ६६५ ॥ तादृशीभ्यो विपद्भ्यस्ते, प्रोद्धृतस्य मयाऽधुना । प्राज्यं राज्यं वितीर्यैत—च्चक्रे सत्त्वपरीक्षणम् ॥६६६॥ वत्सास्ति त्वयि तत्सत्त्व—मुपकारैकजीवितम् । जीवन्नपि विना येन, जनः स्यादपजीववत् ॥ ६६७ ॥ द्वात्रिंशल्लक्षणाधिक्यं, यत्सत्त्वस्याल्पमेव तत् । येन जीवति जीवोऽपि, ततोऽप्यधिकमस्त्यदः ॥ ६६८ ॥ तदिदं सुचिरं राज्यं, त्वं सत्त्वालय ! पालय । सात्त्विकानां च भूपानां, शिरश्चूडामणीभव ॥६६९॥ सा देवीत्याशिषं दत्त्वाऽ—भ्रच्छायेव तिरोऽभवत् । स्नानाद्याचर्य भुंक्ते स, भूपोऽपि सपरिच्छदः ॥ ६७० ॥ षड्भिः कुलकम् ॥ आश्रितः सात्त्विकीं वृत्तिं, सत्यभामाबलान्वितः । विष्णुवत्पालयन् लोकं, सोऽभवत् पुरुषोत्तमः ॥ ६७१ ॥ कदाचिद्गुरुसंपर्के, संपन्ने सिद्धिलग्नके । लेभे सम्यक्त्वमाजेय—श्चिंतामणिमिवाधनः ॥६७२॥ सम्यक्त्वं पालयन् शुद्धं, जैनं धर्मं प्रभावयन् । विस्तारयन् यशःस्तोमं, स महीं चिरमन्वशात् ॥६७३॥ अथ वार्धकवार्घिष्णु—भवनिर्वेदमेदुरः । विरज्यति स राज्यादा—वजासूनुर्मुमुक्षुवत् ॥ ६७४ ॥ ऐताः खला इव चला, विरसाः स्ववशा न हि । इत्यसौ नितरामासीत् । श्रीषु स्त्रीष्वप्यनादरः ॥ ६७५ ॥ एषां सतां परित्यागे, गुणः स्यादसतां तु न । अतः सतः स तत्याज, विषयान् विषसोदरान्

१ सत्य—वचनेम्, भा—दीप्तिः, मा—लक्ष्मीः, बलं—पराक्रमम्. २ श्रियः स्त्रियश्च. ३ विषयाणाम्. ४ विद्यमानानाम्. ५ अविद्यमानानां.

॥ ६७६ ॥ देहस्थामपि पंचाक्षीं, विजये नैव यद्यहम् । तर्हि मे शूरता केति, व्यजिगीषत तामसौ ॥ ६७७ ॥ ततो राज्यश्रियं दत्त्वा, सूनवे नयशालिने । अजापुत्रो गुरूपांते, संयमश्रियमाश्रयत् ॥ ६७८ ॥ कषाययामिकवृत्ता—द्भवकारागृहांतरात् । निर्यियासुरिव क्षिप्रं, स क्रियोद्धारमानशे ॥६७९॥ भवप्रेतवने मोह—पिशाचो मां छलिष्यति । इतीवागममंत्रं स, स्मरति स्म दिवानिशम् ॥ ६८० ॥ अदत्तं क्षीयते क्षिप्र—मिदं दत्तं तु वर्धते ॥ इति चिंताधिकं ज्ञानं, मुनिभ्यः स मुनिर्ददौ ॥ ६८१ ॥ कुशीलं नेहतेऽन्यापि, निर्वृत्तिः प्रेयसी किमु । इतीव स मुनिः शीलं, सलीलं पर्यशीलयत् ॥ ६८२ ॥ इदमेव भवांभोधि—पानेऽगस्तिमुनीयते । इति मत्वा स राजर्षि—स्तपस्तेपेऽतिदुस्तपम् ॥ ६८३ ॥ न विना भावनादूतीं, मुक्तिर्धत्तेऽनुकूलताम् । विमृश्येतीव स स्वांते, शान्ते तां पर्यभावयत् ॥ ६८४ ॥ इत्थं चतुर्विधं धर्मं, संयत्यपि गृहस्थवत् । चतुःप्रकारं संसारं, निष्पेष्टुमिव निर्ममे ॥ ६८५ ॥ इत्याचर्य चिरं चरित्रमसमं, साम्यं श्रयन्मानसे, प्रांते चानशनाद्विपद्य विधिना, स्वर्लोकमासाद्य च । आजेयः स बभार भाजनमुरुश्रेयःश्रियो वैभवं, तच्छातक्रतवं पचेलिमशुभप्राग्भारसज्जीकृतम् ॥ ६८६ ॥ ततश्च्युत्वा तस्मात् त्रिदशसदनात् प्राप्य नृभवं, श्रितो दत्तत्याख्यां शुभविभवसंभारसुभगः । अजापुत्रश्चंद्रप्रभजिनपदांते गणधरः, स्फुरित्वा कैवल्यं दधदतनु लेभे शिवसुखम् ॥ ६८७ ॥ एतामजासुतकथां विनिशम्य सत्त्वे, तत्संनिवेश्य हृदये स कुमारपालः । स्थानं निजं समधिगम्य दधिस्थलीं तां, धर्मार्थकामविवशान् दिवसान्निनाय॥६८८॥

इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते महाकाव्ये परमार्हतश्रीकुमारपालभूपालचरिते तज्जन्मवर्णनो नाम द्वितीयः सर्गः

१ विजेतुमैच्छत्. २ मध्यात्. ३ शुद्धक्रियाम् ४ प्राप—स्वीकृतवानित्यर्थः ५ चिंतयाधिकं, चिंतामणिरत्नादधिकं वा. ६ ब्रह्मरहितं पुरुषम्. ७ स्त्री. ८ सयत्-युद्धं तस्मिन्, पक्षे संयती—साधुः ९ गृहे स्थित इव, पक्षे श्रावकवत्. १० बभाज, प्र. ११ वै नवं प्र. १२ शतक्रतो-रिन्द्रस्येदं शातक्रतवम्.

## ॥ अथ तृतीयः सर्गः प्रारभ्यते ॥

अथ श्रीसिद्धराजस्य, राज्यं पालयतः सतः । भूयांसोऽपि सुखेनेयु—र्वासरा इव वत्सराः ॥ १ ॥ परं गृहस्थधर्मद्रोः, फलं नापत्यमाप सः । सशल्य इव तेनांत—र्महतीमधृतिं दधौ ॥ २ ॥ दध्यौ च मेऽभवन्मूर्ध्नि, पलितंकरणी जरा । पुत्रं नाद्यापि पश्यामि, निष्पुण्य इव सन्निधिम् ॥ ३ ॥ कुलं समृद्धमप्येत—न्निःश्रीकं तनयं विना । न शोभते सरः पूर्ण—मपि निष्कमलाकरम् ॥४॥ दिनं दिनकरं विना, वितरणं विना वैभवं, महत्त्वमुचितं विना, सुवचनं विना गौरवम् । सरः सरसिजं विना, धनभरं विना मंदिरं, कुलं तनुरुहं विना, श्रयति नैव सश्रीकताम् ॥ ५ ॥ संसारेऽस्मिन् द्वयं सारं, विभवस्तनयोऽपि च । तेनैकेनापि हीनस्य, जन्मिनो जन्म निष्फलम् ॥ ६ ॥ जलबुद्बुदवद् विद्युद्—द्युतिवत्सांध्यरागवत् । कुलं नश्यति निष्पुत्रं, सहसाऽपि हहाऽङ्गिनाम् ॥ ७ ॥ पुत्रार्थं पार्थिवस्तेने, प्रयोगान् विविधांस्ततः । तथापि न स तस्यासी—द्भाग्यायत्ता हि सिद्धयः ॥ ८ ॥ अनपत्यतया दून—स्तदा श्रीसिद्धभूधवः । हेमाचार्यं सहाकार्य, नंतुं तीर्थानि चेलिवान् ॥ ९ ॥ पादचारिणमालोक्य, चौलुक्यक्षितिभृत् प्रभुम् । सुखासनाधिरोहार्थ—मत्यर्थमुपरुद्धवान् ॥ १० ॥ गुरुर्जगदिवान् राजन् [1], यतीनां नैव युज्यते । परपीडाकरत्वेन, वाहनाद्यधिरोहणम् ॥ ११ ॥ पद्भ्यां गलदुपानद्भ्यां, संचरंति दिवाऽत्र ये । चारित्रिणस्त एव स्यु—र्न परे यानयायिनः ॥ १२ ॥ जानाना जीवलोकस्य, सुखदुःखं प्रियाप्रियम् । कृपालवः कथं कुर्यु—र्जैनाः पीडां परात्मनाम् ॥ १३ ॥ यानानादानतो दूनः, कोपकंप्रो नृपः प्रभुम् । महात्माऽपि जडोऽसि त्व—मि-

---

१ सेवधिं, प्र. २ समूहम्. ३ सचरंते प्र.

त्युदीर्य पुरो ययौ ॥ १४ ॥ त्रीण्यहानि पथि क्वापि, समगंस्त न सूरिराट् । अमंस्त तेन तं रुष्टं, स्वचित्ते क्षितिवल्लभः॥१५॥
तुरीयेऽहनि सूरीशं, प्रसिसादयिषुः स्वयम् । नृपो गुरुदरद्वार—मुपासक इवासदत् ॥ १६ ॥ बहिःस्थितेन श्रीसिद्ध—
क्ष्माभृता सूरिरैक्ष्यत । कांजिकेन समं भैक्षं, भुंजानः सपरिच्छदः ॥ १७ ॥ तप्यंतेऽमी तपः कीदृ—ग्महात्मानो यदन्व-
हम् । अश्नंत्यन्नं जलक्लिन्नं, मार्गे चांह्रिप्रचारिणः ॥ १८ ॥ तदन्यजनसामान्य—धिया ऽमी माननोचिताः । नापमान्या
मया किंतु, मान्या एव महेशवत् ॥१९॥ विमृश्येति नृपः सूरेः, क्रमौ नत्वाऽब्रवीत्प्रभो ! । यानानाश्रयणे रोषा—न्मयोचे
यत्क्षमस्व तत् ॥ २० ॥ सुखासनं मयाऽऽनीतं, यत्त्वं नादृतवांस्तदा । तेनोक्तस्त्वं जडोऽसीति, मया नाभक्तितः पुनः
॥ २१ ॥ अध्वन्यपि सदाचारा—ध्वन्य ! यन्मे न संगतः । तेन त्वां रुषितं ज्ञात्वा-ऽनुनेतुं प्राप्तवानहम् ॥ २२ ॥ ततः
प्रभुर्बभाषे तं, किमागः प्रकृतं त्वया । यत्क्षम्यते मया देव ! त्वादृशा हि न सागसः ॥ २३ ॥ यच्च वर्त्मनि न क्वापि,
देवस्य समगंस्यहम् । कोपस्तत्र न मे किंतु, नार्थः पार्थिवदर्शने ॥ २४ ॥ पद्भ्यामध्वनि संचरेय, विरसं भुंजीय भैक्षं सकृ-
ज्जीर्णं वासो वसीय, भूमिवलये रात्रौ शयीय क्षणम् । निस्संगत्वमधिश्रयेयं, समतामुल्लासयेयानिशं, ज्योतिस्तत्परमं दधीय
हृदये, कुर्वीय किं भूभुजा ? ॥ २५ ॥ जीवन्मुक्तवदत्यंतं, तमलोलुपमानसम् । सूरिं प्रणम्य भूमीशो, निजवासमशिश्रि-
यत् ॥ २६ ॥ ततः पुरस्सरीकृत्य, गुरुं जंगमतीर्थवत् । विमलाचलमारुक्षत्, सिद्धराट् सपरिच्छदः ॥ २७ ॥ कल्याणी-
भक्तिरभ्यर्च्य, तत्र श्रीनाभिनंदनम् । निस्सीमं कलयामास, लोचनेन जनुःफलम् ॥ २८ ॥ पश्यन्नस्तनिमेषाभ्यां, दृग्भ्या-

१ तिसक्खंडं निवसीय, प्र, सिच्-वस्त्रं तस्य खंडस्तम्. २ श्रयाय-प्र. ३ स लोचनजनु फलम्, प्र.

मादीश्वरं मुहुः । स द्वेधापि महानंद—मंदिरं स्वमविंदत ॥ २९ ॥ हेमाचार्योऽपि तुष्टाव, श्रीनाभेयं नवैः स्तवैः । भक्ति-वल्लीसमुद्भूत-प्रसूनस्तवकैरिव ॥ ३० ॥ तत्र तीर्थेऽर्हतां प्रेक्ष्य, माहात्म्यं वागगोचरम् । चौलुक्यः प्रापदास्तिक्यं, परमं जिनशासने ॥ ३१ ॥ ईदृशे यदि तीर्थेऽस्मिन् , स्वयं न श्रीर्निवेश्यते । तदा प्रेत्य कथंकारं, सुराजंभवमंगिभिः ॥ ३२ ॥ विचार्येति नृपोऽगण्य-पुण्यपण्यसमीहया । ददिवान् द्वादशग्रामीं, श्रीनाभेयार्चनाकृते ॥३३॥ युग्मम् ॥ पीयूषरसदेशीयैः, रश(स)नैरशनैरसौ । अवारितानि सत्राणि, प्रावर्तत भूरिशः ॥ ३४ ॥ नूतनक्षौमपृथ्व्योघ—हास्तिकाश्वीयदानतः । सोऽर्थकान् पार्थिवीचक्रे, कटरेऽस्य वदान्यता ॥३५॥ अवतीर्य ततस्तीर्था—त्सिद्धेशो रैवताचलम् । गत्वा प्रणेमिवान्नेमि-देवं मदनसूदनम् ॥ ३६ ॥ श्रीखंडकुसुमस्वर्ण—रत्नाद्यैर्नेमिनायकम् । पूजयामासिवानात्म-पुपूजयिषयेव सः ॥ ३७ ॥ आसने समुपानीते, विनीतैर्देवसेवकैः । भक्त्या तत्सिद्धराट् त्यक्त्वा, सर्वाध्यक्षमिदं जगौ ॥ ३८ ॥ अस्मिंस्तीर्थे नृपेणापि, नोपवेष्टव्यमासने । मंचे न शेयं भुक्तौ च, न धार्याऽङ्गुणिकाऽग्रतः ॥ ३९ ॥ प्रसवो न स्त्रिया कार्यो, मथनीयं च नो दधि । प्रतिपाल्या व्यवस्थेयं, धर्मास्थाऽऽधायिभिर्नृभिः ॥ ४० ॥ युग्मम् ॥ उल्लसत्कवितावल्ल्याः, फलानीव जिनेशितुः स्तोत्राण्युपायनीचक्रे, हेमाचार्योऽपि भक्तितः ॥ ४१ ॥ उज्जयंतादथोत्तीर्य, देवपत्तनमेत्य च । नत्वा सोमेश्वरं प्राप—त्कोटीनारपुरं नृपः ॥४२॥ विश्वांबामिव तत्रांबां, भक्त्याऽभ्यर्च्य भुवः प्रभुः । अपत्यचिंतासंतप्तो, हेमाचार्यं व्यजिज्ञपत् ॥ ४३ ॥रत्नस्वर्णगजाश्वादि, सर्वमप्यस्ति मद्गृहे । तनुजः केवलं नास्ति, राज्यश्रीवल्लिपादपः ॥ ४४ ॥ प्रसाद्य तदसा-

१ नेत्रानन्दं- विपयेन परत्र मोक्षप्राप्त्या च महाश्चासौ आनन्दश्च महानन्दस्तस्य मंदिरं-स्थानम्. २ आत्मानम्. ३ आत्मनां.

वंबा, देवतेत्यनुयुज्यताम् । भविता मे सुतो नो वा, मत्पश्चात् कश्च भूपतिः ॥ ४५ ॥ ततस्तेनेति विज्ञप्तः, सूरिस्त्रिभिरु-
पोषितैः । आराध्याऽम्बां तदादिष्ट—माचष्टेति महीभृतम् ॥ ४६ ॥ अपत्यं नास्ति ते देव !, कृतैरौपयिकैरपि । यस्तु
त्वामनु भूमीभुग्, भावी तमवधारय ॥ ४७ ॥ कर्णदेवांगजक्षेम—राजपुत्रः पवित्रधीः । देवप्रसाद इत्यासी–द्दधिस्थल्यां
कृतस्थितिः ॥ ४८ ॥ तत्पुत्रोऽस्ति त्रिभुवन—पालः सत्त्वैकसेवधिः । यद्दोर्विध्यस्थले शौर्य—गजः संक्रीडतेऽनिशम् ॥ ४९ ॥
संति तत्तनुजन्मानो—ऽमानोदात्ततमाशयाः । श्रीकुमारमहीपाल—कीर्तिपालौ इति त्रयः ॥ ५० ॥ कुमारपालस्त्वद्राज्ये,
भविता विश्वविश्रुतः । यः संप्रतिरिवावन्त्यां, जैनं धर्मं तनिष्यति ॥ ५१ ॥ इति श्रीसूरिवाक्येन, प्रासेनेव हतो हृदि । क्ष्मापः
प्राप संताप-मवाज्ञ(ज्ञा)नसगोचरम् ॥ ५२ ॥ ततो यात्रापवित्रात्मा, श्रीगूर्जरधरेश्वरः । श्रीहेमसूरिणा सार्धं, राजधानीं
निजां ययौ ॥ ५३ ॥ अथांबादेशसंवाद—चिकीः श्रीकर्णनंदनः । पुत्रार्थं भाविभूपं च, पप्रच्छ गणकाग्रिमान् ॥ ५४ ॥ तेऽपि
तात्कालिकं लग्न-तत्त्वं विच्वा तदुत्तरम् । देव्यादेशवदाचख्यु-र्भाविज्ञानं हि नान्यथा ॥ ५५ ॥ देवीनैमित्तिकोक्त्याऽपि,
संपन्नाप्रत्ययो नृपः । आरिराधयिषामास, सोमेशं सुतकाम्यया ॥ ५६ ॥ प्रचरन् पादचारेण, कापोतीं वृत्तिमुद्वहन् ।
केदारपुत्रवत् कर्ण—पुत्रोऽगाद्देवपत्तनम् ॥ ५७ ॥ स्नात्वा प्रभासे सस्त्रीको, भूपस्त्र्यहमुपोषितः । पुष्पाद्यैः पूजयित्वोच्चैः,
सोमनाथमतोषयत् ॥ ५८ ॥ अंगरंगत्प्रभापूरै-स्तमिस्रामपि घस्रयन् । प्रत्यक्षीभूय सोमेशः, किं ? स्मृतोऽसीति तं जगौ

१ पृच्छ्यताम्. २ संप्रतिनामा-राजा. ३ कुंतेन. ४ ज्योतिःशास्त्रम् ५ उञ्छवृत्तिम्—अबाधितस्थानेषु पथि क्षेत्रेषु अप्रतिहतावकाशेषु यत्र यत्र औपधयः (धान्यादि) विद्यंते तत्र तत्र अंगुलीभ्यां एकैकस्य कणादेः ( कणस्य ) विक्रीतावशिष्टस्य कणशः आदानेन वृत्तिं कुर्वाणः इत्यर्थः. ६ कार्तिकेयवत्.

॥ ५९ ॥ नत्वा व्यजिज्ञपद् भूपो, वार्धकं मे समागतम् । परं नैकोऽप्यभूत् पुत्रः, स्ववंशे यो ध्वजायते ॥ ६० ॥ देव ! त्वत्सेवकस्यापि, या ममेयमपुत्रता । सुरद्रुमाश्रितस्यापि, पुंसः सा *ध्यानहीनता ॥ ६१ ॥ सद्यः प्रसद्य तद्देहि, मह्यमेकं तनूरुहम् । तराविव लता यत्र, राज्यश्रीरवतिष्ठते ॥ ६२ ॥ ध्यात्वा सोमेश्वरोऽवोच—त्तव नास्त्येव संततिः । राज्यार्हस्तु पुराऽप्यस्ति, कुमारः स्फारविक्रमः॥६३॥पुनः प्रोचे नृपो दीन—स्त्वं श्रुतोऽभीष्टदायकः। दत्से न पुत्रमप्येकं, कीदृक् तेऽभीष्टदातृता ? ॥ ६४ ॥ पुत्राप्तियोग्यता नास्ति, तवाहं करवै किमु ? । तामंतरेण निर्मातुं, न कोऽपि किमपि क्षमः ॥ ६५ ॥ इत्युक्त्वाऽन्तर्हिते देवे, सिद्धेशः खेदमेदुरः । स्वं निंदंस्तनयाप्राप्त्या, निजमाजग्मिवान् पुरम् ॥६६॥ ततो देवीनिमित्तज्ञदेवादेशैर्विशांपतिः । कुमारपालं राज्यार्हं, मत्वा दिद्वेष तं प्रति ॥ ६७ ॥ पित्रादीन् घातयित्वा तं, घातयामीति बद्धधीः । अघातयत् त्रिभुवन—पालं स प्रेष्य घातकान् ॥ ६८ ॥ और्ध्वदेहिकमाधाय, पितुस्तद्घातकारणम् । कुमारो राजवर्गीणान्, प्रवीणान् पृष्टवान् रहः ॥ ६९ ॥ केनापि परमाप्तेन, घातहेतौ निवेदिते । चिंतयामास चित्तेऽसौ, निर्विण्णात्मा मुनीशवत् ॥ ७० ॥ धिग् राज्यं यत्कृते मूढै—र्वीरंभोगीणबाहवः । पितृभ्रातृतनूजाद्या, विध्वंस्यंते विरोधिवत् ॥ ७१ ॥ ये श्रियं शाश्वतीं कर्तु—मीहंते बंधुघाततः । वल्लीमुल्लासयंते ते, दीव्यद्दावाग्नियोगतः ॥ ७२ ॥ वरं दौस्थ्यं, वरं भैक्षं, वरं प्राणव्ययोऽपि च । न तु श्रियः स्वकुल्यानां, घातसंजातपातकाः ॥ ७३ ॥ अधःपातोऽवश्यं भवति गगनाग्रादिव यतो, महान् क्लेशो यस्मिन् विलसति 'युधीव' प्रतिपदम् । न यत्स्थैर्यं 'योषिन्मन इव' निधत्ते क्षितिधवा, बुभुक्षंते राज्यं

* भोजनराहित्यम्. १ वीराणामुचित. भोगः-वीरभोगस्तस्मै हिता -वीरभोगीणाः ईदृशा बाहवो येषा ते. २ राज्यात्. ३ राज्ये. ४ राज्यम्. ५ भोक्तुमिच्छन्ति.

निजकुलजघातेन तदपि ॥७४॥ रिपवंति परे किंचि—त्पातिपद्यैव कारणम् । दैववत्तद्विनैवायं, सिद्धराजो दुराशयः ॥७५॥ यावदेष स्फुरद्द्वेषो, न घातयति मामपि । तावत् परिच्छदं मुक्त्वा, क्वापि त्राये स्वजीवितम् ॥ ७६ ॥ विमृश्येति कुमारोऽगाद्—गूढमंत्रविधित्सया । 'वंधोरिव' स्वसृपतेः, कृष्णदेवस्य सन्निधिम्[1] ॥ ७७ ॥ अभिप्रायं प्रकाश्य स्व—मिदानीं करवाणि किं ? । इति पृष्टस्तमाचष्ट, कृष्णदेवः पटिष्ठधीः ॥ ७८ ॥ विधौ[2] वक्रे स्थिते मूर्ध्नि, मन्ये सोऽपि महेश्वरः । भिक्षयाऽऽत्मंभरिर्जज्ञे, का कथाऽन्यस्य देहिनः ॥ ७९ ॥ प्रसीदति विधिर्याव—त्तावत्स्वीयं परिच्छदम् । धीमन्मुक्त्वा दधिस्थल्यां, त्वं देशांतरमाश्रय ॥ ८० ॥ प्रभाकरोऽपि निस्तेजाः, श्रित्वा देशांतरं निशि । प्रातरोजायमानः सन्, पुनः स्वं पदमश्नुते ॥ ८१ ॥ अन्नत्यं राजसूत्रं त्वां, ज्ञापयिष्याम्यहं चरैः । वेषांतरेण त्वं भ्रांत्वा, नयस्व कतिचित्समाः[3] ॥८२॥ ततो मुक्त्वा दधिस्थल्यां, स्वीयां भोपलदेप्रियाम् । भ्रात्राद्यं परिवारं च, कुमारो निरगान्निशि ॥ ८३ ॥ जटाधरत्वमाश्रित्य, स्वं कुत्राप्यप्रकाशयन् । धूर्तवत्सोऽभ्रमद् भूमौ, कौतुकान्यवलोकयन् ॥ ८४ ॥ वधाय मृगयित्वा त—मलब्ध्वा चाथ सिद्धराट् । भटानादिष्टवान् ज्ञाप्यः,कुमारोऽत्रागतो मम ॥८५॥ कालं कियंतं स भ्रांत्वा, परिव्राजकमध्यगः । राज्यस्वरूपं जिज्ञासुः, श्रितोऽणहिल्लपत्तनम् ॥ ८६ ॥ राजकीयैर्भटैर्दाक्ष्या—दुपलक्ष्य सपद्यपि । रिपुस्तेऽत्रागतोऽस्तीति, न्यवेद्यत महीभृते ॥ ८७ ॥ तद्वधोपायमाध्याय[4], स्वपितृश्राद्धवासरे । सर्वान्निमंत्रयामास, जटिलान् कुटिलो नृपः ॥ ८८ ॥ कुमारोऽपि समायासी—ज्जटाधारी तदंतरे । सैद्धराजैर्भटैर्धूर्तै—र्ज्ञातोऽसीत्यविदन् हृदि ॥ ८९ ॥ एकैकशः क्रमौ तेषां, क्षालयन्

१ समीपम्. २ चंद्रे—पक्षे-भाग्ये. ३ वर्षाणि. ४ विचिन्त्य.

द्विद्बुमुत्सया । ऊर्ध्वरेखादिभिश्चिह्नैः, कुमारं ज्ञातवान्नृपः ॥९०॥ दृष्ट्याऽतिक्रूरया पश्यन्, काश्यपीशस्तदिंगितैः । विदांचक्रे कुमारेण, ज्ञातवानेष मामिति ॥ ९१ ॥ घातयिष्यामि भुक्त्यूर्ध्व-मिति ध्यायति भूधवे । भुक्त्वा पलाय्य यामीत्थं, ध्यायन् सोऽत्तुं निषेदिवान् ॥ ९२ ॥ धौतपोतसमाकृष्ट्यै, कोशावासं श्रिते नृपे । भुक्त्वाऽनेशत्कुमारो द्राग्, वांतिव्याजेन तद्गृहात् ॥ ९३ ॥ कोशागारान्नृपोऽभ्येत्य, जटिभ्यः सिचयान् ददत् । तमप्रेक्ष्य क्रुद्धाध्मातः, सेनान्यं सहसाऽऽदिशत् ॥ ९४ ॥ इतः कुमारो नंष्ट्वाऽगा—त्तं जीवंतमिहानय । नो चेत्त्वां तत्पदे नेष्ये, सद्यः कीनाशदासताम् ॥ ९५ ॥ स्वाम्यादेशात् स सेनानीः, ससैन्यः समवर्तिवत् । आत्तां कुमारपालेन, दिशं दैववशाद्ययौ ॥ ९६ ॥ भूयोभिरिव पक्षींद्रैर्वेगवातातिपातिभिः । गच्छंस्तुरंगमैः प्राप, तत्पृष्ठं स चमूपतिः ॥ ९७ ॥ कुमारोऽपि रजःपूरं, हयानां हेषितान्यपि । दृष्ट्वा श्रुत्वा च वेत्ति स्म, पृष्ठे सैन्यसमागमम् ॥९८॥ संभ्रांतः प्रेक्षते यावत्, स पश्चात्तावदैक्षत । उद्वेलमिव पाथोधिं, सैन्यमायांतमंतिकम् ॥ ९९ ॥ किं करोमि ? क्व गच्छामि ? प्रविशामि क्व ? वेति सः । आकुलोऽभूत्तदालोका—न्मार्यमाण इव स्वतः ॥ १०० ॥ त्रस्तैणवद्दिशः पश्यन्, सोऽपश्यद्बदरीवणे । प्राग् राशीकृततत्पत्र—जालं हालिकमेककम् ॥ १०१ ॥ कुमारो हालिकं स्माह, पृष्ठतो नृपसैनिकाः । निर्मंतुं हंत मां हंतु—मायांति यमदूतवत् ॥ १०२ ॥ तदाहत्य दयालुस्त्वं, क्षिप्त्वाऽस्यां पत्रसंहतौ । त्रायस्व मां महत्पुण्यं, भावि ते तापसावनात् ॥ १०३ ॥ श्रुत्वा तत्सकृपः सोऽपि, मा स्म भैषीरिति ब्रुवन् । क्षिप्त्वा तं तत्र पार्श्वेऽस्था—दातुरे को हि नोपकृत् ॥१०४॥ उपरिष्टादधस्ताच्च, कंटकाग्रैररुंतुदैः । दूयमानः

१ शत्रुं ज्ञातुमिच्छया. २ वस्त्राणि. ३ यमदासताम्. ४ यमवत्. ५ गरुडैः, रेवंतैरिति प्रत्यंतरे. ६ मर्मपीडकैः.

स दृग्द्वंद्वं, निमील्य मृतवत्स्थितः ॥ १०५ ॥ तावत्ससैन्यः सेनानी—स्तत्पदन्यासदर्शनात् । तं प्रदेशं तमन्वागा—ज्जीवं स्वकृतकर्मवत् ॥ १०६ ॥ तदग्रतः पदं तस्या—पश्यन् क्रुद्धश्चमूपतिः । त्रिनेत्र इव दुष्प्रेक्षः, प्रश्नयामास हालिकम्॥१०७॥ रे त्वयाऽत्र युवा कश्चि—त्पीवरांसो महाभुजः । जटी गच्छन् पथाऽनेन, प्रेक्षांचक्रे न वा वद ॥ १०८ ॥ स प्रोचे वदरीभ्योऽहं, पत्राण्येतानि पातयन् । अद्राक्षं नैव तादृक्षं, कंचिद्व्यग्रः स्वकर्मणा ॥ १०९ ॥ ततः प्रेष्य चतुर्दिक्षु, स सैन्यांस्तं निरीक्षितुम् । बंभ्रमीति स्म तद्देशे, भवे जीव इव स्वयम् ॥११०॥ भ्रमं भ्रमं समंतात्ते, श्रांताः सर्वेऽपि सैनिकाः । सेनान्ये कथयामासु—र्न प्राप्तः क्वाप्यसाविति ॥१११॥ व्यावृत्त्याथ चमूनाथो, भीत्या स्तेन इवातुरः । सर्वमुर्वीभृतेऽशंस—त्सोऽप्यखिद्यत निर्भरम् ॥ ११२ ॥ प्रवृत्तिमस्य यः कश्चि—दानेता तस्य वांछितम् । धनं दाताऽहमित्युक्त्वा प्रैषीद् भूपोऽमितचरान् ॥ ११३ ॥ इतो नृपबले तस्मि—न्निवृत्ते पत्रमध्यतः । रात्र्यां प्रहरमात्र्यां तं, हालिको निरकाशयत् ॥ ११४ ॥ कंटकक्षतसर्वांग—क्षरद्रुधिरधोरणिः । द्रवद्धातुरसाश्लिष्ट—शैलवत्स तदाऽशुभत् ॥ ११५ ॥ तदोन्मील्य दृगंभोजे, जीवलोकं विलोकयन् । स शूनोन्मुक्तपशुवत्, स्वं जीवंतममन्यत ॥ ११६ ॥ कुमारो हालिकं प्रोचे, स्वस्य जीवातुमातुरः[3] । भवत्सहायकादस्मि छुटितोऽद्य द्विषद्बलात् ॥ ११७ ॥ रक्षित्वा मामितः कृच्छ्रात्, किं नैवोपकृतं त्वया । उपकारेषु यन्मुख्यं, प्राणिनः प्राणरक्षणम् ॥ ११८ ॥ जीवदातुर्भवतोऽह—मनृणः स्यां न यद्यपि । तथाप्युपकरिष्यामि, समये त्वां स्वबंधुवत् ॥ ११९ ॥ इत्युक्त्वा भीमसिंहेति—संज्ञां तस्यावधार्य च । कुमारः स कृतज्ञाना—मग्रणीस्तं विसृष्टवान् ॥१२०॥

१ पुनः पुनरतिशयेन वा भ्राम्यति. २ प्राणिवधस्थानोन्मुक्तपशुवत्. ३ जीवनौषधिं, जीवस्यमातुरेः प्र. ४ अवधाय च. प्र.

भद्राकृत्य जटाः सर्वा, वेषांतरधरस्ततः । संगंतुं स्वपरीवारं, स प्रतस्थे दधिस्थलीम् ॥ १२१ ॥ पथि गच्छंस्तरुच्छाये, स स्थितः क्वाप्यलोकत । आकर्षंतं मुखेनाखुं, मुद्रां रूप्यमयीं विलात् ॥ १२२ ॥ आकर्षंत्येष कियती—रिति यावत्स पश्यति । मूषकस्तावदाकार्षी—न्मुद्राणामेकविंशतिम् ॥ १२३ ॥ हर्षात्तद्दर्शनोत्पन्ना—दूर्ध्वीभूय मनाग्मुहुः । तमाखुं प्रेक्ष्य नृत्यंतं, कुमारः स व्यचारयत् ॥ १२४ ॥ नो भोगो, न गृहादिकार्यकरणं, नो राजदेयं किम—प्यन्यस्यापि न सत्कृतिर्न सुकृतं, सत्तीर्थयात्रादिकम् । यद् गृह्णंति तथापि लोलुपधियः सूच्योननाद्या धनं, तन्मन्ये भुवनैकमोहनमहो नास्मात्परं किंचन ॥ १२५ ॥आसित्वा च शयित्वा च, मुद्राणामुपरि क्षणम् । एकां चादाय तन्मध्या—दुन्दुरुर्विलमाविशत् ॥ १२६ ॥ शेषा मुद्राः समादाय, कुमारे निभृते सति । अप्रेक्ष्य ताः पुरः सद्यो, विपेदे मूषकोऽर्तिभाक् ॥ १२७ ॥ विपन्नं तं तथा प्रेक्ष्य, किमकारि मया हहा । सुचिरं परितप्येति, कुमारः प्रस्थितः पुरः ॥ १२८ ॥ त्रिदिनीं भोजनाभावात्, क्षामकुक्षिस्तपस्विवत् । अतुच्छमूर्च्छया मील—न्नयनः सोऽहिदष्टवत् ॥१२९॥ श्वशुरावासतो वेश्म, प्रयांत्या पैतृकं पथि । रथाधिरूढया वध्वा, प्रेक्षामासे कयाचन ॥१३०॥ युग्मम् । तं तथा दुःस्थमालोक्य, दयालुहृदया सती । भ्रातृवात्सल्यमुच्छाल्य, स्वं रथं साऽध्यरूरुहत् ॥ १३१ ॥ कर्पूरपूरसौरभ्य—शुभं शालिकरंभकम् । अभोजयच्च दौःस्थ्येऽपि, दैवं चिंतापरं ध्रुवम् ॥ १३२ ॥ उदुंबराभिधे ग्रामे, देवसिंहतनूरुहाम् । नाम्ना देवश्रियं तां स्त्रीं, ज्ञात्वा स्वस्योपकारिणीम् ॥१३३॥ मम राज्यक्षणे भग्नि! कर्तव्यस्तिलकस्त्वया । इत्युदीर्य कुमारोऽगा—च्छ्रिया स्थूलां दधिस्थलीम् ॥ युग्मम् ॥१३४॥

१ मीलितुम् २ मूषकायाः. ३ गुप्ते जाते.

राड्भटैः पूर्वमायातै—स्तत्र दृष्ट्वा तमागतम् । कुमारोऽत्रागतोऽस्तीति, स्वनाथाय न्यवेद्यत ॥ १३५ ॥ जिघातयि-
षया तस्य, प्रहितं सिद्धभूभुजा । सैन्यं तत्र समायासीद्—धूलिच्छन्नार्कदीधिति ॥ १३६ ॥ तस्यां पुर्यां चतुर्दिक्षु, वेष्टि-
तायां द्विषद्भटैः । शशवत् श्वानमंडल्यां, सोऽभून्नंष्टुमनीश्वरः ॥ १३७ ॥ पचंतमिष्टका दृष्ट्वा, कुलालं सज्जनाह्वयम् ।
कुमारोऽर्थितवानेवं, लायस्वात्र निवेश्य माम् ॥ १३८ ॥ सज्जनः सज्जनत्वाय, स्पृहयालुर्निधानवत् । इष्टकापाकमध्ये तं,
निक्षिप्यास्थात्तदंतिके ॥ १३९ ॥ समंतादिष्टकाव्रातै—र्वेष्टितांगोऽतिकष्टभृत् । निरुच्छ्वासतया सोऽभू—त्तत्र जीवन्मृतो-
पमः ॥ १४० ॥ समस्तायां दधिस्थल्यां, चैत्यारामम‍ठेषु च । अन्विष्य तमलब्ध्वा च, न्यवृतत्सिद्धराड्बलम् ॥ १४१ ॥
ततः कृष्ट्वा कुमारं तं, वेश्मानीय च सज्जनः । स्नपयित्वाऽशनं रम्यं, भोजयामास मित्रवत् ॥ १४२ ॥ विश्वाससद्माऽस्त-
च्छद्मा, द्वितीयमिव जीवितम् । समगंस्त कुमारस्य, वयस्यस्तत्र बोसरिः ॥ १४३ ॥ आसयित्वा निशीथिन्यां, सज्जनं तं
च बोसरिम् । कृतज्ञतोचितां वाचं, कुमारः प्रोचिवानिति ॥ १४४ ॥ मृत्योरिवास्माद् द्विट्सैन्या—त्त्वया सज्जन ! रक्षता ।
'तातेनेव' पुनर्जन्म, मह्यं संप्रत्यदीयत ॥ १४५ ॥ द्वावेव पुरुषौ लोके, धरणीधरणोद्धुरौ । उपकर्ता कृतज्ञश्च, शेषास्त-
द्भारकारणम् ॥ १४६ ॥ केचिन्नाम्ना गुणैः केचिद्, भूयांसः संति सज्जनाः । द्विधा पुनस्त्वमेवैकः, सज्जनोऽस्यधुना
ननु ॥ १४७ ॥ गूर्जरेंद्रवदद्यापि, दैवं मे प्रातिकूलिकम् । प्राणप्रणाशकं क्लेशं, यद्ददाति पदे पदे ॥ १४८ ॥ तत्कुटुंब-
मितोऽवंतीं, सज्जन ! त्वं नयस्व मे । अहं तु सुहृदानेन, युक्तो देशांतरं श्रये ॥ १४९ ॥ इति मंत्रयतस्तस्य, खाट्कारादिव
वाक्यतः । सज्जनांबाजनकयो—र्निद्राऽनेशत्तमां तदा ॥ १५० ॥ तौ रात्रिजागरोद्विग्नौ, द्विष्टाविव जजल्पतुः । मुधा जाग-

र्यथाऽनायौं, नयेथे किं निशीथिनीम् ॥ १५१ ॥ वोसरे ! किमसौ भूभृद्—भूत्वा ते लाटमंडलम् । दाता ? सज्जन ! तुभ्यं
किं, चित्रकूटस्य पट्टिकाम् ॥ १५२ ॥ युवां न स्वपितं कस्मा—न्निश्चिंतौ नरनाथवत् । अस्त्येतस्येव कर्तव्यो, मंत्रः किं ?
युवयोरपि ॥ १५३ ॥ तद्वाक्यमित्थमाकर्ण्य, शकुनग्रंथिमंचले । वध्वा च भिन्नमर्मेव, कुमारो ध्यातवान् हृदि ॥ १५४ ॥
दारिद्र्यमेव दौर्भाग्यं, देहिनां यदधिष्ठितः । जल्पन्नपि जनोऽन्येषां, भवत्यरिरिवाप्रियः ॥ १५५ ॥ गुणज्ञोऽपि कृतज्ञो-
ऽपि, कुलीनोऽपि महानपि । प्रियंवदोऽपि दक्षोऽपि, लोकंप्रीणो न निर्धनः ॥ १५६ ॥ सज्जनेन सहावंर्ती, कुटुंबं स्वं
प्रहित्य सः । स्वेन मूर्त्यंतरेणेव, समं वोसरिणाऽचलत् ॥ १५७ ॥ स भ्राम्यन् प्रथमे घस्रे, क्वाप्यनासादिताशनः । द्वितीये
दिनतारुण्ये, ग्रामं कंचित्समासदत् ॥१५८॥ क्षुधितस्तृषितश्चोचे, चौलुक्यो वोसरिं द्विजम् । उपायश्चिंत्यतां कश्चि—द्यथा
संपद्यतेऽशनम् ॥१५९॥ द्विजो जजल्प जननी, भोजनं मे प्रदास्यति । सोऽपृच्छत् क्वास्ति[1] ? सा तत्र, भिक्षैवेत्यवदत् सुहृत्
॥१६०॥ सर्वत्र सुलभाऽभीष्ट—भोजनादिप्रदायिनी । भिक्षाचराणां भिक्षैव, जननी राजते नवा[2] ॥ १६१ ॥ इत्युदीर्य स्फुर-
द्धैर्यो, द्विजो ग्रामं प्रविश्य तम् । करंभनिभृतं कुंभं, वह्निं भिक्षां च लब्धवान् ॥१६२॥ वस्त्रेण कुंभं संगोप्य, तस्मै भिक्षां
प्रदर्श्य च । तावुभावपि तां भुक्त्वा, सुखं सुषुपतुर्मठे ॥ १६३ ॥ कुमारेऽथ द्विषद्भीत्या, कूटनिद्रामुपेयुषि । करंभं कुंभतो
लात्वा, द्विजो भोक्तुं प्रचक्रमे ॥ १६४ ॥ चौलुक्यस्तं तथाऽऽलोक्य, दध्यौ हा धिगिमं द्विजम् । यः संगोपाय्य
मत्तोऽपि, छन्नं भुंक्तेऽतिरंकवत् ॥ १६५ ॥ यद्वा विप्राः प्रकृत्यैव, भुक्तेस्तृप्यंति जातु न । अतःस्वार्थमसौ छन्न—मिदम-

१ क्वाऽस्ति. प्र २ नवीना अपूर्वा.

न्नमतिष्ठिपत् ॥ १६६ ॥ इति चिंतापरे तस्मिन्, भुक्त्वोत्थाय च वोसरिः । अवशिष्टं करंभं तं, गोपयामास वाससा॥१६७॥ उत्थितेऽथ कुमारे स, द्विजश्चेत्त्वं बुभुक्षसे । करंभं तर्हि भुंक्ष्वेति, प्रोच्य तस्मै तमानयत् ॥ १६८ ॥ कुमारोऽभाषता-भोजि, प्राक्त्वयैकाकिना कुतः ? । स स्माह भिक्षमाणं मां, जगादैका द्विजप्रिया ॥ १६९ ॥ अयं करंभकुंभोऽस्ति, रात्रावपिहितः परम् । यदि कार्यं तदाऽऽदत्स्व, मह्यं देयं न दूषणम् ॥ १७० ॥ लप्स्यते वा न वाऽ न्याऽत्र, भिक्षेति ध्यायता मया । अंगीचक्रे स लौल्येन, द्विजप्रकृतिरीदृशी ॥१७१॥ अत्रागत्य मयाऽपाया—द्वीक्ष्यता तुभ्यमेषकः । नादर्श्यत क्षुधार्तः सन्, भवान् भुंजीत कर्हिचित् ॥ १७२ ॥ वरं मे मरणं भूयात्, पाल्योऽसौ यत्नतो मया । यः कल्येऽपि नृपीभूय, तातवत् त्रास्यते क्षितिम् ॥ १७३ ॥ ध्यात्वेत्थं त्वयि निद्राणे, भुक्त्वा ज्ञात्वा च तं शुभम् । अधुना कथयन्नस्मि, भुंक्ष्व त्वं क्षुधितोऽसि चेत् ॥ १७४ ॥ चौलुक्यो ध्यातवानीद—गस्य स्नेहो ममोपरि । अहं तु नीचवत् किंचिदन्यदेव व्यचिंतयम् ॥ १७५ ॥ धिग्मामिति स्वयं निंद—न्नात्मानं स करंभकम् । अशित्वा प्रस्थितस्तस्मिन्, प्रीतो रामेऽच्युतो यथा ॥ १७६ ॥ अन्येद्युः स भ्रमन्नागात्, स्तंभतीर्थाभिधं पुरम् । निमित्तं प्रष्टुकामश्च, हेमाचार्यमठं ययौ ॥ १७७ ॥ तदा तत्र स्थितो हेमसूरिः समुपलक्ष्य तम् । सुचिरं वार्तयामास, संतो ह्युचितवेदिनः ॥ १७८ ॥ कुमारः सूरिमप्राक्षी—न्मुनिवाद्विनयांचितः । ममापि भगवन् ! भावि, कर्हिचित्किं ? सुखं न वा ॥ १७९ ॥ किंचिन्निमित्तमालोच्य, स्मृत्वा चांबावचः प्रभुः । यावत्तं भाषते ताव—त्प्रापोदयनमंत्रिराट् ॥ १८० ॥ तं मंत्रिणं ज्ञापयितुं, कुमारं सूरिरूचिवान् । भविता कियताऽपि त्वं, कालेन क्षितिनायकः ॥ १८१ ॥ स निःश्वस्य प्रभुं प्रोचे, मिथ्यैतत् कथ्यते कुतः ? । निःस्वस्येव न मे भोज्य—मपि राज्यस्य का

कथा ? ॥ १८२ ॥ जानीषे यदि तद् ब्रूहि, राज्याप्तौ वत्सरादिकम् । अन्यथाऽऽमुष्मिकं लोकं, भवद्वत्साधये क्वचित् ॥ १८३ ॥ विमृश्याभिदधे सूरि—र्नवांकेश्वरवत्सरे (११९९) । चतुर्थ्यां मार्गशीर्षस्य, श्यामायां पुष्यगे विधौ ॥ १८४ ॥ अपराह्ले तवैश्वर्यं, यदि नोर्जस्वि जायते । निमित्तालोकसन्न्यास—स्तर्ह्यतः परमस्तु मे ॥ १८५ ॥ युग्मम् ॥ प्रतिज्ञायेति सूरींद्र—स्तदा तद्दिनपत्रकम् । लेखित्वा प्रददौ तस्मै, सचिवोदयनाय च ॥ १८६ ॥ तेन तस्य सुरस्येव, ज्ञानेनातिचमत्कृतः । चौलुक्यस्तमुवाचैवं, घटितांजलिमंजुलः ॥ १८७ ॥ यद्येतत्त्वद्वचः सत्यं, त्वमेव क्षितिपस्तदा । अहं तु त्वत्पदांभोजं, सेविष्ये राजहंसवत् ॥ १८८ ॥ वदंतमिति तं सूरि—र्जगौ राज्येन किं ? मम । भातुनेव त्वयोद्भास्यं, शश्वज्जैनमतांबुजम् ॥ १८९ ॥ रंगादंगीकृते तेन, तस्मिन् वाक्ये स सूरिराट् । अमात्योदयनं प्रोचे, स्वरहस्यं रहस्यदः ॥ १९० ॥ यथैवामकुमारः प्रा—क्कन्यकुब्जनृपात्मजः । अपमानाद् भुवि भ्राम्य—न्नागान्मोढेरकं पुरम् ॥ १९१ ॥ श्रीसिद्धसेनसूरिस्तं, ज्ञात्वा सत्कार्यं चार्यवत् । अतिष्ठिपत्स्वनेदिष्ठं, रंजयन् गुणगौरवात् ॥ १९२ ॥ स प्राप्तराज्यस्तच्छिष्यं, वप्पभट्टिं प्रभुं मुदा । गुरूकृत्य कृतज्ञत्वा—दर्हन्मतमदिद्युतत् ॥ १९३ ॥ तथा त्वयाऽप्ययं भावि—राज्यो दुःस्थोऽधुनाऽऽगतः । यद्युपक्रियते स्वीय—स्वामिवद् द्रविणादिना ॥ १९४ ॥ तदाऽयमपि संप्राप्य, स्वाम्यमामसमहींद्रवत् । उल्लासयेन्मतं जैनं, भूत्वैव परमार्हतः ॥ १९५ ॥ प्रभुणेति समादिष्टः, कुमारं निजमंदिरम् । नीत्वा भोजनवस्त्राद्यैः, सच्चक्रे सचिवाग्रणीः ॥ १९६ ॥ चौलुक्यो निवसंस्तत्र, चरैर्ज्ञात्वा कथंचन । वृथा वैरायमाणाय, सिद्धेशाय न्यवेद्यत ॥ १९७ ॥ तदानीमेव तन्नुन्ना, भटा द्विड्घातलंपटाः । स्तंभतीर्थं समागत्य, परितस्तं ढुलोकिरे ॥ १९८ ॥ तन्मत्वोदयनावासा—न्मैनाक इव

नीरधिम् । कुमारः शरणाकांक्षी, हेमाचार्याऽऽश्रयं श्रितः ॥१९९॥ ऊचे च सिद्धराड्भृत्याः, पितृवैरादिवोल्बणात्। पश्यंतः संति मां हंतु–मतस्त्वां प्राप्तवानहम् ॥२००॥ तदेतेभ्यः प्रभो ! रक्ष, मां वृकेभ्य इव छगं। कृपया, यदि वाऽऽत्मीय–ज्ञान सत्यापनेच्छया ॥ २०१ ॥ सूरिस्तद्वाक्यमाकर्ण्य, दध्यौ कारुण्यनीरधिः । एकतो भूपतिद्रोहो, रक्षणीयोऽयमन्यतः॥२०२॥ राजद्रोहे व्ययोऽसूनां, त्रातेऽस्मिन् पुण्यमुल्बणम् । अनयोः कृत्ययोर्मध्ये, सांप्रतं करवै किमु ? ॥ २०३ ॥ नृपः कुप्यतु, गच्छंतु प्राणा वा ऽहं, तदप्यमुम् । त्रास्ये, यथा भवत्येष, जिनशासनलालसः ॥ २०४ ॥ अथ तं वसतावेव, न्यस्य भूमिगृहांतरे । पुस्तकग्रंथिभिस्तस्य, द्वारं सूरिः प्यदीधपत् ॥२०५॥ तावद् भूपभटाः कोपो–त्कटा भ्रांत्वाऽखिलं पुरम् । तत्रैत्य प्रोचिरे सूरिं, कुमारोऽस्ति ? भवन्मठे ॥ २०६ ॥ प्राणित्राणं महत्पुण्यं, मिथ्यावादस्त्वघं लघु । विदन्नित्यवदत्सूरिः, सोऽत्र नास्त्येव सर्वथा ॥ २०७ ॥ भटैरूचेऽत्र चेन्नास्ति, राजाज्ञा क्रियतां तदा । प्राणांतं प्रेक्षमाणोऽपि, पुण्यार्थी तां व्यधात्प्रभुः ॥ २०८ ॥ कस्यापि दुर्जनस्योक्त्या, मन्वानास्तत्र तं स्थितम् । अभितो मृगयामासु–स्तं मठं सुभटा हठात् ॥ २०९ ॥ पुस्तकग्रंथिभिस्ताल–पत्रजालैश्च पूरितम् । दृष्ट्वा भूमिगृहद्वारं, न तैर्दैवाद्विलोकितम् ॥ २१० ॥ गतेषु तेषु निष्कास्य, चौलुक्यं प्रभुरभ्यधात् । गिरो द्विषद्भटोद्गीर्णा–स्त्वया शुश्रुविरे न वा ? ॥ २११ ॥ स योजितकरोऽवादी–त्तस्थुषाऽपि मयांतरे । तदीया भवदीयाश्च, गिरः कर्णातिथीकृताः ॥ २१२ ॥ जिता पृथ्वी पृथ्वी, दलितमखिलं शात्रवकुलं, कृतः कोशो भूयान् कनकनिकरैर्न्यायजनितैः । मुदा राज्यं भुक्तं सुचिरमधुना बंधुहननाद्, वृथा वृद्धः सिद्धक्षिति-

१ स्वप्राणरक्षणोल्बणपुण्ययोर्मध्ये इत्यर्थ, २ माठे. प्र. ३ विस्तृता.

पतिरयं किं ? रचयिता ॥ २१३ ॥ त्वया प्राणांतमादृत्य, गरुडाच्छंखचूडवत्[1] । जीमूतवाहनेनेव, त्रातोऽहं संकटादितः ॥ २१४ ॥ दयामयो भवद्धर्मः, श्रुत एवाभवत्पुरा । अनुभूतोऽधुना सोऽयं, मया मज्जीवितावनात् ॥ २१५ ॥ ये सुखे प्युपकुर्वंति, तेऽपि संप्रति पंचषाः । यस्तु प्राणव्यये सत्त्व-मेकः स त्वद्धदग्रणीः ॥ २१६ ॥ भक्तोऽभवं पुराप्यग्र्यै-र्भावत्कै-र्भूरिभिर्गुणैः । क्रीतो जीवितदानेन, दास एवास्मि संप्रति ॥ २१७ ॥ निमित्तकथनात् पूर्वं, राज्यदानं प्रतिश्रुतम् । इदानीं जीवितमपि, त्वदर्थं भवतान्मम ॥ २१८ ॥ इत्यादि निगदंतं तं, कुमारं सूरिरालपत् । पश्चाज् ज्ञायिष्यते सर्वं, किमिदानीं वहूक्तिभिः ॥ २१९ ॥ अमात्योदयनात्तस्मै, दापयित्वोरुशंवलम् । निशायाः पश्चिमे यामे, प्रेषयामास तं प्रभुः ॥ २२० ॥ स क्रामन् वसुधाचक्रं, वटपद्रपुरं गतः । क्षुधार्त्तः कटुकाख्यस्य, वाणिजस्यापणं ययौ ॥ २२१ ॥ चणकांस्तं ययाचे च, निगद्यैकं विशोपकम् । दत्त्वा तान् वाणिजोऽभाणीद्, द्रविणं दीयतां मम ॥२२२॥ तेन कौक्षेयके मुक्ते, ग्रहणे तं धनोज्झितम् । निश्चित्य कटुकः प्रोचे, मांगल्येऽमी भवंतु ते ॥ २२३ ॥ तन्नामादि परिज्ञाय, पुनर्भूत्वा जटाधरः । इतस्ततो भ्रमन्नाप, भृगुकच्छाह्वयं पुरम् ॥ २२४॥ तत्रैकः प्रार्थितस्तेन, मारवः शाकुनोत्तमः । चिन्त्यतां शकुनं किंचि-द्भविता कर्हि मे शुभम् ? ॥ २२५ ॥ प्रातरेव वहिर्गत्वा, शकुनज्ञस्तदन्वितः । दुर्गामाह्वानयामास, निक्षिपन्मंत्रिताक्षतान् ॥२२६॥ तदैव परिपुष्टांगी, श्यामाऽऽस्यस्वीकृताशना । मुनिसुव्रतनाथस्य, प्रासादमधितस्थुषी ॥ २२७ ॥ विकस्वरं स्वरद्वंद्वं[5], चकारामलसारके । स्वरत्रयं च कलशे, दंडे स्वरचतुष्टयम् ॥ २२८ ॥ युग्मम् ॥ ध्यात्वा तं शाकुनः प्रोचे, श्यामायाश्चे-

१ लौकिकशास्त्रप्रसिद्ध शंखचूडनामकनागो यथा जीमूतवाहनेन राज्ञा गरुडात् त्रातस्तथा. २ मया स्वीकृतम्. ३ खड्गे. ४ उपविष्टा सती. ५ द्वयम्.

त्यसंश्रयात् । स्वरवृद्धेश्च ते भावी, जिनभक्तेर्महोदयः ॥ २२९ ॥ तद्वाणीश्रवणात्तुष्ट—स्तं संतोष्य धनादिना । स जटाधरतां हित्वा, ययावुज्जयिनीं पुरीम् ॥२३०॥ तत्र दृष्ट्वा कुटुंबं स्वं, पृष्ठे प्राप्तान् द्विपद्गदान् । मत्वा नंष्ट्वा च चौलुक्यः, कोलापुरमुपेयिवान् ॥ २३१ ॥ तत्र भ्रमन् स सर्वार्थ—सिद्धिनामानमुत्तमम् । करंडमिव सिद्धीना—मेकं योगींद्रमैक्षत॥२३२॥ नत्वाऽग्रतो निविष्टं तं; समाप्य ध्यानमात्मनः । प्रसेदिवद्भ्यां[1] नेत्राभ्यां, पश्यन् योगीश्वरो जगौ ॥ २३३ ॥ राज्यार्हलक्षणाढ्यस्य, तवावस्था किमीदृशी ? । न हि जात्यस्य रत्नस्य, धूलिधूसरतोचिता ॥ २३४ ॥ स बभाषे ममावस्था, योगिन्नासीदियच्चिरम् । भानोरिव निशाऽनेशत्, परं त्वद्दर्शनादसौ ॥ २३५ ॥ मेघालोकाद्यथा हर्ष—प्रकर्षः स्याच्छिखंडिनः[2] । तथा त्वत्संगमादस्मा—न्ममापि[3] हृदयंगमात् ॥ २३६ ॥ प्रसद्य दीयतां कश्चि—न्मंत्रः स्फूर्जत्तमो मम । चिंतामणिरिव यतो[4], विभवेद्विभवो महान् ॥ २३७ ॥ योगी तुष्टस्तमाचष्ट, द्वौ मंत्रौ स्तो मदंतिके । साम्राज्यदायी तत्रैको, यथेष्टद्रव्यदः परः ॥ २३८ ॥ परं सोपद्रवौ गाढं, यदि साधयितुं क्षमः । तर्ह्यादत्स्व तयोर्मध्या—देकं मंत्रं यदृच्छया ॥ २३९ ॥ महाप्रसाद इत्युक्त्वा, योगींद्राद्राज्यदायिनम् । मंत्रं राज्यमिवादत्त, कुमारो विधिपूर्वकम् ॥ २४० ॥ कृतत्रिक्षपणः शुद्ध—ब्रह्मवान् ब्रह्मचारिवत् । जपति स्म स षण्मासीं, तं मंत्रं विजने क्वचित् ॥ २४१ ॥ अथ कृष्णचतुर्दश्यां, प्रथमे प्रहरे निशः[5] । स देहवानिवोत्साहः, पूजोपकरणान्वितः ॥ २४२ ॥ क्वचित्करालकंकालं[6], क्वचिद्वेतालसंकुलम् । क्वचित्स्फुरच्चितिज्वालं, क्वचित्कुणपपूरितम्[7] ॥ २४३ ॥ क्वचिन्नृत्यत्पिशाचौघं, क्वचित्प्रेतप्रियंकरम् । क्वचिद् दुःशाकिनीकीर्णं, क्वचिद् भूतशतांचितम्

१ प्रसन्नाभ्याम्. २ मयूरस. ३ अभवदिति शेष· ४ मंत्रात्. ५ रात्रेः ६ भयानकं—त्वङ्मासरहितशरीरारंभकास्थिसमूहम्. ७ शवपूरितम्.

॥ २४४ ॥ क्वचिन्निशाचरीवक्त्र—खाद्यमानशवामिषम् । क्वचिद्भयंकरस्फार—शिवाफेत्कारभारितम् ॥ २४५ ॥ क्वचि
च्चित्योच्छलद्धूम—धूमस्पृष्टनभोंऽगणम् । श्मशानमागमत्प्रेत—पतिक्रीडावनोपमम् ॥ २४६ ॥ पंचभिः कुलकम् । तत्रैकं
शवमानीय, तद्वक्षसि निवेश्य च । वह्निकुंडमखंडार्चिः—सप्तार्चिः परिपूरितम् ॥ २४७ ॥ तन्नाभौ स्वयमासित्वा, कृत्वा
चार्चां यथाविधि । मेरुवत्स स्थिरो मंत्रं, स्मरन् होतुं प्रचक्रमे ॥२४८॥ युग्मम् ॥ तं कुर्वंतं तथा होमं, प्रेक्ष्य प्रेतवनाधिपः ।
वक्रदंष्ट्राभिधः क्षेत्र-पालः काल इवाकुपत् ॥ २४९ ॥ ऊर्ध्वमूर्ध्वस्फुरत्पिंग-केशस्तुंगतमाकृतिः । अधित्यकाज्वलद्दाव-
ज्वालाजाल इवाचलः ॥ २५० ॥ दीर्घदंष्ट्रावलीव्याप्त-व्यात्तवक्त्रविभीषणः । अंतर्जाग्रद्भुजंगौघ—कोटरद्रुरिवोच्चकैः
॥ २५१ ॥ अभ्रंकषेण शीर्षेण, तारकान् पातयन्निव । मुखोद्गतानलोल्काभि-स्तमः कवलयन्निव ॥ २५२ ॥ दूरप्रसृमरै-
र्दोर्भिः, पादपानाकृषन्निव । निबिडैश्चरणन्यासैः, क्ष्मामधस्तात्क्षिपन्निव ॥ २५३ ॥ अंजनाद्रिरिव श्यामो, मंदराद्रिरिवा-
कृशः । प्रादुरासीत्पुरस्तस्य, क्षेत्रपालः करालदृक् ॥२५४॥ पंचभिः कुलकम् ॥ तं स क्षोभयितुं दुष्टो, नेदिष्ठैः पर्वतैः सह ।
काश्यपीं कंपयामास, लतावत्पादघाततः ॥२५५॥ ब्रह्मांडभांडसंभेद-शक्तान् किलकिलारवान् । स चकार परोलक्षान्, सिंहना-
दान् यथा भटः ॥२५६॥ भूकंपात्तन्निनादाच्च, सिंहध्वानादिव द्विपाः ॥ नश्यंति स्म पिशाचाद्या, अपि क्रोष्टादयः किमु ?
॥ २५७ ॥ करालान् यमदंष्ट्राव-द्धावमानान् जिघत्सया । कारं कारं भुजंगादीन्, भापयामासिवान् स तम् ॥ २५८ ॥
मंत्रः सोपद्रवोऽस्तीति, गुरुवाक्यस्य संस्मरन् । क्षोभ्यमाणोऽपि तेनेत्थं, चौलुक्यो नैव चुक्षुभे ॥ २५९ ॥ प्रत्युत स्थिरतां

१ शृगालशब्दयुतम् २ बहुल. ३ श्मशानाधिप . ४ पर्वतस्योपरिभूमिः. ५ तेज पुंज . ६ शृगालादय . ७ कृत्वा कृत्वा-विकुर्व्य विकुर्व्य.

सोऽधात्, ध्यानकर्मणि निर्भयः । वात्यया चाल्यमानोऽपि, किं चलत्यचलाधिपः ॥ २६० ॥ खलवन्निष्फले तस्मिन्, क्षेत्रपाले गते सति । मंत्रकर्मणि पूर्णे च, जापहोमपुरस्सरम् ॥ २६१ ॥ तेजोभिः सृजतीव द्यां, सूर्यराजीमयीं तदा । प्रादुरासीत्पुरो लक्ष्मीः, पुण्यश्रीरिव देहिनी ॥ २६२ ॥ युग्मम् ॥ दारिद्र्यभंगजननीं, जननीमिव तां रमाम् । विलोक्य विकसद्वक्त्र–श्चौलुक्यो नमति स्म सः ॥ २६३ ॥ कथयामास सा वत्स, ! मंत्राधिष्ठायिनी स्वयम् । श्रीरहं त्वां प्रपन्नाऽस्मि, विस्मेरविभवास्पदम् ॥ २६४ ॥ क्षेत्रपप्रकृतैः क्षुद्रो–पद्रवैर्ध्रुववत्तव । निश्चलं सत्त्वमालोक्य, प्रसन्नाऽस्मि वरं वृणु ॥ २६५ ॥ कुमारः स्माह पुण्यद्रु–रद्यैवांकुरितो मम । दुर्लभा कल्पवल्लीव, मया यत्त्वमलभ्यथाः ॥ २६६ ॥ गार्हस्थ्यं स्थितिमेति, यात्युपचयं पुण्यं, प्रतिष्ठैधते, साफल्यं दधते कलाः प्रतिकलं सौख्यं समुन्मीलति । सर्वस्योपकृतिः स्फुरत्यपमला कीर्तिः समुज्जृंभते, विश्वं लक्ष्मि ! भवत्कटाक्षकणिकाच्छोटेन जीवत्यदः ॥२६७॥ वाणी सरस्वती ख्याता, त्वं तु सारस्वती ततः । अकारेणाधिका मातः !, कथं नासि गुणैरपि ॥ २६८ ॥ त्वदाश्रितजनस्तोत्रैः, पुष्णती स्वसुतान् बुधान् । भारती स्पर्धते यत्त्वां, पठन्मूर्खैव सा ततः ॥ २६९ ॥ त्वदंगीकारतो जज्ञे, कृष्णोऽपि पुरुषोत्तमः । शंकरोऽपि कपालित्वं, प्रपेदे त्वदनादरात् ॥ २७० ॥ कमले ! चेत्प्रसन्नाऽसि, मय्यात्मीयतनूजवत् । फलं वत्सलतावल्ल्या–स्तदैश्वर्यं समर्पय ॥ २७१ ॥ सा श्रीर्विश्राणयामास, वरमद्यतनाद्दिनात् । मनोरथतरुस्तेऽसौ, पंचवर्ष्यां फलिष्यति ॥ २७२ ॥ इत्युदीर्य प्रयातायां, देव्यां वारिधिजन्मनि । कुमारो योगिने तस्मै, प्रातस्तद्वृत्तमूचिवान् ॥ २७३ ॥ योगी हृष्टस्तमाचष्ट, त्वं नूनं भाग्यवा-

१ आकाशम्. २ प्राप्ता. ३ मर्यादा-स्थिरताम्. ४ प्रतिक्षणम्. ५ सूक्ष्माशाच्छोटेन. ६ सरस्वत-समुद्रस्येयम् ७ ददौ.

नसि । यस्येदृग्विषमो मंत्रः, सिद्धः सद्धर्मकर्मवत् ॥ २७४ ॥ सिद्धमंत्रः स योगींद्रं, प्रणम्य विहरन् महीम् । कल्याणदे-
शश्रीसुभ्रू—कांचीं कांचीपुरीं ययौ ॥ २७५ ॥ तद्गोचरे चरन्नीर—हारिणीनां मृगीदृशाम् । स्तोमं मिलितमालोक्य,
चौलुक्यस्तत्र जग्मिवान् ॥ २७६ ॥ द्विषता छिन्नशीर्षस्य, कवंधं तत्र कस्यचित् । तासां संप्रेक्षमाणानां, शुश्रुवांश्चेति
जल्पितम् ॥ २७७ ॥ अहो केशकलापोऽस्य, द्राघीयान् कोऽपि दीप्यते । अहो दीर्घतमौ कर्णा—वहो कूर्चो महाघनः
॥ २७८ ॥ अहो विरलता दंत—श्रेणेर्मुक्तावलिश्रियः । अहो व्यसनिता काऽपि, नित्यं तांबूलभक्षणे ॥ २७९ ॥ युग्मम् ॥
श्रुत्वा तद्विस्मितोऽध्यासी—त्कुमारोऽस्य शिरो विना । स्थितिं केशकलापादे—रेतां जानंत्यमूः कथम् ॥ २८० ॥ स
मृगाक्षीरथाप्राक्षी—दृष्ट्वाऽप्यस्य मस्तकम् । स्वरूपं कथमेतादृग्, भवत्यः परिचिन्वते ॥ २८१ ॥ स्मित्वाऽवोचंत ताः प्रेक्ष्य,
विदंत्यपधियोऽपि हि । सुधियस्तु त एव स्यु—र्यैरप्रेक्ष्यापि लक्ष्यते ॥ २८२ ॥ पृष्ठेऽस्य कवरीघर्षः, स्कंधयोः कौंडलौ
किणौ । आनाभिहृदि गौरत्वं, रक्तप्रांता कनिष्ठिका ॥ २८३ ॥ अंगुष्ठश्चूर्णधवलो, दृश्यमानाः क्रमादमी । दीर्घादित्वं कव-
र्यादे—र्निःसंदेहं प्रचक्षते ॥ २८४ ॥ युग्मम् ॥ तथा स्त्रैणधिया प्रीत—श्चौलुक्यो जग्मिवांस्ततः । तडागं पालिरूढागं, संज्ञ-
याऽमृतसागरम् ॥ २८५॥ तत्र स्नानं समासूत्र्य, चैत्ये तत्तीरभासुरे । एकं मस्तकमद्राक्षी—त्पूज्यमानं स देववत् ॥२८६॥
प्रश्नयामासिवांश्चैकं, तत्रत्यं कंचिदर्चकम् । विहाय देवतामूर्तीः, किमेतत् पूज्यते शिरः ॥ २८७ ॥ स स्माहाकर्ण्यतां देव !,
सेयं कांचीपुरी पुरः ॥ गंता यज्जयभीतेव । स्वर्लोकममरावती ॥ २८८॥ मकरध्वजरूपोऽस्ति, भूपोऽत्र मकरध्वजः । मुनी-



१ कर्णाटकदेशस्य शोभारूपस्त्रियाः कटिमेखलाम् २ त्रिय. ३ चिह्ने. ४ सदैव तत्. प्र. ५ पुरा, प्र. ६ मकरध्वज.-काम. मुनीनाममान्योऽयं तु मान्य. इत्याश्चर्यम्.

नामपि यो मान्य—श्चित्रं सन्मानदानतः ॥ २८९ ॥ यस्य कौक्षेयकांभोदे, धारापातं वितन्वति । हंसा इव द्विपोऽनेशन्, कांदिशीका दिशोदिशम् ॥२९०॥ कौतुकात्कारयामास, स तटाकमिदं महत् । मानसस्य प्रतिच्छंद—मिव भांसाऽम्भसापि यत् ॥ २९१ ॥ अत्राब्जमध्यतोऽन्येद्युः, शिरः कुंडलमंडितम् । निर्गत्य ब्रुडतीत्युच्चै—स्त्रिरुदीर्य ममज्ज तत् ॥ २९२ ॥ नित्य-मित्यभिधायैव, तस्मिन् याति जनाननात् । तन्मत्वा स्वयमायासी—द्भूजानिर्मकरध्वजः ॥ २९३ ॥ अरिष्टवत्स तद् दृष्ट्वा, भयभ्रांतमना मनाक् । विद्वत्तमान् समाकार्य, किमेतदिति पृष्टवान् ॥ २९४ ॥ ते सर्वे वाङ्मयांभोधि—पारीणधिषणा अपि । न किंचन विदांचक्रु—स्तस्य तत्त्वं जडा इव ॥ २९५ ॥ तानूचे नृपतिः कोपा—द्रे मूर्खा ! द्रविणं मम । दारवेणैव खड्गेन, भुंग्ध्वे वित्थ न किंचन ॥ २९६ ॥ इंद्रनीलधिया यूयं, काचा एव मयाऽऽहृताः । यदेकमपि संदेहं, न भंक्तुं प्रभ-विष्णवः॥ २९७ ॥ अस्योत्तरं प्रदास्याम—श्चतुर्मास्येति तं नृपम् । सांत्वयित्वा मिलित्वा च, मंत्रयांचक्रिरेऽथ ते ॥ २९८॥ "यदेकः स्थविरो वेत्ति, न तत्तरुणकोटयः" । इति प्रसिद्धेर्वर्षीयां—स्तत्त्वमेतस्य पृच्छयते ॥ २९९ ॥ वर्षीयांसः पुनः प्रायः, श्रूयंते मरुमंडले । गत्वा तस्मादितो विप्राः !, मारवः कोऽपि पृच्छयताम् ॥ ३०० ॥ पर्यालोच्येति चत्वारो, ब्राह्मणाः प्रस्थिता इतः । प्रपन्ना मरुदेशं तं, कार्यमिष्टं नृणां ननु ॥ ३०१ ॥ [ त्रिभिर्विशेषकम् ] । तत्रत्ये विक्रमपुरे, वहुभिर्बुद्धिलि-प्सुभिः । सेव्यमानं समीपस्थै—राचार्यमिव शैक्षकैः ॥ ३०२ ॥ वहंतं काससंकाशा—नधिमूर्धं शिरोरुहान् । अमानेना-न्तरूर्द्धामान्, मूर्तान् बुद्धिभरानिव ॥ ३०३ ॥ शतंद्व्यशीतिपष्ठ्यष्टा—त्रिंशदादिशरन्मितैः । अनेकैः पुत्रपौत्राद्यै—

१ कान्त्या-शोभया, २ अतिशयेन वृद्धः-( वृद्ध-ईयसुन् वर्षादेशः ) वर्षीयान्, ३ तत्र ते, प्र,

'हंसैरिव सरः' श्रितम् ॥ ३०४ ॥ वार्धकेऽपि बलिष्ठेन, 'वयस्थमिव' वर्ष्मणा । विप्रं साविंशतिशैतं"—वर्षदेश्यमलोकयन् ॥ ३०५ ॥ चतुर्भिः कलापकम् ॥ सप्रश्रयं नमस्कृत्य, ते निविष्टास्तदंतिके । सोऽथापृच्छत् कुतो यूयं ?, किमर्थं वा ? समागताः ॥ ३०६ ॥ शीर्षव्यतिकरं ते तं, सर्वमावेद्य मूलतः । किं वाच्यमस्य ? ब्रूहि त्व—मित्यपृच्छंस्तमुत्सुकाः॥३०७॥ बाहुश्रुत्येन निश्चित्य, तद्रहस्यं विरस्य सः । बभाण भुज्यतां पूर्वं, वक्ष्येऽमुष्योत्तरं ततः ॥ ३०८ ॥ भुजिक्रियोर्ध्वं तत्तेषु, प्रश्नयत्सु द्विजातिषु । वृद्धोऽभ्यधत्त वक्ष्यामि, परं कुरुत मद्गिरम् ॥ ३०९ ॥ वस्तु तत्किंचिदादद्ध्वं, शुद्ध्येन्मार्गव्ययो यतः । आदद्महे किमित्युक्तः, स तैर्भूयो बभाण तान् ॥ ३१० ॥ कव्यामारोप्य गृह्णीध्वं भषणांश्चतुरो लघून् । दुर्लभत्वा-द्भवद्देशे, लप्स्यंतेऽमी घनं धनम् ॥ ३११ ॥ लोलुपत्वेन तैर्विप्रे—स्तदादेशे तथा कृते । स्मयमानः स वक्ति स्म, मारवः सारवाक्क्रमः ॥ ३१२ ॥ श्वानगर्दभचांडाल—मद्यभांडरजस्वलाः । देवार्चकं च संस्पृश्य, सचेलः स्नानमाचरेत् ॥ ३१३ ॥ इत्यन्येषामपि नृणां, श्वानस्पर्शोऽपि वारितः । यूयं द्विजाः कथममू—न्यवीविशत वर्ष्मणि ॥ ३१४ ॥ भवदादेशतो लोभा—दित्युक्ते तैर्जरज्जगौ । यद्येवं तर्हि लोभेन, जगन्मज्जंत्यघांबुधौ ॥ ३१५ ॥ यन्नीचाश्रयणं, यदुग्रभुजगव्याघ्रद्विपा-दिग्रहो, यत्पाथोधिविगाहनं, गिरिमहाकांतारचारोऽपि यत् । यन्मातापितृबांधवादिहननं, चौर्यादिदुष्कर्म य—त्तल्लोभस्य गुणौघमेघपवनस्यात्यूर्जितं स्फूर्जितम् ॥ ३१६ ॥ क्रोधादेर्जनको लोभो, लोभः सर्वापदास्पदम् । दोषाणामाकरो लोभो,

१ सविनयम्. २ अर्थं –प्रयोजनम्, ३ श्रुवतीति वचनस्य ४ बहुश्रुतत्वेन. ५ आखाय–ज्ञात्वा इत्यर्थ ६ हसन् सन्. ७ देवार्चकमिति–देवलकं–"देवकोशोपजीवी च नाम्ना देवलको भवेत्" इत्युक्तं विप्रं. ८ सवस्त्र. ९ मज्जत्यघाबुधौ, प्र. १० पराक्रम्.

लोभः प्राणप्रणाशकः ॥ ३१७ ॥ ततो यदि शिरो ब्रूते, ब्रुडतीति वचस्तदा । यूयं ब्रूध्वं पुरस्तस्य, लोभादित्युत्तरं द्विजाः !
॥ ३१८ ॥ एतन्निशम्य भूयोऽपि, न निर्यास्यति तच्छिरः । अथ निर्यात्यहं ज्ञाप्यो, यथाऽऽगत्य निवारये ॥ ३१९ ॥ अथ
ते विस्मिता विप्रा—स्त्यक्तश्वानास्तमूचिरे । सर्वज्ञस्येव ते प्रज्ञा, धत्ते सर्वपथीनताम् ॥ ३२० ॥ अपारे संशयावारे—
पारेऽस्माकं निमज्जताम् । भवत्प्रज्ञैव संजज्ञे, तरीवोत्तारकारणम् ॥ ३२१ ॥ अभिष्टुत्येति तं, तेन, विसृष्टा ब्राह्मणास्ततः ।
अंतिमेऽह्नि चतुर्मास्याः, स्वं कांचीपुरमांचिषुः ॥ ३२२ ॥ नृपेण प्रातराहूता, विप्रास्ते प्रणिगद्य तम् । मारवद्विजवृत्तांतं,
तद्युक्ता भेजिरे सरः ॥ ३२३ ॥ निर्गते मस्तके विप्रैः, प्रोक्ते तत्रोत्तरे सति । स हसित्वाऽवदत्साधु, परिज्ञातो ममाशयः
॥ ३२४ ॥ ततः शीर्षं नृपोऽपृच्छत्, कस्त्वं ? वक्षीति वा कुतः ? । तदूचे व्यंतरः शीर्ष—स्थायी केलीकिलोऽस्म्यहम्
॥ ३२५ ॥ भवेन्मेधाविनां दाक्ष्यं, दिदृक्षुरिदमूचिवान् । अद्य चास्योत्तरं प्राप्य ।, नागमिष्याम्यतः परम् ॥ ३२६ ॥
तस्मिन्नंतर्हिते विप्रान्, सत्कृत्यैतत्पुरीश्वरः । शिरोवार्ताप्रसिद्ध्यर्थ—मिदं चैत्यमचीकरत् ॥ ३२७ ॥ अतिष्ठिपच्च चैत्ये-
ऽस्मि—न्नाश्मं निर्माप्य मस्तकम् । तदेतदर्च्यते लोकै—र्नृपाज्ञा हि बलीयसी ॥ ३२८ ॥ तच्छिरश्चरितं श्रुत्वा, कुमारो
विस्मितांतरः । प्राप्तः कांचीपुरीमध्यं, केसरीव वनांतरम् ॥ ३२९ ॥ तत्र प्रमोदमापन्नो, नानाकौतुकलोकनात् । महीश
इव सौस्थ्येन, कियत्कालमवास्थितः ॥ ३३० ॥ ततोऽपि प्रस्थितो मल्लि—नाथदेशैकभूषणम् । निर्विलंबः स कोलंब—
पत्तनं गाप पापमुक् ॥ ३३१ ॥ कृतकांतारसंचारः, स श्रांतः सरसी तटे । उल्लसत्पादपच्छाये, विशश्राम द्विपेंद्रवत् ॥ ३३२ ॥

१ समुद्रे २ प्राप्तवंत . ३ राजयुक्ता . ४ मस्तक . ५ युष्मत्पंडितानाम्.

कलापिनां तांडवयन् कलापां—स्तन्वन्मुहुर्वारिकणोक्षणानि। तस्यानयन् सौरभमातिथेयीं, तद्वायुराचारविदाचचार॥३३३॥ तस्यामेव निशि स्वप्ने—ऽभ्येत्य सोमेश्वरोऽभ्यधात्। नाम्ना प्रतापसिंहाय, कोलंबधरणीभृते ॥ ३३४ ॥ एता कुमारपालोऽत्र त्वत्पुरोपवनं प्रगे। आस्थानमिव सत्त्वस्य, स भावी गुर्जरेश्वरः ॥ ३३५ ॥ तस्य त्वं सन्मुखं गत्वा, कृत्वा प्रावेशिकं महम्। विनयाद्वामनीभूय, भूयसीं भक्तिमाचरेः ॥ ३३६ ॥ प्रतापसिंहः स प्रात—श्चक्रीवादैन्यसैन्यभृत्। गतः संमुखमैक्षिष्ट, तं चौलुक्यं सरस्तटे ॥ ३३७ ॥ वहुमानात्समानीय, स्वं सद्माच्छद्मधीर्नृपः। तमग्रजमिव स्फारैः, सत्कारैः पर्यतूतुपत् ॥ ३३८ ॥ तत्र सौष्ठवतस्तिष्ठन्, कुमारः पृष्टवान्नृपम्। अदृष्टचरमप्येवं, त्वं मां सत्कृतवान् कथम्? ॥३३९॥ तस्मिन् सोमेश्वरादेशे, प्रोक्ते कोलंबभूभुजा। देवमानेन मेने स्वं, कुमारः पुण्यवत्तरम् ॥ ३४० ॥ प्रतापसिंहमानेन, स्थितः कत्यपि वासरान्। सूत्रयामास तन्मैत्रीं, सतां कर्मेदमादिमम् ॥ ३४१ ॥ तमनुज्ञाप्य चौलुक्यो, वक्रितग्रहवत्ततः। व्यावृत्त्य शिप्रादीप्राऽन्तां, प्रापदुज्जयिनीं पुरीम् ॥ ३४२ ॥ वियोगानलसंतप्तं, कामं मानसमात्मनः। कुटुंवसंगमांभोभिः, सेसिच्यामास तत्र सः ॥ ३४३ ॥ स्वर्देश्यां तां पुरीं पश्यन्, कुमारः स्फारसंमदः। कुंडगेश्वरनामानं, प्रासादं दिव्यमासदत् ॥ ३४४ ॥ मध्यनिष्क्रांतवामेय—मूर्तिसर्पफणोच्छ्रितम्। नमस्यामास माहेशं, तत्र लिंगं स रंगतः ॥ ३४५ ॥ लिंगांतरस्थितां पार्श्व—प्रभोर्मूर्तिं निभाल्य सः। जिनध्यानपरं शंभु—मप्यमन्यत मानसे ॥ ३४६ ॥ स विश्वानंदिनीं लक्ष्मीं, प्रासादीयां विलोकयन्। तत्र प्रशस्तिमद्राक्षी—दिव्यकाव्यावलीमयीम् ॥ ३४७ ॥ वाचयित्वा कुमारस्तां, तत्र श्रीविक-

१ मयूराणा २ सेचनानि, ३ कुमारपालस्य ४ सर. वायुः, ५ एष्यति. ६ अदृष्टे चरतीति अदृष्टचरस्तम्, ७ सोमेशसत्कारेण,

माग्रतः । श्रीसिद्धसेनभणिता—मार्यां[2]मेतामवाचयत् ॥ ३४८॥ पूर्णे[1] वर्षसहस्रे, शतेऽपि शरदां च नवनवत्यधिके(११९९)।
भावी कुमारभूप-स्तव विक्रमराज ! तुल्यश्रीः ॥ ३४९ ॥ विमृश्यार्थं मनस्यस्याः, जातराज्याप्तिनिर्णयः, । ज्ञानं सातिशयं
मेने, जैनेषु स महामतिः ॥३५०॥ स्वकुटुंबं सहादाय, तौ च वोसरिसज्जनौ । कुमारः प्रस्थितोऽवंत्या—श्चित्रकूटाचलं ययौ
॥ ३५१ ॥ तत्र श्रीशांतिचैत्यस्थं, मुनिं श्रीरामनामकम् । नत्वा स प्रश्नयामास, चित्रकूटनगो[3]द्भवम् ॥३५२॥ यतिर्जगावितः
क्रोश—त्रये सुरपुरीसमा । संज्ञया मध्यमाऽप्यासी—त्पुरी श्रीभिरमध्यमा ॥ ३५३ ॥ चित्रितत्रिजगच्चित्तः, पवित्रैश्चरि-
तैर्निजैः । तत्र धात्र्येकसूत्रांमा—ऽभवच्चित्रांगदो नृपः ॥३५४॥ असदेकमनेकेभ्यो, वैरिभ्यो वितरन् भयम् । विदधे दान-
शौंडाना-मपि यो विस्मयं हृदि ॥३५५॥ सुमतिर्नाम तस्यासी—दमात्यः सत्यमंदिरम् । क्ष्मापलक्ष्मीलतोल्लासे, वारिदां[5]मास
यन्मतिः ॥ ३५६ ॥ आस्थान्यामास्थितं भूपं, सुधर्मायां सुरेंद्रवत्[4] । भूतानंदोऽन्यदा योगी, समागच्छद्दिदृक्षया ॥ ३५७ ॥
अद्भुतानि फलान्यग्रे, ढौकयित्वा स कानिचित् । वार्तयित्वा च तं भूपं, क्षणमेकं पुनर्ययौ ॥ ३५८ ॥ फलान्यन्यान्युपा-
दाय, द्वैतीयीकेऽपि सोऽहनि । सुखगोष्ठ्या कियत्कालं, विलंब्याश्रयमाश्रयत् ॥ ३५९ ॥ फलैर्नवनवैरेष, षण्मासीं[6] तमसे-
वत । नृदेवं देववन्नित्यं, कार्यं नोचे च किंचन ॥ ३६० ॥ षण्मास्यंते तमप्राक्षी—त्तुष्टश्चित्रांगदः स्वयम् । त्वं सेवसे
किमर्थं ? मां, स्वार्थं[7]माचक्ष्व कंचन ॥ ३६१ ॥ स महीशं रहस्येवं, स्माह प्राप्तो गुरोर्मया । क्लेशेन महता मंत्रः, स्वर्णपूरुष-

---

१ पुण्णे वाससहस्से, सयंमि वरिसाण नवनवइ कलिए । होही कुमरनरिंदो, तुह विक्कमराय ! सारिच्छो ॥ २ आर्यां . ३ दुर्गो ( किल्लो ) त्पत्तिम्,. ४ इंद्र .
५ वारिद इवाचरतीति वारिदति, परोक्षे वारिदामास,. ६ स षण्मासीमसेवत, प्र. ७ स्वप्रयोजनम्.

साधकः ॥ ३६२ ॥ विदधे तस्य षण्मासीं, पूर्वसेवां यथाविधि । अधुना तव साहाय्या—द्विधित्साम्युत्तरक्रियाम् ॥ ३६३॥
सा च कृष्णचतुर्दश्यां, निशि प्रेतवनांतरे । कृशानौ होमनिर्माणात्, सिद्धिमभ्येति नान्यथा ॥ ३६४ ॥ सत्त्वोपकारदाक्षि-
ण्य-शौर्यादिगुणशालिनाम् । अधुना त्वं धुरीणोऽसि, पार्थिव ! त्वामतोऽर्थये ॥ ३६५ ॥ धृत्वा कृपालुतां चेत्त्वं, भवस्यु-
त्तरसाधकः । त्वत्साहाय्यात्तदा मंत्रः, फलवान् मम जायते ॥ ३६६॥ चित्रांगदोऽतिदाक्षिण्या—दोमित्यंगीचकार तत् ।
परोपकारमाधातुं, व्यसनं हि महात्मनाम् ॥ ३६७ ॥ तत्कथंचित्परिज्ञाय, मंत्री स्वमतिवैभवात् । शंकमानो नृपापायं, तं
जगौ विजने स्थितम् ॥ ३६८ ॥ देवो यद्यपि वेत्त्येव, देववत्सकलं स्वयम् । तथापि प्रोच्यते किंचि—त्स्नेहाकुलतया मया
॥ ३६९ ॥ योगिने प्रतिपेदे यत्, साहाय्यं न्याय्यमप्यदः । आयतौ नैव पश्यामि, श्रेयसे ते स्वबुद्धितः ॥ ३७० ॥
यदमी योगिनो दुष्टाः, स्वेष्टसिद्धिविधित्सया । पिशाचा इव हिंसंति, वंचयित्वोत्तमान्नरान् ॥ ३७१ ॥ किंच निष्करुणाः
कामं, धूमोर्णारमणादपि । न जंतुघातजाताघात्, वधका इव बिभ्यति ॥३७२॥ अयं च याचते स्म त्वां, स्वर्णपूरुषसिद्धये ।
सा तु स्याद्यदि हूयेत, द्वात्रिंशल्लक्षणः पुमान् ॥ ३७३ ॥ तत्त्वां सुलक्षणं प्रेक्ष्य, विदधीतैष दुष्टधीः । अनिष्टं कर्हिचित्तेन,
वारयाम्यहमादरात् ॥ ३७४॥ बभाषे भूभृदज्ञाला—दंगीचक्रेऽस्य गीर्मया । करोमि तां कथंकारं ?, नीचवत् स्वयमन्यथा
॥ ३७५ ॥ मंत्री जगाद यद्येवं, तर्ह्यहं भवता सह । अंगरक्षवदेष्यामि, छन्नः कुर्वे यथोचितम् ॥ ३७६ ॥ राज्ञि तत्प्रति-
पेदाने, कृष्णे चातुर्दशेऽहनि । पूजोपकरणान्वितो, भूतानंदस्तमभ्यगात् ॥ ३७७ ॥ चित्रांगदः समं तेन, कृपाणं पाणिना

१ षण्मासीं यावत्. २ पूर्वक्रियाम्. ३ धूमोर्णा-यमपत्नी, तस्या. रमणः-पति -यमस्तस्मादपि.

वहन् । प्रतिष्ठते स्म तत्पृष्ठे, श्रेष्ठधीः सचिवोऽपि सः ॥ ३७८ ॥ भयंकरं श्मशानं स, प्राप्य निर्भयमानसः । अखंडं हुत-
भुक्कुंडं, मंडयामास मंडले ॥ ३७९ ॥ निवेश्य ज्वलनं तत्र, खादिरैः शकलैर्घनैः । स्वयं स्वमिव निर्दग्धुं, ज्वालयामास
योगिराट् ॥ ३८० ॥ जिघत्सुरिव तं दुष्टं, जज्ञे ज्वालावलिच्छलात् । हुताशः सप्तजिह्वोऽपि, तदा जिह्वाशताकुलः॥३८१॥
अभ्यर्च्य मंडलं सम्यग्, रक्तपुष्पाक्षतादिभिः । मंत्रं स्मर्तुं समारेभे, योगी ध्यानैकतानहृत् ॥ ३८२ ॥ कृपाणपाणिर्भूपोऽपि,
पराक्रम इवांगवान् । अकुतोभयचित्तः सं—स्तद्रक्षाप्रवणोऽभवत् ॥ ३८३ ॥ पृष्ठरक्षकवत्पृष्ठे, राज्ञः प्राज्ञशिरोमणिः ।
अमात्योऽप्यवधानेन योगिकृत्यं व्यलोकत ॥ ३८४ ॥ जपं मंत्रस्य होमं च, विरचय्य यथाविधि । त्रिःप्रदक्षिणयामास,
वह्निकुंडं स योगभृत् ॥ ३८५ ॥ ततो योगी जगौ दुष्टः, क्ष्मापं क्षेप्तुं हविर्भुजि । त्रिःप्रदक्षिणयार्चिष्म—त्कुंडं देव ! त्वम-
प्यदः ॥३८६॥ यथा मद्वत्तवापि स्यात्, सिद्धिः काचित्करस्थिता । भजेत्क्लेशोऽपि साफल्य—मसौ सद्व्यवसायवत् ॥३८७॥
वाचा तयैव विज्ञाय, तस्यारेरिव दुष्टताम् । स्मृत्वा च मंत्रिणः शिक्षां, चित्रांगदनृपोऽवदत् ॥३८८॥ असौ सिद्धिस्तवैवास्तु,
किं तया कृत्यमस्ति मे ? । सफलश्च ममायास—स्त्वदीप्सितविधानतः ॥३८९॥ आचचक्षे स रक्ताक्षो, भूत्वा रे त्वं न मद्वचः ।
कुरुषे किं ? रुषेदानी—मेव त्वां भस्मयाम्यहम् ॥३९०॥ इति ब्रुवंतमेवामुं, योगिनं दारुखंडवत् । उत्पाट्य चिक्षिपे वह्नि—
कुंडे सुमतिमंत्रिराट् ॥ ३९१ ॥ स तत्र क्षिप्तमात्रोऽपि, भूत्वा द्रागेव भस्मसात् । सुवर्णपुरुषो जज्ञे, मांत्रो हि महिमाद्भुतः
॥ ३९२ ॥ योगिनाऽध्यायि यद्रूपे, तत्तस्यैव हहाऽभवत् । यद्वा यच्चिंत्यतेऽन्यस्य, तत्स्वस्यैव भवत्यहो ॥ ३९३ ॥ वह्नि-

१ योगिनम् २ एकाग्रतया—सावधानतया.

कुंडांतरे दीप्रं, तं प्रेक्ष्य स्वर्णपूरुषम् । चित्रांगदोऽतिविस्मेर—चेताः सचिवमूचिवान् ॥ ३९४ ॥ अहो ते दीर्घदर्शित्व—महो ते मतिवैभवम् । अहो ते स्वामिभक्तत्व—महो ते सावधानता ॥ ३९५ ॥ मया सह भवानत्र, नायास्यद्यदि पुण्यवत् । अक्षेप्स्यन्मां तदा योगी, जातवेदसि हव्यवत् ॥ ३९६ ॥ हृणीयमानो भूपोप—श्लोकनात्सचिवोऽवदत् । देव ! त्वं सुकृतेनैव, सर्वत्र क्षेमवानसि ॥ ३९७ ॥ अरिर्मित्रं, वार्धिः स्थलमनलकीलाऽम्बुलहरी, तमस्तेजोऽरण्यं नगरमुरगो दाम भवति । रणः क्रीडास्थानं, विषममृतमस्त्रं सरसिजं, विपत्तिः संपत्तिः, स्फुरति सुकृते प्राग्भवकृते ॥ ३९८ ॥ कुंडादादाय तं स्वर्ण—पुरुषं पौरुषाधिकः । भूपतिर्मंत्रिणा सार्धं तत्रैवातीतवान्निशाम् ॥ ३९९ ॥ प्रातर्निजगृहं प्राप्तो, नृपस्तं हेमपूरुषम् । अर्चित्वा स्थापयामास, कोशे स्वे स्वर्णराशिवत् ॥ ४०० ॥ संपन्नैर्हेमभिस्तस्मात्, साक्षात्सिद्धरसादिव । चक्रे चित्रांगदो राज्यं, स्वाराज्यश्रीविजित्वरम् ॥ ४०१ ॥ कोशरक्षाचिकीः सोऽथ, कृती दुर्गकृते भ्रमन् । एतं चित्रगिरेः पार्श्वे, कूटाख्यं शैलमैक्षत ॥ ४०२ ॥ उच्चैः शिलोच्चयेऽमुष्मिन्, मेरोः प्रतिकृताविव । नृपः सुदुर्ग्रहं दुर्गं, लग्नः कारयितुं हठात् ॥ ४०३॥ यावन्निष्पाद्यते घस्रे, तावत्पतति तन्निशि । षण्मास्येवं गता भूप—स्तथापि स न तिष्ठति ॥४०४॥ अथ कूटगिरिस्वामी, कूटसंज्ञोऽवदत्सुरः । किं ताम्यसि ? क्षितीशात्र, दुर्गं कर्तुं न कोऽप्यलम् ॥ ४०५ ॥ चित्रांगदोऽभ्यधादेत—त्प्राणांतेऽपि करोम्यहम् । देवो जगाद यद्येवं, कुरु चित्राद्रिमूर्धनि ॥ ४०६ ॥ दद्याः मन्नाम चामुष्य, यथा स्यां रक्षकोऽनिशम् । तद्वाक्ये स्वीकृते राज्ञा, मुदितः सोऽगमत्सुरः ॥४०७॥ अभ्रंकषेऽत्र निष्पन्ने, दुर्गे चित्रांगदस्ततः । चित्रकूटेतिनामादात्,



१ अमी. २ स्तवनात् ३ अग्निशिखा. ४ संग्राम ५ स्वर ( स्वर्ग ) राज्यश्रीविजित्वरम् ६ पर्वते. ७ निष्पद्यते, प्र. ८ दुर्गम्, नपुंसकेऽपि दुर्गशब्दोऽस्ति.

तत्ख्यातं मेरुनामवत् ॥ ४०८ ॥ आवासान् सरसीवाप्या—रामांश्चातिमनोरमान् । विधाप्य स महीजानि—र्निजं राज्यमतिष्ठिपत् ॥ ४०९ ॥ चतुर्दशशती कोटी—ध्वजावासास्तदाऽभवन् । उपरिष्टादधस्ताच्च, लक्षनाथाः सहस्रशः ॥ ४१० ॥ चित्रकूटश्रियं दृष्ट्वा, तदा सर्वर्द्धिवर्धिनीम् । स्वर्गलुंटाकतां को न, दध्यौ चित्रांगदे नृपे ? ॥ ४११ ॥ अन्येद्युः कन्यकुब्जेशः, शक्तिकुब्जितशात्रवः । शंभलीशाभिधोऽश्रौषीत्, स्वर्णमर्त्यकथां जनात् ॥ ४१२ ॥ ततश्चित्रांगदात्स्वर्णी—पुरुषादित्सयोत्सुकः । शंभलीशो निजस्थाना—दभिषेणयति स्म तं ॥ ४१३ ॥ समुद्रैरिव कल्पांत—भ्रांतैः प्रौढबलैर्बलैः । प्लावयन् क्ष्मातलं सोऽस्था—च्चित्रकूटगिरेरधः ॥ ४१४ ॥ दृष्ट्वाऽपि कन्यकुब्जेश—मधःस्थं सैन्यसागरम् । दिविष्ठ इव दुर्गस्थः, सुखं चित्रांगदः स्थितः ॥ ४१५ ॥ चित्रकूटस्थिता लोका, अपि शोकापवर्जिताः । परिचिक्रीडिरे स्वैरं, विमानस्था इवामराः ॥ ४१६ ॥ अथोद्भटा भटाः कन्य—कुब्जेशादेशलेशतः । खंडिं पातयितुं दुर्गे, लग्ना मत्तद्विपेंद्रवत् ॥ ४१७ ॥ ते टंकैरुत्किरंतोऽपि, दलंतोऽप्यश्मगोलकैः । तद्वज्रनिर्मितमिव, न भंक्तुं प्राभवन् क्वचित् ॥ ४१८॥ अनिर्वेदः श्रियो मूल—मिति नीतिं विदंस्ततः । रोधयित्वोद्धतैर्योधै—र्दुर्गं तस्थौ स शत्रुराट् ॥ ४१९ ॥ गते घनतरे काले, प्रहिताः शत्रुभूभुजा । दुर्गस्वरूपं विज्ञातुं, चराश्चतुरतांचिताः ॥ ४२० ॥ ते दुर्गमध्यमाविश्य, स्वर्गस्येवातिशायिनीम् । विष्वद्रीचीं श्रियं तस्य, पश्यंतो विस्मिता हृदि ॥ ४२१ ॥ इतस्ततो भ्रमंतस्ते, द्विषच्छेदविधित्सया । सुमतेर्मंत्रिणः प्रापु—र्मंदिरं स्फुरदिंदिरम् ॥ ४२२ ॥ तदा च स्वगवाक्षस्थं, तातं सुमतिमंत्रिणम् । पुत्री रत्नवती प्राप, सपुत्रा प्रणिनंसया ॥ ४२३ ॥ नत्वा पितर-

१ दुर्गम्. २ अखेद —खेदाभावः. ३ षोडशवर्षरूपे. ४ सर्वदिग्व्यापिनीम्.

मूर्ध्वस्था, दुर्गाधःस्थं द्विपद्बलम् । पश्यंती तेषु शृण्वत्सु, चरेष्वाचष्ट सा (स) ऋजुः ॥ ४२४ ॥ दुर्गस्याधः स्थितास्तात !, कुतोऽमी व्यवहारिणः । अद्यापि न प्रक्षीयंते, कालोऽमीषां महान् गतः ॥ ४२५ ॥ स्मेरः स्माह स तां मंत्री, नैवामी व्यवहारिणः । किंत्वसौ कन्यकुब्जेशो, दुर्गं रुद्ध्वा बलैः स्थितः ॥ ४२६ ॥ त्वज्जन्मदिवसेऽत्रैत्य, तिष्ठत्यस्मिन्महीश्वरे । त्वं पर्यणीयथाः पुत्रि !, पुत्रवत्यप्यजायथाः ॥ ४२७ ॥ तन्निशम्यातिविस्मेरा, दुर्गादुत्तीर्य ते चराः । तां मंत्रितनयावार्तां, स्वनृपाय न्यवेदयन् ॥ ४२८ ॥ हर्षचित्रविषादादि—श्लिष्टः सोऽपि द्विपेन्द्रपतिः । ईदृग्दुर्गं कथं ग्राह्य—मिति चिंतां चिरं व्यधात् ॥ ४२९ ॥ अन्यदा दुर्गपार्श्वस्थं, कन्यकुब्जेश्वरं जगौ । चित्रांगदस्य मान्योच्चै—र्वेश्या वर्वरिकाह्वया ॥ ४३० ॥ आरोहत्यचलेश्वरं किमु शिशुः ? पोतोज्झितः किं तर—त्यंभोधिं ? किमु कातरः सरभसं संग्राममाक्रामति ? । शक्येष्वेव तनोति वस्तुषु जनः प्रायः स्वकीयश्रमं, तद् दुर्गग्रहणग्रहे ग्रहिलतां त्वं शंभलीश ! त्यज ॥ ४३१ ॥ वेश्यावाक्येन तेनांतः, खिन्नः प्रत्यर्थिपार्थिवः । मर्माविधांकुशेनेव, विद्धो हस्तीव मम्लिवान् ॥ ४३२ ॥ ततोऽरिभूभृता सैव, भिन्ना वर्वरिका धनैः । जगौ दुर्गग्रहोपाय— मित्येकांते सुमित्रवत् ॥ ४३३ ॥ अयं नृपः सदोद्घाट्य, द्वाराणि निखिलान्यपि । क्षुधार्तान् प्रीणयित्वैव, भुंक्ते धर्मतनूजवत् ॥ ४३४ ॥ गवाक्षस्था यदा केशान्, विवृणोमि तदा त्वया । द्वारोद्घाटं परिज्ञाय, प्रवेष्टव्यं झटित्यपि ॥ ४३५ ॥ ततो वेश्योदितोपायाद्, दुर्गं दुर्गतवेश्मवत् । शंभलीशोऽविशत्तूर्ण—मुद्धतैः सह सैनिकैः ॥ ४३६ ॥ चित्रांगदोऽप्यतिप्रीणो, भूत्वा तेन द्विपा समम् । शराशरि चिरं युद्धं, विदधे शक्रविक्रमः ॥ ४३७ ॥ शंभ-

१ स, ब. २ स पुस्त. ३ पुलिन्द्रिया. ४ अमिप अनिगच्छतीति अत्यमिनीन. ५ स्त् चित्रांगदो भूपा.

लीशशरासारै—र्दुर्वारैराकुलीकृतः । स पलायिष्ट शक्तोऽपि, शंडवद्वारिदोर्फलैः ॥ ४३८ ॥ हेमपूरुषमादाय, कोशाच्चित्रांगदस्ततः । क्षीरकूँपे ददौ झंपां, भीतः कुर्यान्न किं जनः ? ॥ ४३९ ॥ शंभलीशभटैस्तस्मिं—न्नन्विष्टोऽपि सहस्रधा । साधिष्ठानतया स्वर्ण—पुरुषोऽलंभि नैव सः ॥ ४४० ॥ तल्लक्ष्मीसारमादाय, तद्राज्ये तत्तनूरुहम् । वाराहगुप्तं न्यस्यागा—च्छंभलीशो निजं पुरम् ॥ ४४१ ॥ चित्रकूटनगोत्पत्ति—मित्यावेद्य मुदा मुनिः । विरराम स रामाख्यः, कूजित्वा कलँकंठवत् ॥ ४४२ ॥ अथासन्नं प्रभुप्रोक्तं, राज्याप्तिदिवसं विदन् । कुमारः सकुटुंबोऽपि, भेजेऽणहिल्लपत्तनम् ॥ ४४३ ॥ तत्र श्रीकृष्णदेवेन, भग्नीकांतेन गौरवात् । नीत्वा स सदनं सम्यक्, सच्चक्रे सपरिच्छदः ॥ ४४४ ॥ भग्न्या प्रेमलदेव्याऽथ कुमारे स्नापिते स्वयम् । तस्य स्नानजले सस्नौ, दुर्गा कृतवरस्वरा ॥ ४४५ ॥ शकुनं तत्तथा प्रेक्ष्य, कश्चिच्छाकुनिकोऽब्रवीत् । सप्तदिन्या कुमारैत—द्राज्यं भावि तव ध्रुवम् ॥ ४४६ ॥ एवमस्त्विति तद्वाक्य—मूरीकृत्य स कृत्यवित् । विद्वांसमिव सच्चक्रे, तं द्रव्यादिप्रदानतः ॥ ४४७ ॥ तदैव दैवयोगेन, चिरं भुक्त्वा महीमिमाम् । जयसिंहमहीजानि—र्देवभूयं समासदत् ॥ ४४८ ॥ इति निःशेषसामंता—मात्यसभ्यैकमत्यतः । उभौ राजसुतावन्यौ, कुमारं तं च सत्तमम् ॥ ४४९ ॥ स्नापितालंकृतान् कृत्वा, दिव्याश्वानधिरोप्य च । अमात्यैः सममानैषीत्, कृष्णदेवो नृपालयम् ॥ ४५० ॥ युग्मम् ॥ एतेषु कोऽस्ति राज्यार्ह, इति सम्यक् परीक्षितुम् । आदिक्षन्मंत्रिमुख्यास्ता—नधिष्ठातुं नृपासनम् ॥४५१॥ तत्रैको विनयानम्रः, संयोज्य करपंकजे । नत्वा च कृष्णदेवादीन्, निषसाद नृपासने ॥ ४५२ ॥ विनीतोऽयं करद्वंद्वं, स्वभृत्येभ्योऽपि योज-

---

१ चित्रागद.. २ वपभवत्. ३ करकै.. ४ जलकूपे. ५ कूपे, ६ देवताऽधिष्ठितत्वात्. ७ कोकिलवत्. ८ अथ, प्र.

यन् । निःस्थामेव कथं स्थाम्ना, विजेता दुर्जयान्रिपून् ॥ ४५३ ॥ अर्यमेव यदोजस्वी, महीजानिः प्रशस्यते । तदयं निष्प्रभत्वेन, वैभवं नेदमर्हति ॥४५४॥ ध्यात्वेत्यमात्यमुख्यास्त—मासनादुदतिष्ठिपन् । गुणोऽपि कल्प्यते दोषो, दैवे हि प्रातिकूलिके ॥ ४५५ ॥ [ त्रिभिर्विशेषकम् ] । द्वैतीयीकस्ततः स्रस्तवस्त्रश्चंचललोचनः । विवृतांगः शून्य इव, सिंहासनमशिश्रियत् ॥४५६॥ आवरितुं न शक्नोति, निजमप्यंगमेककम् । आवरिता कथमयं, सप्तांगं राज्यमूर्जितम् ॥४५७॥ तदयं हृदये शून्य–श्चलाचंलविलोचनः । काकवच्चूतमंजर्या, न योग्यो राज्यसंपदः ॥ ४५८ ॥ इति ते राजवर्गीणा—स्तमप्युत्थाप्य तत्क्षणम् । कुमारपालमादिक्षन्, क्ष्मापासनमलंकुरु ॥४५९॥ ततःस्कंधद्वयन्यस्त—संव्यानो विकसन्मुखः । प्रतापतापितादित्यः, स्फारालंकारभासुरः ॥ ४६० ॥ कृपाणं पाणिना धुन्वन्, गृहीत्वोर्द्ध्वं समीरणम् । स सिंहासनमध्यास्त, साक्षात्सिंह इवोद्धतः ॥ ४६१ ॥ युग्मम् ॥ तच्चेष्टासौष्ठवं तस्य, विभाव्य भुवनोत्तरम् । संतुष्टाः कृष्णदेवाद्या, राज्यार्होऽयमितीरिणः ॥ ४६२ ॥ अथ संवन्नवनव—शंकरे मार्गशीर्षके । तिथौ चतुर्थ्यां श्यामायां वारे पुष्यान्विते रवौ ॥ ४६३ ॥ सर्वग्रहबलोपेते, मीनलग्ने शुभे क्षणे । पुरोधसं पुरस्कृत्य, ब्रह्मवद्ब्रह्मपारगम् ॥ ४६४ ॥ कृष्णदेवप्रभृतयः, सामंता मंत्रिणोऽपि च । अभ्यषिंचंत तं राज्ये, कुमारं चक्रवर्तिवत् ॥ ४६५ ॥त्रिभिर्विशेषकम् ॥ ततः प्रेमलदेव्याद्या, भगिन्यो भाग्यभासुराः । मूर्तं जयमिवोद्दामं, मांगल्यं तस्य तेनिरे ॥ ४६६ ॥ उपायनानि हस्त्यादी—न्युपादाय सहस्रशः । सामंतास्तं नमश्चक्रु–र्वेदुंमिव संम-

१ निर्बल. २ अर्यमा–सूर्यः. ३ कल्पते, प्र. ४ द्वितीय एव–स्वार्थे ईकक् ५ श्रस्त, प्र. ६ स्वाम्यमात्य–सुहृत्—कोश,–राष्ट्र–दुर्ग–बलानि च, इत्यमरः, कस्यचिन्मतेऽष्टांगं, अष्टमं–प्रजा. ७ अतिचपललोचनः. ८ उच्चारिण. ✱ ११९९, ९ वेदपारगम्. १० द्वितीयाचंद्रवत्.

दात् ॥ ४६७ ॥ तदा वैतालिकाः पेठु—र्जगुर्गान्धर्वकोविदाः । नर्तक्यो ननृतुर्जज्ञे, हर्षेणेव महो महान् ॥ ४६८ ॥ रेणुर्मङ्गलतूर्याणि, ज्ञापयंतीव दिक्पतीन् । पंचमो लोकपालोऽयं, नवः प्रादुरभूदिति ॥ ४६९ ॥ रंजिताः कुंकुमांभोभिः, पुरमार्गभुवो वभुः । प्राप्य कांतं नवं कांतं, व्यक्तरागा इवाभितः ॥४७०॥ विकीर्णा राजमार्गेषु, रेजिरे कुसुमोत्कराः । हासा इव महीदेव्या, नवीनं स्वपतिं प्रति ॥४७१॥ पुरमप्यस्फुरत्तस्य, राज्ये रांज्यदिवाभितः । प्रत्यट्टं मंजुमांजिष्ठ—पताकाकोटिकूटतः ॥ ४७२ ॥ उल्लासयन् सुहृत्पद्मान्, हरन् द्विट्कैरवश्रियम् । आश्चर्यकारणं कस्य, स राजा न व्यजृंभत ॥ ४७३ ॥ ततः कुमारपालोऽदा—त्फलवत् प्रीतिवल्लरेः । स्वयं भोपलदेपत्न्यै, पट्टराज्ञीपदं मुदा ॥ ४७४ ॥ दौस्थ्योपकृतितः कृत्वो—दयनं मंत्रिपुंगवम् । अमात्यं तत्सुतं चक्रे, वाग्भटं स प्रभोद्भटम् ॥ ४७५ ॥ अन्येऽपि ज्ञातिमान्या ये, स्वकीया गौरवोचिताः। तान्नियुक्तान् व्यधाद् भूपो-ऽभ्युदयस्य फलं ह्यदः ॥ ४७६ ॥ पुरजनपदग्रामत्राणं भटव्रजसंग्रहः, कुनयदलनं नीतेर्वृद्धिस्तुलार्थमितिस्थितिः । व्रतिषु समता चैत्येष्वर्चा सतामतिगौरवं, प्रशमनविधिं नव्ये राज्ये व्यधादिति स प्रभुः ॥ ४७७ ॥ अथाग्रे नृपतेः प्रेक्ष्य, स्फुरतः सचिवान्नवान् । चुकुपुः प्रथमेऽमात्या, जातिं जातिरसासहिः ॥४७८॥ मिथस्ते मंत्रयामासु—र्नीतिः काऽप्यस्य भूपतेः । हित्वा यद्राज्यधुर्यान्नः, पुरश्चक्रे नवानसौ ॥४७९॥ यद्वा किं वेत्त्यसौ राज्य—सूत्रं जाल्मैकशेखरः । क्षीरनीरविवेके हि, वकोटो न पटुः स्फुटम् ॥ ४८० ॥ अथ स्वाम्यनुमानेन, भृत्यवर्गो विवल्गति । यन्मूर्खान् सचि-

---

१ नवीन'-अपूर्वः. २ मनोहरम्. ३ पतिम्. ४ रज्यत्-प्र. ५ रक्तवर्णा. ६ समूहात्. ७ चंद्रपक्षे-वैपरीत्यादाश्चर्यकारणम्. ८ (विधिर्नव्ये.) ९ राज्य-व्यवस्थाम्. १० क्रूरैकशेखरः. ११ स्वाम्यनुसारेण. १२ ऽपि, प्र.

वीचक्रे, स्वयं मूर्खाग्रणीरसौ ॥ ४८१ ॥ जडोऽभ्युदयमासाद्य, निरस्यति गुणोज्ज्वलान्[1]। किमुद्वृत्तोऽब्धिनीरौघो, बहिः क्षिपति नो मणीन् ॥ ४८२ ॥ अद्याप्यबद्धमूलत्वा—त्तदमुं सुखनिग्रहम्। घातकैर्घातयित्वाऽद्य, नवीनः स्थाप्यते नृपः ॥ ४८३ ॥ यथाऽस्मत्स्थापितत्वेन, सोऽस्मदुक्तं न लंघते। अन्यथाऽयं निकारोऽस्मान्, पीडयिष्यति शल्यवत् ॥४८४॥ षड्भिः कुलकम् ॥ अथ ते हंतुमात्मान—मिव भूभृज्जिघांसया। सांधकारे गृहद्वारे, घातकान्निश्यतिष्ठिपन् ॥४८५॥ अवेत्य कश्चिदासस्त—त्सर्वमूर्वीभृतेऽभ्यधात्। पुण्ये प्रगल्भमाने हि, सत्सु[2] न स्यादरीप्सितम् ॥ ४८६ ॥ तदैव भूपतिर्भृत्यै—र्मृगयित्वा गृहांतरात्। आनाययद्भटान् शस्त्रो—द्भटांस्तान् यमदासवत् ॥ ४८७ ॥ युष्मान् कः प्रजिघांयेति[3], चौलुक्ये परिपृच्छति। राजवृद्धकृतं ते त— द्विरुद्धं सर्वमभ्यधुः ॥ ४८८ ॥ तानाकार्य क्रुधा भूपः, स्वयं स्वीकृतदूषणान्[4]। तैरेव घातयामास, क्व स्याद्राजद्रुहां शिवम् ॥४८९॥ हंतेहंते[5] महांतं ये, हंतुं ते स्युर्महापदः। गिरिं विदारयंतः किं, भग्नदंता न दंतिनः ? ॥४९०॥ हतेषु तेषु भीतास्तं, परे साधु सिषेविरे। न ह्युग्रतां विना लोकः, प्रायेण स्याद्वशंवदः ॥४९१॥ कृष्णदेवः पुनः श्याल—भावाद्राज्यार्पणादपि। निर्मिमाणोऽनिशं नर्म, तदाऽऽज्ञां मन्यते स्म न ॥ ४९२ ॥ सभायां राजपाट्यां च, दुःस्थावस्थां पुरातनीम्। स नृपं श्रावयामास, नर्मणा मर्मवन्मुहुः ॥ ४९३ ॥ तस्य मर्माविधाऽनेन, नर्मणाऽपि महीपतिः। दंभोलिनेव शिखरी, दूनस्तं प्रोचिवान् रहः ॥४९४॥ हास्यास्पदं यदप्यस्मि, श्यालभावादहं तव। तथाऽप्यसमये[6] तद्धि, सर्वथा ऽञ्चति नौचितीम् ॥ ४९५ ॥ यच्च त्वं भाषसे मर्म, सर्वथापि तदप्यसत्। अंतः शल्यायते नृणां, यत्त-

* किमुद्वृत., प्र. १ तिरस्कार. २ सज्जनेषु. ३ प्रेषितवान्. ४ घातकैः. ५ हंत ईहंते, इतिच्छेद, ६ हासम्.

दुद्घाटनं खलु ॥ ४९६ ॥ यः स्वस्येव परस्यापि, स्थगयस्येव दूषणम् । विश्वं विश्वं वशीकर्तुं, स एवात्र प्रगल्भते॥४९७॥ किंच दौःस्थ्यं न कस्यासी—न्महतोऽपि स्वकर्मणा ? । अवस्थां मामिकां यत्त्वं, खलवन्नाषसे मुहुः ? ॥४९८॥ संपदं विपदं चापि, महानाप्नोति नेतरः । हानिं वृद्धिं च लभते, चंद्रमा नोडुमंडलः ॥ ४९९ ॥ एकांते कांतमन्यद्वा, ब्रूयास्तत्त्वं यदृच्छया । सदोमध्ये तु सन्मुद्रा—माद्रियेथा ? महात्मवत् ॥ ५०० ॥ क्षमापतेरिमां शिक्षां, दुःशैक्ष इव सद्गुरोः । राज्यदानातिदृप्तात्मा, कृष्णदेवोऽग्रही ( हि ) ष्ट न ॥ ५०१ ॥ अथानुचिततद्धास्य—क्रुद्धश्चौलुक्यराड् जगौ । अस्माद् ग्रहिलवत्कस्मा—न्निषिद्धोऽपि न तिष्ठसि ? ॥ ५०२ ॥ यतो हास्यात्प्रवर्धिष्णुः, क्रोधो वाताहृवाग्निवत् । द्रुमानिव नयत्यंतं, बांधवानपि तत्क्षणम् ॥ ५०३ ॥ तस्मात्कामयसे कामं, यदि जीवितमात्मनः । तर्हिं हास्यान्निवर्तस्व, कुकृत्यादिव भावुकः ॥ ५०४ ॥ कृष्णदेवस्ततोऽवादी—न्नरदेवं वमन्निव । क्रूराक्षरवचोव्याजात्, कोपवह्निकणान् बहिः ॥ ५०५ ॥ मयैव रंकतां भंक्त्वा, त्वमैश्वर्ये न्यवेश्यथाः । इदानीं तेन मत्तः सन्, मामेवमवमन्यसे ॥ ५०६ ॥ अभ्रमीर्यत्र भिक्षार्थं, भिक्षुवत्प्रतिमंदिरम् । व्यस्मार्षीः किमु ? तद्दौःस्थ्य—मरे मदुपकारवत् ॥५०७॥ परं गुरूकृतोऽपि स्वं, नीचः सात्म्यं न मुंचति । उच्चासनस्थितोऽपि स्या—न्न काको हंसचेष्टितः ॥ ५०८ ॥ दुर्जनश्च कृशानुश्च, द्वाविमौ सदृशौ मतौ। नयेते यत्क्षयं सद्यः, स्वस्याप्युल्लासकारणम् ॥ ५०९ ॥ विब्रुवाणेऽपि तत्रेत्थं, सावहित्थो महीपतिः । नादीदृशन्निजं मध्यं, क्षुभितोऽपि पयोधिवत् ॥ ५१० ॥ विब्रुवन् खलवन्नैष, स्याता शिक्षां विना ध्रुवम् । विचार्येति निजे चित्ते, व्यस्राक्षीत्तं तदा नृपः ॥५११॥

१ समग्रम्. २ जगत् ३ भव्यजनोऽथवा भगिनीपति . ४ ऐश्वर्येण. ५ स्वभावम्. ६ अवहित्थया–छन्नभावेन सहित .

अथ सेवार्थमायातं, कृष्णदेवं रहःस्थितम् । पूर्वसंकेतितैर्मल्लै—रत्यूर्जस्वलवर्ष्मभिः ॥ ५१२ ॥ धारयित्वाऽखिलांगानि, मोटयित्वा च संधितः । दृशौ जीवितसर्वस्व—मिवास्याचीकृपत्प्रभुः ॥ ५१३ ॥ युग्मम् ॥ सज्जयित्वा पुनर्देह—माक्रोशंतं मुहुर्मुहुः । उपायनमिव प्रैपी—ज्ञाता तं स्वसृवेश्मनि ॥ ५१४ ॥ राज्यश्रीस्थापनाचार्ये, पूज्ये भग्नीपतित्वतः । कृष्णदेवेऽन्धिते तस्मिन्, सामंताः सकलाः परे ॥ ५१५ ॥ पोषितोऽपि पयसा सरीसृपं-स्तर्पितोऽपि नवसर्पिषाऽनलः । सत्कृतोऽपि शतधाऽपि दुर्जनः, स्थापितोऽपि न महीपतिर्निजः ॥ ५१६ ॥ इति सूक्तं स्मरंतोऽन्त—र्नीतिरीतिविशारदाः । देवेंद्रमिव देवास्तं, चौलुक्यं पर्युपासत ॥ ५१७ ॥ त्रिभिर्विशेषकम् । सिद्धेशधर्मपुत्रोऽथ, भटश्चारभटो वली । चौलुक्याज्ञामवज्ञाय, भेजेऽर्णोराजभूभुजम् ॥ ५१८ ॥ इत्थं निष्कंटकं राज्यं, कृत्वा देशे समंततः । मूर्ध्नि शेषामिव न्यास्थन्निजामाज्ञां महीपतिः ॥ ५१९ ॥ कृतज्ञत्वेन स स्मृत्वा, विधातुं प्रत्युपक्रियाम् । जनैराजूहवत्स्वोप—कर्तॄंस्तान् हालिकादिकान् ॥ ५२० ॥ न्यस्यांतर्वदरीपत्रं, येनात्रायि दयालुना । सत्कृत्य भीमसिंहं तं, स्वांगरक्षं नृपो व्यधात् ॥ ५२१ ॥ त्र्यहं बुभुक्षितो मार्गे, यया वल्ला दयार्द्रया । अध्यारोपि निजं यान—मभोजि च महादरात् ॥ ५२२ ॥ भग्नीभावेन तां मत्वा, निर्माप्य तिलकं तया । तस्यै देवश्रिये ग्रामं, सोऽदात्सत्या हि वाक् सताम् ॥५२३॥ युग्मम् ॥ येनांतरिष्टकापाकं, क्षिप्त्वा ऽरक्षि स सज्जनः । सामंत्यकारि भूपेन, चित्रकूटाह्वये गिरौ ॥ ५२४ ॥ मार्गे सहचरीभूय, यः कष्टं सोढवान् मुहुः । तस्मै वोसरिमित्राय, स ददौ लाटमंडलम् ॥ ५२५ ॥ ऊचे च जागरोद्विग्नौ, यदब्रूतं युवां वचः । तत्सत्यं जातमेतत्त्वं,

१ सर्प . २ धवलकम्. ३ असामन्त' सामन्त अकारि इति सामंती अकारि.

पित्रोः सज्जन भो ! वदेः ॥ ५२६ ॥ चणकान् यो मुधाऽदत्त, तस्मै स वटपद्रकम् । कटुकायार्पयत्को हि, नोपकर्तारमं चति ॥ ५२७ ॥ उपकारव्रतस्यास्य, कथमन्यद् व्रतं समम् ? । इह लोकेऽपि यत्सद्यः, फलत्येव कलैः फलैः ॥ ५२८ ॥ नीचस्यापि भवत्युच्चै—रुपकारः फलेग्रहिः । महीयसां कृतज्ञानां, स तु किं प्रणिगद्यते ? ॥ ५२९ ॥ एवं निजोपकर्तृ-स्तान्, सच्चक्रे सकलान्नृपः । हेमाचार्यं विमुच्यैकं, धर्मप्रास्यंतरायतः ॥ ५३० ॥ अथ कर्णावतीपुर्यां, धर्मधुर्यान् प्रमोद-यन् । राज्यावाप्तिं कुमारस्य, हेमसूरिः स शुश्रुवान् ॥ ५३१ ॥ निमित्तोक्तिक्षणे जैन—धर्मेऽहं भक्तिमद्भुताम् । करिष्या-मीत्यसौ पूर्वं, प्रत्यश्रौषीन्मदग्रतः ॥ ५३२ ॥ स्मरत्येतन्न वेत्यस्य, चित्तजिज्ञासया ततः । व्यहार्षीत्पत्तनं सूरि—र्मानसं राजहंसवत् ॥५३३॥ युग्मम् ॥ आगत्योदयनामात्यः, संमुखं संघसंयुतः । अत्युत्सवेन सूरींद्रं, पुरमध्यमवीविशत् ॥५३४॥ पप्रच्छोदयनं सूरि—र्विजनेऽसौ नृपस्तव । मम स्मरति किं नो वा ?, संप्रति प्राप्य वैभवम् ॥ ५३५ ॥ उवाच सचिवः सर्वा—नुपकर्तॄन् स्वबंधुवत् । उदारः सच्चकारायं, सस्मारापि प्रभुं न तु ॥५३६॥ सूरिः शशंस तर्हि त्वं, ब्रूयाः क्षितिपतिं रहः । त्वयाऽद्य नैव स्वप्तव्यं, नव्यराज्ञीगृहे निशि ॥५३७॥ केनोक्तमिति पृच्छेच्चे—त्प्रातर्जातचमत्कृतिः । अत्याग्रहे तदा नाम, मम तस्मै निवेदयेः ॥ ५३८ ॥ ओमित्यभ्युपगम्यैतां, वाचं सचिवपुंगवः । शंसति स्म विशां पत्ये, सोऽपि चक्रे तथैव तत् ॥ ५३९ ॥ निशि विद्युन्निपातेन, दग्धे तस्मिन्नवे गृहे । मृतायां नव्यपत्न्यां च, चमच्चक्रे महीपतिः ॥ ५४० ॥ प्रभाते पृष्टवान् भूभृ—न्मंत्रिन् ! केनेदमद्भुतम् । आचख्ये ज्ञानमाचक्ष्व ? । जीवातुमिव तं मम ॥ ५४१ ॥ न्यजिज्ञप-

१ फलत्यविकलै', प्र.

भूपं मंत्री, नायं तत्कथनक्षणः । न पारयति यद्देव—स्तं श्रोतुं राज्यलीलया ॥ ५४२ ॥ जगाद सादरं स्वामी, सचिवैतत्किमुच्यते ? । प्राणत्राणकरो यो मे, न शृणोमि तमप्यहम् ॥ ५४३ ॥ निर्वंघेऽभिदधे सैष, स्तंभतीर्थपुरे पुरा । कर्हि मे भविता ? स्वास्थ्य—मिति देवस्य पृच्छतः ॥ ५४४ ॥ राज्याप्तिपत्रिकाऽदायि, लेखित्वैकाऽपरा मम । येन तेनेदमावेदि, ज्ञानं श्रीहेमसूरिणा ॥ ५४५ ॥ युग्मम् ॥ इत्युक्त्वाऽदीदृशन्मंत्री, पत्रीं तां भूभृते तदा । सोऽपि तां वाचयित्वा द्राग्विस्मेरः सूरिमस्मरत् ॥ ५४६ ॥ ऊचे च सचिवं कीदृक्, सूरीयं ज्ञानमद्भुतम् ? । प्रत्याययन्मनो यन्मे, राज्याप्तिदिवसेऽद्य च ॥ ५४७ ॥ स क्वास्तीत्यनुयुक्तः सन्, जगादोदयनो मुदा । अधुनाऽत्राप्तवानस्ति, तत्राशीर्वितितीर्षया ॥ ५४८ ॥ मंत्री ततस्तदादिष्ट—स्तदुक्तं प्रणिगद्य तत् । हेमाचार्यं सहादाय, नृपास्थानीमुपास्थित ॥ ५४९ ॥ दृष्ट्वा सूरींद्रमायांतं, विनयैकावनिर्नृपः । अभ्युत्तस्थौ यथा शुक्ला-पांगो वार्षिकवारिदम् ॥ ५५० ॥ मूर्तं स्वभक्तिप्राग्भार, इव हेमासनेऽद्भुते । निवेश्य तं नमश्चक्रे, विधिवत्स विनेयवत् ॥ ५५१ ॥ प्रांशुदंतांशुरोचिर्भि—र्दिशो धवलयन्निव । इत्याशीर्वादयामास, भूवासवमथ प्रभुः ॥ ५५२ ॥ न तामस्यः स्फूर्तिं दधति न वरं यस्य पुरतः, श्रियस्तैजस्योऽपि त्रिजगदवगाहैकरसिकाः । अचक्षुः संलक्ष्यं परिहृतपथं वाङ्मनसयो—र्महस्तद्राजंस्ते शमयतु समंतादपि तमः ॥ ५५३ ॥ गुर्वस्मरणरूपेण, प्रमादेन ततो नृपः । अपराधीव लज्जावान्, प्रांजलिर्जल्पति स्म तम् ॥ ५५४ ॥ कृतघ्नत्वेन भगव—न्नहं त्वां प्रति संप्रति । न दर्शयितुमीशोऽस्मि, मुखं वंचकवन्निजम् ॥ ५५५ ॥ तामलिप्त्यां तथा त्रातः, प्रभुणाऽहं द्विषद्ग्रहात् । आश्वासितश्च

१ विनयाद्वितीयाधारः' २ शुक्ल' अपाग'—नेत्रप्रान्तभागो यस्य स—मयूर इत्यर्थः. ३ मूर्तिगति. ४ तेजसः ५ प्रभा.. ६ स्तंभतीर्थे.

राज्याप्ति-दिनपत्रीसमर्पणात् ॥ ५५६ ॥ ऐश्वर्ये जातवत्यस्मिन्, दूरेऽस्तु प्रत्युपक्रिया । अस्मार्षमपि नाहं त्वां, कृतज्ञत्वमहो मम ॥ ५५७ ॥ उपकारैर्भवत्क्लृप्तैः, पुराऽपि ऋणवानहम् । प्राणसंत्राणतोऽद्यापि-मृणार्णमधमर्णवत् ॥ ५५८ ॥ अकृत्रिमोपकर्तॄणां, त्वमेको ग्रामणीरसि । यत्कृतघ्नेऽपि मय्येवं, वात्सल्यं तव वल्गति ॥ ५५९ ॥ कृतज्ञादुत्तमो नान्यः, कृतघ्नादधमोऽपि न । यदाद्यः स्तूयते लोकै-र्निंद्यते चांतिमोऽनिशम् ॥ ५६० ॥ अहो संप्रत्ययासिष्टां, परां कोटिमुभावपि । उपकारधुरीणेषु, त्वं कृतघ्नेष्वहं पुनः ॥ ५६१ ॥ निःशेषमपि मे मंतुं, तत्क्षमित्वा क्षमाधन ! । अनुगृह्णीष्व मामद्य, राज्यलक्ष्मीपरिग्रहात् ॥ ५६२ ॥ अथ भूभृन्मुखोद्भूत-भक्तिभंगितरंगितैः । प्रीणितात्मा प्रभुः प्रोचे, सिंचन्निव सुधारसैः ॥ ५६३ ॥ इत्थं विकत्थसे कस्मात् ?, स्वं मुधा वसुधाधव ! । उपकारक्षणो यत्ते, संप्रत्यस्ति समागतः ॥ ५६४ ॥ त्वमेव मौलिमाणिक्यं, कृतज्ञानां कृतिन्नसि । स्वपूर्वज इवाभाति, यस्येदृग्गौरवं मयि ॥ ५६५ ॥ यच्चार्थयसि राज्यार्थं, तत्त्वत्कैः कियत्किल । परं न युज्यते देव !, तन्मे चारित्रचारिणः ॥ ५६६ ॥ सर्वसंगपरित्याग-श्चारित्रं जगदे जिनैः । तत्प्रणश्यति राज्येन, जलयोगेन चित्रवत् ॥ ५६७ ॥ संयमश्रीर्नृपश्रीश्च, विद्विषाते परस्परम् । यदेकस्याः प्रवेशेऽन्या, सपत्नीव पलायते ॥५६८॥ कृतज्ञत्वेन चेद् भूप !, त्वं प्रत्युपचिकीरसि । आत्मनीने तदा जैने, धर्मे धेहि निजं मनः ॥५६९॥ मदग्रतस्त्वया प्राग-प्येतदस्ति प्रतिश्रुतम् । उक्तं सत्याप्यतां तत्स्वं, महतां न हि गीर्मृषा ॥५७०॥ अलोलुपत्वं सूरींदो-

ॐ आप्लृ लम्भने चौरादिकधातोर्णिजभावे लङिरूपम् १ ऋणोपरि ऋणमृणार्णम्, ऋणाधिकं ऋणम्. २ अग्रेसरी. ३ प्रेम. ४ चेष्टते. ५ अपराधम्. ६ स्वीकारात्. ७ निंदसि. ८ आत्मानम्. ९ त्वत्कृतेऽग्रे तत्-राज्यं कियन्मात्रमस्तीत्यर्थः १० चारित्रम् ११ आत्महिते. १२ स्वकीयम्.

निःस्पृहस्येव वीक्ष्य तत् । कुमारपालो विस्मेर-स्तमूचे विनयांचितः ॥ ५७१ ॥ भवदुक्तं करिष्येऽहं, सर्वमेव शनैः शनैः । कामयेऽहं परं संगं, निधेरिव तव प्रभो ! ॥ ५७२ ॥ भवत्संगाद्यथा किंचि-त्तत्त्वं बुध्ये स्वचेतसि । सत्संग एव यत्तत्त्व—प्राप्तावौपयिकं विदुः ॥ ५७३ ॥ तदुरीकृत्य सूरीशो, यथासमयमेत्य च । क्ष्माभुजे समाचख्यौ, धर्ममर्मांतरांतरा ॥ ५७४ ॥ निर्मलीभवितुं लग्नो, जलाशय इवाशयः । नृपतेर्गुरुवाग्भंगी-कतकक्षोदयोगतः ॥५७५॥ रक्षाऽऽयव्ययचिंतनं १ पुरजनान्वीक्षा २ सुरार्चाऽशने ३, कोशान्वेषण ४ मन्यनीवृतिचरप्रेषो ५ यथेच्छं भ्रमिः ६ । हस्त्यश्वादिशरासनादि-रचना ७ जेतव्यचिंता समं, सेनान्येति ८ कृतिः क्रमेण नृपतेर्घस्रस्य भागाष्टके ॥५७६॥ एकांते परमाप्तवाक्श्रुति १ रति-प्रौढार्थशास्त्रस्मृति २-स्तूर्यध्वानपुरस्सरं च शयनं ३ निद्रा च भागद्वये ४-५ । बुद्ध्वा वाद्यरवैरशेषकरणध्यानानि ६ मंत्रस्थिति ७—र्विप्राशीर्भिषगादिदर्शन ८ मिति स्याद्रात्रिभागाष्टके ॥ ५७७ ॥ इति राजनीतिगदितां यशस्करीं, स्थितिमाश्रयन्नवहितो दिवानिशम् । स चुलुक्यवंशतिलको नरेश्वरो, निजवेश्मवत् क्षितितलं समन्वशात् ॥ ५७८ ॥ त्रयाणां सर्गाणां मीलने ॥ १८७७ ॥

॥ इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरिते महाकाव्ये
कुमारपालर्हिंडिराज्याप्तिवर्णनो नाम तृतीयः सर्गः ॥

१ उपाय॰. २ आनन्ति. ३ प्रेक्षणम्. ४ क्रिया-करणम्. ५ कर्तव्यचिन्तनानि. ६ मंत्रिप्रमृतिभिर्गुप्तविचारः. ७ सावधानः.

## ॥ अथ चतुर्थः सर्गः ॥

अथ षाड्गुण्यवित् सिद्ध—शक्तिसिद्ध्युदयत्रयः। कुमारपालो भूपालः, कामयामास दिग्जयम् ॥ १ ॥ स्वस्योपचयमालोक्य, परेषामितरं पुनः। राज्ञा जिगीषुणा भाव्यं नीतिरीतिरितीयती ॥ २ ॥ ततः श्रेष्ठग्रहे लग्ने, सप्तश्रीभिरिव स्वयम्। स्वगोत्रवृद्धनारीभिः, कृतप्रस्थानमंगलः ॥ ३ ॥ पिंडीकृतं यश इव, छत्रं बिभ्रत्सितद्युति। मूर्तिमंतं जयमिवा-ध्यारूढः प्रौढसिंधुरम् ॥ ४ ॥ वंदिवृंदसमुत्कीर्त्य—कीर्तिकल्लोलकेलिभिः। वाचालीकृतदिग्चक्रः, प्रतस्थे दिग्जयाय सः ॥ ५ ॥ त्रिभिर्विशेषकम् ॥ स्वर्णभूषणदंभेन, वपुष्मद्भिरिवाभितः। तेजःस्तोमैः समाक्रांताः, सामंतास्तस्य निर्ययुः ॥ ६ ॥ प्रक्षरप्रस्फुरत्पक्षाः, प्रसरन्मदनिर्झराः। जंगमक्ष्माधराकारा, द्विरदेंद्राः प्रतस्थिरे ॥ ७ ॥ तार्क्ष्या इवान्यरूपेण, समीरा इव चाक्षुषाः। चेलुश्चलाचलाग्रांह्रि—दत्तरंगास्तुरंगमाः ॥ ८ ॥ सौवर्णध्वजदंडोद्य—त्कांतिचंडतडिज्जुषः। निरुद्धवर्त्मव्योमानः, प्रातिष्ठंत रथांबुदाः ॥ ९ ॥ अनेकरूपतां प्राप्ता, मूर्ता वीररसा इव। खड्गव्यग्रकरोदग्राः, पत्तयो निरयासिषुः ॥ १० ॥ युद्धश्राद्धतया योधाः, पारवश्येन सेवकाः। रसिकाः प्रेक्षकत्वेन, लुंटाका लुंटनेच्छया ॥ ११ ॥ निर्धनाः कर्मकृ-

---

१ षड्गुणा.—राज्ञां राज्यरक्षणे उपाया. षट्-ते एव षाड्गुण्यं, यदुक्तं—षाड्गुण्यमिति यत्प्रोक्तं, तन्निबोध युधिष्ठिर ।। संधायासनमित्येव, यात्रासन्धानमेव च, ॥ १ ॥ विगृह्यासनमित्येव, यात्रा संपरिगृह्य च। द्वैधीभावस्तथाऽन्येषां, संश्रयोऽथ परस्य च ॥ २ ॥ संधायासनं—संधिं कृत्वाऽवस्थितिः १, यात्रासंधानं—यानं युद्धाय २, विगृह्यासनं—वैरं कृत्वाऽवस्थानम् ३, यात्रां संपरिगृह्यासनं—शत्रोर्भयप्रदर्शनार्थं यानं प्रदर्श्य स्वस्थानेऽवस्थानम् ४, द्वैधीभाव·—उभयत्रसंधिकरणम् ५, परस्यान्यस्याश्रयो-दुर्गादेर्महाराजस्य वा ६. २ ईषत्प्रमाणा, ३ सप्तांगराज्यलक्ष्मीभिरिव, सप्तश्रीभिः, प्र. ४ युद्धाय श्राद्धं-श्रद्धा तद्भावस्तता तया—

स्वेन, भट्टा द्रव्यादिलिप्सया । वाणिजा व्यवहारेण, भूपसैन्ये निरैयरुः ॥ १२ ॥ युग्मम् ॥ गर्जत्तूर्यघनांस्तस्य, प्रस्थानपटहस्वनाः । सत्त्वानि कंपयांचक्रु—र्द्वयोनामपि भूभृताम् ॥ १३ ॥ तुरंगमखुरोत्खाताः, सांद्रिताः स्यंदनव्रजैः । घना इव रजःपुंजा, रोदसीं पर्यपूपुरन् ॥ १४ ॥ सैन्यांधंकरणान् रेणु—कणान् दूरप्रसृत्वरान् । द्विपेंद्राः शमयामासु—र्दययेव मदोदकैः ॥ १५ ॥ हास्तिकाश्वीयमानुष्य—कौक्षकौष्ट्रकसंकुलम् । जनस्तच्चक्रमालोक्य, मेने मिलितवज्जगत् ॥ १६ ॥ पूर्वं चौलुक्यचंद्रं तं, स्वपूर्वजमिवादरात् । उपायनैरुपास्ते स्म, जावालपुरनायकः ॥ १७ ॥ देशं सपादलक्षाख्यं, क्रमात्कामन् स राजघः । अपूजि भग्नीकांतेना—र्णोराजधरणीभुजा ॥ १८ ॥ वलोच्छलितधूलीभि—रुभयानपि भूभृतः । स्थगयन् गूर्जरक्ष्मापः, प्रपेदे कुरुमंडलम् ॥ १९ ॥ कुरुनाथोऽरिमाथोग्रं, तं विज्ञाय जनाननात् । स्वगोत्रदैवतमिव, प्राणमद्विनयावनिः ॥ २० ॥ तदर्थितो नृपोऽध्यास्य, तत्पुरं हस्तिनापुरम् । तत्र दैत्रिमया कीर्त्या, गंगाद्वैतमसूत्रयत् ॥ २१ ॥ ततो मंदाकिनीतीरा—न्निवृत्तो गुर्जरेश्वरः । साधयन्मध्यनृपतीन्, प्रतस्थे मालवान् प्रति ॥ २२ ॥ अवगम्य तमासन्नं, चित्रकूटपतीकृतः । कृतज्ञः सज्जनोऽभ्येत्य, निजभक्तिमदीदृशत् ॥ २३ ॥ अवंतीदेशमासाद्य, स्वर्गदेशमिव श्रिया । कुमारपालदेवेन, तदध्यक्षो व्यगृह्यत ॥ २४ ॥ विचार्य गूर्जरैः पूर्वं, पूर्वजान्निर्जितान्निजान् । उपास्त मालवेंद्रस्तं, वलिष्ठे हि नतिर्नयः ॥ २५ ॥ अथ प्रस्थितवान् भूपो—ऽपरनैदाघभानुवत् । शोषयन् द्वेषिजंबालं—मासदन्नर्मदां नदीम् ॥ २६ ॥ जंबूकदंवजंबीर—रसालादिद्रुमाकुले । मालतीमल्लिकाकुंद—पाटलामोदमेदुरे ॥ २७ ॥ वातोच्छलत्पयोलेश—शीतली-

१ समूहाः, २ शत्रुराजानां, पर्वताना च ३ औक्षक.—वृषभसमूहः, ४ स्थित्वा—आश्रित्य, ५ दाननिर्वृत्त्या ६ गंगा, ७ कर्दमम्.

भूतभूतले । रेवातीरवने सैन्यं, गूर्जरेशो न्यवेशयत् ॥२८॥ युग्मम् । केचित्तरुतले तस्थुः, केचित्सिकतिले[1] तटे । आर्द्रदुर्वावणे[2] केचि—त्पथश्रांताश्चमूचराः ॥२९॥ जननीमिव तां दृष्ट्वा, नर्मदां शर्मदायिनीम् । तत्पयःपानपुष्टाः प्राग्, द्विपा मुमुदिरेतमाम् ॥ ३० ॥ वन्येभदर्शनोत्सर्प—न्मदवारिविवर्धिनि । तज्जले सुचिरं केलिं, चक्रिरे कुंजरेश्वराः ॥ ३१ ॥ श्रोतस्तटे परिक्षुण्णै[3]—र्घनसारैरि[4]वांचिते । सादिभिः श्रमनाशाय, वेल्लयामासिरे हयाः ॥ ३२ ॥ स्नात्वा स्थिताः सरित्तीरे, रेजिरे सैन्यवाजिनः । तत्कालोदन्वदुत्तीर्णा[5], घना हरिहया[6] इव ॥ ३३ ॥ पक्काम्रादिफलाढ्येऽपि, रेवाप्रांतवनांतरे । शमीष्वेवौष्ट्रकं रेमे, प्रायः स्वेष्टं हि तुष्टये ॥३४॥ स्वादु पीयूषवत्पीत्वा, नादेय[7]मुदकं वृषाः । मृदुला[8] हारहूरावद्[9]—दूर्वा जग्ध्वा च निर्वृताः[10] ॥ ३५ ॥ तापार्त्तः पृतनालोकः[11], स्नात्वा शीते सरिज्जले । सुधाभिषेकसंपाद्य—मुपासामास संमदम् ॥३६॥ गलत्पंकजकिंजल्क[12]—पुंजपिंजरितांतरम् । मन्दमंदानिलोन्मील—ल्लोलकल्लोलसंकुलम् ॥३७॥ स्रवंतीमध्यमध्यास्य[13], वयस्यैः कलभैरिव । सहितः परिचिक्रीडे, गूर्जरेंद्रो गजेंद्रवत् ॥ ३८ ॥ युग्मम् ॥ दृगंजनांगश्रीखंड—लेपक्षालनया क्षणम् । अस्थानेऽपि वितन्वत्यो, यमुनास्वर्धुनीभ्रमम्[14] ॥ ३९ ॥ परस्परेण व्यात्युक्षीं[15], सृजंत्यः स्मेरनीरजैः । रमावद्रेमिरे नद्या—मंतःपुरपुरंध्रयः ॥ ४० ॥ युग्मम् ॥ सुमनोमालभारिण्यः, पल्लवोत्तंसपेशलाः[16] । चमूचर्यश्चिरं चेरु—र्देवीवत्तीरकानने ॥४१॥ तां तीर्त्वाऽऽभीरविषये, प्रकाशानगरीश्वरम् । चौलुक्यनृपतिश्चक्रे, विक्रमेण स्वसेवकम् ॥ ४२ ॥ अथ व्यावृत्त्य विंध्याद्रेः,

१ वालुकायुक्तदेशे. २ प्रवाहतटे. ३ चूर्णकृतैः. ४ कर्पूरै (वरास). ५ समुद्रोत्तीर्णाः. ६ सूर्याश्वा इव. ७ नदीसंबंधि. ८ कोमलाः. ९ द्राक्षावत्. १० सुस्थाः. ११ सेनाजनः, १२ केशरा-पुष्परेणुः. १३ नदीमध्ये स्थित्वा, १४ जमुनागंगाभ्रमम्, १५ परस्परसेचनरूपां जलक्रीडां. १६ पर्णभूषणसुन्दराः.

पल्लीं वल्लीमिव द्विपः । क्रांत्वा तत्पतितो दंड-मुद्दंडमयमग्रहीत् ॥ ४३ ॥ पारदेशिकमाश्वीयं, क्षौमाद्यं चोपदां वहन् । गूर्जरेंद्रस्य संजग्मे, लाटेशो वोसरिद्विजः ॥ ४४ ॥ वशीकुर्वंस्ततस्तीर-भुवं लावणसैंधवीम् । चौलुक्यस्तीर्थनिलयं, सुराष्ट्रा-विषयं ययौ ॥ ४५ ॥ स्फुरद्विपमवाणस्य, तस्य संगरसंगतः । पलीव तत्पतिः सद्यो, द्रवंति स्म किमद्भुतम् ? ॥४६॥ प्रभासविहितस्नानो, नत्वा चंद्रप्रभं प्रभुम् । उत्सिक्तमत्सरान् कच्छा-नरौत्सीत्स रविच्छविः ॥ ४७ ॥ भुजोष्मलतया कच्छाः, संवर्मितचमूवृताः । परासिरे परानीकं, घनौघमिव वायवः ॥ ४८ ॥ भग्नं स्वचक्रमालोक्य, चौलुक्यः शक्रविक्रमः । शरासारैः सुदुर्वारै-र्दुर्दिनं वार्दवद्व्यधात् ॥ ४९ ॥ तद्बाणैर्दक्षिणेर्माणः, सवर्माणोऽपि निर्मिताः । शेखरीचक्रिरे शीर्षे, तदाज्ञां कच्छनायकाः ॥ ५० ॥ तस्मात्पंचनदाधीशं, नौसाधनसमुद्धतम् । नौभिरारूढसैन्याभि-र्व्यगृहीद् गूर्जराधिपः ॥ ५१ ॥ तद्योधा विस्फुरत्क्रोधाः, शराशरि भुजाभुजि । चिरं कृत्वा व्यपद्यंत, निर्विण्णा इव जीविते ॥ ५२ ॥ स्वसैन्यभंगे प्रारब्ध-युद्धं पंचनदाधिपम् ।जित्वा कथंचिच्चौलुक्य-स्तदहंकारमाकृषत् ॥ ५३ ॥ तस्य दिग्विजये लक्ष्मी-रैधिष्ट दिने दिने। विश्वविस्मापिका ग्रीष्मे, यथा वेला पयोनिधेः ॥ ५४ ॥ वलितः सिंधुतटिनी-तटात्परिणतद्विपात् । मूलस्थानपतिं मूलराजं राजाऽभ्यषेणयत् ॥ ५५ ॥ स राजकुंजरो भंक्त्वा, तद्देशं पद्मखंडवत् । विसृष्टवान् निसृष्टार्थं, दूतं तं प्रति तत्क्ष-

१ लवणसमुद्रसंबंधिनीम्. २ सगरं-युद्धं-संगत-प्राप्त, पक्षे संगरस गत.. ३ पलायते स्म, पक्षे द्रवीभूतो भवति स्म. ४ उद्धतमत्सरान्. ※ पराजिग्यिरे ५ कृतव्रणयुक्तदक्षिणागका . ६ रेधतेस्म, प्र. ७ 'तिर्यक् दंतप्रहारस्तु, गज परिणतो मत' इति, परिणतद्विपा. संति यस्मिन् स तस्मात्. ८ मूलत्तान इत्यस्य राजानम्. ९ उभयोर्भावमुन्नीय ( ज्ञात्वा ), स्वयं वदति चोत्तरम् । सदिष्ट कुरुते कर्म, विसृष्टार्थस्तु स स्मृत. ॥ १ ॥ इत्युक्तलक्षणम्,

णम् ॥ ५६ ॥ यमास्थानीमिव तदाऽऽ-स्थानीमास्थाय तं प्रति । दूतो वाचाटकोटीरो, वक्तुमेवं प्रचक्रमे ॥ ५७ ॥ दीपः-सर्गावशेषः, स्फुरदरुणमणीदीप्तिराभासलेशः, पर्यायः सप्तजिह्वः, प्रतिकृतिरुचिरैर्ज्योतिरौर्वो[2] विवर्तः[3] । पाखंडं चंडरश्मिः[1], स्मरहरनयनोदर्चिरुच्चैरहस्यं, राजन्नाभाति सद्यः, कपिततरिपुततेर्यत्प्रतापस्य[*] पश्य ? ॥५८॥ (स्रग्धरा) शत्रवः स्वनिवासेऽपि, पश्यन्त इव यं पुरः । निद्रां नाध्यासते जातु ?, भीतिविद्राणमानसाः ॥५९॥ न काश्मीरः स्मेरं स्मरति रतिमंतर्न भजते, विदेहः स्वं गेहं कलयति कलिंगोऽपि न कलिम् । न राष्ट्रे सौराष्ट्रो वसति मगधो ध्यायति धियं, न कांचित् दिग्यात्रां विरचयति यत्रोर्जितबले ॥६०॥ (शिखरिणी) रिपुचक्रेषु विक्रांतं, यद्भुजस्य भृशौजसः । चित्रं विज्ञायते तत्स्त्री-वर्गवैधव्य-लक्ष्मभिः ॥ ६१ ॥ स गूर्जरक्षितिपति—श्चौलुक्यो जगतीं जयन् । मन्मुखेन यदाचष्ट, सकर्णाऽऽकर्णयाऽऽशु तत् ॥ ६२ ॥ अखंडं दंडमानीय, स्वर्णाश्वीयधनादिकम् । प्रसादयस्व मां सद्यो, निनंदिषसि चेच्चिरम् ? ॥ ६३ ॥ नो चेदालेख्यशेषत्वं, नीत्वा त्वां सपरिच्छदम् । अरण्यश्रीशरण्यत्वं, नेष्याम्येतत्पुरं तव ॥ ६४ ॥ इत्युक्तिश्रवणादेव, सभा सर्वाऽपि चुक्षुभे । प्रासादध्वजमालेव, प्रकंपन[4]विकंपनात् ॥ ६५ ॥ अथोद्यद्भ्रुकुटीदंभाद्, धूमस्तोममिवोत्थितम् । दधत् क्रोधहुताशस्य, मूल-राजो जजल्पिवान् ॥ ६६ ॥ किमबद्धं[5] वचः प्रोचे ?, दूत ! रे भूतवत्[6]त्वया । तद्विनां न परः कश्चि—न्निश्चितं वदतीदृशम् ॥ ६७ ॥ जडो यदि तव स्वामी, तदाऽभूस्त्वं कथं जडः ? । यद्वा यादृग् भवेत्स्वामी, परिवारोऽपि तादृशः ॥ ६८ ॥ न्यषेधीत्कोऽपि नो मंत्री, किं कुकर्मसु कर्मठम्[7] । भवत्प्रभुं ? यदग्नौ स, विनिपित्सति तुच्छधीः ॥ ६९ ॥ वशीकरोति

१ चन्द्र, २ वडवानल, ३ परिणामविशेष, * अग्रे इतिशेषः, ४ वायु. ५ असंबद्धम्. ६ भूतं विना. ७ कुशलम्.

को मत्तं, द्विपेंद्रं विपिनांतरे ? । उत्थापयति कः सिंहं, प्रसुप्तं गिरिगह्वरे ? ॥ ७० ॥ को वज्रकठिनं शैलं, संचूर्णयति मुष्टिना ? । कः कूलमुद्वहज्जलं[1], दोर्भ्यां तरति वारिधिम् ? ॥ ७१ ॥ अनिवार्यैः स्वशौंडीर्यैः[2]—स्तर्जितोज्जितशात्रवम् । को विग्रहीतुमीष्टे मां ?, पटिष्ठोऽप्यवनीपतिः ॥७२॥ केयं कथा ? तवेशो यद्, विग्रहिष्यति मामयम् । सहस्राक्षोऽपि नाधीष्टे, वक्रदृष्ट्या विलोकितुम् ॥ ७३ ॥ ततः शंस निजेशं त्वं, तव दंडः प्रदास्यते ? । प्राणप्रयाणकरणो, न पुनः श्रीमयो मया ॥७४॥ इति व्याहृत्य तं दूतं, निष्कास्य च सभांतरात् । मूलराजः समुत्तस्थौ, तत्कालं रणकेलये ॥ ७५ ॥ निर्गत्य नगराच्चाभूद्, अभ्यमित्रः[3] ससैनिकः । गंधसिंधुरवन्नान्यं, सहंते हि महस्विनः ॥ ७६ ॥ कोदंडमंडितोद्दंड—दोर्दंडाः प्रौढतेजसः । कटीनिबद्धतूणीराः, स्फुरद्विंकटकंकटाः[4] ॥ ७७ ॥ उच्चैरोपारुणीभूत—मुखाः क्रूरविलोचनाः । अनुभावा इवाध्यक्षा, रौद्रस्य रसरूपिणः[5] ॥ ७८ ॥ युगांतक्षुब्धपाथोधे—विंश्वग्व्यञ्चः इवोर्मयः । प्रत्यनीकभटव्यूहाः, समदृश्यंत गूर्जरैः ॥ ७९ ॥ त्रिभिर्विशेपकम् ॥ संरब्धे योद्धुमन्योन्यं, तस्मिन् सैन्यद्वये तदा । अश्वेभसुभटध्वानैः, सांराविणमजृंभत[6] ॥ ८० ॥ अथ ते मूलराजीया, भटाः प्रधनलंपटाः । हंतुं चौलुक्यशौंडीरा[7]ऽ—नुप्रवेशं दधाविरे ॥ ८१ ॥ कोदंडचंडदोर्दंडैः, खंडिताखंडलप्रभैः । अमंडि रणकंडूलैः, कांडीरैः[8] कांडतांडवम्[9] ॥ ८२ ॥ विपक्षप्रेरिताः पत्र—वाहा[10] हृदयभेदिनः । गूर्जराणां सह प्राणैः, स्पर्धयेव तिरोऽभवन् ॥ ८३ ॥ चूर्णपेषमपिष्यंत[11], परैः केचन मुष्टिभिः । ऊर्ध्वपूरमपूर्यंत[12], केचिद्बाणैररुंतुदैः ॥ ८४ ॥ केचि-

१ कूलम् आपूर्य वहति इति कूलमुद्वहस्तम्. २ गर्वैः ३ अमित्रं अभिगत इत्यभ्यमित्र . ४ विशालकवचाः. ५ रूपं यस्यास्त्यसौ रूपी. रसश्चासौ रूपी च. तस्य ६ कोलाहलं जातम् , ७ गर्वान्वित ८ बाणधरै . ९ बाणनाट्यं. १० बाणाः, ११ चूर्णं पिनष्टीतिचूर्णपेषं तद्यथास्यात्तथा. १२ ऊर्ध्वं पूर्यंते इति ऊर्ध्वपूरम्.

ज्जगृहिरे जीव—ग्राहं तैर्विग्रहाग्रहात् । चक्रबंधमबध्यन्त, केचित् स्वभुजलाघवात् ॥ ८५ ॥ अरातिशरवात्याभि—रविषह्याभिरीरिताः । नेशुः खगा इवोड्डीय, चौलुक्यसुभटा रणात् ॥ ८६ ॥ खड्गक्षतशिरःश्रेणि—क्षरद्रुधिरपूरिताः । रणादद्रेरिवोद्भूताः, स्रवंत्यः कूलमुद्रुजाः [2] ॥ ८७ ॥ अथ पूर्वप्रसन्नश्री [3]—विश्राणितवरोद्धुरः । गुर्जरेंद्रः स्वयं योद्धुं, डुढौके हस्तिमल्लवत् ॥ ८८ ॥ अनुस्यूतं शरासारं *, स सृजन् वार्षिकाब्दवत् । आववार द्विपद्वारँ—शौंडीर्यार्यममंडलम् ॥ ८९ ॥ न स तूणी न सन्नाही, न धानुष्को न खाड्गिकः । न पत्कापी न सादी च, चिच्छेदुः (द) तच्छरानयम् ? ॥९०॥ केशग्राहमुरःपेषं, शिरश्छेदं च विद्विषाम् । युद्ध्यमानो न कस्यासी—न्मृत्युकारी स मृत्युवत् ॥ ९१ ॥ एकाक्यपि स चौलुक्यः, परेषामखिलं बलम् । सहसोज्जासयामास [11], दैत्यानां वासवो यथा ॥ ९२ ॥ नेशुः केचिद् द्विषः केचित्, त्रेसुर्मम्लुश्च केचन । बभूवुः खंडशः केचित्, तच्छरैर्विशरारवः [12] ॥ ९३ ॥ चणकानां घरट्टेऽथ, स्थितानां यादृशी दशा । वैरिणां तादृशी जज्ञे, जन्ये [13] गूर्जरभूभुजः ॥ ९४ ॥ ततः स्वबलमालोक्य, विशीर्णं जीर्णपर्णवत् । अंधंभविष्णुः क्रोधेन, मूलराजोऽभ्यधावत ॥ ९५ ॥ बहुशः स शरश्रेणिं, मंथाय प्रतिपंथिनः । मुंचन् पयोदवच्चक्रे, निस्तंभं व्योम्नि मंडपम् ॥ ९६ ॥ शराकर्षणसंधान—मोक्षभेदादिकाः क्रियाः । तस्येक्षांचक्रिरे नूनं निर्निमेषदृशोऽपि न ॥ ९७ ॥ [14]किरीटीव क्षिपन् क्षिप्रं,

---

१ तुषा–प्र २ कूलभेदका . ३ सर्ग०३ श्लो०२७१–२७२. ४ ऐरावणवत्. ५ सततसंबंधम्, * वाणधारापातम्, ६ पर्वासु भव. ७ शत्रुसमूहप्रचंडसूर्यमंडलम्. ८ पत्तिः. ९ गजारोही, अश्वारोही, रथारोही च. * कुमारपालवाणान्, १० केशान् गृहीत्वा इति केशग्राहं, एवं उरः पिष्ट्वा, शिरश्छित्त्वा. ११ त्रासयामास. १२ विशीर्यन्ते इत्येवं शीलाः–नाशशीला . १३ युद्धे. १४ अर्जुन इव

क्षुरप्राण्यरिभूपतिः । मनोऽपि विभिदे वीरं—मन्यानां विग्रहं किमु ? ९८ ॥ चौलुक्योऽपि द्विपद्वाणा—न्निजैर्वाणैः परासिवान् । प्रतिवादीव दुर्वादि—वचांसि प्रतिभापितैः ॥ ९९ ॥ आस्फलत्सु पृपत्कानां, शल्याग्रेषु परस्परम् । प्रादुर्बभूवुराग्नेयाः, कणास्त्रासितसैनिकाः ॥ १०० ॥ भंजंतमंतरे च स्वान्, विशिखान् वीक्ष्य भूधवम् । मूलराजः क्रुधा तस्य, धनुर्वाणेन लूनवान् ॥ १०१ ॥ तत्क्षणं गूर्जरेंद्रोऽपि, गर्जतस्तस्य विद्विषः । साकं तदाशया दर्भ—च्छेदं चिच्छेद कार्मुकम् ॥ १०२ ॥ अपरं चापमादाय, यावत्संधित्सते रिपुः । तावदीप्रक्षुरप्रेण, क्षिप्रं तदपि सोऽच्छिदत् ॥१०३॥ एवमन्यान्यकोदंड—च्छेदनिर्वेदमेदुरः । मूलराजोऽतिलज्जालु—श्चौलुक्यं प्रत्यदोऽवदत् ॥ १०४ ॥ देव ! त्वद्भुजशौंडीर्य—जलधिः कस्य नो मुदे । सहसा यत्र मज्जंति, महीयांसोऽपि भूभृतः ॥ १०५ ॥ येन निर्नामतां नीता, वैरिणो वारिविंदुवत् । मत्प्रतापरवेस्तस्य, त्वमस्ताद्रीयसेऽधुना ॥ १०६ ॥ इयच्चिरं मयाऽन्येभ्यो, दंडोऽग्राहि भुजोष्मणा । सोऽधुना दास्यते तुभ्यं, दैवं हि बलवत्तरम् ॥ १०७ ॥ तस्माद्रणान्निवर्तस्व, कुरुष्व मदुदीरितम् । प्रक्षीणमरणातंका[1], जीव्यासुः सैनिका द्वये ॥ १०८ ॥ इत्युक्तः प्रतिभूपेन, चौलुक्यः प्रतिपद्य तत् । संप्रहाराद्न्यवर्तिष्ट, मानसाध्या हि मानिनः ॥ १०९ ॥ उच्चैर्जयजयारावा[2]—श्चौलुक्यकटकेऽभवन् । उद्वेलस्य प्रमोदाब्धेः, कल्लोलतुमुला इव ॥ ११० ॥ अवाद्यंत च वाद्यानि, न्यवध्यन्त ध्वजा घनाः । प्रावेशिकोत्सवायेव, प्राप्ताया विजयश्रियः ॥ १११ ॥ तदानीं सुभटंमन्या, गूर्जरा हृदयेऽस्फुरन् । न बलस्य प्रतीतिः स्याद्, विनोर्जस्विद्विपज्जयम् ॥ ११२ ॥ दत्त्वा लघुश्रवस्त्वेन[3], जितोच्चैःश्रवसो[4] हयान् । मूलस्थानपतिर्नम्रो, गूर्जरेंद्रमतोपयत्

1 प्रक्षीणो मरणातंको ( मरणभयं ) येषा ते. 2 अन्योन्यसंघर्षजन्याः शब्दाः. 3 ह्रस्वकर्णत्वेन. 4 जिता उच्चैःश्रवसः-इंद्रस्याश्वा यैस्ते तथा तान्.

॥ ११३ ॥ अन्यानपि महंमन्या[1]—नहंमन्यांश्च[2] भूपतीन् । औत्तराहान् विजिग्येऽसौ, सामंतानिव हेलया ॥ ११४ ॥ शकँ[3]-देशाद् विनिवृत्य[4], स धर्मविजयी नृपः । जालंधरजयशल्य—मेरु[5]मुख्यानसाधयत् ॥११५॥ कुमारपालभूभर्तु—श्चतुर्दिग्विजयेऽप्यदः । प्रोचे प्रमाणं श्रीवीर—चरित्रे हेमसूरिणा ॥ ११६ ॥ आगंगमैन्द्री[6]माविंध्यं, याम्यामासिंधु पश्चिमाम् । आतुरुष्कं च कौबेरीं, चौलुक्यः साधयिष्यति ॥ ११७ ॥ इत्थमासूत्र्य[7] दिग्जैत्रीं, यात्रां यंत्रितशात्रवः । कुमारपालक्षितिभृद्, ववले स्वपुरं प्रति ॥ ११८ ॥ अवेत्य पत्तनोपांते, प्राप्तं चौलुक्यनायकम् । राजलोको ययौ द्रष्टुं, भूरिप्राभृतशोभितः ॥ ११९ ॥ अथ द्विपेंद्रमारूढो, दिव्यश्रृंगारभंगिभिः । ऐरावतस्थितं नाकि—नायकं तुलयन्निव ॥ १२० ॥ पूर्णेंदुसुंदरोद्दामाऽऽ—तपवारणधारणात् । चतुर्दिग्विजयोद्भूतं, यशोव्यूहं वहन्निव ॥१२१॥ अभितो[*] वीज्यमानोरु—श्वेतचामरयोगतः । दिवाऽपि वक्रचंद्रोद्यज्—ज्योत्स्नौघौ[8] दर्शयन्निव ॥ १२२ ॥ तारहारस्फुरत्स्फार—माणिक्यद्युतिदंभतः । जनं प्रति स्वचित्तोरु—रंगं प्रत्यक्षयन्निव ॥१२३॥ सर्वाङ्गरंगदुत्तुंग-प्रभाप्राग्भारकैतवात् । रज्यज्जयरमारामा-संश्लेषं कलयन्निव ॥ १२४ ॥ दैवनिर्मितदारिद्र्य—लिपीलोपविधित्सया । भ्रूक्षेपदापितैः स्वर्णै—र्याचकान् श्रीदयन्निव ॥ १२५ ॥ वाद्यमानसदातोद्य—ध्वानसंतानवार्धिभिः । मागधस्तुतिकल्लोलैः, पुष्करं[9] पूरयन्निव ॥ १२६ ॥ वातवेल्लत्[10]पताकाग्र—च्छलात् स्वामिसमागमे । हर्षेण नृत्यतीवोच्चै—श्चौलुक्यः पत्तनेऽविशत्[11] ॥ १२७ ॥ अष्टभिः कुलकम् । अथात्तस्फारश्रृंगार—प्रथित[12]प्रौढविभ्रमाः ।

---

१ वयं महान्त इति मन्यमानान्. २ अभिमानिन.. ३ शक.—म्लेच्छविशेष इति शब्दकल्पद्रुमे तस्य देशात्. ४ विनिर्वृत्य—प्र. ५ मेरु, प्र. ६ पूर्वाम्. ७ कृत्वा.
* उभयत.. ८ मौक्तिकहारमध्ये दीव्यद्बृहद्रक्तमणिद्युतिच्छलेन, ९ आकाशं १० कंप्र. ११ सप्तम्येकवचनम् १२ विख्यातगाढविभ्रमाः.

स्त्रीराज्यं नरराज्येऽपि, दर्शयंत्य इव श्रिया[1] ॥ १२८ ॥ आकृष्टा इव वादित्र—मांत्रिकध्वनिहुंकृतैः । तदा दधाविरे पौर—प्रमदास्तद्दिदृक्षया* ॥ १२९ ॥ युग्मम् ॥ काश्चिदर्धकृताहाराः, काश्चित्त्यक्तरुदत्सुताः । काश्चिन्न्यूनात्तनेपथ्या—स्तन्मार्गं शिश्रियुः स्त्रियः ॥ १३० ॥ एका गवाक्षमारुक्ष—न्नन्या राजपथं ययुः । कुड्याग्रमपराः प्रापुः, पौर्यस्तद्दर्शनोत्सुकाः ॥ १३१ ॥ चंद्रशालागवाक्षस्थ—स्त्रीणामाकंठवीक्षितैः । आस्यैस्तदाऽभवन्नूनं, शतचंद्रं नभस्तलम् ॥ १३२ ॥ काश्चिज्जिगीषयेवाब्धिं—पिबस्य[2] चुलुना मुनेः । दृगंचलेन[3] चौलुक्य—लावण्यांबुनिधिं पपुः ॥ १३३ ॥ काश्चित्प्रेमरसैर्धौतान्[4], कटाक्षांस्तत्र चिक्षिपुः । किरंत्य इव लाजौघान्[5], राट्प्रवेशमहोचितान् ॥ १३४ ॥ यद्यशोऽपि न संमाति, विश्वेऽपि स महीपतिः । चित्रं ममौ मृगाक्षीणा—मणावपि मनोंऽतरे ॥१३५॥ लोचनांजलिभिः प्रौढै—स्तत्सौंदर्यामृतं मुहुः । पिबंतीनां पुरस्त्रीणां, बभूवान्नाशितंभवः[6] ॥१३६॥ चौलुक्यदर्शनोत्पन्नः, प्रमोदोऽन्तरमानिव[7] । आविर्बभूव सुभ्रूणां, बहिः पुलककैतवात् ॥ १३७ ॥ इत्थं नगरनारीभि—र्वीक्ष्यमाणः पदे पदे । प्राप चौलुक्यभूपः स्वं, मंदिरं मांद्यदिंदिरम्[8] ॥ १३८ ॥ तत्र सिंहासनासीनं, तं नमश्चक्रिरे जनाः । उदयाचलचूलस्थं, वालिखिल्या[9] इवारुणम् ॥१३९॥ हेमाचार्यस्तदा गत्वा, चौलुक्यं दिग्जयागतम् । इत्युपश्लोकयामास, कृपाणं प्रेक्ष्य तत्करे ॥ १४० ॥ सैन्योद्धूतरजोव्रजैर्मलिनयन् द्यावापृथिव्यंतरं, शत्रुक्षत्रकलत्रनेत्रनलिनेष्वश्रूणि विश्राणयन् । चित्ताभिज्वलदुग्रकोपहुतभुग्निष्क्रांतधूमभ्रमं, श्रीचौलुक्यपते ! दधाति समरे

1 शोभया. *तस्य द्रष्टुमिच्छया. 2 पिब-प्र. 3 चक्षुःप्रान्तभागेन, 4 उत्तेजितान्-प्रक्षालितान्. 5 भृष्टतंडुलसमूहान्. 6 अन्नतृप्तिः संजाता. 7 न मातीत्समान. 8 माद्यति इन्दिरा-शोभा लक्ष्मीर्वा यस्मिंस्तत्. 9 सूर्योपासकाः-सूर्याग्रगामिन अष्टाषितिसहस्रपरिमिता ऋषिविशेषाः.

कौक्षेयकोऽयं तव॥१४१॥(शार्दूलं) कौमुद्यस्तमदेव देव ! मलिनच्छायेव मुक्तावली, साशंकेव शशांकशेखरतनुर्मन्देव मंदा-
किनी । क्षौमं क्षाममिव प्रहीणमहिमेवोच्चैर्हिमानीगिरिः, श्यामश्रीरिव कैरवाकरवनी त्वत्कीर्तिकांतेः पुरः॥१४२॥(शार्दूल०)
विसृज्य भूपसामंतान्, सहायातान् कुमारराट् । सुभगंकरणीं राज्य—श्रियं शक्र इवाभुनक् ॥ १४३ ॥ पार्थिवः स पुमर्थेषु,
चतुर्ष्वायतिसाधुषु । मित्रेष्विवानुवर्तिष्णुः, नाऽवामन्यत कंचन ॥ १४४ ॥ श्रीहेमसूरिसंसर्गाद्, धर्मरंगो दिने दिने ।
तस्य चेतस्यवर्धिष्ट, वारिसेकादिवांकुरः ॥ १४५ ॥ प्रभुत्वशक्तिसारण्या, तथा न्यायतरुं नृपः । सेसिच्यामास लक्ष्मीभि-
र्यथा पंफुल्यते स्म सः ॥ १४६ ॥ चौराः परस्वव्यावृत्ता—स्तद्राज्ये साधवोऽभवन् । साधवस्त्वतिसाधुत्वं, सुखमायामिवा-
श्रयन् ॥ १४७ ॥ अन्यायिनो निगृह्णंतं, दृष्ट्वा चौलुक्यभूभुजम् । अन्यायो नेशिवानात्म—स्थानभ्रंशादिव ध्रुवम् ॥ १४८ ॥
तस्य कल्पद्रुमस्येव, प्रसादात् श्रीमये जने । अनाप्नुवदिव स्थानं, दारिद्र्यं क्वचिदद्रुवत् ॥ १४९ ॥ इतः शाकंभरीपुर्यां,
चौलुक्यभगिनीपतिः । भूजानिस्तनुते राज्य—मर्णोराजोऽरिदुर्जयः ॥ १५० ॥ देवल्लदेव्या चौलुक्य—भगिन्या सह सोऽ-
निशम् । शच्या यथा शचीनाथो, भोगान् भुंक्तेऽतिनिर्भरान् ॥ १५१ ॥ तौ दंपती मिथः प्रीतौ, रतिकामाविवोच्चकैः ।
सारिद्यूतमनुस्यूत—मारेभाते मुदाऽन्यदा ॥ १५२ ॥ द्वेत्रिके द्वेचतुष्के च, द्विपञ्चेत्यभिलापिनी । तयोः क्रीडा गतव्रीडा,
सख्योरिव समैधत ॥१५३॥ सारा विरेजिरे द्यूते, कामिवत्केऽपि रागिणः । परे च पापिवत्केऽपि, कृष्णभावविभाविनः॥१५४॥

* अस्तमदा इव इति छेदः १ भूपाश्च ते सामंताश्च तान्, २ पुन. पुनरतिशयेन वा फलति स. ३ परधननिवृत्ता.. ४ सुषमायां, प्र. ५ अक्ष ( पाशकादिगुटिका ) द्यूतम् ( सोगठावाजी इति भाषा ). ६ सततसवद्धम्. ७ द्वि—प्र.

एकादिसङ्ख्यासंकेत—विन्दुच्छन्नस्फुरत्तिथी[1]। अक्षौ पक्षाविव द्यूत—मासस्य किल रेजतुः ॥ १५५॥ अशिरोवेष्टशीर्षत्वात्, गूर्जरान्मुण्डितान्नृपः। उक्त्वा प्राह प्रियां शारान्, मुण्डितान्मारयेरिति ॥ १५६ ॥ स्वकान्तं गूर्जरानेवं, हसन्तं देव्यथावदत्। मुक्त्वैव देव ! मद्देश्यं, हास्यं कुर्याः समं मया ॥ १५७ ॥ प्रेयस्यैवं निषिद्धोऽपि, प्रियस्तत्कोपहेतवे। वाक्यं तदेव हास्येन, वालवन्मुहुरालपत् ॥ १५८ ॥ रुष्टा साऽचष्ट रे जाल्म !, न विचार्य प्रजल्पसि ?। न पश्यसि च ममाग्रे य-त्त्वं निन्दसि गूर्जरान् ॥ १५९ ॥ क्कामी जना भवद्देश्याः?, पीनाः कोपीनचीवराः। विवेकविकलाः क्रूर—गिरो रौद्राः पिशाचवत् ॥ १६० ॥ क्क च ते गूर्जराः स्फूर्ज-दंगाः शृंगारसंगताः। विविक्ता मधुरालापा, भूमिष्ठास्त्रिदशा इव ॥ १६१ ॥ स्वप्रियात्वेन मत्तस्त्वं,[2] मत्तो[3] यदि विभेषि न। राजराक्षसतः साक्षान्,[4] मङ्क्षातुरपि किं? न रे !॥१६२॥ तवान्तकरमेतं चेद्, उदन्तं ज्ञापयामि तम्। तदा वद ? कमाश्रित्य, त्रायेथास्त्वं स्वजीवितम् ॥ १६३ ॥ अर्णोराजोऽभ्यधात् क्रोधाद्, रे मुधा मानशालिनि !। किं मां भीषयसे क्लीब-मिव भ्रातृवलोक्तिभिः ? ॥ १६४ ॥ किं मया त्वं न दृष्टाऽसि ?, सोदर्यः किमु वा न ते ?। भिक्षामाजन्म यो भ्रांत्वा, कथञ्चिद् राज्यमाप्तवान् ॥१६५॥ उच्छलन्नपि चौलुक्यो, न भनक्ति स मां जडे !। न माद्यन्नपि हस्तीन्द्रो, हिनस्ति हरिणाधिपम् ॥ १६६ ॥ प्रभविष्णुर्न मे मृत्यु-रपि कस्तव सोदरः ?। शौंडीर्यं[5] किं न मे वेत्सि ?, निस्सीमं श्रीपतेरिव ॥ १६७ ॥ गत्वाऽधुनैव रे दासि !, पूत्कुरु स्वबान्धवम्। ससैन्यः सोऽपि मामेतु, ज्ञास्यते तद्बलं रणे ॥ १६८ ॥ उक्त्वेति नृपतिः कोपा-च्चलनेन जघान ताम्। दुरुक्तं क्षमते मानी, न बन्धोरपि किं स्त्रियाः

१ स्फुरन्निधीः, प्र. स्फुरत्तिथी, प्र. २ मत्सकाशात्. ३ मदोन्मत्त. ४ राजराजकृतः साक्षात्, प्र. ५ पराक्रमम्.

॥ १६९ ॥ पदाघातेन वाह्येति, दूनाऽन्त-र्भ्रातृनिन्दया । देवल्लदेवी पत्यग्रे, प्रत्यश्रौपीदिति क्रुधा ॥ १७० ॥ रे त्वयोचे यया दुष्टं, तां जिह्वां कंधराऽध्वना । आकर्पयामि नाहं चेन्, न चौलुक्यस्वसा तदा ॥ १७१॥ उदीर्येत्यभिमानेन, कोपात्पत्याऽप्युपेक्षिता । वारिताऽपि महामात्यै—र्निरयासीत्तदैव सा ॥ १७२॥ अपमानपरिम्लाना, हिमदूनेव पद्मिनी । उपेत्य पत्तनं सा त-च्चौलुक्याय न्यवेदयत् ॥ १७३॥ रोपाद् भ्राताऽवदद् भगि !, मा विपादं दधा मुधा । अत्यल्पेनापि कालेन, विधास्ये त्वत्प्रतिश्रुतम् ॥१७४॥ जिज्ञासुरथ चौलुक्योऽ-र्णोराजनृपतिस्थितिम् । प्राहैपीन् मंत्रिणं कंचित्, स्वजीवितमिवापरम् ॥ १७५ ॥ शाकंभरीं पुरीं गत्वा, स मंत्री धूर्तवत्क्वाचित् । गृहीत्वा च गृहं गुप्तं, तत्र स्वास्थ्येन तस्थिवान् ॥ १७६ ॥ ज्ञातुं शाकंभरीशस्य, वृत्तं तत्परिचारिकाम् । असौ भोग्यां धनैस्तेने, किमसाध्यं मनीपिणाम् ॥ १७७ ॥ कृत्रिमं प्रेम चक्रेऽसौ, तया साकं विरक्तवान् । सा तु स्वमेव तं मेने, स्त्रीणां हि कियती मतिः ॥ १७८ ॥ विश्वस्तामथ तां मत्वा, तद्भूपचरितं रहः । पृष्टवान् सततं मंत्री, साऽप्याचख्यौ यथास्थितम् ॥ १७९ ॥ उच्छूरेण समायासीत्, सा दासी कर्हिचिन्निशि । मंत्री भ्रूभंगुरास्योऽथ, तामुपालब्धवानिति ॥ १८० ॥ त्वदर्थमियतीं व्यर्थं, रात्रिं जागर्मि निर्मम ! । त्वमन्यत्र भ्रमन्ती तु, सवेलं नैपि कर्हिचित् ॥ १८१ ॥ धिङ् मां यत्त्वय्यपि प्रेम, स्थेमानमवलम्बते । चैपलायामचापल्यं, कदाऽपि किमु ? दीप्यते ॥ १८२ ॥ यः प्रीतिस्थिरतां स्त्रीपु, सम्भावयति मुग्धधीः । विपवल्लीपु पीयूषो-त्पत्तिं स खलु वीक्ष्यते ॥१८३॥ कृतकृत्रिमकोपस्य, सचिवस्येति वाग्रसैः । भिन्नेव हृदयेऽत्यन्तं, प्रीता दासी जगाद सा ॥ १८४ ॥ अहं नैवासि

---

१ प्रतिज्ञातवती. * ऽप्यु, प्र. २ विरक्तवत्-प्र. ३ स्वकीयम्. ४ भ्रुकुटिविकृतमुख', ५ विद्युति.

निःस्नेहा, त्वदन्योऽस्ति न मे प्रियः । किन्तु दास्यभवं पार—वश्यमत्राऽपराध्यति ॥ १८५ ॥ सेवाकृतामहो काचित्, चातुरी प्रतिभाति मे । यत्पारवश्यनरकात्, कामयन्ते सुखान्यमी ॥ १८६ ॥ परमद्यविलम्बस्य, त्वं निमित्तमवेहि मे । नीराद्वह्निरिवाह्नाय, कोपः शाम्यति ते यतः ॥ १८७ ॥ मयि स्तंभान्तरस्थाया—मर्णोराजोऽधुनाऽऽकुलः[1] । निर्व्याजं व्याघ्रराजाख्यं, व्याजहार भटं रहः ॥१८८॥ मत्प्रिया हास्यतः क्रुद्धा, स्वैरिणी वैरिणीव मे। कर्त्तुं विरूपं प्राधाऽस्ति, भ्रातृ-चौलुक्यसन्निधिम् ॥१८९॥ तत्प्रेरितोऽत्र नायाति, स यावद्दाववह्निवत्। तावत्त्वं तत्र गत्वा तं, यमप्राघूर्णकीकुरु ॥१९०॥ न भवन्तं विनाऽन्यस्तं, कोऽपि हन्तुं प्रगल्भते । मृगेन्द्र एव नागेन्द्र—मविहस्तो हिनस्ति यत् ॥१९१॥ हेमलक्षत्रयं तुभ्यं, दास्येऽहं पारितोपिकम् । तेनेत्युक्तोऽवदत्सोऽपि, तं हनिष्यामि हेलया ॥ १९२ ॥ मेरुशृंगमिवाऽऽनाय्य, तावत्स्वर्णं तदैव सः । नृपस्तं पृष्टवान् वैरी, कथं घातिष्यते वद ? ॥ १९३ ॥ स स्वर्णदर्शनप्रीतः, प्रोचे सोमदिने ध्रुवम् । चौलुक्यो याति वन्दारुः[2], कर्णमेरुस्थितं शिवम् ॥ १९४ ॥ जटाभृद्भूय तत्राहं, देवशेपार्पणच्छलात् । कृपाण्या कंकमय्या तं, नेष्यामि यममन्दिरम् ॥१९५॥ तेनोपायेन हृष्टात्मा, साधु साध्विति तं वदन् । व्यसाक्षीत् कनकं दत्त्वा, तदानीमेव मन्नृपः ॥१९६॥ भवन्निवेदनायैव, वृत्तमेतन्मम प्रिय ! । शृण्वत्याः समभूत्काल—क्षेपस्त्वं मा कुपस्ततः ॥ १९७ ॥ तन्निशम्य मया लब्धं, साधु मर्माधुना द्विपः । इत्यासतत्त्ववन्मंत्री, जज्ञे हर्षप्रकर्षभाक् ॥ १९८ ॥ श्रूयते यन्न शास्त्रेऽपि, यल्लोकेऽपि न दृश्यते । तत्कल्पयन्ति लोलाक्ष्यो, जल्पन्ति स्थापयन्ति च ॥ १९९ ॥ तत्कल्पितमिदं सर्वं, त्वयैवेत्यादिभापितैः । तामसत्यां व्यधान्-



---

१ अव्याकुल सन्. २ वन्दनशील .

मंत्री, तच्चितभ्रान्तिशान्तये ॥ २०० ॥ युग्मम् ॥ प्रहित्य तत्क्षणं सोऽथ, *चतुरश्चतुरश्चरान् । चौलुक्योर्वीभृते सर्वं, तत्स्वरूपं व्यजिज्ञपत् ॥२०१॥ गूर्जरेन्द्रोऽपि तं ज्ञातुं, वीरकोटीरवेष्टितः । ययौ सोमदिने कर्ण—मेरुं मेरुमिवोच्छ्रितम् ॥२०२॥ तत्रेश्वरं नमस्कृत्य, नृपेऽवहितचेतसि । जटीभूयाययौ व्याघ्र-राजा व्याघ्र इवाऽदयः ॥२०३॥ नेदीयान् स भवेद् यावत्, शेषापुष्पप्रदित्सया । तावल्लिखितसंकेतै—[1]श्चौलुक्यः पर्यवेष्टितम् ॥ २०४ ॥ दृष्ट्वा संकेतितैर्मल्लै—र्बद्ध्वा दस्युवदुच्चकैः । अन्विष्टेऽस्मिन्नृपोऽपश्यत्, कंकपत्रमयीं क्षुरीम् ॥२०५॥ तस्या निभालनान् मत्वा, तं जिघांसुमसंशयम् । सहास्यमाऽऽस्यकमलं, कुर्वन्नुर्वीपतिर्जगौ ॥२०६॥ कस्त्वं ? कस्यानुजीवी च ?, प्रहितोऽस्यत्र केन च ? । सर्वमेतत्समाचक्ष्व, जिजीविषसि यद्यरे ! ॥ २०७ ॥ कांदिशीकेन तेनाथ, यथावृत्तं निवेदिते । बभाषे भूपतिर्मा स्म, भैषीस्त्वमवसानतः[2] ॥२०८॥ कर्मणैवं[3] भवेज्जीवः, स्वामिना सेवकः सदा । पराधीनोऽपराधी नो, भवान् मे घटते ततः ॥२०९॥ कुकर्मप्रेरितः साधो-र्यथा कोऽप्युपसर्गकृत् । तथा त्वं स्वामिनुन्नो मे, घातकः समुपागतः ॥ २१० ॥ उपसर्गकरं मुक्त्वा, कर्म हन्ति यथा मुनिः । त्वां घातकं तथा हित्वा, त्वन्नाथं हन्मि सम्प्रति ॥ २११ ॥ इत्युदीर्य स शौंडीर्यो[4], गुर्जरेन्द्रोऽऽद्भुतांबरे[5] । परिधाप्य मुमोचैन—महो चातुर्यमूर्जितम् ॥२१२॥ स्वसुः प्रतिज्ञापूर्त्यर्थं, पार्थिवोऽथ चमूचयैः । प्रतिविष्णुं यथा विष्णुः, प्रतस्थेऽरिनृपं प्रति ॥२१३॥ मयि सत्यपि शूरेऽसौ, किं कर्तेति रुषेव किम् । चौलुक्यास्तिरयामास, शूरं सैन्यरजोभरैः ॥ २१४ ॥ यदि तत्पृतनाऽऽक्रान्तै—र्भूभृद्भिरचलैरपि । कम्पितं तर्हि किं चित्रं, चलैस्तैश्चेत्पलायितम् ॥२१५॥ व्यामुवत्सुभटैर्लोलैः, कल्लोलैरिव भूतलम् । स चलन्

* दक्षश्चतु.सख्याकान्, 1 पर्यवेष्टतम् प्र, चौलुक्यपर्यचेष्टितम्, प्र. ( पर्यवेष्टि ). २ मरणतः, ३ कर्मणेव, प्र. ४ पराक्रमी, ५ द्वे वस्त्रे.

वलपाथोधिः, कस्य क्षोभाय नाभवत् ॥ २१६ ॥ अभिरामं प्रतिग्रामं, ग्रामणीभक्तिवैभवम् । स्वीकुर्वन् प्राप चौलुक्यः, क्रमाच्चन्द्रावतीं पुरीम् ॥ २१७ ॥ तत्र विक्रमसिंहोऽस्ति, नाम्ना धाम्ना च ठक्कुरः । *महाधरतया ख्यात—श्चौलुक्यस्यैव सेवकः ॥ २१८ ॥ नृपस्यास्यैव सेवार्थं, यातायातेन पत्तने । [1]संभागभंसगभोगः, स प्राक् खिन्नोऽभवत्तमाम् ॥ २१९ ॥ ततश्चौलुक्यमालोक्य, प्राप्तं चन्द्रावतीपतिः । तद्द्रोहाय स्वसामंतान्, मेलयित्वेत्यमंत्रयत् ॥ २२० ॥ असौ जटाधरः पूर्वं, भिक्षित्वा निखिलामिलाम् । केनापि दैवयोगेन, जज्ञेऽस्माकमधीश्वरः ॥ २२१॥ मूर्खवन्न विशेषज्ञो, बद्धमुष्टिः[2] परासुवत्[3] । अहंमन्य इव स्तब्धः, क्वाऽपि पृच्छति नैष नः ॥२२२॥ तदेतस्य नमस्याऽपि, शोच्या[4] सेवाऽस्तु दूरतः । न हि श्मशानशूलस्य[5], शक्रस्तंभार्चनोचिता ॥ २२३ ॥ क्वाऽयं भिक्षाचरः शश्वत्, क्व वयं राजसूनवः । विडम्बनं ततोऽनेन, पत्याऽस्माकं न मंडनम् ॥ २२४ ॥ उपलस्यापि कस्यापि, वरं नम्रीकृतं शिरः । अप्राज्ञस्याकृतज्ञस्य, न त्वेतस्य पशोः पुरः ॥ २२५ ॥ निहत्य [6]तदमुं मुग्धं, चौलुक्यः कश्चनापरः । राज्ये निवेश्यते यूयं, मन्यध्वं चेदिदं वचः ?॥ २२६ ॥ कर्णप्रविष्टा इव त—द्वाचः ता मूर्धधूननात् । दूरयन्त इवारुच्या, सामन्तास्तं बभाषिरे ॥ २२७ ॥ किमेतत्प्रोच्यते शोच्यं ?, स्वामिन्ने तत्तवोचितम् ? । न हि पीयूषरश्मेः स्यात्, कदाचिद्विषवर्षणम् ॥ २२८ ॥ न कश्चिदाचरत्पूर्वं, स्वामिद्रोहं भवत्कुले । तमिदानीं वितन्वंस्त्वं, तत्कलंकयिता खलु ॥ २२९ ॥ त्वत्तुल्या अपि चेत्कुल्याः, स्वःकुल्याजलनिर्मलाः । विदधीरन् प्रभुद्रोहं, वाच्यास्तर्ह्यधमाः किमु ? ॥ २३० ॥ यस्माद् भस्मीभवति महिमा दाववह्नेरिव द्रु—र्येन श्यामं भवति च कुलं कज्ज-

* महाभूस्तया १ तद्विनाशाय, अनिष्टचिंतनं-द्रोहः, २ कृपण' ३ मृतवत्. ४ शौच्या. प्र. ५ श्मशानशूलायाः, प्र. ६ तदिमं दुष्टम्, प्र.

लेनेव वस्त्रम् । यस्योदर्कः प्रथयति मुनेः शापवत्तापमन्त-र्वैरात्स्नेहादपि न कृतिभिस्तद्द्विधेयं विधेयम् ( मन्दाक्रान्ता ) ॥२३१॥ किञ्च स्वामी च वशा च, यादृशस्तादृशोऽपि वा। कुलीनैः सेव्य एवैत-न्मतं मतिमतां मतम् ॥२३२॥ असौ चौलुक्य-वंशीयः, श्रीसिद्धाधिपतेः पदे । वर्तिष्णुर्गुणहीनोऽपि, निषेव्यो देवतेव नः ॥ २३३ ॥ मोक्तुमप्युचितो नैव, कुलीनानां स्वनायकः । किं? पुनर्हननीयोऽय-महो जाड्यविजृम्भितम् ॥ २३४ ॥ कथं वाऽसौ नृपो वध्यो, बहुशक्रपराक्रमः । हन्तुं न शक्यतेऽन्योऽपि, किं पुनः सैन्यभाक् प्रभुः ॥२३५॥ ततः स्वस्य कुलस्यापि, यदि क्षेमं समीहसे ? । निजद्रोहमिव स्वामि-द्रोहं मा स्म विधास्तदा ॥ २३६ ॥ वाचमाचम्य सामन्त—गदितामिति तामथ । ऊचे विक्रमसिंहस्ता-नस्तारिप्रौढविक्रमः ॥२३७॥ युष्माभिर्मृत्युभीत्यैष, सदोषोऽपि नृपः स्तुतः । भुजालानपि धिग् युष्मान्, कातरत्ववशंवदान् ॥२३८॥ मयि जाग्र-त्युदग्राभे, युष्माकं कैव मृत्युभीः । निस्तन्द्रे हि करीन्द्रे किं, कलभानां पराभवः ? ॥२३९॥ घातिष्यते सुखेनैव, शक्तोऽप्येष मया छलात् । न बलं फलवद् यत्र, छलं तत्रोपयोक्ष्यते ॥ २४० ॥ सिंहादयोऽपि हन्यन्ते, छलेन स्वाधिकौजसः । किं वाच्योऽयं तु निःसार-तया बहुतृणं हि यः ॥ २४१ ॥ विधापयत मद्गेहे, वह्नियंत्रमयं गृहम् । स यथाऽऽकार्य चौलुक्यो-ऽध्यास्यते तत्र भुक्तये ॥ २४२ ॥ अधस्ताज्जाज्वलज्ज्वाल-जालभाजा हविर्भुजा । गृहे प्रदीप्ते तत्काष्ठ-वदेष प्रज्वलिष्यति ॥ २४३ ॥ अनेनौपयिकेनास्मिन्, हतेऽन्यं स्ववशंवदम् । राज्ये निवेश्य चौलुक्यं, निर्वेक्ष्यामोऽद्भुतं सुखम् ॥ २४४ ॥ इति विक्रम-सिंहोक्त-मपथ्यमपि पथ्यवत् । प्रत्यपद्यन्त सामन्ताः, स्वाम्यादेशोऽयमित्यमी ॥ २४५ ॥ व्यचारयंश्च चित्ते स्वे, यत्स्वा-वासप्रदीपनम् । कारयत्येष साऽस्यैव, सूचा भाविमहापदः ॥ २४६ ॥ परं भवति नो नाशो, भवितव्यस्य कर्हिचित् ।

ध्यात्वेति वह्नियंत्रार्थ-मुपाक्रंसत ते द्रुतम् ॥ २४७ ॥ ते श्रीविक्रमसिंहस्य, सौधमध्ये रहः क्वचित् । कृत्वाऽधो यंत्रमाग्नेयं, ज्वलज्ज्वलनसंकुलम् ॥२४८॥ तस्योर्ध्वं तैलनिर्भिन्नो-दारदारुविनिर्मितम् । तिलसर्षपलाक्षादि-द्रव्यैर्गुप्तैः प्रपूरितम् ॥२४९॥ व्योमेव चन्द्रोदययुक्, तारमुक्तावलम्बि च । उद्यानमिव सच्छायं, स्मेरपुष्पोपशोभि च ॥ २५० ॥ सौगन्धिकापणमिव, स्फारसौरभवैभवम् । विमानमिव भूमिष्ठ-मासैः सौधमचीक्लृपत् ॥ २५१ ॥ चतुर्भिः कलापकम् ॥ दृष्ट्वा विक्रमसिंहोऽथ, तत्तादृक्कारितं गृहम् । कृतकृत्य इव क्ष्माप-निमंत्रणकृते ययौ ॥ २५२ ॥ व्यजिज्ञपच्च भूपाल !, मत्तपोभिः पुरातनैः । प्रेरितोऽत्र समायासीद्, देवो देवेंद्रवत् स्वयम् ॥ २५३ ॥ अद्य मद्गृहमभ्येत्य, कुरुषे यदि भोजनम् । तदा स्वमेव मन्येऽह-मग्रण्यं पुण्यशालिनाम् ॥ २५४ ॥ मारवेषु न विश्वास्य-मिति जानञ् जनश्रुतिम् । भंक्त्वा तदाग्रहं भोक्तुं, प्राहैषीत् स्वजनं नृपः ॥ २५५ ॥ भक्त्या विक्रमसिंहेन, भोजितो नृपतेर्जनः । इतस्ततः परिभ्राम्यन्, वेश्मलक्ष्मीनिरीक्षया ॥२५६॥ अधस्ताद् ध्मायमानाना-मंगाराणां मुहुर्मुहुः । जेघ्रीयमाणमामोदं, वृद्धं कंचिद्व्यलोकत ॥ २५७ ॥ युग्मम् ॥ कोऽयं गंधो जरन् कस्मा-ज्जिघ्रतीति वितर्कतः । गूर्जरेंद्रजनेनापि, तत्र दृष्टं समंततः ॥२५८॥ वह्निच्छद्ममयं सद्म, तज् ज्ञात्वा चतुरत्वतः । स तदैवैत्य संभ्रांत, इव राज्ञे व्यजिज्ञपत् ॥२५९॥ तदा विक्रमसिंहोऽपि, समेत्य सदनात्पुनः । वैवाहिक इवात्यर्थं, भुक्त्यै पार्थिवमार्थयत् ॥ २६० ॥ स्वजनात् प्रागपि ज्ञात-स्वरूपो निश्चिकाय सः । अत्याग्रहेण दृष्टादि-चेष्टितेनापि तन्मनः ॥ २६१ ॥ अविदन्निव चौलुक्य-स्तं निवर्त्त्याशनादरात् । सत्कृत्य च गृहे प्रैषीत्, स्वहितैषी चचाल च ॥ २६२ ॥

१ आस्मानम्. २ शोभा ३ दाक्ष्यात्, ४ कन्यापुत्रयोः श्वशुर इव. ५ निवार्य-प्रतिषिध्य, निवृत्त्या, प्र.

प्रयाणैरनवच्छिन्नै[1]—र्मार्गमुल्लंघयन्नृपः । निवेशमिव लक्ष्मीणां, प्राप देशं विरोधिनः ॥ २६३ ॥ चौलुक्यकटकैर्देशः[2], कृतः क्लेशवशंवदः । निर्नाथवत् पलाय्य द्राग्, व्रजति स्म यतस्ततः ॥२६४॥ ग्रामान् सपादलक्षीया—नाक्रमन् विक्रमाधिकः । शाकंभरीपुरीपार्श्वे, तस्थिवान् गूर्जरेश्वरः ॥ २६५ ॥ प्रकाशकं निजस्फूर्तेः[3], काव्यमेकं करोदरे । दत्त्वा प्रैषीच्च वाक्पूतं[4], दूतं शत्रुनृपं प्रति ॥ २६६ ॥ सर्वस्वमिव विस्फूर्ते[5]—श्चाहुमाननृपास्पदम् । सोऽधिगम्य[6] जगादैवं, ध्वानयन्निव तत्सदः[7] ॥ २६७ ॥ उद्दंडांतकदंडचंडिमचितः[8] कल्पांतकालानल—ज्वालागर्वमुषो विषोग्रभुजग[9]फूत्कारसारद्रुहः[10] । व्याधामो[11]द्धत[12] धामनाम (?) निपुणा दोःकांडकंडूतयो, यस्यारीन् युधि निर्दलंति 'मुशलाः शालीनिवोदूखले' ॥२६८॥ (शार्दूल०) यस्मिन् दिग्विजयोद्युक्ते, चलद्धूलरजःकणाः । शिरश्चूडामणीयंते, महतामपि भूभृताम् ॥२६९॥ सेवाहेवाकिनो यस्य, नरदेवा दिवानिशम् । स्वमौलौ लालयंत्याज्ञां, 'वप्रसानुरुहा इव' ॥२७०॥ स चौलुक्यप्रभुर्भंग्या—प्रतिज्ञापूर्तिहेतवे । अत्रायातो भवद्योग्यं, काव्यमेतत् प्रजिग्धिवान् (प्रजिध्मिवान्) ॥ २७१ ॥ उक्त्वेति स ददौ काव्य—मुपदामिव भूभुजे । अमात्यस्तन्निदिष्टोऽथ, वाचयामासिवानिति ॥ २७२ ॥ रेरे भेक ! गलद्विवेक ! कटुकं किं रारटीष्युत्कटो ?, गत्वैव क्वचनापि कूपकुहरे त्वं तिष्ठ निर्जीववत् । सर्पोऽयं स्वमुखप्रसृत्वरविषज्वालाकरालो महान्, जिह्वालस्तव कालवत्कवलनाकांक्षी यदाजग्मिवान् ॥२७३॥ (शार्दूल०) दूतवाक्यं तदाकर्ण्य, काव्यभावं विभाव्य च । अवज्ञया हसन्नर्णो—राजो व्याहरति स्म तम् ॥२७४॥

---

१ असंकुचितैः—महद्भिरित्यर्थः २ स्थानमिव, ३ निजपराक्रमस्य. ४ वाचा पूत —सत्कृतस्तम्, वाक् पूता वा यस्य स तम्. ५ सभाम्. ६ प्राप्य. ७ तत्सभाम्. ८ प्रचंडयमदंडोग्रत्वव्यासा. ९ फणभृत्—प्र. १० अह —प्र. ११ व्याधाम.—वज्र., १२ माद्धत्त, प्र.

रे दूत ! भवताऽस्तावि, वंदिवत् किं स्वनायकः ? । पुत्रस्तुल्या पितेव स्याद्, भृत्यस्तुल्या न राड् महान् ॥ २७५ ॥ भूपे च त्वं मदीशोऽरीन्, पिनष्टि कणवद् रणे । तन्मिथ्या तेन पिष्टाः स्यु-र्दोःस्थ्ये यदि परं कणाः ॥ २७६ ॥ वहुधाऽपि मुधा स्तौषि, तच्छौंडीर्यं परं मया । आजन्म भिक्षुतां मुक्त्वा, तस्याश्रावि न किंचन ॥२७७॥ आचक्षीथाश्च तं पूज्ये, मयि भेकत्वरोपणात् । त्वया विवेकवाक्पत्यं, स्वदेश्यं साधु दर्शितम् ॥ २७८ ॥ एकं त्वयोचितं चक्रे, यत्त्वस्मिन्नहितोऽऽहिता । नो चेत्परं खलीकर्तुं, कुतस्ते स्याद् द्विजिह्वता ? ॥ २७९ ॥ परं त्वं ज्ञास्यसे सम्यक्, संग्रामे स्वमहिं प्रति । भेकत्वमथ तार्क्ष्यत्वं, मम निस्सीमविक्रमैः ॥२८०॥ इत्युदित्वाऽर्पयित्वा च, काव्यं प्रत्युत्तरोचितम् । दूतं विसृष्टवांश्चाहू-मानवंशाब्धिचंद्रमाः ॥ २८१ ॥ तदैव च समादिश्य, सेनान्यं समवर्मयत् । चमूसमूहं प्रत्यूह-मिव मूर्तं विरोधिनाम् ॥ २८२ ॥ समुन्नतैर्द्विपवरै-र्जंगमैः पर्वतैरिव । वेगिभिर्वाजिभिः शक्र-वाजिनः सोदरैरिव ॥ २८३ ॥ आकारैरिव शौर्याणां, सन्नद्धांगैः पदातिभिः । साकं शाकंभरीनाथो, निर्ययौ नगरान्निजात् ॥ २८४ ॥ युग्मम् ॥ अभ्रमभ्रंकषाग्राभिः, पताकाभिः पिबन्निव । सैन्योद्धूतरजःपूरै-र्भास्करं स्थगयन्निव ॥ २८५ ॥ पादातप्रौढहक्काभि-र्विश्वं वधिरयन्निव । चौलुक्यकटकादर्वा-गर्णोराजः स तस्थितवान् ॥ २८६ ॥ युग्मम् ॥ दूतोऽपि तावदागत्य, विनिवेद्य रिपूदितम् । तत्काव्यं ददिवान् राज्ञे, सोऽप्येवं तदवाचयत् ॥ २८७ ॥ रे रे सर्प ! विमुंच दर्पमसमं किं स्फारफूत्कारतो, विश्वं भीपयसे ? क्वचित्कुरु विले स्थानं चिरं नंदितुम् । नो चेत्प्रौढगरुत्स्फुरत्तरमरुद्व्याधूतपृथ्वीधर-स्तार्क्ष्यो भक्षयितुं समेति

१ महत्त्वम् पराक्रमम् वा २ सर्पता स्थापिता. ३ दुर्जनीकर्तुम्. ४ श्लो० २८८. ५ निकटं, पूर्वं वा.

झगिति त्वामेष विद्वेषवान् ॥२८८॥ (शार्दूल०) तत्काव्यश्रवणादेव, कल्पांतपवनादिव। चुक्षुभे तत्सदः[1] सर्वं, मकराकरनीरवत् ॥२८९॥ सैन्यद्वयेऽपि शौंडीरा[2], द्वंद्व[3]प्राप्तिप्रमोदिनः। व्यों[4]वहासीं वितन्वाना, देवैनाद्यैरदेविषुः[5] ॥२९०॥ नालिकेरीफलान्यादन्, केऽपि केऽप्यपिबन् सुराम्। अवलगन्मल्लवत्केऽपि, केऽपि श्रममसज्जयन् ॥२९१॥ अवाहयन् हयान् केचित्, केचिदभ्रमयन्निभान्। शितान्यकारयन् केचि-च्छस्त्राणि पृतनाचराः ॥ २९२ ॥ युग्मम् ॥ अथ प्रौढिं दृढां प्रेक्ष्य, चौलुक्यकटकेऽखिले। शाकंभरीधराधीशो, मनसैवं[6] पराऽमृशत् ॥ २९३ ॥ द्विपैरिव द्विपेंद्रोऽय-मुद्भटैः सुभटैर्वृतः। चौलुक्यः स्वयमायासीत्, कथं युद्धे विजेष्यते ॥ २९४ ॥ हुं ज्ञातं यो विरज्याऽऽगा—च्चौलुक्यादांतिकं मम। पूर्वं चारभटो नाम, कुमारः सोऽस्ति मर्मवित् ॥२९५॥ तं पृच्छामीति स ध्यात्वा, समाकार्य च पृष्टवान्। रिपोस्त्वमसि मर्मज्ञ-स्तज्जयौपयिकं वद? ॥ २९६ ॥ अथ चारभटोऽभाणीद्, वाणीं विनयवामनः। उभाकर्णि[7] मयाऽऽकर्णि, देवाद्याऽऽप्तमुखादिति ॥२९७॥ कृपणश्चाकृतज्ञश्च, प्रायश्चौलुक्यनायकः। विरक्ताः संति तेनास्मिन्, सामंताः केल्हणादयः ॥ २९८ ॥ दत्त्वा स्वर्णानि ते तूर्णं, क्रियंते स्ववशंवदाः। धनमेवादिमं यस्माद्, वशीकरणवस्तुषु ॥ २९९ ॥ ततो हास्यंत्यमुं ते द्राक्, तातं द्विष्टाः सुता इव। तत्त्यक्तोऽसौ गलच्छक्ति-र्भविता निर्विषाहिवत् ॥ ३०० ॥ प्रायो मुक्तः स्वसामंतैः, पलाय्यैष प्रयास्यति। योत्स्यतेऽथ मदात्तर्हि, क्लीबवन्निहनिष्यते ॥ ३०१ ॥ किंचाहं त्वत्प्रसादेन, जानामि भगदत्त[9]वत्। इभं भ्रमयितुं सिंह—नादान्

१ तस्य सभा. तच्च तत् सदश्चेति वा २ अहंकारिण ३ द्वन्द्वं युद्धम्. ४ परस्परहसनम्. ५ पाशकादिक्रीडनैः क्रीडयामासुः. ६ मनस्येवम्. प्र. ७ उभौ कर्णौ यस्मिन् तत्. ८ लक्ष्यन्ति. ९ महाभारतप्रसिद्ध कामरूपदेशाधिपो नृपः,

मोक्तुं च संयुगे ॥ ३०२ ॥ तेनेभभ्रमणेनोच्चैः, सिंहनादैश्च तैर्घनैः । सांयुगीनोऽपि चौलुक्य–करी दूरं प्रणंक्ष्यति ॥३०३॥
उपायेन प्रभोऽनेन, नूनं निर्जित्य शात्रवम् । त्वं कर्ताऽसि करे लग्नां, कन्यामिव जयश्रियम् ॥ ३०४ ॥ एवं चारभटी
मारं–भटीभावभृतं गिरम् । निशम्य सम्यगस्तावीत्, साधु साध्विति तं नृपः ॥ ३०५ ॥ अर्णोराजस्ततो रात्रा–वाप्तान्
सकैनकोत्करान् । प्रेष्य चौलुक्यनाथीयान्, सामंतांस्तानबीभिदत् ॥ ३०६ ॥ लोलुपत्वेन भिन्नास्ते, चाहुमानमहीभुजे ।
आप्तैर्निवेदयामासुः, स्वाभिप्रायमिति स्फुटम् ॥ ३०७ ॥ त्वद्गृह्याः स्मो वयं सर्वे, परं सन्नह्य संयुगे । अवस्थास्यामहे
स्वस्मिन्, सैन्ये योत्स्यामहे न हि ॥ ३०८ ॥ बलीयानपि चौलुक्यः, संग्रामेऽस्मदुपेक्षितः । त्वया सिंहेन हस्तीव, लीलयैव
दलिष्यते ॥ ३०९ ॥ प्रत्यर्थिपार्थिवीयानां, सामंतानां मनस्तथा । मत्वा शाकंभरीशस्त–ममंस्त विजितं द्विषम् ॥ ३१० ॥
अलंचक्रे प्रभातेऽथ, भानुमान् पूर्वपर्वतम् । वीरभोगीणबाहूनां, रणोत्साहश्च मानसम् ॥ ३११ ॥ लक्ष्मीभराभिरामत्वं,
बिभरांचक्रिरे तदा । जलाशये सरोजानि, सैन्ये भटमुखान्यपि ॥ ३१२ ॥ स्फुरद्वैरितमःस्तोम–तिरस्कारचिकीर्षया ।
शूरप्रकाशः संजज्ञे, व्योम्नि सैन्यद्वयेऽपि च ॥ ३१३ ॥ अथ प्रत्यर्थिपृथिवी–नाथोन्माथसमीहया । सैन्यं सन्नाहयामास,
गुर्जरक्षितिवासवः ॥ ३१४ ॥ कातरान् कंपयन् कामं, हर्षयन् वीरकुंजरान् । सैन्यसन्नहनोत्ताल–तुमुलो व्यानशे दिशः
॥ ३१५ ॥ अंगानि स्फायमानानि, रणनाम्नाऽपि योधिनाम् । कथंचन न मांति स्म, विस्तृतेष्वपि वर्मसु ॥ ३१६ ॥

१ युद्धे. २ युद्धकुशलः. ३ शत्रुसमूहम् शत्रुं वा, ४ आरभटी–रचना. ५ सक० प्र. ६ चौलुक्यनायस्य इमे तान्, ६ त्वत्पक्षाश्रिताः, ७ वीराणामुचितो भोगः वीरभोगस्तस्मै हिता. वीरभोगिणा, ईदृशा बाहवो येषां ते वीरभोगिणबाहवस्तेषाम्. ८ शोभा. ९ शूरः–सूर्यः पक्षे सुभटः १० कवचसज्जनजन्यमहदव्यक्तशब्दः,

केचित् स्वजीवितव्येऽपि, निरपेक्षतया भटाः । नेदिष्ठान्यपि[1] वर्माणि, नैव वर्ष्मसु[2] पर्यधुः ॥ ३१७ ॥ अंभस्कुंभान् करं-भांश्च, प्रगुणीकृत्य तत्क्षणम् । अन्वेतुं स्वप्रियान् प्रीत्या, ससज्जे सुभटीजनः ॥ ३१८ ॥ ततो द्विपक्रियानिष्ण—श्यामलाधोरणाश्रितम्[3] । श्रित्वा कलभपंचास्य—नामानं पट्टहस्तिनम् ॥ ३१९ ॥ तत्कालकल्पितानल्प—समराकल्पभासुरः[4] । चापादिशस्त्रसंपर्क—तर्क्यमाणमहामहाः ॥ ३२० ॥ सामंतैर्विक्रमाक्रांतै—रन्वितः केल्हणादिभिः । रणस्थलमलंचक्रे, जिष्णुवद्[5] गुर्ज्जरेश्वरः ॥ ३२१ ॥ त्रिभिर्विशेषकम् ॥ अर्णोराजोऽपि निर्व्याज[6]—भ्राजिष्णुभुजवैभवः । कुंभिकुंभस्थलारूढः, प्रौढसैन्यसमन्वितः ॥ ३२२ ॥ शत्रुसामंतभेदेन, जितकाशीव[7] चेतसि । प्राविक्षत्प्रधनावन्यां[8], दुर्योधन इवोद्धतः ॥३२३॥ युग्मम् । पूर्वं रजस्ततस्तूर्य—शब्दस्तदनु सैनिकाः । अन्योन्यमिति सैन्ये ते, संजग्माते उभे अपि ॥ ३२४ ॥ सैन्यद्वयेऽपि तूर्याणि, रणंति स्म सहस्रशः । अन्योन्यमाह्वयंतीव, योधान् युद्धार्थमुद्धतान् ॥ ३२५ ॥ नवरं रणतूर्याणां, श्रवणात् पुलकैः सह । योधा युधे ( धि ) समुत्तस्थुः, किंतु तन्मूर्धजा अपि ॥३२६॥ वीराणां विक्रमक्रीडां, स्तुवंतो वन्दिनस्तदा । कातराणामपि स्वांते, रणप्रौढिमदद्दढन् ॥ ३२७ ॥ वीरंमन्यास्तमासाद्य, हृत्प्रियंकरणं रणम् । बुभुक्षिता इवाहारं, जज्ञिरे प्रमदोद्धुराः ॥ ३२८ ॥ कादंबिनीकदंबाभे[10], प्रसर्पति रजोभरे । पद्मानां खड्गलेखाभि—र्दीप्राभिर्विद्युदायितम् ॥ ३२९ ॥ परस्परेण वृण्वन्तो[11], विवृण्वन्तो निजोर्जितम् । अथाग्रसैनिकाः सैन्य—द्वये योद्धुं ढुढौकिरे ॥ ३३० ॥ धनुषां च परेषां[12] च,

---

१ अतिनिकटस्थानि. २ देहेषु. ३ श्यामलनाम्रा हस्तिपकेन आश्रितम्. ४ तत्कालरचितानल्पयुद्धवेषदीप्यमान. ५ अर्जुनवत्. ६ निर्व्याजो निष्कपटः, ७ जितेन–जयेन काशते–प्रकाशते इति. जितकाशी तद्वत्. ८ युद्धभूमौ, ९ महत्ताम्, १० मेघमालासमूहसदृशे. ११ मीलंत., १२ शत्रुणाम्.

जीवाकर्षणकोविदाः । शरासारैर्धनुर्वेदं, धानुष्काः स्वमदीदृशन् ॥ ३३१ ॥ नाथेन दूरं निक्षिप्तः, सरलोऽपि शरोत्करः । विपक्षे लब्धलक्षोऽपि, ह्रियेवाभूदधोमुखः ॥ ३३२ ॥ क्षुरप्रकिरणा दीप्ता, धनुर्मार्तंडमंडलात् । पेष्टुं द्विपत्तमःस्तोमं, निर्जग्मुस्तिग्मवेगतः ॥३३३॥ लोहवर्मणि संश्लिष्टाः, खड्गघाता वितेनिरे । खाट्कारान् क्षितिभृद्दुर्गे, दंतिदंता इवासकृत् ॥३३४॥ तदा शाक्तीकयाष्टीक-पारश्वधिकपाट्टिशाः । दर्शयांचक्रिरे सैन्य-द्वयेऽपि लघुहस्तताम् ॥ ३३५ ॥ उत्प्लुत्योत्प्लुत्य शौंडीरैः, पत्तैरपि तथा युधि । विचेक्रमे यथाऽभूव-न्नश्ववारा द्विधाऽप्यधः ॥ ३३६ ॥ प्रेरितः पृतनामध्ये, योद्धुं द्विट्तुरंगवारिणा । छिन्नक्रमोऽपि जात्योऽश्वः, स्वामिनं बहिरानयत् ॥ ३३७ ॥ प्रोतोऽरिणाऽश्वपृष्ठेन, सह शल्यनिवेशनात् । सादी कोऽपि प्रमीतोऽपि, जीवन्निव न पेतिवान् ॥३३८॥ स्वारोढुः पदिकक्षिप्ता-नसिघातानसंजयन् । श्रीवृक्षकीहयश्चक्रे, स्वोच्चत्वं सार्थकं रणे ॥ ३३९ ॥ अर्धव्योम्नि मुहुः फालान्, कारयंतस्तुरंगमान् । जघ्नुर्हस्तिस्थितानुच्चा-न्नीचा अपि तुरंगिणः ॥ ३४० ॥ कोपादुत्पाट्य हस्तेन, भटं कंदुकवद् रणे । द्विपो दातुं यमायेव, दूरमूर्ध्वं निचिक्षिपे ॥३४१॥ प्रहरन् दंतयुग्मेन, 'वज्रेणेव' परासिना । छिन्नहस्तोऽपि नो हस्ती, विहस्तोऽजनि कौतुकम् ॥ ३४२ ॥ योद्धुमूर्ध्वीकृतशुंडाग्रा-न्न्योन्यबंधेन वारणौ । तेनतुस्तोरणमिव, प्रवेशे विजयश्रियः ॥ ३४३ ॥ मृद्नन्तः पादघातेन, भटान् कमलखंडवत् । अन्योन्य-

१ प्रत्यंचाऽऽकर्षणविशारदाः, पक्षे-प्राणाकर्षणकोविदा. २ स्वं-स्वकीय धनुर्वेदं-धनुर्ज्ञानम् ३ पर्वतदुर्गे-पर्वतप्रान्तभागे ॐ शक्तियोद्धृयष्टियोद्धृपरश्वध (परशु,) योद्धृपट्टिशयोद्धारः ४ हस्तक्रियाचातुर्यम् ५ पादाभ्या जग्मे ६ उत्सेधात्, प्रक्रमणाच्च ७ शत्रुखड्गेन. ८ छिन्नपादः. ९ बाणप्रवेशनात् १० मृतोऽपि ११ अधारयन् १२ हृदयस्थश्वेतलोमयुक्त अश्वविशेष, १३ शुण्डया. १४ हस्तरहितो, व्याकुलो, वा १५ कमलदंडवत्-प्र.

सैन्यकासारौ[1], वारणेंद्रा व्यलोडयन् ॥ ३४४ ॥ शस्त्रक्षये मिथो जाते, प्ररूढप्रौढविक्रमाः[2] । भुजाभुजि न्ययुध्यंत, मल्लवत्केऽपि सैनिकाः ॥ ३४५ ॥ प्रहारप्रसरद्रक्त-रक्तांगाः सुभटा बभुः । शौर्यलक्ष्मीसमाश्लेष-लग्नकाश्मीरजा इव ॥ ३४६ ॥ यायावरैर्[3]निजप्राणैः, क्रीत्वाऽतिस्थायुकं यशः । भटाः प्रकटयांचक्रुः, केचिद्वाणिज्यनिर्[4]णताम् ॥ ३४७ ॥ इह स्वस्वामिनां मान[5]—मैमानं च यशोभरम् । प्रेत्य स्वर्गं च शौंडीराः, शौर्येणैकेन लेभिरे ॥ ३४८ ॥ रणक्षेत्रात्प्रसर्पंत्यो, दधिरे रुधिरापगाः । वृष्टिद्रवद्धातुरसो-न्मिश्रशैलनदीभ्रमम् ॥ ३४९ ॥ कृतांततर्पणे जाग्र-त्येवमुग्रे रणे मिथः । सुभटैश्चाहुमानीयै—श्चूर्णयांचक्रिरे परे ॥ ३५० ॥ परैः पश्चात्कृतास्त्रस्ता, गुर्ज्जरा घातजर्जराः । चौलुक्यक्षितिशक्रं तं, शरणीचक्रिरे रयात् ॥ ३५१ ॥ अथाश्वास्य स्वशौंडीरां—श्चौलुक्यो रणकर्मणि । सामंतान् प्रेरयामास, केल्हणप्रभृतीन् स्वयम् ॥३५२॥ आदिष्टानप्युदासीनान्, दृष्ट्वा तान् स्वनिपादिनम् । पप्रच्छ श्यामलं भूमा-नमी कस्मादुदासते ? ॥ ३५३ ॥ स तन्मंत्रविदाचष्ट, विरक्ताः प्रागमी त्वयि । त्वद्वैरिणा निशि स्वर्ण—दानेन स्ववशीकृताः ॥ ३५४ ॥ स्थेयं युद्धाय सन्नह्य, नैव योध्यं परैः समम् । इति मंत्रादुदास्यैते, तिष्ठंति द्रोहकारिणः ॥ ३५५ ॥ पुनस्तं पृष्टवान् भूभृ-त्तर्हि त्वं वद कीदृशः ? । स प्रोचे त्वमहं चायं, द्विपश्चैते त्रयः स्थिराः ॥ ३५६ ॥ द्विपस्त्वं चापरावर्त्त्यौ, यदि तर्हि जितं मया । एनं नय द्विपसैन्यं, तमित्युक्त्वा नृपोऽवदत् ॥ ३५७ ॥ ईलं[6] साहसिना युक्तं, दैवं[7]मूर्ध्नि वहत्यहो । कीलाट्टालयमानास्ते, भंगश्चेन्नैर्व[8] भंक्ष्यते (?) ॥ ३५८ ॥ सूक्तमेतत्समाकर्ण्य, प्रोक्तं चौलुक्यभूभृता । चारणः कश्चिदाचष्ट, तं प्रत्यवसरोचितम् ॥ ३५९ ॥

१ कासारो, प्र. २ प्ररूढमहद्विक्रमा. ३ अतीवगमनशीलै–नश्वरैः, ४ ण्णुतम्-प्र. ष्टताम्–प्र. ५ सत्कारम्, * प्रमाणातिगम् ६ हलम्-प्र. ७ देव, प्र. ८ चेन्नैव, प्र.

कुमारपाल ! मा कार्षी—श्चिंतां स्वान्नैव चिंतितम् । येन तुभ्यं ददे राज्यं, चिंतां कर्ता स एव ते ॥ ३६० ॥ तामेवोपश्रुतिं लात्वा, द्विपज्जयपटीयसीम् । सहस्रभटयुग् वैरि—ष्वपतद् गुर्ज्जरेश्वरः ॥ ३६१ ॥ आचकर्ष च कोदंडं, सह प्राणैर्विरोधिनाम् । आरोपयच्च तत्रेषुं, समं निजजयाशया ॥ ३६२ ॥ स मुमोच शरश्रेणी—रेणीरिव विदारयन् । संहता अपि दुर्वार—वैरिवीरपरंपराः ॥ ३६३ ॥ अपश्यंतोऽतितूर्णत्वा—त्तस्येषुग्रहणादिकम् । अविद्धमपि विद्धं स्वं, मेनिरे रिपवो भिया ॥ ३६४ ॥ अमी विरोधिभिः सार्धं, मिलिता इति मा स्म भूत् । सामंतानामिवासाक—मपि लोके विकत्थनम् ॥ ३६५ ॥ ध्यात्वेतीव निशांतास्याः, सर्वे चौलुक्यसायकाः । द्विषतां हृदयं भित्त्वा, वहिर्दूरमयासिषुः ॥ ३६६ ॥ युग्मम् ॥ सर्वांगीणैस्तदिषुभिः, पूरिता रेजिरे भटाः । वीरलक्ष्मीपरिरंभाद्, भृशमुत्कंटका इव ॥ ३६७ ॥ वलोच्छलद्धूलिभरैः, कल्पिते मेघमंडले । धाराभ्रमं व्यधुस्तस्य, पतंत्यः शरपंक्तयः ॥ ३६८ ॥ निषादिनो यथा चित्तं, संचरन् राजकुंजरः । यथानृपाशयं हस्ति—पकस्तं प्रेरयन् रणे ॥ ३६९ ॥ यथादृष्टं शरैर्मंक्षु—श्चौलुक्यः प्रतिपंथिनः । त्रयोऽप्यमी न कस्यासन्, स्मेरविस्मयदायिनः ॥ ३७० ॥ युग्मम् ॥ सध्वजान् खंडयन् दंडान्, मर्श्नन् वाहान् ससादिनः । इष्वासान् सगुणांश्छिदन्, हरन् वाहून् सवांहुलान् ॥ ३७१ ॥ वर्मान्वितानि वर्ष्माणि, स्नापयन् भूरिशोणितैः । पातयन्नुत्तमांगानि, शिरस्त्राणयुतान्यपि ॥ ३७२ ॥ वलं निष्काशयन् देहा—ज्जीवं निर्वासयन् हृदः । धानापेषं पिपेष द्विट्—सैन्यांश्चौलु-

१ शकुनम्. २ मीलिता . ❀ निंदा, ३ तेजितानना', ४ वाणाः. ५ सर्वाण्यङ्गानि व्याप्नुवन्तीति सर्वाङ्गीणास्तैः. ६ रोमाञ्चिता इव. ७ अतीवाश्चर्यदायिन . ८ नाशयन्. ९ धनूंषि. १० हस्तत्रमंसहितान्–स्फुरकसहितान् हस्तान्.

क्यनायकः ॥३७३॥ त्रिभिर्विशेषकम् ॥ एवं दूरीकृते वैरि-चक्रेऽभ्र इव स प्रभुः । पुरः स्फुरंतं भास्वंत-मिवार्णोराजमै-
क्षत ॥ ३७४ ॥ लोकातिशायिनीं स्फूर्ति[1]-मन्योन्यं पश्यतोस्तयोः । जजागार परं वैरं, रामरावणयोरिव ॥ ३७५ ॥ तदैव
सफलीकर्तु-मिव तत्तौ[*] महौजसौ । गजेंद्रौ स्वनिषादिभ्यां, प्रेरयामासतुस्ततः॥३७६॥ तौ चाहुमानचौलुक्यौ, भावुकश्याल[2]-
काविति । हासेनेव रुषाऽऽस्लिष्टा-मुक्तिप्रत्युक्तिकौतुकम् ॥३७७॥ हंहो श्याल! तपस्विवत् स्वशिरसि क्षिप्त्वा[3] जटाः प्राक्त्वया,
भिक्षित्वा प्रतिमंदिरं प्रतिपदं नंष्ट्वा च नीतं जनुः । प्राप्तं पुण्यवशेन राज्यमधुना निःस्वेन चिंताश्मवत्, भग्नीप्रेरणया
कुतोऽद्य समरे व्यापद्यसे ? मत्करे ॥३७८॥ (शार्दू०) भग्नीवल्लभ ! यज्जटादिधरणं शक्तस्य वा वैभवं, रामादेरिव तद्विधिर्वि-
तनुते तत्तस्य[4] नो दूषणम् । आजन्माऽपि परं त्वयाऽद्भुततमे राज्ये प्रवर्तिष्णुना, दुःसाधं किमु साधितं कथय मे ? यद्दर्प्पमु-
त्सर्पसि॥३७९॥(शार्दू०)अमी ते मद्बाणाः पटुरिपुनृपोत्पेषनिपुणा, हृणीयंते श्याल ! त्वयि निपतितुं तापसचरे[5] । भृशोन्मत्त-
स्तंबेरमदमनमाहात्म्यविदिता[6], भवेयुर्गोमायौ किमु सरभसाः[7] केसरिनखाः ? ॥३८०॥ (शिखरिणी) भवद्बाणक्षुण्णः[8] प्रतिनृप-
तिरेकोऽपि न मया, श्रुतः प्राक्प्रागल्भीं[9] प्रथयसि वृथा भावुक ! किमु ? । अथेयं सत्या ते समदनृपतिप्राणहरण-प्रवीणान्
मद्बाणान् यदि युधि निरोद्धा[10] कथमपि ॥ ३८१ ॥ (शिख०) अथ तौ भूधवौ यावद्, युयुत्सामासतुर्मिथः[11] । तावद्योद्धुं ढुढौकाते,
दुर्मत्तौ तद्गजेश्वरौ ॥ ३८२ ॥ चौलुक्यगजमालोक्य, संप्राप्तं प्रजिहीर्षया[12] । शाकंभरीशितुर्हस्ति-पकश्चारभटाभिधः॥३८३॥

१ पराक्रमम्. * वैरम्, २ भावुकश्च-भगिनीपतिः, श्यालकश्च-पत्नीभ्राता, तौ. ३ प्रक्षिप्य-स्थापयित्वा. ४ तस्मात्. ५ पूर्वं भूतस्तापस इति तापसचरस्तस्मिन्.
६ स्तंबे कक्षे रमते इति स्तंबेरमो-हस्ती ७ सवेगा., ८ पिष्ट . ९ प्रागल्भी-महत्ता, १० निरोधयिता. ११ युद्धं कर्तुमिच्छत. स. १२ प्रहारं कर्तुमिच्छया.

भ्रमयन्निभनाथं स्वं, वात्या चक्रमिवोच्चकैः । महाबलेन विदधे, सिंहनादं मृगेंद्रवत् ॥ ३८४ ॥ युग्मम् ॥ सिंहनादः स तन्मुक्तो, नादयन्नद्रिकंदराः । सिंहनाद इवाभैत्सी–दन्येभानां मदोदयम् ॥ ३८५ ॥ तेन नादेन गंधर्वा—स्त्रेसुस्त्रोटितबंधनाः । मूर्च्छालतां जगृहिरे, क्लीबाः शूराश्चकंपिरे ॥३८६॥ तस्मादिभभ्रमात् सिंह–नादाच्च भयभंगुरः । महाबलोऽपि ववले, गजेंद्रो गुर्ज्जरप्रभोः ॥ ३८७ ॥ आधोरणप्रणुन्नोऽथ, प्रणिहंतुं द्विपद्द्विपम् । तन्नादेन पुनर्भीतः, स तथैव न्यवर्तत ॥ ३८८ ॥ चौलुक्यस्तं तथा दृष्ट्वा, द्विपं श्यामलमालपत् । अयं पशुर्मुहुः कस्माद्, वलते संपरायतः ॥ ३८९ ॥ स तं व्यजिज्ञपद्देव !, भवद्राज्याधितो रुषा । निर्गत्यैनं रिपुं भेजे, यः प्राक् चारभटो भटः ॥ ३९० ॥ स द्विपं भ्रमयन् सिंह—नादं वितनुते मुहुः । तेनायं सांयुगीनोऽपि, भयान्नश्यति भीरुवत् ॥३९१॥ तदैवोत्पन्नधीर्भूपः, करिणः कर्णकोटरे । विदार्य द्विपटीं क्षुर्या, श्यामलेन न्यवेशयत् ॥ ३९२ ॥ ततो मुद्रितकर्णत्वा–दशृण्वंस्तद्ध्वनिं द्विपः । अरीभं प्रत्यधाविष्ट, वधाविष्टमतिर्युधे(धि)॥३९३॥उर्भावतिविनिघ्नंतौ, भ्रमंतौ चक्रवन्मुहुः । अन्योन्यं पुष्कराग्रेण, दिधीर्षंतावमर्षतः ॥३९४॥ मद्यपानभृशोन्मत्तौ, रक्तरक्तविलोचनौ । चिराय युयुधाते तौ, पितृवैरादिव द्विपौ ॥ ३९५ ॥ युग्मम् ॥ तयोः प्रहरतोरेवं, तन्नृपावपि कोपतः । वर्षतौ विशिखश्रेणिं, चक्रतुर्युद्धमुद्धतम् ॥३९६॥ तत्संग्रामं भृशोद्दामं, पश्यंतः कौतुकाद्सुराः । केचिच्चौलुक्यतोऽभूवन्, केचिच्छाकंभरीशतः ॥३९७॥ मन्येऽन्तस्तत्पृषत्कानां, घनत्वेन प्रसर्पताम् । शूरोऽपि छेदभीत्येव, स्वकरान्

१ अकृत्रिमसिंहनाद इव. ※ तैः० प्र, २ अश्वा. ३ मूर्च्छामित्यर्थ. ४ कातरा. ५ युद्धात् ६ युद्धकुशलोऽपि, ७ उत्तरीयं वस्त्रम् ( दुपटो ), ८ उभावपि, प्र. ९ शुण्डाग्रेण. १० बाणपंक्तिम्. ११ तयोः बाणानाम् १२ सूर्य', पक्षे शूर –वीरः.

क्षिपति स न ॥ ३९८ ॥ शरवर्षममर्षेण, धारालं तन्वतोस्तयोः । बहुबाणतयाऽधातां, तूणावक्षय्यतामिव ॥ ३९९ ॥
परस्परेण निर्मुक्तः, खंडितश्चाजनालवत्। मध्ये तद्धस्तिनोर्हस्ति-द्वयसो ऽभूच्छरोत्करः ॥ ४०० ॥ चापं च ज्यां च बाणं च,
छिंदंतौ तौ मुहुर्मुहुः । कर्णार्जुनाविवाध्यक्षौ, चित्रीयांचक्रतुश्चिरम् ॥ ४०१ ॥ अन्यान्यपि च शस्त्राणि, शस्त्रैर्घ्नन्तौ यथो-
चितैः । सुचिरं तावरंसातां, शाराञ् शारैरिवाक्षकौ ॥ ४०२ ॥ अथास्त्रैश्चाहुमानीयै—र्निजास्त्राण्यंतरा मुहुः । निःस्वैस्य
वांछितानीव, भज्यमानान्यवेक्ष्य सः ॥ ४०३ ॥ चौलुक्यः कोपदुष्प्रेक्षो, गजादुत्प्लुत्य सिंहवत् । विद्युदुत्क्षेपकरणे—
नारोहद्वैरिकुंजरम् ॥ ४०४ ॥ युग्मम् ॥ आरूढमात्रस्त्रोटित्वा, कृपाण्या रज्जुमायताम् ॥ सोऽपातयद् द्विपाद् भूमौ, सप-
ल्याणमपि द्विपम् ॥ ४०५ ॥ वीक्षमाणेऽपि तत्सैन्ये, क्रमेणाक्रम्य तस्य हृत् । कृपाणीं कंपयन् पाणौ, चौलुक्यस्तमवो-
चत ॥ ४०६ ॥ रे रेऽनात्मज्ञ ! वाचाट !, द्यूते हास्यात्त्वया मुहुः । यया निवेदयांचक्रे, गुर्जरा मुंडिता इति ॥ ४०७ ॥ तां
जिह्वामनयाऽऽकृष्य, कृपाण्याऽवर्द्धुवर्त्मना । संगरं पूरयाम्यद्य, सद्यः स्वभगिनीरितम् ॥ ४०८ ॥ उदीर्येति स शौर्येण,
स्फूर्जन् यम इव स्वयम् । तज्जिह्वाकृष्टये शस्त्रीं, व्यापारयितुमादृतः ॥ ४०९ ॥ त्रिभिर्विशेषकम् । क्रांतश्चौलुक्यनाथेन,
सोऽरिर्दृष्टस्तथा जनैः । पुरा मुरारिणाऽऽक्रांतो, यथा कंसो नृशंसधीः ॥ ४१० ॥ पश्यंतोऽपि स्वनाथस्य, तां दशां
तद्भटा भिया । नाक्रामंति स्म चौलुक्यं, मरणं हि महद्भयम् ॥ ४११ ॥ केसरिक्रमणाक्रांत—मृगवन्मृत्युसंमुखः । चाहु-

* हस्तिप्रमाणः. १ चित्रं कुरुतश्चित्रीयत इति चित्रीयाञ्चक्रतुः. २ पाशकैः क्रीडा कर्तारः. ३ धनरहितस्य. ४ क्य., प्र. ५ क्य. प्र. ६ पादेन. ७ जिह्वया,
८ कंधराध्वना. ९ प्रतिज्ञां. १० ईरितं-कथितम्. ११ वलान्. १२ कृतादरः संजातः. १३ क्रमणः-पादः.

मानस्तमूचेऽथ, रक्ष रक्ष शरण्य ! माम् ॥ ४१२ ॥ अवस्थया तया वाचा, तया च सकृपो नृपः । हृदयात्पादमुत्तार्य,
कथयामास तं प्रति ॥ ४१३ ॥ कृपया त्वं विमुक्तोऽसि, जीवन् परमिदं त्वया । अवटौ रसनाऽऽकृष्टि—चिह्नं धार्यं स्वनी-
वृति ॥ ४१४ ॥ इत्यचिरं भवद्देशे[1], शीर्षाच्छादनमंबरम् । वामदक्षिणतो जिह्वा—युगास्तेऽतः परं पुनः ॥ ४१५ ॥ पश्चा-
दपि स्फुरज्जिह्वं, तत्कार्यं मन्निदेशतः । यथा भग्नप्रतिज्ञायाः, पूर्त्तिः प्रख्यायते क्षितौ ॥ ४१६ ॥ चतुर्भिः कलापकम् ॥
तदंगीकृतवंतं तं, चाहुमानं महीपतिः । दारवे पंजरे क्षिप्त्वा, मध्येसैन्यं[2] समानयत् ॥ ४१७ ॥ तदा चौलुक्यसैन्येऽभू—
च्चित्तानंदी जयोत्सवः । वादित्रध्वनिभिर्वैरि—कर्ण[3]कीर्णपृथुव्यथः ॥ ४१८ ॥ तच्चौलुक्यबलं दृष्ट्वा, सामंतास्ते ललज्जिरे ।
चकंपिरे च किं चित्रं, भयं स्वामिद्रुहां हृदि ॥४१९॥ परं न गुर्जराधीश—स्तान् शीर्षच्छेदि(द)कानपि । [4]पालभत तादृक्षा,
गंभीरा हि महाब्धिवत् ॥ ४२० ॥ त्रिरात्रं पृतनामध्ये, संस्थाप्य परिधाप्य च । दत्त्वा राज्यं स्वसृपतिं, तं चौलुक्यो विसृ-
ष्टवान् ॥ ४२१ ॥ सोऽपि स्वस्थानमागत्य, जीवन्मृत इवोच्चकैः । मानम्लानिं वहंश्चित्ते, चिंतयांचकृवानिति ॥ ४२२ ॥
अहो हास्यान्ममायासीत्, कियान् व्यसनवारिधिः । जीवितान्वयराज्यानि, यत्र मज्जंति लोष्टवत् ॥ ४२३ ॥ यदुच्यते
जनैर्हास्य—मर्धवैरं वृथैव तत् । इदं हि वैरं संपूर्ण—मंते[5] प्राणांतकारणात् ॥ ४२४ ॥ अथ हास्येन किं कृच्छ्रं, पत्न्यै-
वैतत्कृतं मम ? । मन्येऽहमंगना एव, मूलं व्यसनभूरुहः[6] ॥ ४२५ ॥ अनर्थमूलं संसार—द्वारोद्घाटनकुंचिका(काम्) । कलेः
स्थानं विपत्तीनां, निधानं धिङ् नितंबिनीम् ॥ ४२६ ॥ लंकासमीपे कुरुमंडले च, समुत्कटोद्भटकोटिनाशात् । रामायणं भार-

१ स्वदेशे. २ सैन्यस्य मध्य इति मध्येसैन्यम्. ३ कर्णस्थापित०. ४ उपालंभत, प्र. ५ परिणामे. ६ भूरुहाम्. प्र.

तमप्यभूद् यत्, तत्र ध्रुवं लोलदृगेव हेतुः ॥४२७॥ (उपजातिः) राक्षसीभिरिवैताभि—स्तादृशास्ते महाशयाः । रावणाद्याः क्षयं
नीता, जीवन्मुक्तोऽस्म्यहं वरम् ॥ ४२८ ॥ सप्तभिः कुलकम् ॥ ततः शासनमातन्वं—श्चौलुक्यस्य दिवानिशम् । अर्णोराजो
व्यधाद् राज्यं, विधेः को हि बली खलु? ॥४२९॥ कृतकृत्योऽथ चौलुक्यो, व्यावृत्य स्ववशे व्यधात् । आक्रम्य मेडतस्थानं,
पल्लीकोटं च सैनिकैः ॥४३०॥ चैत्यानि पिंडितानीव, पुण्यान्यनुपदं नृपः । विलोक्य प्रश्नयामास, वाग्भटं निजमंत्रिणम् ॥
॥ ४३१ ॥ अस्मद्देशं समासाद्य, मालवेंद्राः स्वकीर्त्तये । चैत्यानि पातयंत्यात्म—सत्कर्माणीव पापिनः ॥ ४३२ ॥ पितृध्वंस-
मिवाधातुं, स्वस्यैतत्कर्म नोचितम् । इह स्फूर्त्तिमभिव्यक्तुं, किमत्र क्रियते वद?॥ ४३३ ॥ विमृश्य वाग्भटोऽवादीद्, देव !
पुण्यौघपुष्टये । तिलपीलनयंत्राणि, सैन्यैः कारय खंडशः ॥ ४३४ ॥ मूर्त्तानि पातकानीव, तानि सर्वाणि सैनिकैः । चूर्ण-
यन्नाप चौलुक्य—चंद्रश्चंद्रावतीं पुरीम् ॥ ४३५ ॥ तत्र वह्निमयं यंत्रं, सज्जयित्वैव पूर्ववत् । दुष्टो विक्रमसिंहोऽगाद्,
गुर्जराधीशसन्निधिम् ॥ ४३६ ॥ अत्यर्थमर्थनात्तस्य, भुक्त्यर्थं पार्थिवः पुनः । तं क्रूरं ज्ञातवान् विज्ञा, विदंते हि परा-
शयम् ॥ ४३७ ॥ मल्लैस्तं बंधयित्वा द्राग्, वह्नियंत्रविलोकनात् । प्रकाश्य तत्कृतं छद्म, तत्सद्माज्वालयन्नृपः ॥ ४३८ ॥
उत्तार्याऽगानि सर्वाणि, मल्लैरास्तरणोज्झिते । अनस्यारोप्य च स्वामी, तं सहाचालयत्ततः ॥ ४३९ ॥ स तथा शकटस्थास्नुः,
पर्यटन् स्थपुटे पथि । खाट्कारप्रस्फुरन्मूर्धा, निस्सीमामन्वभूद् व्यथाम् ॥४४०॥ तारपूत्कारतः शंके[6], सेवकान् सोऽन्वशा-
दिति । मा कुरुध्वं पतिद्रोहं, वीक्ष्येमां दुर्दशां मम ॥ ४४१ ॥ दध्यौ च दुर्धियं धिग् मां, स्वलोकैर्वारितोऽप्यलम् ।

१ आज्ञाम्. २ किमन्यत् प्र. ३ शकटे. ४ विषमोन्नतप्रदेशे. ५ प्रस्फुटत्, प्र. ६ कविराह-अहमेव शंके-शंका करोमि-एवं मन्ये इत्यर्थः.

स्वस्यानर्थ इव स्वामि—ध्वंसो येन विधित्सितः ॥ ४४२ ॥ इदं कष्टं प्रभुद्रोह—द्रुमस्य सुममस्ति मे । अतः परं फलं किंनु, भवितेति न संविदे ॥ ४४३ ॥ इति ध्यायन् रुजा ग्लायन्, कांत्या म्लायन् रुरोद सः । इहापि नारकीं पीडां, घनोंघोत्थां वहन्निव ॥ ४४४ ॥ त्रिभिर्विशेषकम् ॥ तथा तं दुःस्थमालोक्य, भटाः केऽपि कृपालवः । नृपं विज्ञाप्य विदधुस्तस्याधस्तात्तृणास्तृतिम् ॥ ४४५ ॥ अथ सोत्सवमभ्येत्य, पत्तनं गुर्जरप्रभुः । अपूरि त्वत्प्रतिज्ञेति, स्वस्वसारमरञ्जयत् ॥ ॥ ४४६ ॥ कृतकृत्येव देवल्ल—देवी हर्षमयी तदा । स्वबंधुं बंधुराशीर्भि—स्तोषयामास भूरिभिः ॥ ४४७ ॥ प्रहिताऽप्यभिमानेन, प्रेयोधाम जगाम न । तप्यमाना तपः किंतु, सा तस्थौ बंधुसन्निधौ ॥ ४४८ ॥ अथास्थानीस्थितो नाथो, मल्लैः सज्जितविग्रहम् । ऊचे विक्रमसिंहं तं, सामंतान् श्रावयन्निति ॥ ४४९ ॥ वद रे क्रूरकोटीर !, केनासेनासि शिक्षितः । हंतव्या वह्नियंत्रेण, नृपाः सामंतका न हि ? ॥४५०॥ अहं चेत्त्वत्कृते तत्र, वह्नियंत्रे जुहोमि रे । पशुवत् सकुटुंबं त्वां, तदा तव भवेत् किमु? ॥ ४५१ ॥ हक्कयित्वेति चौलुक्यः, स्थापयामास तं रुषा । नरकावासवत्क्लेश—मये कारागृहांतरे ॥४५२॥ तदैव तस्य भ्रातृव्यं, रामदेवसुतं प्रभुः । यशोधवलनामानं, चक्रे चंद्रावतीपतिम् ॥ ४५३ ॥ केल्हणादींश्च सामंता—न्निग्राह्यान् विनिगृह्य सः । ऐश्वर्यकमलास्वादं, पुष्पंधय इव व्यधात् ॥ ४५४ ॥ कदाचन सभासीने, श्रीचौलुक्ये समागमत् । भट्टः कौंकणदेशेश—मल्लिकार्जुनभूभुजः ॥ ४५५ ॥ अनेकवाक्पतिश्रीद—पुरुषोत्तमसेविताम् । सभां निभालयन् सोऽभूद्, दिवेऽपि विगतस्पृहः ॥ ४५६ ॥ तदाशीर्वादतुष्टेन, निवेश्याग्रे महीभृता । कस्त्वं ? कस्येति ? पृष्टः सन्, भट्टः

१ विधातु-कर्तुमिष्ट . २ तीव्रपापोत्थाम् . ३ विज्ञप्य,-प्र. ४ स्तृतं-प्र. ५ न किं, प्र. ६ भ्रातृपुत्रम् . ७ लक्ष्मी', पक्षे, कमलम् . ८ भ्रमर'. ९ वंदी.

स्पष्टमेवोचत ॥ ४५७ ॥ भंक्त्वा प्रौढकलानिलापतिवरान् दुर्वारदोर्विक्रमै—रात्मीयान् विरचय्य चानवरतं तान् पालयन् पौत्रवत्। धत्ते 'राजपितामहे'ति बिरुदं यो विश्वविश्वे श्रुतं, सोऽयं राजति मल्लिकार्जुननृपः कोदंडविद्यार्जुनः॥४५८। (शार्दूल०) देव ! तस्य नरेंद्रस्य, भट्टोऽहं भट्टकीर्त्तिताम् । विश्वद्रीचीं भवत्कीर्त्ति—स्फूर्त्तिं श्रुत्वा समागमम् ॥ ४५९ ॥ मल्लिकार्जुनराजस्य, श्रुत्वा तद्विरुदं महत् । भूपः कोपेन जज्वाल, सर्पिस्तर्पितवह्निवत् ॥ ४६० तस्य तद्विरुदं छेत्तुं, भूपे पश्यति पर्षदम् । व्यधादुदयनामात्य—सूनुराम्रभटोऽञ्जलिम् ॥४६१॥ दृष्ट्वा तदंजलिं चित्राऽऽ—क्रांतश्चौलुक्यभूमिभुक् । तमाकार्य रहः प्रीत्या, पप्रच्छाऽञ्जलिकारणम् ॥ ४६२ ॥ बभाणाम्रभटो देव !, त्वया तद्विरुदे श्रुते । सभा न्यभालि कोऽप्यस्ति ?, सुभटस्तं हिनस्ति यः॥४६३॥इमं त्वदाशयं मत्वा, त्वदादेशसहिष्णुना । मया वीटक(वीटिको)मादातुं, रचितस्ते पुरोऽञ्जलिः ॥ ॥ ४६४ ॥ स्वाभिप्रायपरिज्ञाना—चौलुक्योऽतिचमत्कृतः । तमस्तावीत्स्वचित्तज्ञं, गुणज्ञं स्तौति को हि न ? ॥ ४६५ ॥ दत्त्वा तदैव राज्यश्री—चिह्नं छत्राद्यमद्भुतम् । नृपीचक्रे च तं स्वामी, तुष्टो हि स्वस्तरूयते ॥ ४६६ ॥ अर्पयित्वा चमूचक्रं, दुर्वारं चक्रिचक्रवत् । मल्लिकार्जुनभंगाय, प्रैषीदाम्रभटं प्रभुः ॥ ४६७ ॥ स्तब्धान् भंजन्नतान् रक्षन्, सिंधुपूर इव द्रुमान् । कलापिनीं नदीं तीर्त्वा, कौंकणांतिकमाप सः ॥ ४६८ ॥ विकंटं कंटकं तत्र, निवेश्याम्रभटः सुधीः । निसृष्टं प्राहिणोद् दूत—मुपश्रीमल्लिकार्जुनम् ॥ ४६९ ॥ स दूतः प्राप्य तद्धाम, विश्राममिव संपदाम् । मल्लिकार्जुनकीर्त्तिं तं,

१ जित्वा प्राग् निखिलान्, इत्यन्यत्र, २ निरन्तरम्. ३ विश्वविश्वश्रुतम्. प्र. ४ सर्वदिग्गामिनीम्. ५ प्रतिज्ञायै सज्जितताचूलम्, प्र. ६ कल्पवृक्षायते, ७ उच्छेदाय. ८ नदीपूरः. ९ विशालम्, १० चक्रं-सैन्यम् ११ तन्नामानम्. १२ मल्लिका ( मालति ) च अर्जुनं ( श्वेतसुवर्णं ) च तयोरिव उज्ज्वला कीर्तिर्यस्य तम्.

मल्लिकार्जुनमानमत् ॥ ४७० ॥ नेत्राभ्यां सप्रसादाभ्यां, समानंद्य महीभुजा । कस्त्वमित्यनुयुक्तः सन्, दूतोऽनुस्यूतमूचिवान् ॥ ४७१ ॥ न हस्त्याद्यं सैन्यं न निशिततमः शस्त्रनिवहो, न लौहः सन्नाहो न गुरु मणिमंत्रौषधबलम्। यदुग्राऽसेस्त्रातुं सहमिति विहायैतदखिलं, तृणं वक्रेष्वेकं दधति रिपवस्त्राणनिपुणम् ॥४७२॥(शिख०) निर्दहन् विद्विपद्वंशान्, यत्प्रतापदवानलः । तन्नारीनेत्रनीरौघै—र्यदि निर्वाति कर्हिचित् ॥ ४७३ ॥ गुर्जरेंद्रः स चौलुक्यः, सभायां मागधाननात् । शुश्राव विरुदं प्रौढं, तव 'राजपितामहम्' ॥ ४७४ ॥ कुंजरारिरिवाब्दस्य, गर्जितं भृशमूर्जितम् । तत्सोढुमसहिष्णुस्ते, स चुकोप कृतांतवत् ॥४७५॥ प्रेपि तेन क्षितीशेन, नृपतीकृत्य तत्क्षणम् । कणवत्तव निष्पेष्टुं, श्रीमानाम्रभटोऽधुना ॥४७६॥ स भवद्देशसीमांत—मागतः सैन्यसागरः । तुभ्यं हितोपदेशाय, न्यायवान् प्रजिघाय माम् ॥४७७॥ उत्कंठुलोऽसि चेन्न त्वं, यमास्थानीमवेक्षितुम् । तदा स्वं विरुदं त्यक्त्वा, भज चौलुक्यभूभुजम् ॥ ४७८ ॥ तदादेशं सुरादेश—मिव शीर्षेऽवतंसय । दंडं ददस्व च त्यक्त—मत्सरः प्रतिवत्सरम् ॥ ४७९ ॥ नो चेदाम्रभटः सोऽयं, विपक्षक्षोददीक्षितः । वह्निरिंधनवद् द्राक् त्वां, सकुलं भस्मयिष्यति ॥ ४८० ॥ करोष्येतन्मदुक्तं चेत्, सुचिरं तर्हि जीवसि । अन्यथा म्रियसे सद्यो, दर्पेण दशकंठवत् ॥४८१॥ श्रुत्वा तत्कौंकणेशोऽन्त—र्ज्वलत्कोपहविर्भुजः । ज्वालामिव वचोमाला—माललाप प्रतापभाक् ॥४८२॥ विरुदं मे निराकर्तुं, शक्रेणापि न शक्यते । रे कः कुमारपालोऽयं ?, रंकोऽस्त्याम्रभटश्च कः ? ॥ ४८३ ॥ किं फेरंडेनं फेत्कारै—स्त्रास्यमानोऽपि केसरी । विमुंचते मृगेंद्रेति, नाम स्वं शौर्यतोऽर्जितम् ? ॥४८४॥ किंच त्वन्नायकोऽयं य—न्मया

१ पृष्ट सन्. २ सततसवद्धम्. ३ समर्थम् ४ सिंह, ५ विरुदम् ६ तुभ्यम्. ७ सैन्येन सागर इव, ८ नियमवान्. ९ रावणवत्. १० शृगालेन, ११ ( फूत्कारै )

सेवां समीहते। कुकूलानलयोगेन[1], शीततां तच्चिकीर्षति ॥ ४८५ ॥ दंडं ग्रहीतुमाप्तोऽस्ति, सोऽयमाम्रभटस्तव । तं दातुमेव संग्राम—मागच्छन्नसि पश्य माम् ? ॥ ४८६ ॥ तं दूतमिति संतर्ज्य, विसृज्य च तदैव सः । चमूसमूहरोचिष्णुः[2], प्रतस्थे मल्लिकार्जुनः ॥ ४८७ ॥ तच्चक्रेण समाक्रांता, मेदिनी खेदिनी भृशम् । रजोव्याजेन नंष्ट्वेव, घनाश्रयमशिश्रियत्[3] ॥ ॥ ४८८ ॥ कियतीं भूमिमाक्रम्य, स नृपः पुरतो[4] निजात् । निवेश्य कटकं तस्थौ । चौलुक्यानीकसन्निधौ ॥ ४८९ ॥ दूतः सोऽपि समभ्येत्य, श्रीमदाम्रभटाग्रतः । मल्लिकार्जुनवाक्यानि, तान्यशेषाण्यचीकथत् ॥ ४९० ॥ प्रातर्द्वे अपि सैन्ये ते, योद्धुमुद्यद्दोर्मिके । रणाग्रमापतुः[5] प्राच्य—प्रतीच्यावर्णवाविव ॥ ४९१ ॥ प्रौढद्विपवरारूढौ, नानाशस्त्रभयंकरौ । धैर्यसंवर्मितावंत—र्बहिः सन्नाहधारिणौ ॥ ४९२ ॥ तौ श्रीआम्रभटश्रीम-न्मल्लिकार्जुनभूभुजौ । संजग्माते तदोद्दाम-स्थामानौ शरभाविव[6] ॥ ४९३ ॥ युग्मम् ॥ संपरायोचितां काय—स्फूर्त्तिं वाक्यप्रलंघिनीम् । तौ पश्यंतौ मिथश्चित्ते, चित्रीयामासतुः क्षणम् ॥ ४९४ ॥ बभाणाम्रभटो राजन् !, योधयित्वा भटानिमान् । विधीयते कथं व्यर्थं, मर्त्यकीटविकुट्टनम् ॥ ॥ ४९५ ॥ अर्जितं विरुदं येन, त्वया 'राजपितामहम्' । ऊर्जस्वि तद्भुजाशौर्यं[7], दिदृक्षेऽहं[8] तवाधुना ॥४९६॥ तदावां कुर्वहे युद्धं, पश्यंत्वेते चमूचराः । विदंतु चोभयोरद्य, माद्यद्दोर्विक्रमावधिम् ॥ ४९७ ॥ शशंस कौंकणेशोऽथ, साधु साधु महाभट !। तुष्टोऽस्म्यहं भृशं धैर्या—वष्टंभेन[9] तवामुना ॥४९८॥ अवश्यं दर्शये तुभ्य—मभ्युद्यद्भुजविक्रमम् । परं स्फूर्जन्[10]नसौ[11]

---

१ तुषानलयोगेन, २ दीप्तिशीलः, ३ गगनम्, ४ नगरात्, ५ युद्धाग्रम् , पक्षे उच्चशब्दम्. ६ मृगेन्द्रविशेषौ, ७ भुजाशौर्येण, ८ द्रष्टुमिच्छामि, ९ धैर्यावलंबनेन, १० चेष्टमान., ११ भुजविक्रम.,

हंतुं, नृपते त्वां वणिक्सुतम् ॥ ४९९ ॥ क्षोणीक्षोदक्षमक्षोणि—भृत्पक्षक्षपणोल्वणः । दंभोलिः किं ? ससंरंभो, भवेत्पेष्टुं दृषत्कणम् ॥ ५०० ॥ पुनराम्रभटः प्रोचे, नैकांतः कांत एप ते । यत्तरस्वी स्फुरेत्क्षत्र—पुत्रो नैव वणिक्सुतः ॥ ५०१ ॥ क्षत्रियोऽपि भवेत्कोऽपि, तृणभंगेऽपि न क्षमः । वणिक् कोऽप्यद्रिभेदेऽपि, वज्रवत् प्रौढविक्रमः ॥ ५०२ ॥ क्षत्रता वा वणिक्ता वा, ज्ञायते नैव वाक्यतः । यावन्न जन्यते जन्यं, शौर्यस्वर्णकपोपलम् ॥५०३॥ क्लीवस्येवोरुशौर्येण, तस्य धार्ष्ट्येन तेन सः । कौंकणेशोऽतिविस्मेरः, पुनराचष्ट तं प्रति ॥ ५०४ ॥ चिकीर्पसि सरीसृपेश्वरशिरःशिखाकर्पणं, जिहीर्पसि गजांतकृद्धिकृ (वृ) तवक्रदंष्ट्रांकुरम् । दिधीर्पसि समीरणप्रबलकीलदावानलं, जिगीर्पसि यदद्य मां बलनिधिं वणिक्-पुत्र ! रे ॥ ५०५ ॥ ( पृथ्वी ) कोपादाम्रभटोऽवोचद्, वाचालस्येव ते वृथा । इयं वाक्छूरता शूर—शक्तिश्चेच्छस्त्र-माश्रय ? ॥ ५०६ ॥ यद्दीपः शलभे, हलं क्षितितले, दावानलः कानने, तिग्मांशुस्तिमिरे, मरुज्जलधरे, पर्शुश्च कारस्करे । कामायुर्भुजगे, हरिः करिवरे, ग्रीष्मर्तुरंभश्चये, वज्रं क्षोणिधरे, करोति तदहं कुर्वे वणिग्भूस्त्वयि ॥ ५०७ ॥ ( शार्दूल० ) उदित्वेति शरव्यूहं, मुंचत्याम्रभटे रुपा । प्रतिचिक्षेप तं बाणै—र्लीलया मल्लिकार्जुनः ॥ ५०८ ॥ यदृच्छया प्रसर्पंतः, खेतले भूतलेऽपि च । कंकपत्रास्तयोश्चक्रुः, पत्रितोचितमात्मनः ॥ ५०९ ॥ ध्रुवं युयुधिरे तद्वत्, तद्विमुक्ताः शरा अपि । परस्परेण यत् खंडी—कृतास्ते न्यपतन् रणे ॥ ५१० ॥ सांद्रयाऽप्यब्दवृष्ट्या श्रीः, शूरस्यैकस्य नश्यति । नष्टा

1 सोत्साहः, 2 शिलाखण्डम्. 3 निर्णयः, 4 शोभनः, 5 शूर', 6 प्रागल्भ्येन-उद्धतरेन-निःशंकत्वेन, 7 आश्चर्यान्वितः, 8 शेषनाग०, 9 जेतुमिच्छसि 10 शूरस्य-सिंहस्य शक्तिरिव शक्तिर्यस्य स शूरशक्तिः, 11 किंपाकवृक्षे, 12 गरुडः, 13 सिंहः 14 प्रतिचिक्षेपि, प्र, 15 शरव्यूहम्, 16 बाणाः, 17 पक्षितोचितम्.

तद्बाणवृष्ट्या सा, शूराणां भूयसामपि ॥ ५११ ॥ कृतहस्ततयोद्दाम—लघुहस्ततयाऽपि च । रिपुरास्रभटं मेने, द्रोणमेवापरं
रणे ॥ ५१२ ॥ स्वधानुष्कतया वीरं—मन्यानपि मुदं नयन् । वणिग्जातेस्तदा क्लैब्य—दोषमास्रभटोऽहरत् ॥ ५१३ ॥
शतशः स शरान् मुंचन्, कौंकणेशश्च खंडयन् । न मनागपि तौ श्रांतौ, वज्रसंहननाविव ॥ ५१४ ॥ शस्त्राणि
प्रतिशस्त्रैस्तै—रेवं चूर्णयतोस्तयोः । जन्यमत्यूर्जितं जज्ञे, देवदानवयोरिव ॥ ५१५ ॥ स्वकुंजरादथोत्प्लुत्य, वनौकां
इव पादपम् ( पात् ) । लीलयाऽऽस्रभटः शत्रु—द्विपमारुक्षदक्षतः ॥ ५१६ ॥ पूर्वं प्रहर मामिष्ट—दैवतं वा स्वराधुना ।
वणिक्सुतोऽपि त्वामेष, क्षात्रोत्तंसं निहन्मि रे ॥ ५१७ ॥ ब्रुवन्निति स खड्गेन, मस्तकं कौंकणेशितुः । निर्लूयापातयद्भूमौ,
दंडेन फलवत्तरोः ॥ ५१८ ॥ युग्मम् ॥ अहिते निर्हते तस्मिन्, व्यधुर्जयजयारवम् । हर्षेणास्रभटोत्तंसं, स्तुवाना इव
सैनिकाः ॥ ५१९ ॥ निर्नायकतया दीना, इव शत्रुचमूचराः । तमेवास्रभटं भेजु—स्तेषां ह्येतत्किलोचितम् ॥ ५२० ॥
मल्लिकार्जुनभूजाने—र्मूर्ध्ना सार्धं महर्द्धिकम् । कोशसर्वस्वमादाय, तामुद्दामां चमूमपि ॥ ५२१ ॥ श्रीचौलुक्यप्रभोराज्ञां,
तत्र देशे निवेश्य च । सहसाऽऽस्रभटस्तस्मात्, प्राप्तः स्वस्वामिसन्निधिम् ॥५२२॥ युग्मम् ॥ अनेकाऽमात्यसामंता—ध्यक्षं
चौलुक्यभूभुजः । मल्लिकार्जुनशीर्षांब्जे—नाभ्यर्च्य चरणद्वयम् ॥ ५२३ ॥ शाटीं शृंगारकोट्याख्यां, पटं माणिक्यनामकम् ।

---

१ कृतो—ऽभ्यस्तो हस्तो—बाणादिनिक्षेपलाघव [ शैघ्र्य ] रूपा शिक्षा येन स कृतहस्त.-कृतपुंख—सुशिक्षितशरमोक्षयोधादिस्तस्य भावस्तत्ता तया. तथा उद्दामश्च-उत्कटः लघुहस्तश्च-लघुः—क्षिप्रकारी हस्तो यस्य स लघुहस्तः-शीघ्रवेधी, तयोर्भावस्तत्ता तया च. २ द्रोणाचार्यम्, ३ स्वधनुर्धरतया. ४ सुचंदयन्, प्र. ५ युद्धम्, प्र. ६ वानर. ७ शत्रौ, ८ मारिते.

हारं पापक्षयं योग-सिद्धिं शुक्तिं विषापहाम् ॥५२४॥ हैमान् द्वात्रिंशतं कुंभान्, मनु(१४)भारान्[1] प्रमाणतः। पण्मूटकानि मुक्तानां, स्वर्णकोटीश्चतुर्दश ॥५२५॥ [2]विंशं शतं(१२०)सुपात्राणि, चतुर्दंतं च दंतिनम्। उपायनीचकाराम्र—[3]भटः कोशं निजद्विषः ॥ ५२६ ॥ चतुर्भिः कलापकम् ॥ वीक्ष्य तत्प्राभृतं तस्य, चौलुक्यो मनसाऽमृशत्। पार्श्वरत्नाकरानेक—लक्ष्मी-लुंटाकतामरौ ॥ ५२७ ॥ [4]स्फूर्तिमाम्रभटीयां तां, पश्यंतोऽ[5]पत्रपिष्णवः। अधो [6]विविक्षयेवाद्य—सामंता ददृशुः क्षितिम् ॥ ॥ ५२८ ॥ प्रीतस्तेनावदातेन[7], तदैवाम्रभटे प्रभुः। विद्विषो विरुदं "राज—पितामह" इति व्यधात् ॥ ५२९ ॥ [8]तेनैव विरुदेनोच्चैः, स्तूयमानः स मागधैः। दारिद्र्यं द्रावयन् कल्प—द्रुमवत्स्वं पदं[9] ययौ ॥ ५३० ॥ एवं विधाय वसुधाजयमा-त्मधाम्ना[10], जंबालवद्[11] रिपुकुलं सकलं विशोष्य। ग्रीष्मा[12]हिमांशुरिव मांसलितप्रतापो, राज्यं चकार सुचिरं स कुमारपालः ॥ ५३१ ॥ (वसंततिलका) चतुर्णां सर्गाणां मीलने ग्रंथाग्रम् २४०८

इति कृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरित्रे
महाकाव्ये दिग्विजयवर्णनो नाम चतुर्थः सर्गः ॥

---

१ विंशतितुलापरिमाणमेको भारो—ऽष्टसहस्रतोलकपरिमाणमेको भार॰ २ विंशतिरधिका यस्मिन् तद् विंशं, "शदन्तविंशतेश्च" ५। २। ४६ ॥ इति ड. ३ 'श्वेतं सेदुकनामानं, दत्त्वा नव्यं नवग्रह'मित्यन्यत्र. ४ पराक्रमम्. ५ स्वभावेन सत्रपा—लज्जाशीला. ६ वेष्टुं-प्रवेशं कर्तुमिच्छा विविक्षा तया विविक्षया. ७ शुद्धेन (चरितेन) ८ कोटिद्रव्यं सौवर्णकलशत्रयं चतुर्विंशतिजात्यतुरंगमाश्च (पारितोपिके दत्तवान् राजा) तेन च सौवर्णकलशत्रयं विहाय स्वगृहादर्वाक् सर्वं भट्टेभ्य प्रदत्तम्, [प्रबंधे.] ९ गृहम्. १० तेजसा-प्रभावेण. ११ पंकवत्. १२ ग्रीष्मसंबंधिसूर्य इव पुष्टप्रताप.

## ॥ अथ पंचमः सर्गः ॥

अथांगीकृतश्रृंगार—रंगद्द्युतिभरोऽभजत् । चौलुक्यः प्रातरास्थानीं, सुधर्मामिव वासवः ॥ १ ॥ पौरुषोन्नतमध्येऽस्त, तन्मध्ये हैममासनम् । सुवर्णाचलश्रृंगाग्रं, विहंगाधिपतिर्यथा ॥ २ ॥ शुशुभे नृपतेर्मूर्ध्नि, श्वेतमातपवारणम् । साक्षाद्बिंबमिव स्वोरु-यशोराशिसितद्युतेः ॥ ३ ॥ चामरद्वितयं तस्य, वीज्यतेऽस्माभितः सितम् । स्वकीर्त्तिजितसेवार्थ-प्राप्तगंगौघसन्निभम् ॥ ४ ॥ स्मेरयंतः स्वकोटीर—किरणैस्तत्पदांबुजम् । मंत्रिसामंतसेनानी—मुख्याः सेवाभृतोऽभवन् ॥ ५ ॥ कविव्यासादिभिर्माहा—राजिकै रपरैरपि । सा सभा शोभयामास, सरसीव सरोरुहैः ॥ ६ ॥ तदा श्रीसोमनाथीया, देवपत्तनवासिनः । अर्चकाः केचिदभ्येत्य, तं राजेंद्रं व्यजिज्ञपन् ॥ ७ ॥ प्रासादः सोमनाथस्य, जीर्णकाष्ठत्वतोऽधुना । पतन्नस्त्यब्धिकल्लोलैः, खातमूलस्तटद्रुवत् ॥ ८ ॥ भवात् स्वोद्धारवद्देव ! तदुद्धारः क्रियेत चेत् । तदा कोषे वसेत्पुण्यं, लोके कीर्त्तिश्च शाश्वती ॥ ९ ॥ तदुक्तमुररीकृत्य, प्रेष्य पंचकुलं निजम् । चैत्यमाश्मं नृपस्तत्र, सूत्रधारैरमंडयत् ॥ १० ॥ पृष्टवांश्च समीपस्थं, हेमाचार्यं महाग्रहात् । चैत्यमेतत्कथं शीघ्रं, भवेद्वांछितवन्मम ॥११॥ सूरिर्विमृश्य तं स्माह, किंचिदादीयतां व्रतम् । पुण्यर्द्धिर्वर्धते तेन, तथा चैतत् प्रसिध्यति ॥१२॥ यावन्निष्पद्यते तत्ते, तावद्ब्रह्मव्रतं भज । इदं चेद् दुर्धरं वेत्सि, तर्हि मांसं निषेधय ॥१३॥ न विना जीवघातेन, मांसं भवति कुत्रचित् । जीवघातस्तु न श्रेयां—स्तस्मान् मांसं परित्यजेत् ॥१४॥ सति

---

१ प्रसरत् . २ उपविष्टः . ३ गरुड., ४ गांगौघ', प्र. ५ महाराजस्य इमे. महाराजिकास्तैः. ६ कल्लोलो—त्खात०, प्र. ७ संसारात्, भवान्. प्र. ८ आत्मोद्धारवत्.

भोज्येऽद्भुतेऽन्यस्मिन्, मांसं कोऽश्नाति निष्णधीः। विषं समीहते को हि, पीयूषे सविधस्थिते[1] ॥१५॥ भारते शांतिपर्वादौ, श्रूयते मांसवर्जनात्। नभोगाद्यैर्नृपतिभि–र्द्यौरासाद्यत[2] भूरिभिः ॥ १६ ॥ महाभारतवर्त्तीनि, भीष्मप्रोक्तान्यनेकशः। मांसवर्जनवाक्यानि, वर्तंते देव ! तद्यथा ॥ १७ ॥ न भक्षयति यो मांसं, न हन्यान्न च घातयेत्। स मित्रं सर्वभूतानां, मनुः स्वायंभुवोऽब्रवीत्[3] ॥ १८ ॥ धनेन क्रायको हंति, ह्युपभोगेन खादकः। घातको वधबंधाभ्या–मित्येष त्रिविधो वधः ॥ ॥ १९ ॥ आहर्ता[4] चानुमंता च, विशस्ता[5] क्रयविक्रयी। संस्कर्ता चोपभोक्ता[6] च, खादकाः सर्व एव ते[7] ॥ २० ॥ हिरण्य[8]दानगोदान–भूमिरत्नादिदानतः। मांसस्याभक्षणे धर्मो, विशिष्टः स्यादिति श्रुतिः ॥ २१ ॥ चतुरो वार्षिकान्[9] मासान्, यो मांसं परिवर्जयेत्। चत्वारि भद्राण्याप्नोति[10], [11]कीर्तिमायुर्यशो[12] बलम् ॥२२॥ यथा मांसं तथा मद्यं, वैकल्याद्युग्रदूषणम्। ज्ञात्वा [13]ते वर्जयेत् प्राज्ञः, प्रेत्यः[14]श्रेयःसमीहया ॥ २३ ॥ तस्मात् स्वेप्सितसिद्ध्यर्थं, मद्यं मांसं च वर्जय। इत्युक्तो गुरुणा भूप–स्तदभिग्रहम[15]ग्रहीत् ॥ २४ ॥ नृपोऽसौ वीरकोटीरः, स्वर्णकोटीरनेकशः। कर्मस्थायेऽ[16]निशं प्रैपीत्, स्वारब्धे को हि नोद्यमी ? ॥ २५ ॥ *अब्दद्वयेन तच्चैत्य–निष्पत्त्या नंदितो नृपः। नियमं तं परित्यक्तुं, सूरींद्रमनुयुक्त[17]वान् ॥२६॥ स जगाद यद्प्यासी–च्चैत्यं पूर्णं तथापि ते। नियमः शिवयात्रा[18]यां, मोक्तुं युक्तस्तदग्रतः ॥ २७ ॥ तदंगीकृत्य चौलुक्यो,

१ समीपस्थिते. २ स्वर्गं. ३ स्वयंभुवोऽपत्यं पुमान् स्वायभुव –मनु. ४ आयोजकः. ५ हिंसाकारक. ६ उपभोगकारक. ७ विशस्ता-शब्दे शब्दकल्पद्रुमेऽयं श्लोकोऽस्ति. ८ हिरण्यं–सुवर्णम्. ९ वर्षासु भवा वार्षिकास्तान् यावत्. १० श्रेष्ठानि. ११ एकदिग्गामिनी–कीर्त्ति. १२ सर्वदिग्गामुकं–यशः. १३ मासमद्ये. १४ इष्टकल्याणेच्छया. १५ प्रतिज्ञाम्. १६ कर्म्मस्थाने इत्यर्थ, कर्म्मस्थायाऽ,प्र, तत्र कर्मणि तिष्ठतीति कर्मस्थ,–कार्यवाहकस्तस्मै, *वर्षद्वयेन. १७ पृष्टवान्. १८ कृताया सत्याम्. इतिशेष,

हेमाचार्ये समुत्थिते । सभायां तद्गुणग्रामं, तुष्टस्तुष्टाव भक्तवत् ॥ २८ ॥ तां निशम्य स्तुतिं सूरे—रसहिष्णुः पुरोहितः । जज्वालेवा[1]ऽऽशिखं युक्त—मेतत्खलजनस्य हि ॥ २९ ॥ ऊचे च देव ! त्वच्चित्तं, वशीकर्तुमयं शठः । त्वदिष्टं वक्ति धर्मे[2] ते, द्विष्टवश्चैव रज्यति ॥ ३० ॥ न यद्येवं तदैषोऽपि, श्रीसोमेशं नमस्यितुम् । देवेन सममायातु, परमुक्तोऽपि नेष्यति[3] ॥३१॥ तन्निवेश्य हृदि प्रात—र्हेमाचार्यं समागतम् । श्रीसोमनाथयात्रार्थं, प्रार्थयामास पार्थिवः ॥ ३२ ॥ तत्कथंचित् परिज्ञाय, दुरात्मत्वं पुरोधसः । चौलुक्यमार्हतीकर्तुं, कथयामास सूरिराट् ॥३३॥ बुभुक्षितोऽपि किं राजन् !, भोजनाय निमंत्र्यते? । महात्माऽपि किमत्यर्थं, यात्रार्थं क्वचिदर्थ्यते ? ॥ ३४ ॥ इदमेवास्ति मे कृत्यं, यत्तीर्थपरिशीलनम् । क्षणोऽपि व्यथते मां तद्[4], विना द्यूतैगतार्थवत्[5] ॥३५॥ सूरिराजे वदत्येवं, भूभृताऽभिमुखेक्षितः । मषीलिप्त इव श्यामाऽऽ—ननोऽजनि पुरोहितः ॥ ३६ ॥ भूभुग् जगाद यद्येवं, तद् गृहाण सुखासनम् । सूरिणोक्तं ममानेन, किं कार्यं ? पादचारिणः ॥३७॥ गृहस्थोऽपि विविक्तात्मा[6], विना यानेन गच्छति । तीर्थयात्रां यतिः किं तु[7], यः शश्वत्पादचारकः? ॥ ३८ ॥ आपृच्छ्य तदिदानीं त्वां, स्तोकस्तोकप्रयाणकृत् । नत्वा शत्रुंजयं तेऽहं, संगंस्ये देवपत्तने ॥ ३९ ॥ ततः पृष्ट्वा महीनाथं, हेमाचार्यस्तदैव सः । प्रतस्थे तीर्थयात्रार्थं, संतो ह्यवितथोक्तयः ॥ ४० ॥ स्वयं कुमारपालोऽपि, यात्रार्थं प्रस्थितस्तदा । विस्मापयन् जनं प्रौढ—संपत्त्या चक्रवर्त्तिवत् ॥ ४१ ॥ दिनैः कतिपयैर्देव—पत्तनं समुपेत्य तत् । बर्हीव वारिवाहस्य, सूरेरागममैहत[8] ॥ ४२ ॥ युग्मम् ॥

---

१ 'इव' अत्रोत्प्रेक्षायाम्. २ धर्मे ते, प्र. ३ इष् गतौ दिवादिः लृट्, नै, प्र. ४ तीर्थपरिशीलनं विना. ५ द्यूते नष्टधनवत्. ६ पवित्रात्मा–विवेकी. ७ किंपुनरित्यर्थं. ८ इच्छति स्म.

यावत्प्रतिष्ठते भूपः, सोमनाथनमश्चिकीः । तावत् सूरिः समागत्य, संजग्मे स्निग्धबंधुवत् ॥ ४३ ॥ दर्शने हेमसूरींदो—श्चौलुक्यानंदवारिधिः । उद्वेलतां यदादद्रे, तत्किं नौचित्यमंचति? ॥ ४४ ॥ स्मित्वोवाच नृपो वाचं, वाचंयमशिरोमणे ! । परिणेत्रेव वेलेयं, भवता साधु साधिता ॥ ४५ ॥ अतिप्रीत्या सहादाय, तमाचार्यं महीपतिः । सोमनाथं नमस्कर्तुं, महेन महताऽचलत् ॥ ४६ ॥ पारेवाग्वर्तिचारुत्वं, तच्चैत्यं स्वेन कारितम् । दृष्ट्वा विमानवद् भूमान्, हर्षेण न ममौ हृदि ॥ ४७॥ उन्मीलत्पुलकांकुर—पक्ष्मलीकृतविग्रहः । महेश्वरं नमश्चक्रे, चौलुक्यो विनयांचितः ॥ ४८ ॥ जैना जिनं विना नान्यं, नमंतीति जनोक्तिविद् । नृपोऽवोचत् प्रभो ! युक्तं, यदि तद् वंद्यतां शिवः ॥४९॥ राजन् ! वाच्यं किमत्रायं, श्रमः सर्वोऽपि तत्कृते । हेमसूरिर्निगद्येति, तारस्वरमदोऽवदत् ॥ ५० ॥ भवबीजांकुरजनना, रागाद्याः क्षयमुपागता यस्य । ब्रह्मा वा विष्णुर्वा, महेश्वरो वा नमस्तस्मै ॥५१॥ (आर्या) यत्र तत्र समये यथा तथा, योऽसि सोऽस्यभिधया यया तया । वीतदोषकलुषः स चेद्भवा—नेक एव भगवन्नमोऽस्तु ते ॥५२॥ (रथोद्धता) इत्यादिस्तुतिभिर्हेम—सूरिस्तं शंकरं स्तुवन् । श्रीवीतरागमेवाऽऽत्म—देवमस्तुत वस्तुतः ॥ ५३ ॥ विज्ञाय स्तुतिकुल्यां तां, परमात्माब्धिगामिनीम् । निर्विरोधतया सूरे—श्चमच्चक्रेऽवनीधवः ॥५४॥ ततो यात्रोचितं कृत्यं, सर्वमासूत्र्य भूपतिः । देवगर्भगृहं प्राप्तः, समं श्रीहेमसूरिणा ॥ ५५ ॥ जगाद च प्रभो ! देवो, महादेवसमोऽस्ति न । महर्षिर्न भवत्तुल्य—स्तत्त्वार्थी च न मादृशः ॥ ५६ ॥ तीर्थेऽस्मिन् रंगदुत्तुंग—प्राच्यपुण्यवशादसौ । त्रिवेणीसंगम इव, त्रिकयोगोऽद्य जातवान् ॥ ५७ ॥ मिथो विरुद्धसिद्धांत—भ्रान्तवाग्भरकर्करैः । तिरोऽधीयंत सद्धर्म—

१ वाच. पारं पारेवाक् पारेवाग् वर्तते इति पारेवाग्वर्ति पारेवाग्वर्ति चारुत्वं यस्य तत् २ विनययुक्त. ३ नदीम्. ४ उद्गच्छत्–प्रादुर्भवदित्यर्थ,

देवतत्त्वानि रत्नवत् ॥५८॥ तद् विमृश्योच्यतामस्मिं-स्तीर्थे निर्द्वेषभावतः । को धर्मो? दैवतं किं? च, मोक्षलक्ष्मीप्रसाधकम् ॥ ५९ ॥ यथैकतानतद्ध्यान—शस्तस्वस्तटिनीजलैः । प्रक्षालयेऽहमात्मानं, मलिनीभूतवस्त्रवत् ॥ ६० ॥ गुरौ त्वादृशि लब्धेऽपि, यदि तत्त्वस्य संशयः । उदितेऽपि तदा सूर्ये, वस्तुनोऽ[3]नवलोकनम् ॥ ६१ ॥ कथयित्वेति तूष्णीके, चौलुक्ये सूरिराट् ततः । ध्यात्वा हृदंतरे किंचि-दवोचदुचितं वचः ॥ ६२ ॥ अलं शास्त्रीयगोष्ठीभि-र्विरुद्धाभिः परस्परम् । अहं प्रत्यक्षयाम्येन—मेव देवं पुरस्तव ॥ ६३ ॥ धर्मो वा दैवतं वाऽपि, यदयं वक्ति शंकरः । तदुपास्तिस्त्वयाऽऽधेया, मृषा न खलु देवगीः ॥ ६४ ॥ अहं मंत्रं स्मरन्नस्मि, स्मरारिव्यक्तिहेतवे । उत्क्षेप्तव्यस्त्वया सारो, घनसारस्तदग्रतः ॥ ६५ ॥ चौलुक्यं शिक्षयित्वेत्थं, मंत्रस्नानं विधाय च । सूरिर्मेरुरिव स्थेयान्, मंत्रं ध्यातुं प्रचक्रमे ॥ ६६ ॥ अहो शिवोऽपि किं साक्षात्, स्यादिति स्मेरविस्मयः । गुरूपदिष्टमातन्वन्, नृपस्तस्य पुरः स्थितः ॥ ६७ ॥ क्षणोर्ध्वं चंडमार्तंड-बिंबलक्ष्मीविडंबकः । प्रादुरासीन्महांस्तेजो-राशिरीश्वरलिंगतः ॥६८॥ तन्मध्यादभवद् व्यक्तो, भास्वरश्रीर्महेश्वरः । गंगाजटाशशिकला-दृक्त्रयाद्युपलक्षितः ॥ ६९ ॥ ध्यानं मुक्त्वाऽवदत्सूरि-र्नृप ! पश्य पुरः शिवम् । एनं प्रसाद्य पृष्ट्वा च, सम्यक् तत्त्वं विदांकुरु ॥ ७० ॥ सद्यस्तद्दर्शनोद्भूत—प्रभूतप्रमदो नृपः । अष्टांगस्पृष्टभूपृष्ठ—स्तं नत्वा प्रांजलिर्जगौ ॥ ७१ ॥ सर्वदाऽपि दुरालोक-स्त्वमध्यात्मस्पृशामपि । किं पुनर्मादृशां चर्म-लोचनानां? जगत्पते ! ॥७२॥ परमस्य गुरोर्ध्याना-द[12]ध्वन्योऽसि

१ गंगाजलैः. २ प्रक्षालयामि स्वात्मानम्, प्र. ३ न विलोकनम्, प्र. ४ कर्तव्या. ५ शंकरप्रकटनाय. ६ श्रेष्ठ . ७ कर्पूरः (धूप.). ८ अतिस्थिरः. ९ विकसिताश्चर्यः, १० अनुसर्ता–तिरस्कारकर्ता वा. ११ शिव., प्र. १२ अध्वानमलं गच्छतीत्यध्वन्यः–पथिकः–नेत्रविषयं गतोऽसीत्यर्थः.

दृशोर्मम । सिद्धांजनस्य साहाय्या—दिव लोकोत्तरो निधिः ॥ ७३ ॥ दरिद्र इव कल्पद्रुं, तृषातुर इवामृतम् । दिष्ट्या दृष्ट्याऽद्य दृष्ट्वा त्वा—मात्माऽयं नृत्यतीव मे ॥ ७४ ॥ उक्त्वेति गूर्जरेशेन, पृष्टः प्रष्टव्यमीश्वरः । उवाच ध्वनिना चैत्य-मध्यं निर्ध्वानयन्निव ॥ ७५ ॥ त्वं धन्यस्त्वं विवेकज्ञ—श्चौलुक्यनृप ! संप्रति । यस्येदृग्धर्मजिज्ञासा, मुमुक्षोरिव वल्गति ॥ ७६ ॥ नो चेद् राज्यं समासाद्य, माद्यंति प्रायशो नृपाः । स्ववैरिण इव प्राप्त—मपि धर्मं न कुर्वते ॥ ७७ ॥ नाचरंति सदाचारं, न शृण्वंति हितं वचः । न पश्यंति पुरः पूज्यं, क्षीबा इव महीधवाः ॥ ७८ ॥ सुप्ता इव गरग्रस्ता, इवाचार-च्युता इव । शृण्वंत्यपि नृपा नैव, धर्मं कुर्वंति तत्कुतः ? ॥ ७९ ॥ अवश्यं यस्य भद्रौघ—भव्यो भावी महोदयः । स एव सेवते धर्मं, धनार्थी श्रीपतिं यथा ॥८०॥ भुक्तिमुक्तिप्रदं धर्मं, निर्मायं चेत् त्वमिच्छसि ? । सेवस्वैनं ततः सूरिं, परब्रह्मेव मूर्तिमत् ॥ ८१ ॥ सर्वदेवावतारोऽय—मजिह्मब्रह्ममंदिरम् । आबाल्यादपि चारित्र—पात्रं वाङ्मयपारदृक् ॥ ८२ ॥ करा-मलकवत् सम्यग्, ज्ञानज्ञातमनःस्थितिः । ऋषिर्ब्रह्मेवं तत्त्वज्ञो, जयति क्ष्मातलेऽधुना ॥ ८३ ॥ युग्मम् । नृप ! त्वमेतदा-दिष्टं, तन्वन् स्वेष्टमवाप्स्यसि । इत्यादिश्य तिरोऽधत्त, धूर्जटिः स्वप्नदृष्टवत् ॥ ८४ ॥ विस्मेरः सूरिमूचेऽथ, चौलुक्यो भगवन् ! ध्रुवम् । त्वमेवासीश्वरो यस्य, वश्यः सोऽपि महेश्वरः ॥८५॥ पंचेलिमानि पुण्यानि, मयैव प्राग् वितेनिरे । त्वादृ-शस्तत्त्वदर्शी मे, यस्य जागर्त्ययं गुरुः ॥ ८६ ॥ अतः प्रभृति मे देवो, गुरुस्तातः सवित्र्यपि । सहोदरो वयस्यश्च, त्वमे-

१ लोक उत्तम . २ भाग्येन. ३ 'इव' उत्प्रेक्षायाम्. ४ प्रतिध्वनियुक्तं कुर्वन्. ५ आत्मवैरिण . ६ मत्ता'. * भद्राणामोघस्तेन भव्य -श्रेष्ठः, ७ परब्रह्मेव प्र. ८ निष्कपटब्रह्मचारी ९ ज्ञानेन ज्ञाता मन स्थिति [अन्येषा] येन स'. १० ब्रह्मेव, प्र ११ स्वयंपक्वानि-पक्वशीलानि वा. १२ माता.

वैकोऽसि नापरः ॥ ८७ ॥ इहलोकः पुराऽदायि, मह्यं जीवितदानतः । शुद्धधर्मोपदेशेन, परलोकोऽद्य दीयताम् ॥ ८८ ॥ गुरुर्जगाद यद्येवं, तर्हि संप्रति पापवत् । मुंच मांसाद्यभक्ष्यं त्वं, धर्मं संबोधये ततः ॥ ८९ ॥ आमे (मि) त्युदीर्य चौलुक्य-स्तदैव मुदिताशयः । पुण्याऽहमिव[1] पुण्यासे—रभक्ष्यनियमं व्यधात् ॥ ९० ॥ प्रस्थाय नृपतिस्तस्मा—द्धेमाचार्यसमन्वितः । पताकापीतगगनं, पत्तनं समुपेयिवान् ॥ ९१ ॥ ततः सोमेश्वरीं वाणीं, स्मरन् सूक्तिमिवानिशम्[2] । सूरेस्तस्य पदांभोजं, भजति स्म स हंसवत् ॥ ९२ ॥ कर्हिंचिद्वसतिं गत्वा, सदस्याकार्यं कर्हिंचित् । सूरिवक्त्रांबुजाद्धर्म—रसं सोऽपाद् द्विरेफ[3]-वत् ॥ ९३ ॥ सूरेः पीयूषदेशीय—देशनारसपानतः । नश्यति स्म शनैस्तस्य, मिथ्यात्वं विषवेगवत् ॥ ९४ ॥ क्रमाच्चौलु-क्यभूपालः, स्वधर्मं रचयन्नपि । *नवश्रावकवत् किंचि-ज्जैने धर्मे दधौ मनः ॥ ९५ ॥ इतश्चाभूद् भृगुक्षेत्रे, पिनाकीव[4] महा[5]-व्रती । भगवान्[6] संज्ञया देव-बोधिः शोषितमानसः ॥ ९६ ॥ स स्नातुं पर्वणि क्वाऽपि, जगाम त्रिदशापगाम्[7] । कलावान् भगवांस्तत्र, दीपकोऽपि तदाऽऽगमत् ॥ ९७ ॥ दीपकः कथयामास, तीर्थे तारतरस्वरः । सारस्वतं सुवर्णं च, मत्तो गृह्णीत भो जनाः ! ॥ ९८ ॥ स्वर्णमाकर्ण्य[8] तत्तूर्णं, जना जगृहिरे घनाः । सारस्वतं तु नैकोऽपि, विश्वं हि कमलास्पृहम् ॥ ९९ ॥ मन्ये वर्णमयी वाणी, श्रीः सुवर्णमयी ततः । वर्णहीनां विहायैवाऽऽ—दत्ते वर्णाधिकां जनः ॥ १०० ॥ अथायुरंतं विज्ञाय, मुमुक्षुर्मानुषीं तनुम् । दीपको ध्यातवान् कस्मै, कलाद्वयमिदं ददे ॥ १०१ ॥ सारः सारस्वतो मंत्रः, स्वर्णसिद्धिश्च निश्चला । पात्राभावान्मया सार्धं, नूनमेतौ प्रयास्यतः ॥१०२॥ विज्ञाय देवबोधिस्तद्[9], दीपकं पर्युपास्य च । सारवत् सविधिं सार—

---

१ पुण्यदिनमिव. २ सुन्दरवचनमिव. ३ भ्रमरवत्. * नवीन०, ४ शंकर इव. ५ सातिशयव्रती. ६ सन्यासी. ७ गंगाम्. ८ वचनम्. ९ वृत्तान्तम्.

स्वतमंत्रं ततो ललौ ॥ १०३ ॥ देवबोधिस्ततः प्राप्य, भृगुकच्छमतुच्छधीः । प्रविश्य नर्मदानीरे, मंत्रं ध्यातुं प्रचक्रमे
॥ १०४ ॥ एकतानमनस्त्वेन, स ध्यायन् वागधीश्वरीम् । स्थिरः स्थाणुरिवाज्ञासी–न्न किंचित् क्षुत्तृषादिकम् ॥ १०५ ॥
लक्षजापेऽपि वाग्देवी—मप्रसन्नां विलोकयन् । भूयो भूयोऽभियोगेन, पंचलक्षीं स जप्तवान् ॥ १०६ ॥ तथापि देव्यतोषेण,
देवबोधिरतिक्रुधा । पुष्पमालामिवाक्षैप्सी–दक्षमालां नभस्तले ॥ १०७ ॥ स्तंभितामिव तां व्योम्नि, तारामालामिव स्थिराम् ।
दृष्ट्वाऽतिविस्मयाविष्टो, भगवान् ध्यातवानदः ॥ १०८ ॥ मंत्रः सारस्वतोऽयं चे–दसत्यः स्यात्तदा कथम् ? । पक्षिणीवाक्ष-
मालेयं, निरालंबाऽम्बरे स्फुरेत् ॥ १०९ ॥ परं ममैव दुर्दैवं[3], यदयं न फलेद्ग्रहैः । अमुष्मिन् प्रतिकूले हि, सकलं निष्फलं
यतः ॥ ११० ॥ वागुवाच ततो दिव्या , किं ध्यायसि? महाशय ! । पश्चात्पश्य यथा वेत्सि, मंत्रासिद्धिनिबंधनम् ? ॥ १११ ॥
ततः संतमसश्याम–वक्रविग्रहचीवराः । पिशाचीरिव रौद्रीः षट्, स्त्रीः स्वपृष्ठे स दृष्टवान् ॥ ११२ ॥ दध्यौ च किमिमाः
प्राच्यो, मूर्त्ता मे पापसंपदः । अथ दुर्ध्यानधोरण्यो, राक्षस्यो वाऽत्तुमागताः ॥ ११३ ॥ दिव्यभाणीत् पुनर्वाणी, देवबोधे !
त्वया पुरा । चक्रिरे षडिमा जीव–हत्याः पापविपाकिमाः ॥ ११४ ॥ स्थितासु तासु कार्त्स्न्येन, त्वदात्मनि तमीस्विव ।
कथं वागीश्वरीमंत्र–प्रसादार्कः प्रकाशताम् ? ॥ ११५ ॥ एकैकलक्षजापेन, पृथग्भूतास्तवाऽऽत्मनः । पृष्ठे षड्जीवहत्यास्ताः,
स्त्रीरूपेणावतस्थिरे ॥ ११६ ॥ कुपितेन त्वया क्षिप्ता—ऽक्षमालेयं मयाऽम्बरे । स्तंभिता स्वप्रभावेण, त्वत्प्रत्यायनकाम्यया

* देवबोधितः. १ उद्योगेन–आग्रहेण. २ अक्षाणां–रुद्राक्षाणा माला ता–जपमालामित्यर्थः. ३ दुर्भाग्यम्. ४ मंत्र.. ५ सफल॰. ६ भाग्ये. ७ परंपरा॰–श्रेणयः.
८ आकाशे. ९ वाग्देवी. १० पूर्वभवकृतपापविपाकेन निर्वृत्ता . ११ रात्रीषु. १२ सूर्य॰.

॥ ११७ ॥ अतःपरमिमं मंत्रं, स्वल्पं जप यथा तव । वाणी प्रसीदतीत्युक्त्वा, देवी वाग्विरराम सा ॥ ११८ ॥ करे कृत्वा
ऽक्षमालां तां, देवबोधिः सुधीः पुनः । तं मंत्रं ध्यातुमारेभे, निःसंदेहः समीहिते ॥ ११९ ॥ ततः पर्वेंदुगर्वैक—दस्युदेह-
द्युतिच्छलात् । प्रत्यक्षं जनयंतीव, शब्दब्रह्ममयं[2] महः ॥ १२० ॥ वर्षतीव प्रसादार्द्र—दृग्भ्यां प्रीतिसुधारसम् । प्रादुरासी-
त्पुरस्तस्य, देवबोधेः सरस्वती ॥ १२१ ॥ युग्मम् । कलानां विद्यानामपि सरभसानामुपकृता—'वपाराणां वारां जलनिधि-
रिव' त्वं पदमसि । श्रुताधीशे ! स्तोत्रं तव कियदिदं यत्[3] त्रिभुवने, श्रवःप्रत्यक्षं[4] यत्तदखिलमपि त्वत्परिणतिः[5]॥१२२॥(शिख०)
विरज्य त्वय्युच्चैरिह महिममात्रप्रणयिनीं, पशुप्रायो लोकः कलयतु रमां[6] ब्रह्मतनये ! । परं सर्वो विद्वांस्त्रिदिवशिवशर्मैकज-
ननीं, विहाय त्वामेकां वहति न परं किंचन हृदि ॥१२३॥ (शिख०) उपश्लोक्येति[7] वाग्देवीं, देवबोधिरयाचत । मातर्मह्यं विती-
र्यतां, भारतीभुक्तिमुक्तयः ॥ १२४ ॥ कल्पद्रुममहिम्नेव, मद्वरेण त्वदीप्सितम् । सिध्यत्विति तमादिश्य, तिरोऽधाद् वाग-
धीश्वरी ॥ १२५ ॥ देवीप्रसादतः सोऽभूत्, सद्यस्त्रैविद्यशेखरः[8] । किं दोहदवशान्न स्या—दकालेऽपि द्रुमः फली[9] ? ॥ १२६ ॥
अन्या अपि कला धन्या—स्त्रिजगत्प्रमदप्रदाः । देवबोधिरुरीचक्रे, सितपक्षशीतांशुवत् ॥ १२७ ॥ स देवबोधिरश्रौपीत्,
तदा जनमुखांबुजात् । हेमाचार्येण यच्चक्रे, चौलुक्यो जिनवर्त्मनि[10] ॥ १२८ ॥ ध्यातवांश्च कलोदग्रे, गुरौ जाग्रति मादृशे ।
भ्रांतवत् किमयं भूपः, स्वकुलक्रममुज्झति[11] ॥ १२९ ॥ फलाकुलास्तदैवैताः, सकला मत्कलालताः । भूयोऽपि वैष्णवे धर्मे,

१ वाग्देवी. २ शब्दज्ञानमयम् ३ यस्मात्. ४ कर्ण०. ५ त्वदवस्थान्तरप्राप्तिः. ६ लक्ष्मीम्. ७ स्तुत्वा. ८ तिस्रो विद्या –ऋग्यजुःसामरूपाः समाहृतास्त्रिविद्यम्– तदधीते वेद वा त्रैविद्य –वेदत्रयाभिज्ञ.. ९ (स्वस्य वृक्षस्य) दोहदवशात्–स्त्रीपादस्पर्शादितोऽकालेऽपि फलवान् भवति. १० निजवर्त्मनि–प्र. ११ स्वकुलसंबंधिधर्मक्रमं

यदैव स्थापयाम्यमुम् ॥ १३० ॥ ततोऽहंकारकीलेन, कीलिताऽऽत्मेव तत्क्षणम् । देवबोधिः समायासी-च्चौलुक्यनृपपत्तनम् ॥ १३१ ॥ स तस्मिन्निंद्रजालीव, नानाकौतुकदर्शनात् । संमोहयितुमारेभे, नागरान् गुणसागरान् ॥ १३२ ॥ विद्यां वश्यादिकां तां तां, देवबोधिः प्रकाशयन् । सिद्धवद् विस्मयस्मेरैः, पौरैः शश्वदुपास्यत ॥ १३३ ॥ निष्कलोऽपि व्रती मान्यः, कलावांस्तु विशेषतः । स्वभावतः प्रियं हेम, किं वाच्यं रत्नरोचितम्? ॥ १३४ ॥ कलावतां प्रसंगेन, देवबोधिं स्तुवन्नथ । निस्सीमं तत्कलावत्त्वं, चौलुक्याय जनो जगौ ॥ १३५ ॥ 'बर्हीव वारिदं' देव-बोधिं द्रष्टुं समुत्सुकः । गुर्जरेशो निजानाप्तां-स्तमाह्वातुं प्रैजिघिवान् (प्रजिघ्यिवान्) ॥१३६॥ नलिनीनालदंडाढ्यं, रंभापत्रमयाऽऽसनम् । आमतंतुभिरानद्धं, बाष्पच्छेद्यैरिवाणुभिः ॥१३७॥ शिशूनामष्टवर्षाणां, स्कंधन्यस्तं सुखासनम् । अध्यास्य प्रस्थितः प्रात-र्देवबोधिर्नृपालयम् ॥१३८॥ युग्मम् ॥ तत्तादृगद्भुतालोक-विकसन्नयनांबुजाः । आकृष्टा इव मंत्रेण, पौरास्तं परिवव्रिरे ॥ १३९ ॥ तथैव स वृतः पौरैः, स्वामीव निजसेवकैः । विस्मापयन् सभालोकं, चौलुक्यास्पदमासदत् ॥ १४० ॥ निभाल्य तं तथा भूपो—ऽध्यासीत् क्वायं पिचंडिलः । क्वेदं सुखासनं रांभ-मस्य काऽपि कलाऽद्भुता ॥ १४१ ॥ सुखासनादथोत्तीर्णः, सुवर्णासनमाश्रितः । देवबोधिर्नृपं नम्र-माशास्ते स्मेति निस्तुषम् ॥ १४२ ॥ निष्कामोऽपि महाव्रती प्रमथितानंगोऽपि देहेऽङ्गनां, बिभ्रत् प्रेतवने वसन्नपि शुचिर्भीमोऽपि शांतात्मकः । पार्श्वस्थैकवृषोऽपि वाजिगंजताद्युद्दामलक्ष्मीप्रदो, दुर्लक्षोरुचरित्रभृद् भवतु ते श्रीशंकरः

१ पत्तने. २ आश्चर्यविकसितैः. ३ रत्नैः प्रकाशितम्. ॐ प्रजिघिवान्, प्र. प्रजिघ्यिवान्, प्र. ४ हि-गतौ वृद्धौ चेति स्वादिधातो. क्वसुः. ५ चौलुक्यसभाम् ६ तुन्दिलः-बृहत्कुक्षिः. ७ कदलिमयम्. ८ अनिर्वचनीया. ९ शान्त आत्मा यस्य स. १० वाजिगजाना समूह. वाजिगजता.

शंकरः[*]॥१४३॥ (शार्दू०) शंके पंकेरुहमिति[1] परित्यज्य पद्मं स्वसद्म, श्रीस्त्वत्पाणौ सुरगुरुबुधाद्यर्चनोच्चैःपवित्रे। शश्वद्वासं कलयति महीपाल! चौलुक्य! नो चेद्, दत्तेऽत्यर्थं कथमयमिति[2] प्रार्थकेभ्योऽर्थमिष्टम्॥ १४४॥ (मंदा०) ततस्तत्तत्कलाढ्याभि—र्गोष्ठीभिः[3] सूक्तसूक्तिभिः[4]। स चिरं रंजयांचक्रे, भूधवो देवबोधिना॥ १४५॥ याममात्रे दिने याते, भगवान् नृपमूचिवान्। द्रक्ष्यतेऽद्य मया देव!, देवताऽवसरस्तव॥१४६॥ तदंगीकृत्य भूपालः, स्नात्वाऽऽत्तशुचिचीवरः। देवबोधिं सहादाय, देवताऽगारमागमत्॥ १४७॥ निवेश्य कांचने पट्टे, शंकरप्रमुखान् सुरान्। विधिवत् पूजयामास, स रावण इव स्थिरः॥ १४८॥ देवबोधिरथावादीद्, देव! त्वं केन हेतुना। एतान् क्रमागतान् देवान्, भूर्भुवःस्वस्त्रयीश्वरान्॥ १४९॥ स्वर्गापवर्गदं श्रौतं[5], धर्मं चातिप्रियंकरम्। विहाय हा जिनोपज्ञ[6]—मज्ञवद् भजसे मतम्?॥ १५०॥ युग्मम्॥ अवेदस्मृतिमूलत्वा—ज्जिनधर्मो न सत्तमः[7]। अत एव न तत्त्वज्ञैः, सूरिभिः सोऽयमीष्यते॥ १५१॥ अयं मुक्तिपुरस्य स्या—ज्जैनोऽध्वा सरलो यदि। संचरेरन् पथाऽन्येन, तदा त्वत्पूर्वजाः कथम्?॥१५२॥ तस्मात् त्वमात्मनीनं चेद्, यथाकामं समीहसे?। मा स्म हासीस्तदा पूर्व—धर्ममेनं निरेनसम्[8]॥ १५३॥ अथाऽऽचष्टे स्म चौलुक्यः, श्रौतो धर्मोऽस्त्ययं महान्। परं हिंसामयत्वेन, न प्रत्येति[9] मनो मम॥ १५४॥ वाचः षड्दर्शनानां च, सुदुर्धरविरोधतः। सपत्न्य इव न क्वाऽपि, संगच्छंते परस्परम्॥१५५॥ देवबोधिः पुनः प्रोचे, यद्येवं तर्हि दर्शये। तुभ्यं देवान् विधात्रादीन्, पूर्वजानपि पृच्छ तान्॥ १५६॥ उक्त्वेति मंत्र-

* शं-सुखं कर्ता, १ पंके जातम्, 'इति हेतो' देवगुरुपंडितादिपूजनेन. २ तव हस्त'. ३ वार्ताभिः. ४ सुष्ठु कथितकथनयुक्ताभिः. ५ श्रुतिविहितम्-वेदोदितम्. ६ जिनकथितम् ७ उत्तम.. ८ निर्दोषम्. ९ न विश्वसिति.

सामर्थ्यात्, स तदैव तदग्रतः । आकृष्टवान् समस्तांस्तान्, पूर्वसंकेतितानिव ॥ १५७ ॥ ब्रह्मविष्णुहरान् मूलं-राजादीन् पूर्वजानपि । दृष्ट्वा पुरः स्फुरद्रूपान्, राजाऽऽश्चर्यमयोऽनमत् ॥ १५८ ॥ किरन्निव सुधापूरं, वेदोद्गारेण कर्णयोः । अजिह्मब्रह्मभूर्वेधा, द्वेधाऽपि चतुराननः ॥१५९॥ अंतःस्थश्रीमुखोद्द्योत-मिव स कौस्तुभं हृदि । वहन् शंखादिसंरुद्ध-चतुष्पाणिर्जनार्दनः ॥ १६० ॥ त्रिविष्टपीं स्फुटं द्रष्टु-मिव त्रिनयनीं श्रयन् । शूलपाणिर्जटाधारी, भालबालशशी शिवः ॥ १६१ ॥ एते त्रयोऽपि संभूय, देहोद्दामद्युतिच्छलात् । दर्शयंत इव ज्योति-ष्परं चौलुक्यमूचिरे ॥ १६२ ॥ चतुर्भिः कलापकम् ॥ विदांकुरु नरेंद्रास्मान्, ब्रह्मविष्णुमहेश्वरान् । त्रयाणां जगतां सृष्टि-स्थितिसंहारकारकान् ॥ १६३ ॥ वयमेव स्वभक्तेभ्यः, कृतकर्मानुमानतः । भवं शिवं च संचिंत्य, दद्महे छद्मवर्जिताः ॥ १६४ ॥ उपास्यास्मदुपज्ञं च, श्रौतं धर्मं सुनिर्मलम् । स्वर्गापवर्गनिस्सीम-श्रियमा(म)शिश्रियन्न के? ॥१६५॥ तन्निरस्य चिरं स्य त्वं, भ्रांतिमस्मान् सुरोत्तमान् । धर्मं च वैदिकं शुद्ध्या(द्धं), समाराधय मुक्तये ॥ १६६ ॥ अस्मत्प्रतिकृतिश्चैष, देवबोधिर्यतीश्वरः । एतदुक्तमुरीकृत्य, कृत्यं स्वं सर्वमाचर ॥ १६७ ॥ अथैनं प्रोचिरे पूर्वे, वत्स ! त्वत्पितरो वयम् । सप्ताऽपि मूलराजाद्याः, पश्य त्वां प्रत्युपागताः

१ मूलराज ( १ ) चामुंडराज ( २ ) वल्लभराज ( ३ ) दुर्लभराज ( ४ ) भीमदेव ( ५ ) कर्णदेव ( ६ ) सिद्धराजेति सप्त (७). २ कीदृशेन स्वरूपेण प्रकटीभूता' इत्याह किरन्नित्यादि. ३ निष्कपटज्ञानोत्पत्तिस्थानम्. ४ शरीरेण, ज्ञानेन च वेदापेक्षया. ५ अन्तःस्था नारी श्रीश्च तस्या मुखं तस्य उद्द्योतः-प्रकाशः तमिव-मध्यस्थलक्ष्मीमुखप्रकाशमिवेत्यर्थः. ६ 'कौस्तुभस्तु महातेजा, कोटिसूर्यसमप्रभ.' । इत्युपलक्षणं ( विष्णोर्वक्षःस्थं ) मणिम्. * उत्पादध्रुवनाशकर्तॄन्. ७ अनुसारत.. ८ तस्मात्. ९ दीर्घकालं यावत्. १० अस्मत्प्रतिबिंबम्. ११ स्वकीयम्. १२ पूर्वजा.

॥ १६८ ॥ त्वयाऽसौ पूर्वजक्षुण्णः, पंथाः कस्माद्विमुच्यते । रथानामिव तत्त्यागो, नृणां भंगाय निश्चितम् ॥ १६९ ॥
इमान् देवानिदंप्रोक्तं, मार्गं चाश्रित्य भावतः । इमां त्रैविष्टपीं लक्ष्मीं, निर्विशामोऽनिशं वयम् ॥ १७० ॥ यथा वयं स्वपू-
र्वेषां, नातिचक्रमि म क्रमम् । तथा त्वमपि वत्सैतं, माऽतिक्रामस्व सत्यवत् ॥ १७१ ॥ ततस्तेषु प्रयातेषु, भूपो
मग्नोऽद्भुताऽम्बुधौ । सोमेशोक्तं तदुक्तं च, स्मरन् जड इवाजनि ॥१७२॥ कुर्वे त्वदुक्तमित्युक्त्वा, देवबोधिं विसृज्य तम् ।
चौलुक्यश्चक्रवर्तीव, बुभुजेऽशनमद्भुतम् ॥ १७३ ॥ गत्वाऽथ वाग्भटामात्यो, हेमाचार्याय तत्क्षणम् । देवबोधिकृतं तत्त-
न्निगद्येति व्यजिज्ञपत् ॥ १७४ ॥ भगवन् ! भगवानेष, कोऽपि लोकोत्तरः पुमान् । येनाचकृषिरे मंत्रैः, संयम्येव शिवा-
दयः ॥ १७५ ॥ अदसीयः प्रभावोऽय—मयस्कांत इवायसम् । आचकर्ष प्रकर्षेण, नृपचित्तमसंशयम् ॥ १७६ ॥ तस्मा-
त्तथा विधातव्यं, प्रभुणा भूपतिर्यथा । स्वधर्मे भवति स्थेयान्, नीलीराग इवांशुके ॥ १७७ ॥ आचार्यस्तं जगौ कार्या,
त्वया चिंता न काचन । परं कथंचिदानेयो, व्याख्यायां क्ष्मापतिः प्रगे ॥ १७८ ॥ प्रभोर्विभाव्य तां प्रौढिं, गाढं हृपित-
हृत् ततः । सायंतनक्षणे राज—समाजं भजते स सः ॥ १७९ ॥ जगाद गुर्ज्जरेंद्रस्तं, देवबोधेर्महात्मनः । सामर्थ्यमीश्वर-
स्येव, मंत्रिन् ! दृष्टं त्वया ? वद ॥ १८० ॥ मंत्री विज्ञपयामास, स्वामिन्नस्य वदामि किम् ? । शिष्या इव वितन्वंति, यदा-
देशं सुरासुराः ॥ १८१ ॥ विधोः कलामयस्यापि, षोडशैव कलाः किल । भूयस्यः संति तास्त्वस्य, रंजितत्रिजगज्जनाः
॥ १८२ ॥ वाग्भटं पृष्टवान् भूभृत्, कलाकौशलमीदृशम् । हेमाचार्ये निजगुरौ, किं जागर्ति न वा ? वद ॥ १८३ ॥

१ एभिः प्रोक्त.— इदं प्रोक्तत्वम्. २ भुंजामहे. ३ उल्लंघनं न चक्रम. ४ अमुष्यायमित्यदसीयः. ५ आयसं—लोहजं वस्तु. ६ सामर्थ्यम्. ७ दिनान्तसमये.

स्वामिस्त्वांते निजगुरा—वित्युक्त्याऽपि महादरम् । हेमसूरौ परिज्ञाय, हृष्टोऽभाषिष्ट धीसखः ॥ १८४ ॥ प्रायः संभाव्यते
सर्वं, सूरावस्मिन् कलादिकम् । रत्नाकरे हि रत्नस्य, न स्यादस्तित्वसंशयः ॥ १८५ ॥ प्रातः प्रक्ष्यामि तं गत्वे—त्युक्त्वा
राज्ञ् विससर्ज तम् । सोऽपि तत् सूरये सर्वं, निवेद्य स्वपदं ययौ ॥ १८६ ॥ प्रभातेऽथ प्रभुः प्रोचे, शिष्यं व्याख्याक्षणे
सति । भूपाद्यध्यक्षमाकृष्यं, त्वया मामकमासनम् ॥ १८७ ॥ अध्यास्य भित्तितो दूरे, सप्तगस्तिकमासनम् । अध्यात्मवि-
धया रुद्धाऽऽ-न्तरान् पंचापि मारुतान् ॥ १८८ ॥ उच्छ्वस्य चासनात्किंचिद्, भूपादौ मिलिते जने । प्रभुर्व्याख्यातुमारेभे,
सुधानिःस्यंदसुंदरम् ॥ १८९ ॥ युग्मम् ॥ सूरीयां देशनां शृण्वन्, परमार्थसमर्थिनीम् । सभाजनः परब्रह्माऽऽ—स्वाद-
मासेदिवानिव ॥ १९० ॥ सूरिवाक्यसुधासेकाद्, युक्तं क्षेत्रे[3] सभासदाम् । पुलकच्छद्मतः प्रादु—र्भूताः पुण्यांकुरोत्कराः
॥ १९१ ॥ दत्तशिक्षस्तदा शिष्यः, समुत्थाय सभास्थितैः । दृश्यमानो ग्रहिलवत्, प्रभोरासनमाकृषत् ॥ १९२ ॥ आकृ-
ष्टेऽप्यासने तिष्ठन्, निराधारः सुपर्ववत् । अस्खलद्वचनत्वेन, तथैव व्याकृत प्रभुः ॥ १९३ ॥ तं तथाऽऽलोक्य चौलुक्य-
मुख्यो लोकोऽतिविस्मयात् । चित्रन्यस्त इव स्थित्वा, क्षणं चेतस्यचिंतयत् ॥ १९४ ॥ देवबोधिः पुरा दृष्टो, यः कलाके-
लिमंदिरम् । रांभं सुखासनं तस्या-प्यासीदाधारकारणम् ॥ १९५ ॥ किंच मौनेन तस्य स्युः, सुजयाः कायवायवः ।
व्याख्यां वितन्वतस्त्वस्य, स्थितिरेपाऽतिकौतुकम् ॥ १९६ ॥ किं सिद्धः किमयं बुद्धः, किं विरंचिः किमीश्वरः । अन्यथा

१ राप्तगद्दिकम्-प्र. सप्तगव्दकम्-प्र. *हृदि प्राणो, ( १ ) गुदेऽपानः (२) समानो नाभिसस्थितः (३) । उदान. कंठदेशे स्याद् (४), व्यानः सर्वशरीरग. (५).
२ प्राप्त इव सजात इत्यर्थः ३ शरीरे. ४ देववत्. ५ वि आ अकृत व्याकृत-लुङ् व्याख्यां कृतवान्. ६ चौलुक्यप्रभृतिः. ७ देवबोधे..

कथमेतादृक्, शक्तिरस्य व्यवस्यति[1] ॥ १९७ ॥ निरालंबस्थितिकला,[3] गुरावास्ते न वेति नः[2] । संदेहं छेत्तुमेवैता—मसौ दर्शयति स्वयम् ॥ १९८ ॥ चकासतीह[4] सूरींदौ, कला एव न केवलम् । सर्वज्ञत्वमपि व्यक्तं, परचित्तावधारणात् ॥१९९॥ तदा तथैव सूरींदु—र्वर्षन्निव सुधाभरम् । सार्धं यामं विधत्ते स, व्याख्यां रसतरंगिणीम्[5] ॥ २०० ॥ अथासनं तमध्यास्य,[6] गुर्जरेशोऽवदत् पुरः । स्मितपूरच्छलात्[7]पुष्प—प्रकरं विकिरन्निव ॥ २०१ ॥ कलावानपरस्तावत्, कलाशालींदुवत् प्रभो ! । भवान् प्रद्योतनो[8] याव—द्विद्योद्योतेन न स्फुरेत् ॥२०२॥ कलावतां कलाः सर्वा—स्त्वत्कलाभिस्तिरोहिताः । सरसां स्फातयो[9]ऽम्भोधि—लहरीभिरिव ध्रुवम् ॥ २०३ ॥ ततः सूरिर्महीपं तं, निन्येऽपवरकांतरे । देवताऽवसरं देव !, मम पश्येत्यु-दीरयन् ॥ २०४ ॥ स तत्र मंत्रशक्त्या तान्, नाभेयप्रमुखाञ् जिनान् । पूर्वजांश्च चुलुक्यादीन्, कृष्ट्वा पश्येति तं जगौ ॥ २०५ ॥ मणीमये महीभागे, परतीर्थकुरंगकान् । त्रासं नेतुमिव स्वर्ण—मृगेंद्रासन[10]माश्रितान् ॥ २०६ ॥ धर्मं चतुर्विधं लोकां—श्चतुर्दिक्समुपागतान् । समकालं समाख्यातु—मिव क्लृप्तचतुर्मुखान्[11] ॥ २०७ ॥ भवस्थत्वे[12]ऽपि निष्कर्म[13]—तया मुक्तिं गतानिव । द्वेधाऽत्रापि महानंद[14]—संदोहैस्तुंदिलानिव ॥ २०८ ॥ वर्यत्रिजगदैश्वर्य—याञ्चां कर्तुमिवाग्रतः । सेव्यमा-नान् सुरस्तोमै—श्चुलुक्याद्यैश्च भूधवैः ॥ २०९ ॥ श्रीनाभिनन्दनप्रष्ठान्[15], श्रीवीरचरमाञ् जिनान् । यथाश्रुतस्फुरद्रूपान्,

१ चेष्टते-प्रयतते. २ अस्माकम्. ३ निरालंबस्थितिकलाम्. ४ शोभन्ते-दीप्यन्ते. ५ अमृतनदीम्. ६ अन्तर्भूतणिजर्थप्रयोगोऽयं तेन 'तं सूरिं स्थापयित्वा' इति व्याख्येयम्. ७ ईषद्धास्यसमूहमिषात्. ८ सूर्यः. ९ स्फातयः-वृद्धयः. १० सिंहासनम्. ११ रचितचतुराननान्. १२ भवस्थकेवल्यवस्थापेक्षया. १३ घातिकर्मा-पेक्षया. १४ महांश्चासौ आनन्दश्च, तथा-मोक्षश्च. १५ प्रमुखान्.

दृष्टवान् गुर्जरेश्वरः ॥२१०॥ पड्भिः कुलकम् ॥ तद्दर्शनेंदुनोद्वेल—प्रमोदक्षीरनीरधौ । निमज्जन्निव भूजानिः, क्षणं नाज्ञास्त किंचन ॥ २११ ॥ ततश्चौलुक्यमादाय, हेमसूरिः सगौरवम् । नमस्कृत्य जिनाधीशां—स्तेषामग्रे निषेदिवान् ॥ २१२ ॥ राजानं ते जिनाः प्रोचुः, कुर्वाणा इव कर्णयोः । माधुर्यवर्यया वाण्या, सारंसारप्रसारणीम् ॥ २१३ ॥ बहवोऽपि विवेक्तारः, संति स्वर्णादिवस्तुषु । धर्मतत्त्वे विवेक्ता तु (न), कोऽपि क्वाप्यतिनिष्णधीः ॥२१४॥ एकश्छेकस्त्वमेवासि, येन धर्मं वधात्मकम् । हित्वाऽश्मानमिवादद्रे, दयामूलः सं रत्नवत् ॥ २१५ ॥ हृत्प्रियंकरणी संपद्, दीप्यते या नृपादिषु । धर्मद्रुमस्य सा पुष्पं, फलं मुक्तिरमाऽऽस्पदम् ॥ २१६ ॥ नृपत्वचक्रवर्त्तित्व—शक्रत्वार्हत्त्ववैभवम् । न दूरे तस्य यस्य स्याद्, धर्मचिंतामणिः करे ॥ २१७ ॥ अभंगुरा तवैवेदृग्, भाग्यभंगी विजृंभते । हेमाचार्यो यया प्राप्त—स्त्वया तत्त्वनिधिर्गुरुः ॥ २१८ ॥ अथ पूर्वे चुलुक्याद्या, हेमसूरिं प्रणम्य तम् । समालिंग्य च चौलुक्यं, प्रमोदादिदमूचिरे ॥ २१९ ॥ बभूविम वयं वत्स !, त्वयैव ननु पुत्रिणः । यः कापथं परित्यज्य, भेजे सत्पथपांथताम् ॥ २२० ॥ जिनधर्मं विहायैनं, न कृतज्ञः प्रभुः परः । यो दत्ते नतिमात्रेण, स्वभृत्येभ्यः परं पदम् ॥ २२१ ॥ खेलत् संशयदोलायां, स्थिरीकृत्य मनस्ततः । गुरोः पुरोऽस्य निर्माहि, निर्मायं कृत्यमात्मनः ॥ २२२ ॥ गतेषु तेषु सर्वेषु, भूभृद् दध्यौ शिवादयः । तथाऽवदञ् जिनास्त्वितथं, तत् सत्यमिदमेव वा ॥२२३॥ उत्पन्नचित्तसंशीति—वल्लिस्तत्तद्वचोऽम्बुभिः । कुमारपालः सूरींद्रं, किमेतदिति पृष्टवान् ॥२२४॥

१ उत्तमजलसारणीम् ( नीक ), सरसारघसारणीम्, प्र. २ पृथक्कर्तार –परीक्षका. ३ अतिकुशल.. ४ धर्मं., ५ मुक्तिरेव रमा मुक्तिरमा. मुक्तिरमाया आस्पदं—स्थानं–तीर्थंकरत्वादि. ६ रचना. ७ भाग्यभंग्या. ८ पूर्वजा.. ९ पुत्रवन्त. १० समर्थ –स्वामी. ११ अन्य.. १२ नमस्कृतिमात्रेण, १३ ० ल्लवित० प्र,

तेनं[1] न्यगादि यद् देव-बोधिनाऽदर्शि किं नु तत्? । प्रत्यूचे भूपतिर्वेद्मि, न तदप्येतदप्यहम् ॥ २२५ ॥ शशंस सूरिराड् राज—न्निंद्रजालमयी कला । एकाऽस्ति निस्तुंषा[2] तस्य, पार्श्वे मम तु सप्त ताः ॥२२६॥ तच्छक्त्या स्वभवत् सर्व-मावाभ्यां दर्शितं तव । न प्रत्येषि तदाऽऽचक्ष्व, विश्वमप्यत्र दर्शये? ॥२२७॥ परं[3] न किंचिदेवैतत्, कूटनाटकपाटवात् । सत्यं तदेव यद् देव !, सोमेशस्त्वां तदाऽऽदिशत् ॥ २२८ ॥ एवं प्रभुवचोवीचि—सेचनेन हृदंतरात् । निष्क्रांतभ्रांतिसंतापः[4], क्ष्मापः प्राप स्वमालयम् ॥ २२९ ॥ अथोपदेशपीयूष—पानार्थं समुपागतम् । कुमारपालं प्रत्यूचे, सूरिर्धाराधरध्वनिः ॥ २३० ॥ क्षाराब्धेरमृतं धनाद्वितरणं वाणीविलासादृतं[5], शालात्[6] सत्फलमंगकादुपकृतिर्वंशाच्च मुक्तामणिः । मृत्स्नायाः कनकं सुमात्[7] परिमलः पंकात् पयोजं यथा, निःसारात् पुरुषायुषः सुचरितं[8] सारं तथाऽऽकृष्यताम् ॥ २३१ ॥ (शार्दूल०) तत्पुण्यमेव नैपुण्या—ज्जगदे जगदीश्वरैः । प्रवर्धते श्रियः स्मेरा, यस्मात् कंदाल्लता इव ॥२३२॥ यत्र वा तत्र वा यातु, यद्वा तद्वा व्यवस्यतु[9] । अश्नुते[10] पुण्यवॉल् लक्ष्मीं, वीरांगदकुमारवत् ॥२३३॥ द्वीपोऽत्र जंबूद्वीपोऽस्ति, पद्मायाः सद्मपद्मवत् । लवणोदजलैर्लोलैः, परितोऽपि परिष्कृतः[11] ॥२३४॥ तदीये भरतक्षेत्रे, मध्यदेशैकभूषणम् । स्वर्गश्रीविजयेनेव, नाम्नाऽऽसीद् विजयं पुरम् ॥२३५॥ निशांतमौलिविश्रांत[12]-वातभ्रांतध्वजव्रजे । लीनेव लोलता यत्र[13], श्रीषु स्त्रीषु च नैक्ष्यत ॥२३६॥ शूरः शूरांगदस्तत्र, बभूव क्षितिवल्लभः । शिक्षिता(तं) यत्कृपाणेन, प्रणाशं वैरिणो रणे ॥२३७॥ क्षीरांभोधिरधोऽशुकं सुरसरित्संव्यानलीलाऽऽस्पदं,

१ सूरिणा. २ निर्मला. ३ कूटनाटकपाटवात् परम्—अन्यत्. ४ निष्क्रान्ता भ्रान्तेः संतापो यस्मात् सः. ५ सत्यम्. ६ वृक्षात्. ७ पुष्पाद् गंधः. ८ श्रेष्ठाचरणम्. ९ उद्यच्छतु. १० प्राप्नोति. ११ व्याप्त—भूषितः, १२ गृहशिखरस्थितेन वायुना भ्रान्तध्वजसमूहे. १३ विजयपुरे,

कासः ( काशः ) कंचुलिकोरुतारकततिर्मुक्ताकलापः किल । वक्त्रश्रीपरिवीक्षणे तुहिनरुग्बिंबं मणीदर्पणः, श्वेतांभोजवनं च केलिकमलं यत्कीर्त्तिवामभ्रुवः ॥ २३८ ॥ ( शार्दूल० ) तस्य वीरमतीत्यासीत्, प्राणेभ्योऽपि प्रिया प्रिया । आसेदुस्त्रिदिवं देव्यो, यत्कांतिविजिता इव ॥२३९॥ अमात्यो मतिसारोऽभूत्, तस्य राज्यधुरंधरः । मिलित्वेवैकतो विश्वे—बुद्धिर्यन्मनसि स्थिता ॥ २४० ॥ तस्मिन् धुर्य इव न्यस्य, राज्यं शूरांगदप्रभुः । वीरमत्या समं रेमे, रोहिण्येव निशाकरः ॥ २४१ ॥ वीरमत्यन्यदा वन्य—दावाग्निप्रतिमप्रभम् । तनयं जनयामास, रत्नं रत्नखनी यथा ॥ २४२ ॥ शूरांगदः समासूत्र्य, यथामहिम तन्महम् । तस्य नाम गुणोद्दामं, वीरांगद इति व्यधात् ॥ २४३ ॥ अमात्यो मतिसारोऽपि, तदा प्राप्योत्तमं सुतम् । आहूतवान् प्रमोदेन, सुमित्रेत्यभिधानतः ॥ २४४ ॥ वीरांगदः सुमित्रश्च, तावुभावधिकौजसौ । कुलोद्द्योतकरौ जातौ, सूर्याचंद्रमसाविव ॥ २४५ ॥ स्वच्छत्वं सरलत्वं च, दधतो दीर्घदर्शिनोः । आशैशवात् तयोरासीत्, प्रीतिर्लोचनयोरिव ॥ २४६ ॥ न विधुकैरवयोर्घनकेकिनो—स्तपनपंकजयोः प्रतिभाति तत् । हृदयहृत्सुहृदामपि सौहृदं, यदभवन्नृपमंत्रितनूजयोः ॥२४७॥(द्रुतवि०) तावधीत्य कलाः सर्वा, बुद्ध्या सर्वपथीनया । तेद्विदां गर्वसर्वस्वं, लीलयैवापजह्रतुः ॥२४८॥ लब्ध्वा च यौवनं विश्व—युवतीजनजीवनम् । दस्रयोरपि रूपश्री—हारिणौ तौ बभूवतुः ॥२४९॥ वक्षोऽभूद्विपुलं धिया सह कृशं मध्यं सहारिश्रिया, पुष्टं वर्ष्म सहोदयेन च सह श्मश्रूद्गतं तेजसा । पीनं बाहुयुगं सहैव यशसा स्कंधौ समभ्युन्नतौ,

१ तृणविशेष. ( घरु ). २ वल्लभा. ३ स्त्री. ४ प्राप्ता-गताः. ५ जगताम् बुद्धिः. ६ वृषभे इव. ७ वीरेषु-शूरेषु. अगदं-बाहुभूषणम् इव, अथवा-वीरेषु अगं ददातीति. ८ दर्शनसन्दननिद्राजागरणादिषु यथा लोचनयोः प्रीति –सहचरत्वं तथाऽनयोः, ९ कलाविदाम्. १० अश्विनीकुमारयो. ११ देह..

माहात्म्येन सहांगजस्य नृपतेस्तारुण्यमासेदुषः ॥२५०॥(शार्दूल०) पाणिमात्रममुना विभूष्यते, स्वर्णकंकणमिति त्यजन् करे । श्रीकरं स्वपरयोर्नृपांगजः, स द्विधाप्यधित दानकंकणम् ॥२५१॥ (रथोद्धता)वीरांगदः समित्रोऽपि, सवसंत इव स्मरः । हृद्य-मुद्यानमन्येद्युः, श्रयति स रिरंसया ॥२५२॥ तस्मिन् स्मेरसुमस्तोमे, क्रीडित्वा स्वेच्छया चिरम् । स्नात्वा च सारसे नीरे, ववले स्वगृहं प्रति ॥ २५३ ॥ मृत्युक्रांत इव भ्रांत—स्वांतः कोऽपि पुमान् पथि । ब्रुवन् मां रक्ष रक्षेति, कुमारं शरणं श्रितः ॥२५४॥ मा भैषीरिति वाक्येनाऽऽ—श्वासयंस्तं नृपात्मजः । दृष्टवान् करवालोग्रा—नग्रतो राजसेवकान् ॥२५५॥ कोऽयं पुमान् ? किमागोऽस्य ?, पृष्टे यूयं किमागताः ? । इति पृष्टाः कुमारेण, ते श्लिष्टाऽञ्जलयो जगुः ॥२५६॥ स्वामिन्नयं परास्कंदी, पुरास्कंदी तवाभितः । जह्रे धनानि लोकानां, जीवितव्यानि मृत्युवत् ॥ २५७ ॥ प्रविशन्निष्पतंश्चापि, स्वेच्छयाऽयं पुरांतरे । आत्मेव लोकैर्नालोकि, विलोकनपरैरपि ॥ २५८ ॥ हृत्वाऽद्य कोशं क्ष्मापस्य, नश्यन् दस्युरयं रयात् । दध्रे स्थित्वाऽभितोऽस्माभि—र्जन्मीव निजकर्मभिः ॥ २५९ ॥ शूरांगदनिदेशेन, हंतुं प्रस्थापितस्ततः । नंष्ट्वा शशकवत् सोऽयं, चक्रे त्वां शरणं गुणिन् ! ॥ २६० ॥ तदयं दीयतां स्वामि—न्नये दृष्टिर्निधीयताम् । एनं स्तेनं यथा हत्वा, सतां शांतिं वितन्महे ॥ २६१ ॥ श्रुत्वेति तानथावादीद्, दयालुर्नृपनंदनः । शीर्षच्छेद्यो यदप्येष, मया देयस्तथापि न ॥

---

१ प्रासवत'. २ स्वर्णकंकणेन. ३ हस्ते. ४ पुण्येन लक्ष्म्या च-स्वस्य पुण्येन परस्य लक्ष्म्या चेत्यर्थः, ५ उद्याने. ६ सरस इदं सारसं तस्मिन्-सरोवरसंबंधिनीत्यर्थ ७ परानास्कन्दतीति-चौर., ८ तव नगरचौरः, ९ विलोकितपरै.. प्र. १० पश्चाद्भमस्थानाद्वा. ११ नीतौ.

॥ २६२ ॥ यथा चंदनतश्चंद्र—स्तपनात्तपनो यथा । क्षतात् त्राणात्तथा क्षत्र—शब्दोऽन्वर्थो जने श्रुतः ॥ २६३ ॥ एतमत्रायमाणस्य, क्षत्रशब्दो भवेन्मम । इंद्रगोपेति नामेव, कीटस्य व्यर्थताऽऽस्पदम् ॥ २६४ ॥ कोऽभिमानो भवेत्तस्य, यदीयशरणागतः । स्वैरं वंभ्रम्यते नैव, निर्भीको मत्तहस्तिवत् ॥ २६५ ॥ अचेतनास्ते तरवोऽपि वर्ण्या—स्तापादुपेतं प्रतिपालयंतः । सचेतनास्ते न पुनः पुमांसो—ऽप्यवंति भीतेर्न जनं श्रितं ये ॥ २६६ ॥(उपजातिः) शरणार्त्तपरित्राण—व्रतं मे रक्षितुं ततः । चौरोऽयं दयया न्याय—हीनोऽपि त्यज्यतां भटाः ! ॥ २६७ ॥ अवोचंस्ते पुनः स्वामि—स्त्रातेऽस्मिन् स्वस्य किं फलम् ?। मुक्त एव पुनर्लोक—मयं क्लेशयिताऽरिवत् ॥ २६८ ॥ स्तेनो व्याधिः खलोऽरिश्च, चत्वारोऽमी शुभेप्सुना । उन्मूल्याः कंदवन्मूलाद्, रक्षिताश्चेद्विकुर्वते ॥ २६९ ॥ दुर्जनोच्छेदतः साधु—लोकं पालयति प्रभुः । यथा विश्वं तमोध्वंसात्, प्रकाशयति भास्करः ॥ २७० ॥ यच्चौरपक्षपातेन, साधुक्लेशप्रवर्धनम् । तद् दृषल्लोलुपत्वेन, चिंतामणिविचूर्णनम् ॥ २७१ ॥ किंचान्याय्यमिदं ज्ञात्वा, न्यायी भूपः पिताऽपि ते । असूयिष्यति तत्कालं, घातयिष्यति चास्मकान् ॥ २७२ ॥ अंतःस्फुरत्कृपाकुल्या—लहरीमिव दर्शयन् । दंतांशुदंभतो वीरा—गदस्तानवदत्पुनः ॥ २७३ ॥ भवद्भिर्न्यायसर्वस्वं, यदुदाहारि हारि तत् । परं क्षत्रियधर्मोऽपि, वीक्ष्यतां क्षत्रियाः स्थ चेत् ॥ २७४ ॥ क्षत्रियाणामयं धर्मः, शास्त्रे

१ ह्रादनात् २ तापत॰, ३ नाशात् ४ यथार्थ—सत्यार्थ ५ प्रसिद्ध, ६ आगतम् ७ वधपीडितस्य रक्षणमेव व्रतं—नियमस्तत्. ८ शुभम् आप्तुम् इच्छतीति शुभेप्सुस्तेन. ९ विक्रियां यान्ति—मदोन्मत्ता भवन्तीत्यर्थ. १० विचारशून्यम्. ११ दोषान् आरोपयिष्यति. १२ दन्तकान्तिमिषतः. १३ अकथि—कथितमित्यर्थः. १४ मनोहरम्,

शेषः स्वशेखरमाणिं, रमणीं विवोढा, स्तंबेरेमो
लोके च विश्रुतः । यदार्त्तस्य परित्राणं, धनैः प्राणैरपि ध्रुवम् ॥ २७५ ॥ शेषः स्वशेखरमाणिं, रमणीं विवोढा, स्तंबेरेमो
द्विदशनौं, मृगराट् स्वशौर्यम् । साधुर्व्रतं, भटजनः शरणागतं च, जीवन्न मुंचति परं म्रियते कदाचित् ॥२७६॥(वसंत०)विश्वे
चात्मर्मयेऽस्मिन् कः, पाल्यते कश्च हिंस्यते । कृपैव केवलं जन्यौ, सार्वजन्याऽऽश्रिते जने ॥ २७७ ॥ तद्यात यूयं राज्ञश्चेद्,
विभीथ ब्रूथ मद्गिरा । बलाद् देवसुतोऽस्मत्तो, मलिम्लुचममूमुचत् ॥ २७८ ॥ इत्युक्त्वा प्रेष्य योधांस्तान्, स्तेनं वीरांगदोऽ
वदत् । अन्वभावि न वा चौर्य–सुखमेतत्त्वयाऽधुना ? ॥ २७९ ॥ दुर्ध्यानोदकसिक्तस्य, कुकर्मद्रोर्वधादिकम् । पुष्पमत्र फलं
प्रेत्य, नारकी यातना घना ॥२८०॥ सत्सूपायेषु धर्म्येषु, चौर्यं कुर्वीत कः सुधीः ? । प्राप्तेष्वाम्रेषु कम्रेषु, कोऽद्यान्निंबफलो-
त्करम् ? ॥२८१॥ मया कृत्वा कियत्क्लेशं, त्वमिदानीममोच्यथाः । पुनर्मोचयिता कस्त्वां, चरंश्चौर्यं धृतो यदि ? ॥ २८२ ॥
प्राणापहारि तच्चौर्यं, वर्जयित्वा विषोपमम् । साधो ! सुधोपमं धर्मं, सेवस्व स्वप्रियंकरम् ॥ २८३ ॥ ततः प्रबोधपीयूष—
पानोन्मीलितचेतनः । वीरांगदं प्रणम्योच्चैः, प्रोचिवान् स मलिम्लुचः ॥ २८४ ॥ स्वामिंस्त्वं मे पिता माता, भ्राता प्राण-
प्रदोऽसि च । येन वैय(वै व्य)सनादस्मात्, कीनाशादिव रक्षितः ॥२८५॥ भवेऽस्मिन्न भवेयुश्चेत्, साधवस्त्वादृशा घनाः ।
विपत्तनूनपात्ताप–तप्ता पृथ्वी कथं ? भवेत् ॥ २८६ ॥ निःस्वोऽहं जीवजीवातो—स्तव स्यामनृणः कथम् ? । चौर्यवर्जनमे-
वास्तु, मद्भक्तिस्त्वयि तत् स्थिरा ॥२८७॥ ब्रुवंतमिति चौरं तं, सर्वांगीणस्वभूषणैः । सत्कृत्य स कृती प्रैषी–दहो वत्सलता

१ परिणेता. २ हस्ती ३ रक्षानिमित्तमागतम्. ४ आत्मतुल्ये, ५ उत्पाद्या. ६ सर्वजनानां हिता. ७ धर्मादनपेतेषु. ८ मनोहरेषु. ९ तस्मात्. १० चौरः.
११ संसारे–जगति. १२ प्रचुराः, पक्षे मेघाः. १३ विपत् एव ( तनूं न पाति–न रक्षतीति ) तनूनपात्–अग्निः, तस्य तापस्तेन तप्ता. १४ भूमिः.

सताम् ॥ २८८ ॥ श्रुत्वैतन्मत्कृतं कृत्यं, तातः कुप्यति मे[1] न वा । इति जिज्ञासया तस्थौ, क्षणं तत्रैव भूपभूः ॥ २८९ ॥ शूरांगदोऽथ भृत्येभ्यः, श्रुत्वा तत्पुत्रचेष्टितम् । विकट[2]भ्रुकुटिव्यक्त—क्रोधस्तानभ्यधादिदम् ॥ २९० ॥ कुतोऽयं रेऽथ संजात—स्तनयोऽस्तनयो मम । पाटच्चरपरित्राणात्[3], प्राणहृद् यो जनेऽजनि ॥ २९१ ॥ अन्यायी यदयं जातो, मत्तो न्यायैकजीवितात् । किमंगारमयी वृष्टिः, सा न सोमात्सुधामयात् ॥ २९२ ॥ मया निग्राहितं स्तेनं, रक्षन्नेष विशेषतः । अहो मामप्यवामंस्त, तदयं द्विड् सुतच्छलात् ॥ २९३ ॥ पितुः परोऽपि मान्यः स्या—न्नयी पुत्रोऽपि नानयी[4] । भानोः शनिरसन् द्वेष्यः, कोकैः[5] सन्निति वल्लभः ॥ २९४ ॥ तद्भटा ! यात रे यूयं, प्रणिगद्य ममोदितम् । ममादेशेन तं देशा—न्निर्वासयत चौरवत् ॥ २९५ ॥ एत्य भूपभटास्तेऽथ, कुमाराय भयाकुलाः । कथंचित् कथयामासुः, सर्वमुर्वीपजल्पितम् ॥ २९६ ॥ निशम्य तद् भृशं तुष्टो, भूपभूर्लब्धराज्यवत् । यथेच्छमधुना धात्रीं, द्रक्ष्यामीति महोत्सवात्[6] ॥२९७॥ तदाऽवादीत् सुमित्रस्त—महो दैवस्य दौष्टवम् । गुणोऽपि दूपणीचक्रे, दुर्जनेनेव येन[7] ही ॥२९८॥ गुण एव भवेत् प्रायः, प्राणिनां क्लेशहेतवे । वक्तृत्वमेव बंधाय, शुकानां यत् प्रगल्भते[8] ॥ २९९ ॥ ततो वीक्ष्य निजं मित्रं, म्लानवक्रं दिनेंदुवत् । उन्निद्रपद्मवत् स्मेर-मुखो वीरांगदोऽवदत् ॥ ३०० ॥ सखे ! मा खिद्यथाः संतः, परस्योपचिकीर्षया । सहंते दुस्सहं क्लेशं, पथिस्थफलितद्रुवत् ॥ ३०१ ॥ सतः परोपकारोत्था, विपत्तिरपि सुंदरा । गीर्वाणप्रीणनोत्पन्ना, क्षीणतेवामृतद्युते[9] ॥ ३०२ ॥ उत्कं

१ मद्यम्. २ विकटा–विकृता–विकराला. ३ चौररक्षणात्. ४ पुत्रोऽपि असन्–दुर्जन इति हेतो पापग्रहत्वात्. ५ चक्रवाकः. ६ आनन्दात्. ७ दैवेन. ८ निःशंकतया चेष्टते. ९ चंद्रस्य,

ठुलं पुराऽप्यासी-न्मच्चित्तं देशदर्शने । ताताऽऽदेशस्तु योऽत्रायं, स दुग्धे शर्करोपमः ॥३०३॥ प्रौढा श्रीश्चतुरैः समं परिचितिर्विद्याऽनवद्या नवा, नानाभाषितवेषलिप्यधिगतिः कुंदावदातं यशः । धीरत्वं मनसः प्रतीतिरपि च स्वीये गुणौघे सतां, मानात् को न गुणोदयः प्रसरति क्ष्मामंडलालोकनात् ॥३०४॥(शार्दूल०)अचेतनोऽपि वातश्चेद्, वने भ्राम्यन् ससौरभः । सचेतनः पुमांस्तर्हि, भुवि क्रीडन्न किं गुणी? ॥ ३०५ ॥ तन्मित्र ! गच्छ गेहं त्वं, मार्गस्ते माऽस्तु दुःखदः । अहं देशांतरं यामि, पित्रादेशवशंवदः ॥ ३०६ ॥ सुमित्रः प्राह किं स्वामिन् !, गच्छेत्युक्तमसद्वचः । विहाय देहिनं देहः, किं निःस्नेहः प्रयाति हि ? ॥ ३०७ ॥ नाध्वाऽपि दुःखकृद्भावी, त्वत्सेवारसिकस्य मे । दारिद्र्योपद्रवः किं स्यात् ?, कल्पद्रुमजुषोऽङ्गिनः ॥३०८॥ सप्रतिष्ठं प्रतिष्ठस्व, यद्येवं तर्हि सत्वरम् । इत्युक्त्वा स समित्रोऽपि, कुमारः प्रस्थितस्ततः ॥३०९॥ मुखश्रीः सदने याऽऽसीद् , दासीकृतसितद्युतिः । तयोः सैव प्रवासेऽपि, धीरिमाऽहो महात्मनाम् ॥ ३१० ॥ उत्सवे व्यसनेऽपि स्यात्, समं रूपं महीयसाम् । पूर्वं मंथस्य पश्चाच्च, सैव मुद्रा महोदधेः ॥ ३११ ॥ ज्ञात्वा तौ प्रस्थितौ संतौ, तद्गुणग्राममोहिताः । उपेत्य बंधुवत् पृष्ठे, लोकाः शोकाद् व्यजिज्ञपन् ॥३१२॥ परोपकारिणां धुर्यः, शरण्यः शरणैषिणाम् । नयनानंदनः क्वाऽसि, प्रस्थितो ? नृपनंदनः ॥ ३१३ ॥ प्रज्ञालस्याऽपि राज्ञोऽस्य, कुतोऽद्य जडिमाऽजनि । यत्त्वां देहादिवात्मानं, निर्वासयति मंदिरात् ॥ ३१४ ॥ सच्चक्रोल्लासके स्वामिन् !, प्रस्थिते त्वयि भास्वति । पुरे शोकमयं भावि, लोकांधंकरणं

---

१ नवीना. २ ज्ञानम्. ३ उज्ज्वलम्. ४ माननात् , मानोत्को, प्र. ५ वशीभूतः. ६ अशोभनं वच.. ७ प्रतिष्ठया-मानेन सह यथा स्यात्तथा. ८ धीरस्य भावः धीरिमा—धीरत्वमित्यर्थ.. ९ शरणेषु साधुः शरण्य :, शरणागतत्राणकरणयोग्यः,

तमः ॥ ३१५ ॥ अद्यासद्भाग्यभंगीभि—रंगीचक्रे किमु व्ययः । यदसत्पुरतो यासि, त्वं तात इव वत्सलः ॥ ३१६ ॥ इति विज्ञापिनः पौरान्, गुणश्रेणिवशंवदान् । कथंचिदपि संस्थाप्य, नगरात्तौ निरीयतुः ॥ ३१७ ॥ पद्भिः कुलकम् ॥ गोष्ठ्या सुधासधर्मिण्याऽ—न्योन्यं संतन्यमानया । स्थानस्थाविव तौ मार्गं, नाज्ञासातां मनागपि ॥ ३१८ ॥ आक्रम्य कियतीं भूमिं, तौ नृपामात्यनंदनौ । राजधानीमिव भियां—मरण्यानीमवापतुः ॥ ३१९ ॥ तरूणां यत्र वह्वी श्रीः, श्वापदानां स्वतंत्रता । अंधकारस्य साम्राज्यं, विपदां परमं महः ॥ ३२० ॥ अल्पीयस्यामतीतायां, तस्यां ताभ्यां शनैः शनैः । ब्रुवन्निव भवास्थैर्यं, दिनांतस्तावदापतत् ॥ ३२१ ॥ उदयाभ्युदयव्ययान—हं यदि सूरोऽपि लभेऽन्वहं ततः । कतरः स्थिर इत्युदीर—यन्निव तौ स्वेन रविस्तदास्तवान्॥३२२॥(गीतिः)पत्यावस्तमिते शूरे, तद्वियोगमसासहिः।दिनश्रीः प्राविशन्नूनं, सांध्यरागहुताशने ॥ ३२३ ॥ पित्रोरपि हृदि प्रीतिः, स्त्रीभावान्मद्वदस्थिरा । वदंतीवेति तौ पत्रि—ध्वानैः संध्याऽप्यगात्कचित् ॥ ॥ ३२४ ॥ मित्रेऽस्तमितवत्याशु, तिमिरोत्करकैतवात् । लोकैः प्रसृत्वरास्तोक—शोकः स्थानेऽभितोऽभवत् ॥ ३२५ ॥ दृष्ट्वा पश्चिमपाथोधौ, नूनं तरणिमज्जनम् । तदुद्दिधीर्षयेवाभ्रे, तारकाः प्रदधाविरे ॥ ३२६ ॥ एवं प्रदोषे सोन्मेषे, न्यग्रोधस्य तले क्वचित् । सुप्तो वीरांगदो वस्त्र—स्रस्तरे स्मृतदैवतः ॥ ३२७ ॥ नास्ति जागरतो भीति—रिति सन्नीति-

१ नाश २ वशीभूतान् ३ भयानाम्, ४ महोत्सव . ५ संसारानित्यत्वम् . ६ अतिशयेन सहते इत्येवं शीलः सासहिरिति त्रिलिंगे निपात्यते, न सासहिः—असासहिः. ७ उभौ कुमारौ. ८ पक्षिशब्दै . ९ सूर्ये. १० गतवति ११ मिषात् . १२ प्रकाश . १३ स्थाने ( अव्ययम् ) उचितमित्यर्थः. १४ उद्धर्तुमिच्छया. १५ ईषत्प्रकाशयुक्ते रात्रिप्रथमभागे,

रीतिभृत् । सुमित्रो यामिकत्वेन, तस्थौ तत्पारिपार्श्विकः ॥ ३२८ ॥ अहं राजाऽस्म्ययं राज—सूनुः श्रांतः करामृतैः । इमं निर्वापयामीति, मन्ये सोमस्तदोदगात् ॥ ३२९ ॥ निष्कलंकः कुमारस्य, मुखेंदुर्मां कलंकिनम् । हसिष्यतीति भीत्येव, मंदमिंदुः खमुद्ययौ ॥३३०॥ अयं चन्द्रोदयेऽस्वाप्सीद्, धिष्ण्येऽरण्येऽपि सोऽस्त्विति । नूनं व्यधाद्विधिस्तस्यो-परि चंद्रोदयं तदा ॥ ३३१ ॥ सांद्रैः प्रक्षालितं चांद्रै—र्ज्योत्स्नाजालैर्जलैरिव । घटितं स्फटिकेनेव, तदा रोदोऽन्तरं बभौ ॥ ३३२ ॥ चंद्रातपेऽप्यतंद्रालु-द्युतिद्योतितदिङ्मुखः । अथाऽऽगत्य सुरः कोऽपि, सुमित्रमिदमूचिवान् ॥३३३॥ अत्रास्म्यहं वटे यक्षो, मदीयं स्थानमागतः । कुमारः पुण्यसारोऽय-मातिथेयीमतोऽर्हति ॥ ३३४ ॥ सुखं सोषुप्यमाणोऽस्ति, सखे ! वीरांगदोऽधुना । मया तथ्यं किमातिथ्यं, प्रथ्यं कथ्यं त्वया मम? ॥ ३३५ ॥ अहो मूर्तिरहो स्फूर्ति—रिति चित्रीयमाणहृत् । नत्वा तं महतीभक्तिः, सुमित्रः प्रोचिवान् वचः ॥ ३३६ ॥ भाग्यसौभाग्यसौराज्य-लक्ष्मीसुखसुतादयः । सर्वेऽपीषल्लभा भावा, दुर्लभं देवदर्शनम् ॥ ३३७ ॥ तप्यंते कतिचित्तपांसि कतिचिन्मंत्रान्मुदोपासते, विद्यां केऽपि जपंति केऽपि दहने मांसं निजं जुह्वति । स्थित्वा प्रेतवने नयंति कतिचिद् ध्यानेन सर्वां निशां, मर्त्यानां न तथापि दर्शनपथं प्रायः श्रयंते सुराः॥३३८॥(शार्दूल०) ततो निधिमिव प्राप्य, दुरापं तव दर्शनम् । देव ! संपन्नवानस्मि, कृतार्थः प्रार्थये किमु? ॥३३९॥ देहीति[6] दानक्षण एव रम्यं, वचो न याञ्चावसरे कदाचित् । अह्न्येव भद्रंकरमिंद्रचापं, रात्रौ पुनर्दृष्टमरिष्टहेतुः ॥ ३४० ॥ ( उपजातिः ) तथापि

१ परिपार्श्वे-पार्श्वे व्याप्य वर्तते इति पारिपार्श्विकः. २ गृहे. ३ भाग्यस्य सौभाग्यं-सुन्दरता. ४ सुलभाः. ५ सपूर्णकामः, ६ त्वमस्मै देहीति स्वसेवकादेः पुत्रादेर्वा कथनं सुन्दरं-दानक्षणे दातृतया कथनं-वचनं सुंदरं, न पुनः मां देहीति वचनं याचकतया उक्तमित्यर्थः,

किंचिद्याचस्वे—त्युक्तः स द्युसदा पुनः । नायाचीत्सर्वथा स्वेष्ट—महो सत्पुरुषव्रतम् ॥ ३४१ ॥ स्वयं यक्षस्ततो दत्त्वा, नीलशोणं मणिद्वयम् । तमभाषिष्ट विस्पष्टं, श्रूयतामनयोर्महः[1] ॥ ३४२ ॥ अयं नीलमणिर्देय—स्त्वयाऽस्मै राजसूनवे । उपवासत्रयाराद्धो[2], वैभवं[3] वितनिष्यति[4] ॥३४३॥ मायां सप्रणवां[5] जप्त्वा, पूज्यः शोणमणिस्त्वया । अमितां कामितां चिंता—मणिवद् दास्यति श्रियम् ॥ ३४४ ॥ उदित्वेति गते देवे, सुमित्रस्तन्मणिद्वयम् । रविबिंबवदुद्दाम—धाम दृष्ट्वा परामृशत् ॥ ॥ ३४५ ॥ अहो पुण्यस्य महिमा, नहि माति जगत्रये । चिंतामण्यादयोऽमी य—त्सेवकस्यापि सेवकाः ॥ ३४६ ॥ लक्ष्मीमानयति, प्रियं प्रथयति, प्रत्यूहमुन्मूलति, द्वंद्वे द्विष्टवलं पिनष्टि, हरति व्याघ्रादिभूतं भयम् । कांतारे सह बंभ्रमीति, दिविषद्वर्गं विधत्ते वशं, पुण्यं पुण्यवतां न किं ? वितनुते प्राचीनमूर्जस्वलम्[7]॥३४७॥ (शार्दूल०) सुमित्रे चिंतयत्येवं, जजागर्वान् नृपांगजः । क्षणं त्वमपि शेष्वेति, भणित्वा तमसूषुपत् ॥ ३४८ ॥ दोषोच्छेदकरं तिग्म—रुचिं मांत्रिकवत्ततः । मत्वेवागामिनं नंष्ट्वा, पिशाचीव निशा ययौ ॥ ३४९ ॥ निपेव्य वारुणीं[8] रागात्[9], कलंकं प्रकटं वहन् । विधुर्द्विजाधि[10]राजोऽपि, युक्तमेव निपेतिवान् ॥ ३५० ॥ नभोवनांतरे यानि, निशायां व्यकसन्नलम् । तानि तारप्रसूनानि, प्रातर्माली[11] किलाग्रहीत् ॥ ३५१ ॥ वर्तते मम सजाति[12]—र्महसाऽयं महीपभूः । पश्याम्येनमितीवागा—दुदयाद्रिं दिवाकरः ॥ ३५२ ॥ उड्डीयमाना वृक्षेभ्यः, पक्षिणः स्वस्वरैस्तदा । पठद्वैतालिकीभूय, कुमारं प्रति भेजिरे[13] ॥ ३५३ ॥ प्रभाते च नृपामात्य—

१ महिमा. २ औपवस्त्रत्रयाराद्धः-प्र. ३ राज्यम्. ४ वितरिष्यति. प्र. ५ ह्रींकारम्, ६ ओंकारयुताम् ७ बलवत्. ८ पश्चिमदिशाम्, पक्षे मदिराम्. ९ रंगात्. पक्षे मोहात्. १० चंद्र', ११ प्रात.कालरूपो माली—मालाकारकः. १२ सज्जातिः-प्र, १३ सिषेविरे.

पुत्रौ ध्यात्वा स्वदैवतम्[1] । प्रतस्थाते पुरो मार्गे, धत्ते तंद्रालुतां[2] हि कः ? ॥ ३५४ ॥ मणीव्यतिकरं नैशं, वक्तुं योग्यमपि द्रुतम् । सुमित्रो नोचिवान् मित्रं, समये वदितेति[3]धीः ॥ ३५५ ॥ दुरध्वे*ऽपि व्रजंतौ तौ, प्राग्विपक्त्रि[4]मपुण्यतः । माद्यद्भिरपि सिंहाद्यै—र्बाधाते न सिद्धवत् ॥ ३५६ ॥ स ललाटंतपे शूरे, कुमारो मित्रमब्रवीत् । विलसत्यशनाया[5] मे, किं भोज्यं भुज्यतां भण ? ॥ ३५७ ॥ मणिप्रसादनाहेतो—रुपवासत्रयं[6] स्वयम् । कुमारः सुकुमारत्वा—न्न करिष्यति कर्हिचित् ॥ ३५८ ॥ तस्मात् केनाप्युपायेन, तदहं कारयेऽमुना । विमृश्येति सुमित्रस्त—मूचे मतिमतां वरः ॥३५९॥ युग्मम् ॥ स्वामिन्नानायि[7] पाथेयं, शून्ये[8]ऽत्रास्ति न किंचन । पचेलिमाऽपि ह्यज्ञाता, फलश्रेणिरिहत्यका ॥ ३६० ॥ अविज्ञातफलास्वादा—दनर्थः कोऽपि माऽस्तु नौ[9] । उपवासयेति[10] बुद्ध्वा तं, सुहृत्त्वेनाप्युपावसत् ॥ ३६१ ॥ युग्मम् ॥ एवमन्यद् द्व्यहं[11] पुण्य—पोषितौ तावुपोषितौ । तुरीयेऽहनि कांतार—प्रांतं कांतमवापतुः ॥ ३६२ ॥ श्रीविशालं महाशाल—पुरोद्यानं प्रपद्य च । हंसवत् सरसि स्नात्वा, चिरं निर्ववतुस्तराम् ॥ ३६३ ॥ वीरांगदो जगादाथ, कृतोन्माथः[12] क्षुधा सखे ! । प्राणा मम प्रयांतीव, कुतोऽप्यानय भोजनम् ॥ ३६४ ॥ सुमित्रः प्राह निस्तीर्णो[13], विस्तीर्णो विपदर्णवः । प्रतीक्षस्व क्षणं येन, भोजये दिव्यभोजनम् ॥ ३६५ ॥ राजसूनुः पुनः प्रोचे, त्र्यहं[14] प्रागुपवासितः । प्रतीक्षयसि चाद्यापि, तद्दाताऽसि न मेऽशनम् ॥ ३६६ ॥ दत्त्वा नीलमणिं तस्मै, प्रसूनान्युपढौक्य च । ऊचे सचिवपुत्रोऽयं[15], विधिज्ञ ! विधिनाऽर्च्यताम्[16] ॥ ३६७ ॥

---

१ स्वेष्टदेवम्. २आलस्यम्. ३वदिष्यामि. *दुष्टोऽध्वा. प्रा०स०अच्. दुरध्वस्तस्मिन् ४विपाकेन निर्वृत्तम्. ५अशनाया–क्षुधा. ६उपवासत्रयम्. ७ आवाभ्यां न आनायि. ८ निर्जनस्थले. ९ आवयोः. १० उपवासं कारयित्वा. ११ दिनद्वयम्. १२ कृतोत्पीडः. १३ आवाभ्याम् उत्तीर्णः. १४ दिनत्रयं यावत्. १५ मणिः, १६ त्वया पूज्यताम्.

एतदर्थं मया मार्गे, त्वमुपावास्यथारुयहम् । यतस्तपो विना सिद्धि-र्न स्यात् पुण्यस्पृशामपि ॥३६८॥ तापयत्यपि तनूं गुरु-
तापैः, शोषयत्यपि रसांस्तपसीह । तापने कमलिनीव समस्ता, सिद्धिरेति रतिमद्भुतमेतत् ॥३६९॥(स्वागता) असहित्वा च कः
क्लेशं, जनः श्रीभाजनं भवेत् । कर्णौ स्वर्णेन संपूर्णौ, पश्य! वेधादिकष्टतः॥३७०॥अयं मणिः प्रसन्नश्च,राज्यं विश्राणयिष्यति।
अचिंत्यो मणिमंत्रादे-र्यत् प्रभावो विजृंभते ॥३७१॥ सोऽपृच्छत् स्वच्छधीर्मित्रं, विस्मेरो मणिवीक्षणात् । न्यश्रांणि तुभ्यं
केनायं, राज्यदश्च कथं ? वद ॥ ३७२ ॥ वक्ष्याम्यवसरे सर्वं, संप्रत्यभ्यर्च्यतामयम् । इत्युक्तः स वयस्येन, प्रारेभे मणि-
मर्चितुम् ॥ ३७३ ॥ तावद् रहः सुमित्रोऽपि, पुष्पैरभ्यर्च्य रुच्यधीः । आरराध मणिं शोणं, यक्षाख्यातमनुजपन् ॥३७४॥
रत्नाधिष्ठायकः प्रादु-र्भूय तं प्रोचिवानिति । संतुष्टोऽस्मि स्मृतोऽभ्येत्य, सर्वं कुर्वे त्वदीप्सितम् ॥ ३७५ ॥ तेन देवप्र-
सादेन, निदाघेनेव तत्क्षणम् । सुमित्रो मित्रवद् दीप्रो, नृपसूनुमुपागमत् ॥३७६॥ तावद् वीरांगदोऽप्युच्चै-र्ध्याननिश्चलमा-
नसः । अर्चयित्वा मणिं सम्यग्, विररामाभिरामरुग् ॥ ३७७ ॥ अथाधिष्ठायकं शोण-मणेः स्मृत्वा सुरोत्तमम् ।
सुमित्रोऽर्थितवान् स्नान-प्सानप्रमुखमद्भुतम् ॥ ३७८ ॥ प्रेरितास्तेन देवेन, दिव्यालंकारभासुराः । सहसा नभसाऽ-
भ्येत्य, प्रणेमुस्तौ सुरस्त्रियः ॥३७९॥ अंतर्वणं स्फुरच्छात-कुंभस्तंभं तयोः कृते । रत्नकुट्टिमरोचिष्णु, मंदिरं ता विचक्रिरे ॥

१ सम्यक् पक्वस्य भुक्तस्य सारो निगदितो रस , इत्युक्त देहस्थभुक्तान्नादेः परिणामः धातुभेदः रसत्वं तथा वीर्यं विषं जलं रुधिरं शृंगाररस रागं न. २ सूर्येऽ-न्यत्र तपति ३ आनंद-विकाशम ४ दास्यति ५ अदायि. ६ सुन्दरबुद्धिः. ७ सूर्यवत् ८ मनोहरकान्तिः. ९ प्सानं-भोजनम्. १० वनमध्ये. ११ दीप्यमानसुवर्णस्तंभम्. १२ रत्नमयाऽधस्तनभूभागदीप्यमानम्. १३ विकुर्वन्ति स.

॥ ३८० ॥ यत्रासनानि हैमानि, राती चां[1]ऽमत्रमंडली । श्रृंगारवेदी[2] माणिक्य-मयी चित्तं हरत्यलम् ॥ ३८१ ॥ मन्ये तस्य श्रियं वीक्ष्य, स्वर्विमानापमानिनीम् । देव्योऽपि ताः स्वयं स्थातुं, कामयांचक्रिरे चिरम् ॥ ३८२ ॥ देवीभिस्तत्र तौ नीतौ, पश्यंतौ त्रिदिवश्रियम् । नश्यन्निमेषदृक्त्वेन, क्षणं जातौ सुराविव ॥ ३८३ ॥ देव्यस्तौ तैलपिष्टाभ्या-मभ्य[3]ज्योद्वर्त्य च स्वयम् । देववत् स्नपयामासु-र्नीरैर्हैमघटोज्झितैः ॥ ३८४ ॥ निवार्य[4] वाससी दिव्ये, गंगोर्मी इव निर्मले । लिप्त्वा च चंदनाद्यैस्ता, भूषणैस्तावभूषयन् ॥ ३८५ ॥ एवं तौ स्नातलिप्तालं-कृतांगौ त्रिदशोपमौ । इहापि समजायेतां, कुमारौ मणिवै[5]भवात् ॥ ३८६ ॥ स्फारवर्षोपलमुखी, पक्वाम्रशकलाधरा । मोदकोच्चकुचा मुद्ग-दालीनीलाभकंचुका ॥ ३८७ ॥ मंडकाच्छादना भक्त-क्षौमाऽऽनायि तयोः पुरः । दिव्या रसवती देव-स्त्रीभिर्वारवधूरिव ॥ ३८८ ॥ प्रागभुक्तां रसाढ्यां तां, स्वैरं रसयतोस्तयोः । रसज्ञाऽप्यरसज्ञाऽऽसी-दहो माधुर्यमूर्जितम् ॥ ३८९ ॥ वीरांगदं हसित्वोचे, सुहृत् स्वामिन् ! दिनत्रयम् । क्षुद्वानाऽऽसीः कर्णे[6]हत्य । ततोऽश्नीया यथारुचि ॥ ३९० ॥ सम्यगाचम्य तांबूले, ताभ्यामास्वादिते सति । सुमित्रस्मरणादेव, देवः सर्वं तिरोदधे ॥ ३९१ ॥ दृश्येऽप्यदृश्यतां याते, तस्मिन् जीमूँ[7]तजालवत् । वयस्यं तद्रहस्यं स, प्रश्नयामास भूपभूः ॥ ३९२ ॥ विश्रम्यतां क्वचिद् वच्मि, यथेति सुहृदोदितः । स विशश्राम चूतद्रु-तले निद्रां जगाम च ॥ ॥ ३९३ ॥ सुमित्रोऽपि निविश्यास्य, सन्निधौ धीनिधिर्हृदि । राज्यं भावि कथंकार-मिति ध्यायन्नवास्थित ॥ ३९४ ॥

---

१ भोजनपात्रसमूहः. २ आभूषणादि सज्जितुं वेदिका. *स्वर्वि०प्र. ३ अभ्यंगं कृत्वा. ४ परिधाप्य. ५ मणिसामर्थ्यात्. ६ अभिलाषातिशयं हत्वा. ७ मेघसमूहवत्. ८ क्षिप्त्वा. ९ तिष्ठति स्म.

इतस्तस्मिन् महाशाल-पुरे राजा धनंजयः । पूर्वेद्युर्गाढरोगार्तो, दैवादानंचे[1] पंचताम् ॥ ३९५ ॥ सुतस्तस्य न कोऽप्यासी-दिति संमंत्र्य मंत्रिभिः । संध्यायामध्यवास्यंत, पंचदिव्यानि भक्तितः ॥ ३९६ ॥ प्रातः स्फूर्जत्सु[2] तूर्येषु, राजकीयैर्जनैः सह । स्वयं प्रतस्थिरे तानि, राज्याधिष्ठायिवैभवात् ॥ ३९७ ॥ तेषु भ्रमत्सु सर्वत्र, पुरे पौराः परःशताः । पुरः पुरः स्फुर-द्रूपा, राज्यार्थमवतस्थिरे ॥ ३९८ ॥ वासार्थं वसतिश्चतुष्करमिता, वेषद्वयं प्रावृतौ, भुक्त्यै* धान्यघृतोदकादि च कियत्, किंचिद् व्ययार्थं धनम् । एकैकं शयनासनप्रियतमा—दासीगवाश्वादिकं, भोगोऽयं नृपरंकयोस्तदपि ही राज्ये स्पृहावान् जनः ॥ ३९९ ॥(शार्दूल०)परितोऽपि पुरं भ्रान्त्वा, पौरान् सर्वानपास्य च । प्रक्रीडितुमिव स्वैरं, पुरात् तान्यगमन् बहिः॥ ॥४००॥ आहूतानीव केनापि, गत्वा तानि द्रुतं ततः । वने तस्मिन्नृपामात्य—पुत्रोपांतं प्रपेदिरे ॥४०१॥ स्वयंवरेव राज्यश्री—रापन्नेति मुदं वहन् । सुप्तं जागरयामास, सुमित्रो राजनंदनम् ॥ ४०२ ॥ तावत् कराग्रभृंगारैः[3]—पयोभिरभिषिच्य तम् । गर्जन् गजेश्वरो[4] वीरां—गदं पृष्ठे न्यवीविशत् ॥ ४०३ ॥ [5]हेषते स्म हयो हर्षाद्, राज्यश्रीदैवतेन[6] च । तस्य मूर्ध्नि धृतं छत्रमवीज्येतां च चामरे ॥ ४०४ ॥ वीरांगदावलोकेन, लोकानां प्रीतयोऽन्तरा । अमांत्य इव रोमांच—व्याजतो निर्य-युर्बहिः ॥ ४०५ ॥ तदाऽध्यासीत् सुमित्रोऽन्त—र्भेजे[7] राज्यं सुहृन्मम । इतोऽयं मां पुरं नीत्वा, निर्योगे[8] क्वापि योक्ष्यते ॥ ॥ ४०६ ॥ स्वार्थप्रजार्थराजार्थ–सार्थसाधनचिंतया । नियोगः पारवश्याय, तदवश्यं च दुःखदम् ॥ ४०७ ॥ योगादपि नियोगोऽयं, दुःसाधः सुधियामपि । योगे साध्यो यदात्मैव, नियोगे त्वखिलं जगत् ॥ ४०८ ॥ मणिश्चिंतामणिरिव, स्वार्थ-

१ प्राप जगाम वा २ वाद्यमानेषु. * स्त्रौ, प्र. ३ देवता एव दैवतम्. ४ मध्ये. ५ आश्रित्य. प्राप—इत्यर्थः. ६ अधिकारे. ७ तादर्थ्ये चतुर्थी. ८ पारवश्यम्.

संपादकोऽस्ति मे । तत्प्रसादात् कियत्कालं, रमे स्वैरममर्त्यवत् ॥ ४०९ ॥ उत्तार्य विपदंभोधिं, राज्यं प्रापय्य चोर्जितम् । इदानीं मुंचतोऽप्येनं, स्वामिनं मे न दूषणम् ॥ ४१० ॥ इत्यामृश्य सुमित्रोऽगाद्, वेगात् कुंजांतरे क्वचित् । नमल्लोक-मुखाऽऽलोक-व्यग्रे वीरांगदे सति ॥४११॥ षड्भिः कुलकम् ॥ अथापश्यन् सुमित्रं तं, शब्दयित्वा मुहुर्नृपः । आसन्नानादिश-न्मित्र-मत्र कुत्रापि दृश्यताम् ॥ ४१२ ॥ सुमित्रैहि सुमित्रैही—त्युच्चरंतः पदे पदे । बभ्रमुस्तत्कृते तेऽन्त-र्वणं वनचरा इव ॥ ४१३ ॥ अदृष्ट्वा नष्टवत् ते तं, नास्तीति प्रोचिरे नृपम् । गतसर्वस्ववत् सोऽपि, मानसे दुःखमानशे ॥४१४॥ विल-लाप च तत्कालं, सुमित्र ! त्वां विनाऽधुना । वैकल्यं कलयन्नस्मि, देहि वाक्यमुपेहि च ॥ ४१५ ॥ आजन्म प्रतिपाल्य मैत्र्यमसमं तस्मिन् प्रवासक्षणे, पित्रोः स्नेहभरं धनं तनुसुखं मुक्त्वाऽखिलं मत्कृते । मर्षित्वा व्यसनं मया सह महत् कां-तारसंचारजं, राज्ये जातवतीह मे विमुखतां प्राप्तोऽसि कस्मात् ? सखे ! ॥४१६॥ (शार्दूल०)राज्यदायिमणीदाना-दुपकृत्य ममाधुना । भीत्या प्रत्युपकारस्य, त्वमवश्यं पलायथाः ॥४१७॥ स्थितिः सतां काप्युपकृत्य यत्ते, प्रयांति तत्प्रत्युपकारभीताः । निर्वाप्य पृथ्वीं तपतापतप्तां, न वारिदा नेत्रपथे स्फुरंति ॥४१८॥(उपजातिः)वीरांगदस्ततोऽवोचद्, यूयं व्रजत मंत्रिणः! । न मित्रेण विना कार्य-मैश्वर्येणामुना मम ॥४१९॥ ते तं विज्ञपयामासुः, स्वामिन् ! मा स्मेदृशं वद । दुर्लभा खलु राज्यश्रीः, पुण्यैः पृथुतरैरपि ॥ ४२० ॥ मित्रं तव सुमित्रोऽयं, नामतो नार्थतः प्रभो! । उत्सवेऽस्मिंस्तवागच्छत्, तुच्छबुद्धिः पलाय्य यः ॥ ४२१ ॥ भागधेये, तवामेये, जाग्रत्यन्येऽपि भाविनः । वयस्याः सरहस्यास्तत्, प्रसीद पुरमाश्रय ॥ ४२२ ॥ सचिवै-

१ प्राप. २ विकलता धारयन्. ३ सहित्वा ४ मर्यादा. ५ अनिर्वचनीया. ६ सूर्यतापोष्णाम्. ७ भाग्ये. ८ भविष्यन्ति.

रिति संबोध्य, कथंचित् स महीपतिः । उत्तोरणपताकाङ्कं, स्वपुरं प्रत्यनीयत ॥ ४२३ ॥ देहेन रूपगेहेन, लोकंप्रीणैस्तथा गुणैः । पुरस्य पौरस्त्रीणां च, हृदयं प्रविवेश सः ॥ ४२४ ॥ असौ नृपगृहे सिंहा-सनस्थः सुरबिंबवत् । महेन महताऽमात्यैः, सपौरैरभ्यषिच्यत ॥ ४२५ ॥ घनाघनोदके तस्मि-न्नृपे स्फुरति सर्वतः । तापव्यापविपन्मुक्तं, युक्तं जज्ञे महीतलम् ॥ ४२६ ॥ भूमेरप्सरसो देव-स्त्रियो वा निमिषदृशः । कुमार्यः पर्यणीयंत, वीरांगदमहीभुजा ॥ ४२७ ॥ कमलाभोगभाजोऽपि, तस्य हृन् नीरधेरिव । और्ववच्छोपयामास, सुमित्रविरहोऽन्वहम् ॥ ४२८ ॥ अथास्ताचलचूलाग्र—चुंबिन्यंबुजबांधवे । पुरं कुंजरवत् कुंजा-न्निर्गत्यागात् स मंत्रिसूः ॥ ४२९ ॥ निशम्य तत्र कस्माच्चिद्, रतिसेनेति नामतः । पुरुषद्वेषिणीं पण्य-स्त्रियं स्त्रैणैकभूषणम् ॥४३०॥ तल्लावण्यरसास्वाद-सादरे लोचने वहन् । मारवत् स्फारशृंगार-सारस्तद्द्वारमाप सः ॥४३१॥ युग्मम् ॥ भूमिष्ठमिव देवं तं, कांतं दृष्ट्वाऽतिहृष्टहृत् । मध्येसौधं समाकार्य, रतिसेना पराऽमृशत् ॥ ॥ ४३२ ॥ आस्यं पर्वशशी, विलोचनयुगं विस्मेरमिंदीवरं, कंठः कंबुरुरश्च कांचनशिला, स्कंधौ च पूर्णौ घटौ । बाहू शौर्यगजेंद्रयंत्रणमहाऽऽलाने, करौ चाऽरुणाऽ-म्भोजे, वर्ष्म सुधाञ्जनं नयनयोः, केनैष सृष्टो युवा ॥४३३॥(शार्दूल०)ह्रेपयंतीं रतिमपि, श्रिया तां प्रेक्ष्य सुंदरीम् । सुमित्रोऽप्युद्यदानंद-संदोहो ध्यातवान् हृदि ॥ ४३४ ॥ सेनैव रतिसेनेयं, स्मरस्य त्रिजगज्जये । यस्याः कटाक्षनाराचा, दुस्सहास्त्रिदशैरपि ॥ ४३५ ॥ नेयं स्त्री यदि वा किंतु, शृंगाररसवाहिनी । यस्यां लावण्यपूरेऽस्मिन्, मज्जंति युवहृद्गजाः ॥४३६॥ तयोश्चिंतयतोरेवं, मिथो दर्शनमात्रतः । निस्सीमः समभूत् प्रेमा, पूर्वं संग-

१.वर्षणशीलमेघोदके ( तज्जलतुल्ये ). २ चेष्टमाने-वर्तमाने. ३ वडवानलवत् . ४ सूर्ये. ५ स्त्रीणां समूहः स्त्रैणम् . ६ कामवत् . ७ आप. ८ सर्वलोहमयबाणाः.

तयोरिव ॥ ४३७ ॥ स तयाऽत्यर्थमभ्यर्थ्य, निजाऽऽवासे न्यवासयत । चिंतामणिं स्वयं प्राप्तं, मंदिरे कोऽवमन्यते ॥४३८॥ स्नानप्स्नानादिभिः कृत्यैः, स्वयं स रतिसेनया । तथाऽसेवि यथा मेने, तां तदैव वशंवदाम् ॥ ४३९ ॥ मणिमाराध्य स स्वैरं, ददौ श्रीपतिवद् धनम् । भोगाभोगं[1] तयोस्तेन[2] तद्वृद्धा[3] पर्यपूपुरत् ॥ ४४० ॥ सवित्री रतिसेनाया, यावद् धनमयाचत । तावल्लक्षं च कोटिं च, सुमित्रो हेलया ददौ ॥ ४४१ ॥ तस्य कल्पद्रुमस्येव, दानाद् वृद्धाऽतिविस्मिता । दध्यौ न दृश्यते पार्श्वे, धनमस्य न चार्जना ॥ ४४२ ॥ स्वेच्छं यच्छत्ययं द्रव्यं, यत्तदस्य विमृश्यते[4] । चिंताश्माथ निधिः सिद्धो, रसस्तुष्टं सुरादि वा ॥ ४४३ ॥ मया सम्यगिदं ज्ञेयं, जरतीति विमृश्य सा । दासीं प्रेष्य धनं किंचिद्, ययाचे सचिवात्मजम् ॥ ४४४ ॥ स द्रव्यार्थं रहः स्थित्वा, मणिं यष्टुं[5] प्रचक्रमे । विवरे वीक्ष्य तं[6] वृद्धा, लास्यामीति हृदाऽमृशत् ॥ ॥ ४४५ ॥ सुमित्रोऽपि तदर्चाऽन्ते, तदधिष्ठायकार्पितम् । द्रव्यं कर्मकरीहस्ते, यथाकामं समर्पयत् ॥ ४४६ ॥ अन्येद्युः स्नातुमासीने, तस्मिंस्तद्वसनाऽञ्चलात् । तद्रत्नमग्रहीदक्का, कर्करं न्यस्य तत्पदे[7] ॥ ४४७ ॥ स्नात्वा सुमित्रो वस्त्रांते, ग्रंथिं निर्वर्ण्य तादृशम् । मणिस्तथैव मेऽस्तीति, मुग्धधीर्न व्यलोकयत् ॥ ४४८ ॥ तया निर्वासनकृते, याचितः स पुनर्धनम् । अर्चाक्षणे मणिं पश्य—न्नपश्यत् कर्करं किल ॥ ४४९ ॥ दध्यौ च शून्यवज्जज्ञे, मणिर्मे किमु कर्करः । किं वाऽऽदाय मणिं कोऽपि, दुष्टधीर्वञ्चवानिमम् ॥ ४५० ॥ ततः सुमित्रः प्रत्येकं, प्रोचे वृद्धापरिच्छदम् । आत्तं स्याद् यदि केनापि, रत्नं[10] मे तर्हि दीयताम् ॥ ४५१ ॥ भवदाज्ञां न विद्मस्त्वद्[9], वदतीति परिच्छदे । तन्निशम्य सुमित्रं सा, वृद्धा क्रुधाऽभ्यधादिति ॥

१ भोगविस्तारम्. २ धनेन. ३ तस्याः—रतिसेनाया वृद्धा—माता. ४ तर्क्यते. ५ पूजयितुम्. ६ मणिम्. ७ तत्स्थाने. ८ दृष्ट्वा. ९ भवच्छपथ. १० रत्नम्.

॥ ४५२ ॥ त्वद्दत्त्या पूर्यतां चौर्या—न्माऽस्मल्लोकं कलंकय । अस्मद्गेहेऽपि चेच्चौर्यं, तमोऽरौ न हि किं तमः ॥ ४५३ ॥ तयेति
हक्कितस्तूष्णी—मपुष्णान्मंत्रिनंदनः । अतिधूर्तोऽपि घृष्टोऽन्य—च्छरणं कुरुते हि किम् ? ॥ ४५४ ॥ निःस्वेनानेन किं
कार्य—मिति ध्यात्वाऽथ कुट्टिनी । स्वदासीः प्रेरयामास, तदवज्ञाकृतेऽन्वहम् ॥ ४५५ ॥ अवामंसत दास्यस्तं, स्नानपाना-
दिकर्मसु । आदिष्टाश्चावदन् किं न, त्वं करोषीति रोषतः ॥ ४५६ ॥ रतिसेनामपास्यैकां, सर्वेषामप्यनादरम् । पश्यन्नश्य-
त्तमानंदो, दध्यौ धीसखनंदनः ॥ ४५७ ॥ अनयाऽवज्ञया नूनं, वृद्धेव मणिमग्रहीत् । सिद्धेच्छा चापमानान्मां, निर्विवा-
सयिषत्यतः ॥ ४५८ ॥ अहो जातिरहो भांति—रहो स्थितिरहो मतिः । अहो वंचनचंचुत्वं, पण्यस्त्रीषु प्रसर्पति ॥ ४५९ ॥
पश्यत्यर्थकृते सुरानिव गलत्कुष्टानपि प्राणिनो, निःस्वान् दासवदस्यति स्वसदनात् प्राग्दत्तवित्तानपि । न स्नेहेन न विद्यया
न रमया न प्रज्ञयाप्यात्मसाद्, विश्वांधंकरणीह पण्यरमणी धात्रा कुतो निर्ममे ॥४६०॥(शार्दूल०)मद्यमांसमदमत्सरमाया—
मोहमंडनमनोभवमुख्यान् । आश्रिताऽपि बहुशोऽपि मकारान्, किं ममत्वमयते न पणस्त्री ॥ ४६१ ॥ (स्वागता) अनया
मणिमादाय, वंचितोऽहं न केवलम् । स्वात्माऽपि यद् विनाऽऽम्नायं, नायं दास्यति किंचन ॥४६२॥ यद्वा निंदामि किं वेश्यां,
स्वं निंदामि न किं हहा । कामं कामान्धलोऽहं यः, कामये पण्यकामिनीम् ॥ ४६३ ॥ असल्लेश्या श्रिता वेश्या, येन
धर्मजुषाऽपि हि । गृहीतो नियतं तेन, नरकप्राप्तिलग्नकः ॥ ४६४ ॥ तथापि पापिनीमेनां, विगोप्यं निखिले पुरे । गृह्णामि
चेन्न रत्नं स्वं, मतिर्मे तर्हि गर्हिता ॥ ४६५ ॥ उपकृत्युपकर्तुं द्रा—गपकर्तुं च वैरिणि । प्रभविष्णुर्न यः प्राणी, जीवन्नपि

१ सूर्ये, २ रीतिः. ३ वंचननिपुणत्वम्. ४ प्रवर्तते. ५ आत्माधीना न भवतीति शेषः. ६ कस्मात्कारणात्. ७ गच्छति—प्राप्नोति. ८ अशुभाध्यवसाया. ९ प्रतिभूः. १० जुगुप्स्य.

मृतो हि सः ४६६ ॥ भस्माप्यंह्रिहतं हंत—शिरो यद्यधिरोहति । निराकृतः कृती तर्हि, न तत्प्रतिचिकीः किमु ॥ ४६७ ॥ विमृश्यैवमनुक्त्वैव, निरीय च तदालयात् । स्वमणिग्रहणोपायं, सुमित्रो ध्यातवान् पुनः ॥ ४६८ ॥ वीरांगदोऽस्ति मन्मित्र—मत्र धात्रीधवोऽधुना । तस्मै निवेद्य सद्योऽपि, कर्षये किमितो मणिम् ॥ ४६९ ॥ यद्वा तस्य वयस्यस्य, संगंस्ये न्यक्कृतः कथम् । मित्राश्रयोऽपि यल्लज्जा—वहः स्याद्व्यसने सताम् ॥ ४७० ॥ वयस्यं न श्रयेद् दुःस्थो, महानिति मतिर्मम । कृशः शशी श्रयन्मित्रं, स्वं नामापि विलुंपति ॥४७१॥ तस्माद् भ्रान्त्वा भुवं कांचित्, कलयित्वा कैलां कलाम् । वेश्यातो मणिमादास्ये, संगंस्ये सुहृदस्ततः ॥४७२॥ ध्यात्वेति पुरतस्तस्मात्, प्रस्थाय सचिवात्मजः । क्रमात् क्रामन् महीचक्रं, स्फुरत् प्राप पुरः पुरम् ॥ ४७३ ॥ अत्युच्चस्वर्णशालाढ्यं, रत्नोरुकपिशीर्षकम् । स्वर्गंगायितैश्चैत्य—ध्वजचेलांचलैर्लसत् ॥ ४७४ ॥ प्रेक्षमाणः पुरं दूराद्, रंगतो गोचरं गतः । सुमित्रोऽमंस्त तच्छून्यं, नृतिरश्चामसंचरात् ॥४७५॥ युग्मम् ॥ इदमीदृक् कुतः शून्य—मिति विस्मितमानसः । सोऽन्तर्विवेश पूर्लक्ष्म्या, कृष्यमाण इवोच्चकैः ॥ ४७६ ॥ श्रीपथे श्रीपथे स्फारान्, मुक्तौघान् जवनालवत् । रैभारान् क्षुद्रगिरिव—न्मणीनुपलखंडवत् ॥ ४७७ ॥ कर्पूरादीन् लवणवत्, क्षौमराशीन् वराशिवत् । पश्यन् मर्त्यानपश्यंश्च, भूपवेश्मनि सोऽविशत् ॥ ४७८ ॥ युग्मम् ॥ तस्मिन्नाद्ये कणस्फार—कोष्ठागारपरंपराम् । द्वितीये कांस्यताम्रादि-विचित्रामत्रमंडलीम् ॥ ४७९ ॥ तृतीये रूप्यरुक्मादि-पात्राढ्यं च महानसम् । तुर्ये क्षौमादिवस्त्राणि

---

१ सूर्यम्. २ स्वकीयम्. ३ मनोहराम्. ४ राजमार्गे. ५ वीप्सायां द्वित्वम्. ६ प्रचुरान्. ७ जवधान्यवत्. ८ स्थूलवस्त्रवत्. ९ सुवर्णादि. १० अन्नपचनगृहम्. ११ कौषेयादिवस्त्राणि.

पंचमे श्रीसदःसदः ॥४८०॥ षष्ठे रत्नादिसद्वस्तु—कोशं निधिपतेरिव । पश्यन् प्रविष्टवान् मंत्रि–नंदनः सप्तमे क्षणे॥४८१॥ त्रिभिर्विशेषकम् ॥ स तत्र स्वर्णपल्यंक—विश्रांतं करभीयुगम् । हेमशृंखलनद्धांहि–द्वंद्वं दृष्ट्वा विमृष्टवान् ॥ ४८२ ॥ किं मोहः, किमु कौतुकं, किमु मनःसंकल्पना, किं भ्रमः, किं स्वप्नः, किमु शांवरी, किमु कला काऽपींद्रजालं किमु । दृग्बंधः किमु, किं मतिव्यवसितं, किं वेषकृत्कैतवं, किं चित्रं, किमु देवताकृतमिदं, किं वा परं किंचन ॥४८३॥ (शार्दूल०) सर्वशून्ये पुरेऽत्रैतुं, प्रभविष्णुर्नरोऽपि न । किं पुनः करभीयुगम–मुपर्यारोढुमक्षमम् ॥४८४॥ आनीयतेह केनेदं, पल्यंके केन चास्यत । समनह्यत केनेत्थं, शृंखलेनेदृशं किमु ॥ ४८५ ॥ शय्यासेदुंपि दासेरी–द्वंद्वं किं सृजतीति सः । ध्यात्वा प्राप्तोऽन्तिकेऽद्राक्षीत्, तन्नेत्रे ससिताञ्जने ॥ ४८६ ॥ तयोः पार्श्वे च धवल–कृष्णाञ्जनसमुद्गके । स्वर्णाञ्जनशलाकाढ्ये, दृष्ट्वा मंत्रिसुतोऽमृशत् ॥४८७॥ इमे केचित् स्त्रियौ नूनं, श्वेताञ्जननियोजनात् । कोऽपि सिद्धः सुरो वाऽपि, करभीचक्रवानभीः ॥४८८॥ कृष्णाञ्जनेन चानेन, जाने स्वमतिवैभवात् । इमे रूपं प्रपद्येते, सद्यः स्वाभाविकं पुनः ॥ ४८९ ॥ किमञ्जनं निवेश्यैतन्नेत्रयोः करवै स्त्रियौ । स्वदाक्ष्यस्याञ्जनस्यापि, पश्याम्यतिशयं स्वयम् ॥४९०॥ पिशाच्यावथ राक्षस्या–वेते भूत्वाऽञ्जनात्किल । मामग्राचेद् ग्रसेयातां, कः स्यान्मे शरणं तदा ॥ ४९१ ॥ एवमेव विमोक्ष्ये चेत्, तर्ह्यन्तर्मनसं मम । एतच्छल्यमिवातुल्यं, यावज्जीवं व्यथिष्यते ॥४९२॥ प्रियं वाऽप्यप्रियं वाऽस्तु, करिष्याम्येव साहसम् । न हि कातर्यतः किंचिच्, छ्रेष्ठं सिद्ध्यति

१ श्री सीदति अस्मिन् तत् श्रीसद तदस्ति यस्मिन् सदसि तत् श्रीसद सद –लक्ष्मीगृहस्थानं, तत्. २ कक्षायाम्–विभागे ( माळे ). ३ उष्ट्रीयुगलम्. ४ अज्ञानम्. ५ मिथ्याज्ञानम् ६ इन्द्रजालप्रकारामाया शाम्बरी. *मतिवंचनम्. ७ रूपान्तरकृत्. ८ ईदृक्किमस्ति. ९ उपविष्टम्. १० भयरहितः. ११ एतत्–करभीयुग्मम्.

कर्हिचित् ॥ ४९३ ॥ ततस्तन्नेत्रयोर्न्यास्थत्, सुमित्रः कृष्णमञ्जनम् । करभ्यावप्यभूतां ते, देवकांते इव स्त्रियौ ॥ ४९४ ॥ वेगादुत्तीर्य पर्यंका-दाश्चर्यमधिरुह्य च । उपावीविशतां तत्र, तं नत्वा विनयेन ते ॥ ४९५ ॥ पृच्छति स्म सुमित्रस्ते, प्रशस्ते ! तथ्यमुच्यताम् । कुतः शून्यं पुरं? के च, युवां? करभिके च किम्? ॥४९६॥ तमाचष्ट तयोर्ज्येष्ठा, गिरा माधुर्यधुर्यया । ह्रेपयंतीव वीणाया, वेणोरपि च निक्वणम् ॥ ४९७ ॥ उत्तरस्यां प्रशस्यश्री-सद्म पद्मवदन्वहम् । सुभद्रपुरमित्यस्ति, पुरं भद्रंकरं सताम् ॥ ४९८ ॥ स्वतातहिमवत्क्रांतिं, बिभ्राणेव सुरापगा । उन्नतं सेवते यस्य, शालमालंव्य सन्निधिम् ॥ ४९९ ॥ गंगादित्य इति श्रेष्ठी, तत्रास्त्यादित्यसद्द्युतिः । सच्चक्राणां मुदं दत्ते, यः पद्मोल्लासलालसः ॥ ५०० ॥ आकालिकीव लोलाऽपि, कमला यस्य वेश्मनि । स्थेयसी प्रेयसीवासीत्, पुण्येन कृतकार्मणा ॥ ५०१ ॥ वसुधारेव विश्वस्य, परमानंददायिनी । तत्प्रिया वसुधाराऽऽस्ते, रूपाद् रतिरिवापरा ॥ ५०२ ॥ तयोर्निरुपमप्रेम्णोः, पुण्यनैपुण्ययोगतः । गार्हस्थ्यद्रोः फलानीव, बभूवुर्नंदना घनाः ॥ ५०३ ॥ तौ दंपती कदाऽप्येवं, दध्यतुर्नौ सुता घनाः । दुहितैकाऽपि नास्त्येषां, या स्यान्मंगलकारिणी ॥ ५०४ ॥ लोकस्याहो स्थितिः काऽपि, पुत्री पुत्रीं समीहते ॥ पुत्रीवानपि पुत्रं च, यद्वा जगदसत्प्रियम् ॥ ५०५ ॥ उपास्यत ततस्ताभ्यां, तदर्थं गोत्रदेवता । तद्वरं मुदिताऽदत्त, तुष्टा 'कामदुघेव' सा ॥ ५०६ ॥ तत्प्रभावात् तयोः पुत्र्यौ, बभूवतुरुभे शुभे । आद्या जया द्वितीया च, विजया विनयाऽऽस्पदम् ॥५०७॥ बहुपुत्रानुजातत्वाद्, भाग्यसौभाग्यतोऽपि च । मातापित्रोः संगर्भाणा-मप्यभूतामिमे प्रिये ॥५०८॥ क्रमात् कलासु सर्वासु, शारदावद् विशारदे । श्रियाऽ-

१ असु क्षेपणे-लुङ्रूपम्. २ ध्वनिम्. ३ पद्मा-लक्ष्मी. पक्षे पद्म-कमलम्. ४ विद्युदिव. ५ आवयोः. ६ पुत्रवान्. ७ अविद्यमानवस्तुप्रियम्. ८ भ्रातृणाम्. ९ शोभया.

त्यप्सरसौ जाते, चारुतारुण्यतः शुभे ॥ ५०९ ॥ येष्वंगेषु न लावण्य-मसंपत्त्या विधिर्न्यधात् । हेलयैवाहितं तेष्व-प्यहो तद्यौवनश्रिया ॥ ५१० ॥ इतश्च गंगादित्यस्य, गंगातीरवनांतरे । सुशर्माख्यः सुधर्मोऽस्ति, परिव्राड् गुरुसत्तमः ॥ ५११ ॥ तत्र गत्वा स्वयं श्रेष्ठी, तं नमस्कृत्य भक्तितः । अत्यर्थमर्थयामास, भुक्त्यर्थं स्वीयवेश्मनि ॥ ५१२ ॥ ऊचे सुशर्मा धर्मज्ञ!, भक्तस्यैतत् तवोचितम् । परं गृहिगृहं गंतुं, यतीनां नास्ति योग्यता ॥ ५१३ ॥ यतित्वं नाशयत्याशु, स्तोकोऽपि गृहिसंगमः । तृणौघं निर्दहत्येव, हुताशनलवोऽपि हि ॥ ५१४ ॥ द्वाविमौ पुरुषौ नैव, स्वार्थसार्थसमर्थकौ । यतिः संगपरः शश्वद्, गृहस्थः संगवर्जितः ॥ ५१५ वदंतमेवं निर्व्याजं, परिव्राजं बलादपि । बुभोजयिषया[3] श्रेष्ठी, निन्ये स्वगृहमाग्रहात् ॥५१६॥ तं महेशमिवाध्यक्षं, कल्याणमिव मूर्त्तिमत् । दृष्ट्वाऽजनिष्ट तुष्टोच्चैः, पुष्टं श्रेष्ठिकुटुंबकम् ॥ ५१७ ॥ मूर्त्तभक्तिरसेनेव, पयसा तत्पदौ स्वयम् । प्रक्षाल्य परमे[4] स्थाने, श्रेष्ठी भोक्तुं न्यवीविशत् ॥ ५१८ ॥ सत्कवेः काव्यवद् वर्णनीयवर्णं सुसंस्कृतम् । रसाढ्यमशनं भोक्तुं, सुशर्मा स प्रचक्रमे ॥ ५१९ ॥ अनास्वादितपूर्वं त-दश्नन्नानारसं व्रती । माधुर्य-करसां मेने, सुधां तस्य पुरस्तृणम् ॥ ५२० ॥ सपुत्रः सकलत्रोऽपि, श्रेष्ठी तद्भक्तिमाचरन् । व्यजनानिलमाधत्तं, युवामि-त्यूचिवान् सुते[6] ! ॥ ५२१ ॥ शृंगारयंत्यौ[7] शृंगार[8]-मप्यात्मीयांगसंगतः । उद्वेलयंत्यौ वक्त्रेंदु-कांत्या स्नेहमहोदधिम् ॥ ॥ ५२२ ॥ मंत्राक्षतैरिव क्षिप्तै-श्चंचलैर्लोचनांचलैः । मोहयंत्यौ प्रति मुहु-र्मुनीनामपि मानसम् ॥ ५२३ ॥ परिव्राजः



---

१ अतिविभवाभावात् २ लावण्यम् ३ भोक्तुं प्रयुंक्ते इति भोजयति, भोजयितुमिच्छतीति बुभोजयिषतीति णिजन्ताद् भुज सन् ततो 'ऽप्रत्ययादि'त्यप्रत्ययस्तत आप् बुभोजयिषा तया ४ रम्ये स्थाने तं, प्र. रह स्थाने तं, प्र. ५ कुरुनम्. ६ पुत्र्यौ ! ७ शृंगारयत इति शृंगारयंत्यौ. ८ शृंगाररसम्-आभूषणं च.

पुरः स्थित्वा, ते जयाविजये सुते । सकंकणझणत्कारं, चक्रतुर्व्यंजनानिलम् ॥ ५२४ ॥ त्रिभिर्विशेषकम् ॥ तस्य तद्दर्शना-
देव, शीतरश्म्युदयादिव । समुद्रस्येव हृदयं, तत्क्षणं चुक्षुभेतमाम् ॥ ५२५ ॥ पीयमानो मनोहृत्य, तल्लावण्यसुधारसम् ।
भोज्यं विषान्नवन्नैव, सस्वदे तापसेश्वरः ॥ ५२६ ॥ तद्दृष्टिघनवार्षिण्यौ, रागपूरे निमज्जतः । स्थानेऽभूत् तस्य नाऽऽधारो,
दूरितः शीलपादपः ॥ ५२७ ॥ अहो जितेन्द्रियस्यापि, कायारण्ये मनोमृगम् । प्रकाश्य स्त्रीमयं पाशं, कामव्याधो निय-
च्छति ॥५२८॥ असीव्यद् देहे स्वे पशुपतिरुमां, कंसमथनो, विगुप्तो गोपीभि-र्दुहितरमयासीत् कमलभूः । यदादेशादेत-
ज्जगदपि मृगीदृक्परवशं, स वश्यः कस्य स्यादहह विषमो मन्मथभटः ॥ ५२९ ॥ ( शिखरिणी ) तत्प्राप्त्युपायं स ध्यात्वा,
कंचिच्चेतसि शोच्यधीः । हित्वा कदन्नवद् भोज्य—माचम्य च समुत्थितः ॥ ५३० ॥ विमनस्कमिवालोक्य, गंगादित्यो-
ऽन्वयुंक्त तम् । किं व्याधिर्बाधते वाऽऽधिः, सम्यग् नाभोजि यत् त्वया ? ॥५३१॥ स मायी तं रहः स्माह, विघ्नं वीक्ष्य भव-
द्गृहे । कथं भुंजे यतो याज्यं—स्नेहो मामपि बाधते ॥ ५३२ ॥ को विघ्नः कथ्यतां तथ्य—मिति श्रेष्ठिनि पृच्छति ।
आगच्छेर्मठमाख्यामी–त्युक्त्वाऽगाद् गुरुराश्रमम् ॥ ५३३ ॥ गंगादित्योऽथ तत्पार्श्वं, श्रित्वा प्रश्नयति स्म तम् । गुरो !
निगद्यतां सद्यः, कः प्रत्यूहोऽस्ति मद्गृहे ? ॥ ५३४ ॥ सुशर्माऽऽचष्ट दुष्टस्तं, किमहं करवै वद ? । एकतो मे व्रतभ्रंशो—
ऽन्यतस्तव कुलक्षयः ॥ ५३५ ॥ गृहस्थचिंताकरणाद्, याति जीवितवद् व्रतम् । तां न मे तन्वतस्त्वेतत्, क्षीयते निखिलं

१ परिव्राजः. २ इच्छाप्रतिघातं कृत्वा. ३ जग्धवान्. ४ युक्तम्. ५ दूर संजातं यस्य स दूरितः "तदस्य संजातं तारकादिभ्य इतच्". ६ प्रकटयित्वा.
✽ बध्नाति ७ जुगुप्सितः. ८ शोच्या-शोचनीया धीर्यस्य सः. ९ अपृच्छत्. १० यजमान ( भक्त ) स्नेहः.

कुलम् ॥ ५३६ ॥ तुष्टस्तथापि भक्त्या त्वां, वच्मि श्रेष्ठिन् ! सुते तव । सदूपणतयाऽत्यन्तं, त्वत्कुलं क्षपयिष्यतः ॥५३७॥ यथाऽनयोस्तनावस्ति, निःसीमं कामनीयकम् । तथा दोपोदयोऽप्युच्चै, रत्नदूपी यतो विधिः ॥ ५३८ ॥ परिणाय्याथ दत्से त्वं, यदि कस्यापि नंदने । तर्हि तत्कुलनाशोऽथ, पातकैरुपलिप्यसे ॥ ५३९ ॥ गंगादित्यस्तदाकर्ण्य, प्रभीत इव पृष्टवान् । त्वं कृपालुः कलावांश्च, वद किं करवाण्यहम् ? ॥ ५४० ॥ पंफुल्यामास[1] मे नूनं, सद्योऽपि छद्मपादपः । इति दुष्टोऽतिहृष्टात्मा, सुशर्माऽऽचष्ट तं पुनः ॥ ५४१ ॥ परेद्यवि[2] चतुर्दश्यां, श्यामायां दिनयौवने । दारव्यां नव्यपेटाया—मच्छिद्रायां समंततः ॥ ५४२ ॥ दुकूलोन्मीलितश्रीके, भव्याभरणभारिते । तत्र पुत्र्यौ निजे न्यस्य, विनिवेश्य च तालकम्[3] ॥ ५४३ ॥ तां पेटां समुपादाय, वलिपुष्पादिसंयुताम् । एकाकी त्वं समागच्छे, रहः स्वस्तटिनीतटम्[4] ॥ ५४४ ॥ त्रिभिर्विशेषकम् ॥ तत्राहं स्वयमागत्य, वलिनिक्षेपपूर्वकम् । पेटां चाप्लाव्य गंगायां, करिष्ये शांतिकं ततः ॥ ५४५ ॥ एवं कृते कृतिन् ! भावि, कुशलं त्वत्कुलेऽखिले । यदि क्षेममभिप्रैपि, तर्हि निर्माहि मा मुहः ॥५४६॥ इत्थं मिथ्याऽपि स स्वार्थी, तथाऽहो तदची-(च)कथत् । गंगादित्यो यथा मेने, सत्यमेवातिमुग्धधीः ॥५४७॥ कृत्वा स्वार्थसमर्थनाय विविधां मायामयीं चातुरीं, विद्याज्ञानकलौपधादिविधिभिर्ये वंचयंते जगत् । अंतर्दुष्टहृदो[5] वहिर्व्रतभृतः पाखंडिनस्तेऽपि चे—ज्जायंते गुरवस्तदा कथमहो नामी वकोटादयः ? ॥५४८॥ (शार्दूल०) श्रेष्ठ्यथागारमागत्य, न कस्यापि प्रकाश्य तत् । चतुर्दशीदिने प्राप्ते, तत्सामग्रीमतीतनत् ॥ ५४९ ॥ अन्याऽपि कन्या धन्याऽपि, स्यादन्यावासमंडनम् । अनयोर्दुष्टयोस्त्यागे, हानिः का नाम मे ननु ॥५५०॥ ध्यात्वेत्य-

१ अतिशयेन पफाल-फलवान् जात इत्यर्थ . २ निपातनात्-अव्ययम्-परदिवसे इत्यर्थ . ३ द्वारयंत्रम्. (ताळु) ४ गंगातट. ५ अन्तर्वृत्त्या दुष्ट हृदयं येषा ते.

सत्कुले कन्या, नमंत्येवं द्युंनिम्नगाम् । इति मिथ्योत्तरेण स्वं, प्रत्याय्य च परिच्छदम् ॥ ५५१ ॥ सर्वं गुरूक्तमादाय, पेटां
सतनयाद्वयाम् । उत्पाट्य च जनैः श्रेष्ठी, स्वःसरित्तटमाटिवान् ॥ ५५२ ॥ त्रिभिर्विशेषकम् ॥ व्रतिब्रुवोऽपि तत्रैत्य, श्रेष्ठिभृ-
त्यान् प्रहित्य च । आप्लावयत् स्वपुण्यालि—मिव पेटां नदीजले ॥ ५५३ ॥ कृत्वा च शांतिकं सम्यग्, गंगादित्यं गुरुर्जगौ ।
गच्छ त्वं त्वत्कुलेऽद्यासीत्, क्षेमं विघ्नविघातनात् ॥ ५५४ ॥ गत्वा गृहं जगौ श्रेष्ठी, गंगायां प्लाविता सती । सा पेटाऽगात्
पयोवेगाद्, धर्तुं नाशाकि केनचित् ॥ ५५५ ॥ हा वत्से ! दर्पणस्वच्छे, युवयोः किमजायत । यन्नीते वंदितुं गंगां, तयैवा-
पहृते रयात् ॥ ५५६ ॥ एवमादि विलप्योच्चै—र्गंगादित्यः कुटुंबयुक् । तदौर्ध्वदेहिकं चक्रे, धिगहो कूटनाटकम् ॥ ५५७ ॥
युग्मम् ॥ शठोऽथ मठमभ्येत्य, परिव्राट् कूटकोटिभृत् । विप्रलंभयितुं शिष्यान्, मूर्खमुख्यानिदं जगौ ॥ ५५८ ॥ अद्याह स्म
समाधिस्थं, शंकरो मां पुरः स्फुरन् । तुष्टस्तेऽस्मि यतिन् ! ध्याना—देकतानमनःकृतात् ॥ ५५९ ॥ हिमाद्रेः स्वयमानीत—
स्फीतदिव्यौषधान्विताम् । पेटां तुभ्यं प्रहेष्यामि, प्रवाहे सिद्धसैंधवे ॥ ५६० ॥ त्वया विनेयैरानाय्या, सा तदौषधयोगतः ।
विद्याः सेत्स्यंति हृद्यास्ते—ऽवश्यं विश्वैकवश्यदाः ॥ ५६१ ॥ तद्युष्माभिर्जवाद् यात्वा, स्वर्वापीं प्रति संप्रति । पेटा झटित्यु-
पानेया, नोद्घाट्या च कथंचन ॥ ५६२ ॥ अहो अस्मद्गुरोर्भाग्य—भंगीसंगीतकं महत् । प्रहिणोति हरो यस्मै, मंजूषां
मंजुलौषधाम् ॥ ५६३ ॥ इत्यमंदतमानंदा—स्ते शिष्यास्त्वरयांतुराः । तुंगं गंगातटं श्रित्वा, तामायांतीं व्यलोकयन्

१ गंगाम्. २ अगमत्. ३ दुष्टो व्रती व्रतिब्रुव . ४ अधुना. ५ जातम्. ६ वृद्ध०—महत्०, ＊सिद्धसिन्धु—गंगा. ७ गत्वा. ८ गंगाम् ९ सम्यक्मानम्. १० अभी-
ष्टलाभार्थं विलंबासहनेन—उत्सुकाः.

॥ ५६४ ॥ युग्मम् ॥ अथ सा सहसाऽऽयांती, मंजूषा क्रीडितांभसि । एतन्महापुरेशेन, सुभीमेन न्यभाल्यत ॥ ५६५ ॥ आनाय्य तां समुद्घाट्य, प्रतिकुंचिकया रयात् । स्वःकन्ये[1] इव ते कन्ये, सुभीमस्तत्र दृष्टवान् ॥ ५६६ ॥ किमेते मूले[2]-जातत्वाद्, विषकन्यात्वतोऽथवा । त्यक्ते गंगाऽर्चनार्थं वा, मुक्ते निर्दूषणे अपि ॥ ५६७ ॥ इत्याद्यनल्पसंदेहो, भूपस्तद्रूप-मोहितः । ते स्त्रियौ जगृहे को हि, स्त्रीरत्नं हस्तगं त्यजेत्? ॥५६८॥ युग्मम् ॥ तत्रान्[3]यस्त्रीद्वयन्यास-मंत्रमेकस्य मंत्रिणः । मुक्त्वाऽन्याऽमात्यमंत्रेण, वनादा[4]नाय्य तत्क्षणम् ॥ ५६९ ॥ क्षिप्त्वा च मर्कटीयुग्मं, तालयित्वा च पूर्ववत् । सुभीमः प्लाव-यामास, पुनः पेटां सरिज्जले ॥ ५७० ॥ युग्मम् ॥ शिष्यास्ते तां समायांतीं, दृष्ट्वा कृष्ट्वा च वेगतः । मठापवरकेऽमुंच-न्नर्थमिव देहिनम् ॥ ५७१ ॥ सुशर्माऽथ कृतोन्[5]माथः, पृथुमन्मथहेतिभि[6]ः । दिनांतं दृष्टवान् स्वस्य, दिनांत[7]मिव भूरिशः ॥ ५७२ ॥ कर्मसाक्ष्यपि सर्वेषां, तदा तत्कर्म वीक्षितुम् । [8]अनीश इव तत्पुण्य[9]-मिवास्तं तरणिर्ययौ ॥ ५७३ ॥ श्रेष्ठिकन्ये प्रति प्रौढ[10]-स्तद्राग[11] इव मूर्तिमान् । रंजयन्निखिलं व्योम, संध्यारागोऽस्फुरत्ततः ॥ ५७४ ॥ परिव्रा[12]जोऽतिदुर्ध्यान-संजातै-र्दुरितैरिव । तमोभिर्व्यानशे लोकं[13]ः, समुद्र इव कज्जलैः ॥ ५७५ ॥ स स्वशिष्यान् जगौ विद्यां, साधयिष्याम्यहं निशि । युष्माभिस्तालयित्वोच्चै-र्द्वारं स्थेयं मठाद्बहिः ॥ ५७६ ॥ कोकू[14]यमाना सा[15] दुष्टा, द्वारमुद्घाटयेद् यदि । तथापि न तदुद्-

१ स्वर्गकन्ये. २ मूलनक्षत्रजाता कन्या कुलनाशिनी भवति अतः. ३ पेटायाम्. ४ आरामात् ५ उत्पादितोन्माद. ६ शस्त्रै. ७ आयुषो दिनान्तमिव-भाग्यान्तमिव वा. ८ असमर्थः. ९ तापसपुण्यमिव. १० उत्कटः. ११ तापसराग इव. १२ तापसस्य. १३ जगत्. १४ भृशं पुनः पुनः वा कवते इति कोकूयते, इति कोकूयमाना ( कु-शब्दे-यङन्तं ). १५ विद्या.

घाव्यं, न भेतव्यं च चेतसि ॥ ५७७ ॥ शिष्यैस्तथा कृते रात्रौ, परिव्राड् दूरितव्रतः[1] । मंजूषाभ्यासमध्यास्य, वक्तुमेवं प्रचक्रमे ॥ ५७८ ॥ आजन्माप्यप्रपंचेन, प्रपंचोऽयं मयाऽखिलः । भवन्निमित्तं विदधे, [2]विधेयेन मनोभुवः ॥ ५७९ ॥ पूज्यतादेवताऽवासे—रिहामुत्र च यद्धितम्[3] । युष्मत्कृते मयाऽमोचि, तृणवत् तदपि व्रतम् ॥ ५८० ॥ तत्[4]प्रसद्यानवद्यांग्यौ ?, युवाभ्यां स्मरतापितम् । निजांगसंगमरसै—र्निर्वाप्यं मामकांगकम् ॥ ५८१ ॥ इत्याद्यालप्य पेटायाः, स द्वारमुदजीघटत् । रुषोत्कटे मर्कटिके, विकटे निर्गते ततः ॥५८२॥ चतुर्भिः कलापकम् ॥ क्षुधिते ते तृषार्त्ते च, संकोचात् प्रच्युते चिरात् । तमसा द्वारमप्राप्य, तमेवासुं विलेगतुः ॥ ५८३ ॥ आभ्यां निभाल्य स्त्रीरूपं, कमैतन्निर्ममेऽमुना । इतीव तस्य वानर्यौ प्राग्व्यदारयतां दृशौ ॥ ५८४ ॥ इदं दुष्कर्मलग्नस्य, परिव्राजोऽस्य नोचितम् । ते तन्नक्रमतो नूनं, त्रोटयांचक्रतुः क्रुधा ॥ ५८५ ॥ अनेनैव सुशर्माऽयं, दध्यौ दुष्टमिति ध्रुवम् । मर्कट्यौ खंडशस्तस्य, हृदयं परितेनतुः ॥ ५८६ ॥ परांगनापरिष्वंग—रंगोऽनेनाऽयमैहत । तस्येतीवाखिलं गात्रं, मुहुर्भक्षयतः स्म ते ॥ ५८७ ॥ इत्थं शाखामृगीभ्यां स, भक्ष्यमाणाखिलांगकः । व्याकुलात्मा सपूत्कारं, स्वशिष्यानिदमूचिवान् ॥ ५८८ ॥ रेरे केनापि पापेन, मद्द्विषा मर्कटीजुषा[12] । मंजूषा प्रेपिता ताभ्यां, दार्यमाणोऽस्मि मेषवत् ॥ ५८९ ॥ द्वारमुद्घाट्यतां तूर्णं, गुरुणा कार्यमस्ति चेत् । नो चेदहं [13]प्रमीतोऽस्मि, युष्माकं तिष्ठतामपि ॥ ५९० ॥ गुरौ ब्रुवापरेऽप्येवं, शिष्यास्तद्वारिताः पुरा । तद्विद्याविकृतं मत्वा, द्वारं नैवोदजी-

१ दूरितं-दूर गतं व्रत यस्य सः. २ वशंगतेन. ३ व्रतम्. ४ तस्मात्. ५ महत्यौ. ६ बन्धनात् छुटिते. ७ दृग्भ्याम्. ८ नक्रं-नासिका. ९ हृदयेन. १० परस्त्र्यालिंगनानन्दः. ११ गात्रेण. १२ युता, प्र. १३ मृतः.

घटन् ॥ ५९१ ॥ ततः स प्लवगीखंडी—कृतांगस्तिलचूर्णवत् । पापीयानिति मत्वेव, प्राणैः सद्योऽपि तत्यजे ॥ ५९२ ॥ दुष्टकर्मा सुशर्माऽसौ, रौद्रध्यानतया मृतः । बभूव राक्षसद्वीपे, राक्षसोऽतिनृशंसहृत् ॥ ५९३ ॥ मृषावादः प्रौढिं दृढयति, शुभं नश्यति, जने-प्रतीतिर्न क्वापि, स्फुरति मनसि ध्यानमशुभम् । अकीर्तिस्त्रैलोक्ये लसति, चिरमंते च कुगतिः, फलान्येतानि स्युर्ननु तनुभृतां वंचनतरोः ॥ ५९४ ॥ ( शिखरिणी ) विज्ञायावधिना स्वस्य, सुभीमं मृत्युकारणम् । स कौणपोऽतिकोपेन, पुरमेतदुपागमत् ॥ ५९५ ॥ निर्भर्त्स्यास्फाल्य च क्ष्माणि, निर्णेजक इवांबरम् । स तं जघान कः शक्तः, सहतेऽन्यपराभवम् ॥ ५९६ ॥ मुक्त्वा ते द्वे स्त्रियौ सर्वान्, पौरांश्च निरवासयत् । द्विषद्गृह्यो हि निग्राह्यो, द्विषत्क्षेपे नयो ह्ययम् ॥ ५९७ ॥ अहो भृशं दुरंतोऽसौ, परदारग्रहाऽऽग्रहः । न स्वस्यैव यतो नाशः, परेषामपि किंतु सः ॥ ५९८ ॥ सा जया विजया सा च, ते आवां श्रेष्ठिनः सुते । राक्षसोद्वासितमिदं, पुरं स्फुरति ते पुरः ॥ ५९९ ॥ एतद्वृत्तं निजं सर्वं, स एवाख्याय राक्षसः । बभाषे प्राग्भवप्रेम्णा, परिणेष्ये युवामिति ॥ ६०० ॥ एकाकिन्यौ पुरे शून्ये, बिभेष्यत इमे इति । सृष्टतदंजनद्वंद्व—मुष्ट्रीत्वस्त्रीत्वकारकम् ॥ ६०१ ॥ कृत्वा श्वेतांजनेनावां, करभीभावभासुरे । स याति राक्षसद्वीपं, द्विस्त्रैर्घस्रैरुपैति च ॥ ६०२ ॥ युग्मम् ॥ त्वराहूतश्चिरादेति, चिराहूतश्च सत्वरम् । विपर्यस्ता स्थितिस्तस्य, वेधसाऽपि न बुध्यते ॥ ६०३ ॥ एवं व्यसनपाथोधा—वावां दैवेन पातिते । न कोऽप्युद्धर्तुमेतस्मा—दस्ति निस्तुषविक्रमः ॥ ६०४ ॥ परमद्यापि नौ व्यापि, किंचिद्भाग्यं विजृंभते । दीनानाथैकजीवातु—र्येनाकृष्टो भवानिह ॥ ६०५ ॥ चिंतयौपयिकं किंचिद्,

१ निर्दयहृदय'. २ विभंगेनेत्यर्थः. ३ शुभद्रपुरस्य राजानम्. ४ रजक इव वस्त्रम्. ५ शत्रुपक्षीय . ६ नीतिः. ७ नाशः. * हृदि, प्र. ८ चेष्टते–विद्यते. ९ विचारय.

येनास्मात् कौणपाधमात् । पंचाननात् कुरंगीव—दावां मोचयसे रयात् ॥ ६०६ ॥ परोपकाराहितराभसिक्या—न्न स्वस्य कष्टं विमृशंति संतः । किमंगघर्षेण जगज्जनानां, न चंदनास्तापभरं हरंति ॥६०७॥ (उपेन्द्रवज्रा) इत्युच्चैश्चाटुकोटिभि–स्ताभ्यां स्त्रीभ्यां स भारितः । सुमित्रश्चिंतयामास, दाक्षिण्यैकमहोदधिः ॥ ६०८ ॥ एकतः क्रूरकोटीरः, स कीनाशो हरत्यसून् । अन्यतः शरणं प्राप्ते, त्राणार्हे स्त्रीतमे इमे ॥ ६०९ ॥ एतदर्थं वरं प्राणान्, मुंचे सत्वरगत्वरान् । न पुनः प्रार्थनाभंगं, कृत्वा गच्छामि रंकवत् ॥ ६१० ॥ अध्यास्य धैर्यमूर्जस्वि, नयाम्येते पुरं निजम् । रक्षिता भविता कोऽपि, त्रयाणां पुण्यनैपुणात् ॥ ६११ ॥ राक्षसेनास्मि मुक्तश्चेत्, तदैते दयिते मम । अथ तेन हतस्तर्हि, परार्थाः सांधवोऽसवः ॥ ६१२ ॥ सुमित्रः पृष्टवान् कन्ये, स कदैष्यति राक्षसः । अद्येति ताभ्यामुक्तेऽसौ, स्माहाऽऽकार्यस्तदा द्रुतम् ॥ ६१३ ॥ स्त्रीभ्यां प्रोचे स गंधेन, ज्ञात्वाऽत्र त्वां हनिष्यति । अतोऽधः कोशसदने, स्थित्वैतां क्षपयं क्षपाम् ॥ ६१४ ॥ एतां तन्मतिमादृत्य, करभीकृत्य च स्त्रियौ । सुमित्रः कोशमध्यास्य, निश्चेष्ट इव तस्थिवान् ॥ ६१५ ॥ विभावर्यां विभातायां, सुमित्रो निर्गतस्ततः । ते नारीकृत्य पप्रच्छ । नैशं कीनाशचेष्टितम् ॥ ६१६ ॥ ऊचतुस्ते निशि प्राप्तः, क्रव्याद् गन्धं नरोद्भवम् । लब्ध्वा कोऽपि नरोऽत्रेति, जल्पन् दिक्ष्वक्षिपद् दृशौ ॥ ६१७ ॥ गंधोऽयमावयोरेव, नार्योर्नान्योऽस्ति कश्चन । मुमूर्षुः कः समभ्येति, गुहागर्भं द्विपाद्द्विपः ॥ ६१८ ॥ इत्यस्मद्वचसा सोऽति—प्रतीतो यामिनीं स्थितः । पुनः शीघ्रं समागच्छे—रित्युक्तोऽगान्निजं

---

१ रभस ( औत्सुक्यं ) प्रयोजनमस्येति राभसिकस्तस्य भाव राभसिक्यं तस्मात्. २ भारयुक्त कृतः, प्रेरित. ३ अवलंब्य. ४ धन्या भविष्यन्ति प्राणाः ५ क्षपये. क्षिपाम्, प्र. ६ आश्रित्य. ७ रात्र्यां गतायाम्. ८ क्रव्यं–मासमत्ति–भक्षयतीति क्रव्याद्–राक्षसः. ९ गुफामध्यम्. १० सिंहस.

गृहम् ॥ ६१९ ॥ युग्मम् ॥ अथांजनद्वयं लात्वा, दासेरीकृत्य ते स्त्रियौ । कोशाऽऽत्तसद्रत्नभृते, गौण्यौ तत्र निवेश्य च ॥ ६२० ॥ अध्यास्य[1] करभीमेकां, द्वितीयां च करे श्रयन् । सुमित्रः प्रस्थितो धीरो, महाशालपुरं प्रति ॥ ६२१ ॥ युग्मम् ॥ कौणपापात[2]भीत्या स, क्रामन् मार्गं समीरवत् । मध्येकांतारमद्राक्षी—न्नरमेकं तरोस्तले ॥ ६२२ ॥ अयं रविरिवौजस्वी[3], सोमवत् सौम्यदर्शनः । योगीव ध्यानवद्धात्मा, चित्रन्यस्त इव स्थिरः ॥ ६२३ ॥ नूनं लोकोत्तरस्फूर्तिः[4], सिद्धः कश्चन दीप्यते[5] । रक्षिष्यति च मां भीत—मस्माद् राक्षसवैशसात्[6] ॥६२४॥ ध्यात्वेति करभीद्वंद्वं, वद्धाऽऽसन्नतरे तरौ । नमस्यामास सोल्लासः, सुमित्रस्तं नरोत्तमम् ॥ ६२५ ॥ त्रिभिर्विशेषकम् ॥ ध्यानं भित्त्वाऽऽशिषं दत्त्वा, सिद्धस्तं पृष्टवान् वद । कस्माद् वत्स ! सचिंतोऽसि ?, सोऽथ प्रीतस्तमूचिवान् ॥ ६२६ ॥ दवज्वालेव मेऽस्त्युच्चै—श्चिंता संतापकारिणी । यदि तत्रांबुदायेथाः, संपृच्छेथास्तदा प्रभो ! ॥६२७॥ स्मित्वाऽभ्यधत्त सिद्धस्तं, संदिग्धिः[7] केयमस्ति ते । शक्तिं चमत्कारकरीं, शृणु कांचन मामिकाम् ॥ ६२८ ॥ भूतव्यंतरयक्षराक्षसकुलं स्तभ्नामि हुंकारतः, सूर्याचंद्रमसौ करोमि च करे, स्रोतष्पतिं[8] शोषये । आकर्षामि समं सुरैः सुरपतिं, नागेश्वरं सोरगं, विश्वं चान्यथयामि[9], नास्ति मम भोः ! किंचित् क्वचिद् दुष्करम् ॥६२९॥ (शार्दूल०) तदवष्टंभसंतुष्टो, रक्षोवृत्तांतमादितः । विज्ञप्य तस्मा[10]दभयं, सुमित्रस्तमयाचत ॥६३०॥ तावदुद्घाटितद्वार—पुरवद् विवृताननः । ऊर्ध्वीकृतभुजः शैल, इव शृंगाग्रपादपः ॥६३१॥ ज्वलद्दृष्टिझलत्कार[11]—तडिद्दंडेन मंडितः ।

१ आरुह्य. २ आपात—आगमनम् ३ तेजस्वी. ४ विकाश . ५ शोभते ६ वधकात्—घातकात्. ७ संदेह . ८ समुद्रम्. ९ अन्यथा करोमि—विपरीतं करोमि, १० राक्षसात्. ११ झलत्कार.—प्रकाश:.

ब्रह्मांडभांडनिर्भेदि—ध्वानो घन इवासितः[1] ॥ ६३२ ॥ ऊर्ध्ववर्धिष्णुमूर्धाऽभ्र-मुच्चमप्युच्चयन्निव । भूरिभारामपि क्षोणीं, पद्भरैर्भारयन्निव ॥ ६३३ ॥ अतिरौद्रतया मृत्यु—मपि संत्रासयन्निव । रोपद्विगुणवेगाढ्यः, पृष्ठे प्राप स कौणपः ॥६३४॥ चतुर्भिः कलापकम् ॥ कुर्वन्निव जगच्छब्द—मयं किलकिलारवैः । अमात्यपुत्रमाचष्ट, सोऽथ दुष्टशिरोमणिः ॥ ६३५ ॥ रे पाटच्चरकोटीर ![2], सामान्यं साहसं न ते । मृत्योरिव मम स्थानं, यः क्रांत्वाऽहरत स्त्रियौ ॥ ६३६ ॥ सुभीमो हृतवान् यः प्राग्, मत्पत्न्यौ स यमातिथिः । सकुटुंबो मया चक्रे—ऽधुना त्वं च करिष्यसे ॥ ६३७ ॥ मां विराध्य कियत्कालं, जिजीविषसि रे जड ! । मृगारातिं पराभूय, किं जीवति मृगश्चिरम् ? ॥ ६३८ ॥ दृष्टवान् यदि मां न त्वं, तर्हि किं नापि शुश्रुवान् । राक्षसोऽहं जगज्जग्धुं, कृतांतस्याग्रजोऽस्मि रे ॥ ६३९ ॥ एकग्रासं करोमि त्वां, शरण्येन[3] सहामुना । विब्रुवन्निति कीनाश—स्तौ द्वौ जग्धुमधावत ॥ ६४० ॥ पंचभिः कुलकम् ॥ धीरयित्वा[4] कुमारं द्राग्, भयार्त्तं हुंकृतैस्त्रिभिः । मंत्राक्षरैरिवामोघैः, सिद्धः स्तंभयति स्म तम्[5] ॥ ६४१ ॥ नाराचैरिव[6] तीक्ष्णाग्रै—र्हुंकारैस्तैः स कौणपः । कीलिताखिलकायोऽभूत्, काष्ठस्तंभ इव स्थिरः ॥६४२॥ सोऽथ व्यथाऽऽतुरोऽवोचत्, सिद्ध ! स्तंभाद् विमुंच माम् । जातं सत्यमिदं 'संति, रक्षसामपि भीषकाः' ॥ ६४३ ॥ सिद्धोऽभ्यधाद् विमुंचास्मिन्, वैरं त्वं चेन्मुमुंक्षसे[7] । आचचक्षे नृचक्षास्तं[8], मत्प्रिये तर्हि दापय ॥ ६४४ ॥ सिद्धः प्रोचे क्व ते कांते, त्वयाऽपि प्राच्यजन्मनि । श्रेष्ठिनं वंचयित्वैव, गृहीते तस्य नंदने ॥ ६४५ ॥

---

१ मेघ. २ चौरशिरोमणे !. ३ रक्षकेण. ४ धीरं करोति धीरयति, धीरयित्वा–धैर्ययुक्तं कृत्वा. ५ राक्षसम्. ६ सर्वलोहमयबाणैः. ७ मोक्तुमिच्छसि. ८ नॄन् चष्टे–पश्यति भक्ष्यत्वेनेति नृचक्षाः–राक्षसः.

अद्यापि त्वं ततोऽनार्यात्, पारदार्यान्न तुष्यसि । व्रतभ्रंशः कुमृत्युश्च, रक्षस्त्वं च यतस्तव ॥ ६४६ ॥ वरं वह्न्यः पत्यो, वरमभिसृताः पण्यललनाः, वरं षंढीभावो, वरमतिशुचिब्रह्मचरणम् । वरं क्ष्वेडग्रासो, वरमनशनं, शुद्धमनसां, भवद्वैतस्तेनो, न वरमपरस्त्रैणहरणम् ॥६४७॥ (शिखरिणी) क्व व्रतं निर्वृतिप्रापि, क्व भोगा नरकप्रदाः । तथापि भोगाऽऽभोगार्थी, लोकश्चेष्टितमस्य धिक् ॥ ६४८ ॥ को विदग्धो व्रतं भंक्त्वा, विषयानभिलष्यति । कश्चिंतामणिमाचूर्ण्य, गृह्णीते कर्करानहो ॥ ६४९ ॥ किंचैते कुत्सनीयांग्यौ, स्त्रियौ मानुषभावतः । त्वं सुरत्वेन रम्यांगः, संबंधः कथमस्तु वः ॥ ६५० ॥ तत्सुमित्रे रुपं त्यक्त्वा, दत्त्वा चैते मृगीदृशौ । भंक्त्वा शमामृतांभोधौ, स्वैरं राक्षस ! रम्यताम् ॥ ६५१ ॥ सिद्धवाक्यैः प्रबुद्धः सन्, स्तंभात् तेन विमोचितः । स्त्रीकार्य करभीयुग्मं, सुमित्रं कौणपोऽवदत् ॥ ६५२ ॥ एते प्रिये गृहाण त्वं, तत्पुरं च महापुरम् । निवास्य भुंक्ष्व तद्राज्यं, वैरं मुक्तं मया त्वयि ॥ ६५३ ॥ सिद्धं सुमित्रं नार्यौ च, क्षमयित्वाऽतिशांतधीः । स्वस्वरूपं च संदर्श्य, तिरोऽधत्त निशाचरः ॥ ६५४ ॥ सुमित्रोऽथाभ्यधात् सिद्धं, त्वत्प्रसादरसायनैः । उज्जीवितोऽस्म्यहं रक्षः—सन्निपातभयादितः ॥ ६५५ ॥ सिद्धीर्विद्याः कलाश्चाग्र्याः, सर्वाः संमील्य वेधसा । मन्ये कृता तनुस्तेऽसौ, नो चेच्छक्तिरियं कुतः ॥ ६५६ ॥ अमूर्तिमानियत्काल—मुपकारः श्रुतो मया । त्वद्दर्शनादिदानीं स, मूर्तिमानिति मे मतिः ॥ ६५७ ॥ ततोऽनुज्ञाप्य सिद्धं त—मुष्ट्रीकृत्य पुनः स्त्रियौ । तत्रारूढः सुमित्रोऽगा—न्महाशालपुरं सुखम् ॥ ६५८ ॥ मणीन् कत्यपि विक्रीय, गृहीत्वा चाग्रिमं गृहम् । परिणीय च ते कन्ये, बुभुजे स कृती सुखम् ॥ ६५९ ॥ चिंतामणीयते

१ परदारगमनात्. २ कौणपत्वम्. ३ पारदार्यात्. ४ आश्रिता. ५ भवद्द्वयचौर. ६ लोकस्य. ७ सिद्धेन. ८ सुभद्रपुरम्. ९ देवस्वरूपं-देवरूप दर्शयित्वा.

यस्य, पुण्यं पूर्वभवार्जितम् । तस्य स्यात् सुलभं सर्वं, देवस्येव समीहितम् ॥६६०॥ इतः सा रतिसेनापि, वीक्ष्याप्राप्तं निजं प्रियम् । पुरे बाह्ये च सर्वत्र, दासीभिरगवेषयत् ॥ ६६१ ॥ अपश्यंती प्रियं कापि, त्रिदिनीं त्यक्तभोजना । रथांगीव कृशांगी सा, तस्थौ दुःस्था वियोगतः ॥६६२॥ सुमित्रश्चेद् गतः किं ते, न्यूनमन्यः प्रियो न किम्? । न ह्येकस्मिन् गते हंसे, स्यादहंसा सरस्यहो ॥ ६६३ ॥ इत्यादिजननीवाक्याद्, विस्वा तल्लोभवल्गितम् । दंदह्यमानहृदया, सोपालम्भवतीति ताम् ॥ ६६४ ॥ मन्ये त्वयैव मत्प्रेयान्, याचित्वा किंचनाधिकम् । वंचयित्वा गृहीत्वा वा, किंचिन्निर्वासितो गृहात् ६६५ ॥ अन्यथा म्रियमाणोऽपि, न मां मुंचति मत्प्रियः । गच्छन्नप्यस्तमुज्झेत् किं, भासं भासांपतिर्निजाम् ॥ ६६६ ॥ यथाकामममुष्मिन् स्वं, ददत्यपि सुपर्ववद् । अत्रोप्सीर्हृदि नाद्यापि, धिक् त्वां लोभमहोदधिम् ॥ ६६७ ॥ औदार्येण महान्, गुणेन गुणवांस्त्यागेन याञ्चापरो, वाणिज्येन वणिक्, सुखेन तनुभृत्, कोशेन पृथ्वीपतिः । नीरेणांबुनिधिः, श्रुतेन विदुरः, काष्ठेन धूमध्वज—स्तृप्तिं कर्हिचिदेति पण्यवनिता द्रव्येण नैव ध्रुवम् ॥६६८॥ (शार्दूल०) अद्याप्याशा तवेयं यद्, वेश्यात्वं धास्यते सुता । विदांकुरु प्रतिज्ञां मे, मातस्त्वमवधानतः[3] ॥ ६६९ ॥ अपि ज्वालोज्ज्वलो वह्नि—रालिंगति मदंगकम् । रूपेण स्मरतुल्योऽपि, सुमित्रान्नापरः पुमान् ॥ ६७० ॥ इत्यालपंती दुःखेन, विलपंती च पुष्कलम् । कथंचिद् रतिसेना सा, स्वज्ञातीयैरभोज्यत ॥ ६७१ ॥ न स्नाति नो मधुरमत्ति वेरं न वस्ते, नांगं विभूषयति न स्मयते न वक्ति । गीतादिरंगरहिता विरहार्दिता सा, वेश्याऽप्यहो कुलवधूरिव तिष्ठति स्म ॥६७२॥ (वसंत०) सुमित्रमणिमार्गित्वा, कुट्टिन्यपि यथाविधि । याचंती

१ तृप्ता नाभूः. २ दानग्रहणेनेत्यर्थ. ३ सावधानतया. ४ ज्वलन्तम्. ५ म्रियते यत् तद् वर-वर्ण्यं नृपः कर्मण्यपू, न हसति.

धनमासाद्य—हीनत्वाशाप किंचन ॥ ६७३ ॥ मणिर्धनं ददौ नैव, जामाता वंचनाद् गतः । सुता सतीत्वमापन्ना, सर्वश्र-
ष्टाऽन्वशोचत सा ॥ ६७४ ॥ सुमित्रोऽन्येद्युरासेभ्यो, रतिसेनां रतीमिव । श्रुत्वा स्मृत्वा च तं स्वीय—मणिग्रहणसंगरम्
॥ ६७५ ॥ ऐंद्रीं लीलां वहन्नंगे, रंगत्तुंगतुरंगमः । स्वं विदर्शयिषुः प्राप्तो, रतिसेनागृहाग्रतः ॥ ६७६ ॥ युग्मम् ॥ यांतं
जामातरं वीक्ष्य, वृद्धा द्वाराग्रमागता । प्रीतिमेक्षा समाहासीत्, कोकिलेन कलस्वरा ॥ ६७७ ॥ मंत्रिपुत्रोऽपि तां वीक्ष्य,
संभ्रांत इव नेमिवान् । कृत्रिमं साऽथ रुदती, जरती गदति स तम् ॥ ६७८ ॥ अध्वन्योऽपि पयः पातुं, सदने क्षणमा-
स्थितः । अनुक्त्वा न प्रयात्येव, प्रयाणायोत्सुकोऽप्यलम् ॥ ६७९ ॥ त्वं तु निःसीमया भक्त्या, प्रीयमाणोऽप्यहर्निशम् ।
स्वामीव मंदिरे तिष्ठ—न्ननुक्त्वा जग्मिवान् कथम्? ॥ ६८० ॥ सख्यं साप्तपदीनं स्यात्, सतामिति जनश्रुतिः । जामाताऽपि
कृतस्त्वं तु, तेनाद्यापि प्रपद्यसे ॥ ६८१ ॥ यदि नाजीगणस्त्वं मां, कठोरां छितशंसनात् । त्वदेकजीवां मत्पुत्री—मपि
नाजगणः कथम्? ॥६८२॥ 'घनेनेव लता' त्यक्ता, त्वया यां त्वत्प्रियाऽऽश्रिता । तां दशां तत्त्वनुर्वेक्षी, शेषं किंचिदहं ब्रुवे
॥ ६८३ ॥ दह्यमानमिवोच्चैर्हृत्, पत्नी ते विरहाग्निना । धारालेनाश्रुवर्गेणै, मेघमालेव सिंचति ॥ ६८४ ॥ त्वामेव पर-
मात्मानं, पश्यंती स्वहृदि स्थितम् । सा मीलितदृगाभाति, योगिनीव वियोगिनी ॥ ६८५ ॥ वत्स ! स्वच्छ ! तदागच्छ,
स्वदर्शनरसायनैः । समुज्जीवय भूयोऽपि, निर्जीवामिव तां प्रियाम् ॥ ६८६ ॥ अहो आवर्जनायुक्ति—राज्ञो कपटपाटवम् ।



१ पश्चात्तापं करोति स्म. २ प्रतिज्ञाम्. ३ प्रेमनम्रा. ४ सप्तभिः पदैः उत्पादितौ भवति इति साप्तपदीनं—सख्यं-सौहार्दम्. ५ सौहार्दम्. ६ दशाम्. ७ अश्रुप्रवाहेण-अश्रुप्रवाहेण. ८ आवर्जनाया युक्तिः-प्रसादनस्य रीतिलभ्यैः.

अहो वंचनवैचित्र्य—मस्यां वैयात्यमप्यहो ॥ ६८७ ॥ मायाविन्यां मयाऽप्यस्यां, मायाऽऽश्रेयेति चिंतयन् । कृतावहित्थो जामाता, वाचं प्रोवाच तां प्रति ॥ ६८८ ॥ युग्मम् ॥ प्रीतिं वेद्म्येव भावत्कीं, परं सार्थवशंवदः । प्रस्थितस्त्वरया मातस्तेनाहं त्वां न पृष्टवान् ॥ ६८९ ॥ विस्मरत्यपरं जातु, त्वदुपज्ञं तु गौरवम् । वज्रलेपवदालीनं, मन्मनो विस्मरेत्कथम्? ॥ ६९० ॥ इति मर्माविधा तस्य, वाचा चित्ते चमत्कृता । हसंती तं करे कृत्वा, सा स्वमंदिरमानयत् ॥ ६९१ ॥ गलद्विलासकल्लोलां, सल्लावण्यरसैः कृशाम् । कश्मलाम्बरसेवालां, विगतोज्वलहंसकाम् ॥ ६९२ ॥ वीक्ष्य ग्रीष्मसरिद्देश्यां, वेश्यामपि सतीं प्रियाम् । सुमित्रश्चित्रितस्वांतः, प्रीतिवाक्यैरतूतुषत् ॥ ६९३ ॥ युग्मम् ॥ कांते प्राप्ते प्रियाऽप्यैच्छत्, तस्य रूपं वचोऽपि च । द्रष्टुं श्रोतुं च वाहुल्यं, नेत्रयोः श्रवसोरपि ॥ ६९४ ॥ वियोगे द्विगुणीभूत—प्रेमस्थैमभृतोस्तयोः । निस्सीमशर्मकिर्मीरो—ऽगलत्कालः कियानपि ॥ ६९५ ॥ रतिसेनां कदाप्यूचे, स जिघृक्षुर्मणिं निजम् । किंचित् कौतुकमातन्वे, प्रिये ! त्वं चेन्न कुप्यसि ? ॥ ६९६ ॥ सा स्माह केयं मत्पृच्छा, प्रिय ! प्राणेश्वरत्वतः । मम प्राणास्तवैवामी, नियुज्यंतां यथारुचि ॥ ६९७ ॥ ततस्तां करभीकृत्य, सिताञ्जननिवेशनात् । अदृष्टो वृद्धया प्रातः, सुमित्रः स्वगृहं ययौ ॥ ६९८ ॥ तयोर्मुखं क्षालयितुं, गृहीत्वा कनकालुकाम् । कुट्टिन्युपरि संप्राप्ता, करभीमैक्षताग्रतः ॥ ६९९ ॥ संभ्रांता हृदि दध्यौ च, संजातं किमिदं हहा । पुत्रीपुत्रीपतिस्थाने, करभी यन्निभाल्यते ॥ ७०० ॥ सत्याऽस्ति करभी नेयं, पिशाची

१ निर्लज्जत्वम्. २ कृतहृद्गतभाव, *हंसको—नूपुरं पक्षे हंसपक्षी ३ प्राचुर्यम्. ४ प्रेमस्थिरत्वम्. ५ विचित्र. ६ अगमत् ७ गृहीतुमिच्छु. ८ पुत्रीपुत्रीपत्यो. ९ सुवर्णकलशं (झारी).

राक्षसी च वा । स्त्रीपुंसयोर्द्वयं[1] जग्ध्वा, रूपमेतदशिश्रियत् ॥ ७०१ ॥ हा जामातस्तनूजे ! हा, गेहांतर्गतयोरपि । किं जातं ? युवयोर्दैवाद्, यदियं [2]वां पदे स्थिता ॥ ७०२ ॥ सोरस्ताडं सवाष्पं च, विलपंती जरत्यथ । आत्मीयपरिवारस्य, तदद्भुतमदीदृशत् ॥ ७०३ ॥ तद्दर्शनाद् विमृश्योच्चै—स्तामाचष्ट परिच्छदः । अधुनैव सुमित्रोऽय—मितः प्राप्तः स्वमंदिरम् ॥ ७०४ ॥ सोचे पूर्वापमानेन, वैरशुद्धिचिकीरिव । इदं विडंवनं कृत्वा, स धूर्तो गतवान् गृहात् ॥ ७०५ ॥ दृश्यतां यद्ययं गेहे, स्यात् तदाऽस्यैव चेष्टितम् । मूर्खोऽपि क्षमते नाप—मानं किं नु कलानिधिः ॥७०६॥ ततः सुमित्रं वेश्मस्थं, ज्ञात्वा तद्द्वारि वारिता । वृद्धा ध्यात्वा च तद्बलं, तत्कृतं मन्यते स्म तत् ॥ ७०७ ॥ गत्वा च तत्क्षणं कोपाद्, वीरांगदनृपाग्रतः । 'वसंत्यपि पुरे' मुष्टाऽ—स्मीति पूत्कृतवत्यलम् ॥ ७०८ ॥ केन मुष्टेति राज्ञ्पृष्टा, वाष्पाम्बुप्लावितेक्षणा । करभीकृतिपर्यन्तं, सा सुमित्रकथां जगौ ॥ ७०९ ॥ सुमित्रनामश्रवणा—न्मित्रं स्मृत्वा निजं नृपः । तां तदाक्षिदिनं रूप—वयसी अपि पृष्टवान् ॥ ७१० ॥ मित्रसंवादि तत्सर्वं, श्रुत्वा वेश्याननात् प्रभुः । आजूहवज्जवाद् भृत्यैः, सुमित्रं मंदिरस्थितम् ॥ ७११ ॥ वहुभिर्दिवसैरद्य, नृपो दर्शिष्यते मया । इत्यादायोपदां दिव्यां, स वीरांगदमभ्यगात् ॥ ७१२ ॥ दूरादपि तमालोक्य, नृपतिः प्रीतमानसः । भुजोपपीडमालिंग्य, स्वासनार्धं न्यवीविशत् ॥ ७१३ ॥ तयोः [5]प्रेतायते गोष्ठी, यावत् पीयूषवर्षिणी । तावदाचष्ट सा दुष्टा, स्पष्टयंती स्वधृष्टताम् ॥ ७१४ ॥ देव ! दृष्टं त्वयैतस्य, धौर्त्यं दर्शनमात्रतः । त्वामप्ययं वशीचक्रे, ददेऽस्यार्धासनं यतः ॥ ७१५ ॥ कारयित्वा सुतां सज्जां, स्वामिन्निष्कास्यतामयम् । करिष्यत्यन्यथा

१ युगलम्. २ युवयो स्थाने. ३ नूनम्. प्र. ४ "यस्य च भावेन भावलक्षणम्" २।३।३७॥ इति सप्तमी. ५ विस्तारं प्राप्नोति. ६ स्वनिर्लज्जताम्. ७ त्वया ददे. ८ धौर्त्यात्.

नूनं, पुरेऽनर्थं पुनस्तव ॥ ७१६ ॥ स्मित्वाऽपृच्छन्नृपो मित्र !, व्यडंव्येतत्सुता किमु ?, । स प्रोचे स्याद् यथा व्यक्ता, कला
नास्यां व्ययोऽपि च ॥ ७१७॥ खिन्ना वेश्याऽवदद् गल्ल-झलरीवादनैरलम् । कला सर्वाऽपि ते ज्ञाता, सज्जायाऽऽशु सुतां
मम ॥ ७१८ ॥ मंत्रिपुत्रोऽभ्यधाद् दुष्टे ?, कलेयं कियती मम । यावत् त्वां रासभीकृत्य, पुरविष्ठां न चारये ॥ ७१९ ॥
नो चेदर्पय तद् रत्नं, मम रे पश्यतोहरे ! । तच्छ्रुत्वाऽप्रश्नयद् भूपः, किं रत्नं मित्र ! कथ्यताम् ॥ ७२० ॥ सोऽवद-
न्मार्गमध्येऽभू—न्मज्जनादिविधिर्यतः । तद् रत्नमनया जह्रे, पापिन्या मम जीववत् ॥७२१॥ वीरांगदोऽभ्यधात् क्रोधाद्,
रे त्वयाऽकारि गीरियम् । "ग्रामोऽपि ज्वाल्यते स्वैर्न, व्याहारोऽपि विधीयते" ॥७२२॥ आनीयतां मणिस्तूर्णं, संप्रत्येव न
चेदितः । निर्लाव्य नक्रश्रवणं, पुरान्निर्वासयिष्यसे ॥ ७२३ ॥ साऽथ दीना समानीय, कोशाद् रत्नं समर्प्य च । सुमित्रं
क्षमयामास, कलाढ्ये हि बलं किमु ? ॥ ७२४ ॥ गोष्ठी करिष्यते पश्चा-देतत्पुत्र्यनुकंप्यताम् । इत्युक्त्वा प्रहितो राज्ञा,
सुमित्रस्तद्गृहं गतः ॥ ७२५ ॥ कृष्णाञ्जनं निवेश्याक्ष्णोः, प्राग्रूपां स प्रियां व्यधात् । साऽपि विज्ञाय तद् गाढं, स्वसवि-
त्रीमतर्जयत् ॥ ७२६ ॥ रतिसेनां समानीय, स मानी निजवेश्मनि । स्त्रीषु मुख्यत्वमातेने, सतीत्वस्य फलं ह्यदः ॥७२७॥
महामात्यपदं दत्त्वा, सुमित्राय बलान्नृपः । अदीदृशत् फलं प्रेम्णः, सन्मैत्री हि किमुच्यते ? ॥७२८॥ वीरांगदेन पृष्टोऽथ,

---

१ वेश्याया–रतिसेनायाः. २ नाशः. ३ कुट्टिनी. ४ प्रश्नं करोतीति प्रश्नयति स्मेत्यर्थः. ५ आवयोरिति शेष.. ६ रत्नात्. ७ वाणी–लोकोक्तिः. ८ स्वयम्.
९ उक्ति–ग्रामो ज्वलति ग्रामो ज्वलतीति कथनं–बुम्बारव इत्यर्थ १० त्वया इतिशेष . ११ मया इतिशेषः. १२ आवाभ्यामितिशेष.. १३ त्वया इतिशेष.

यक्षदत्तमणीकथाम् । स्त्रीप्राप्तिवृत्तं स्वकीयं, चमत्कारि सुहृज्जगौ ॥ ७२९ ॥ व्यजिज्ञपच्च शून्यं चे-न्नगरं तन्महापुरम् । वास्यते तर्हि तद्राज्यं, लक्ष्मीप्राज्यं स्वसाद् भवेत् ॥७३०॥ एतत् साध्विति जल्पित्वाऽ-नुज्ञातो जगतीभुजा । अनेकानीकसश्रीकः, सुमित्रः प्राप तत्पुरम् ॥ ७३१ ॥ निष्कासितं निशाटेन, तज्जनं पार्श्ववासिनम् । आनाय्य न्यायवर्तिष्णुः, स तत्पुरमवासयत् ॥ ७३२ ॥ देशेऽपि तत्र सर्वत्र, श्रीवीरांगदशासनम् । यशःस्तोमैः समं स्वीयैः, स सुखं समतिष्ठिपत् ॥७३३॥ तत्राधिकारिणं न्यस्य, कोशं चादाय धीसखः । उपेत्योपायनैर्दिव्यै-र्वीरांगदमतूतुपत् ॥ ७३४ ॥ सुमित्रमंत्रिमंत्रेण, दुःसाधानप्यरीन्नृपः । असाधयत् सुखेनैव । मुद्गलानिव मांत्रिकः ॥ ७३५ ॥ कराला अपि सीमाला, भूपालास्तस्य शासनम् । नागेन्द्रस्येव भोगीन्द्रा, नाऽवामंसत कर्हिचित् ॥ ७३६ ॥ भीतिदुर्भिक्षदुष्कर्म-परचक्रसमागमाः । कथायामेव तद्राज्ये, श्रुता लोकैर्न वीक्षिताः ॥ ७३७ ॥ भूपस्य सचिवस्यापि, प्रतिबिंबाविवात्मनः । हेमांगदः सुबुद्धिश्च, क्रमाज्जातौ सुतावुभौ ॥ ७३८ ॥ राजपाट्यां व्रजन् मंत्रि-युतो वीरांगदोऽन्यदा । श्रीविशालरसालस्य, छायायां स्वेच्छया स्थितम् ॥ ७३९ ॥ श्रीपार्श्वार्हद्गुणग्राम—कामनीयकगर्भितम् । गीतं गायद् व्यलोकिष्ट, मिथुनं किन्नराह्वयम् ॥७४०॥ युग्मम् ॥ तत्कंठमधुरत्वेन, जिनगीतेन च क्षणम् । विंदन्नमंदमानंदं, निष्पंद इव सोऽभवत् ॥ ७४१ ॥ दध्यौ च गीते वादित्रेऽनंतं पुण्यमिति श्रुतिः । सत्यैव येन चित्तं स्यात्, स्वस्यान्येषामपि स्थिरम् ॥ ७४२ ॥ मिथुनं तदलंकृत्य, निजाज्ञाऽऽभरणार्पणात् । श्रीपार्श्वः संप्रति क्वास्ती—त्यपृच्छत् पृथिवीपतिः ॥७४३॥ अवोचत् किन्नरो देव !, भवदीयात् पुरादितः ।

१ च स्वीयम्. प्र. २ सुभद्रपुरम् ३ स्वाधीनम् ४ राक्षसेन. ५ रोहिपतृणादीन् (सर्पादीन् वा) ६ ग्राम'-समूह ७ किन्नर-अर्हद्गासकविशेष इति हेमचंद्र',

तीर्थोऽस्ति
आस्ते षोडशयोजन्यां, श्रीपार्श्वो विहरन् महीम् ॥ ७४४ ॥ पुनर्वीरांगदोऽध्यासीद्, धन्यंमन्यः स मंडलः । तीर्थोऽस्ति
जंगमो यस्मि-न्नाश्वसेनिः स्वयं जिनः ॥ ७४५ ॥ जनाः सुमनसस्तेऽपि, पार्षदत्वमवाप्य ये । आसौहित्यं पिबंत्येव, तद्व्या-
ख्यानसुधारसम् ॥ ७४६ ॥ राज्यश्रीमदिरास्वादा-दहं क्षीबवदन्वहम् । आत्मानमपि नो वेद्मि, तन्निनंसाकथैव का ॥७४७॥
ततो गत्वा स्वयं तत्र, तदुपास्यारसायनैः । कृशीयः पुण्यदेहं स्वं, मेदुरं विदधेऽधुना ॥ ७४८ ॥ अथ मंत्रिषु विन्यस्य,
राज्यं सैन्यान्वितो नृपः । सुमित्रेण सहाचाली-दाश्वसेन्यं जिनं प्रति ॥ ७४९ ॥ जानुदघ्नीर्नदीः कुर्व-न्नाव्या द्विपमदाऽ
म्बुभिः । दुस्तराः सुतराश्चोरु-सैन्योत्खातरजश्चयैः ॥ ७५० ॥ युग्मम् ॥ श्रीपार्श्वोपासनौत्सुक्याद्, गच्छंस्तुच्छेतरत्वरम् ।
सैन्यं निवेश्य कांतारे, क्वापि वीरांगदोऽवसत् ॥७५१॥ तत्राकस्माद् दवो लग्नो, ज्वालाजालजटालितः । भोक्तुं घस्मरवद्
भक्ष्यं, कक्ष्यं दग्धुं प्रचक्रमे ॥ ७५२ ॥ दह्यमानार्द्रवृक्षोत्थै-र्धूमैरूर्ध्वं प्रसृत्वरैः । विहिता श्यामता व्योम्नो, मन्येऽद्यापि
न गच्छति ॥ ७५३ ॥ स्फुटद्वेणुस्वनव्याजात्, पूत्कारानिव निर्ममे । समंताद् दह्यमानं तद्, वनं दावहविर्भुजा ॥७५४॥
रुरोध भूपतेः सैन्यं, स सर्पन् दावपावकः । वार्धिपूर इवोद्दामा, द्वीपमध्यगतं जनम् ॥७५५॥ अभ्रंलिहासु, ज्वालासु वप्रंतीषु
चतुर्दिशम् । तत्सैन्यं शुशुभे वाणा-दैत्येंद्रपुरलोकवत् ॥७५६॥ अभितो ज्वलने लग्ने, जनो निर्यातुमक्षमः । संभ्रमी बंभ्रमीति
स्म, तत्रैवाऽऽवर्त्तनीरवत् ॥ ७५७ ॥ अग्निना व्याप्यमानानां, सैनिकानां प्रसृत्वरान् । श्रुत्वाऽऽक्रंदान् भृशं दूनो, दध्यौ

१ देशः २ तृप्तिं यावत्. ३ मत्तवत्. ४ अतिकृशम् ५ पुष्टम्. ६ जानुप्रमाणाः. ७ नावा तार्याः. ८ भक्षकवत्. ९ कक्षे-वने भवं कक्ष्य-तृणम्. १० वंश०. ११वप्रंतीषु. प्र. वप्र इवाऽऽचरतीति वप्रति, वप्रतीति वप्रन् सा वप्रंती तासु. १२वाणासुरराजधानी(शोणितपुर)स्थलोकवत्, १३पुनः पुन अतिशयेन वा भ्रमति स्म.

वीरांगदो हृदि ॥ ७५८ ॥ वंदारुरतिभावेन, श्रीपार्श्वं प्रस्थितोऽस्म्यहम् । तदन्तरायकारीव, दावस्त्वेष दिधक्षति ॥७५९॥ तद्भक्ता नास्ति किं काऽपि, शक्ता शासनदेवता । वात्या रेणुमिव क्लेशं, श्राद्धानां या हरेत् क्षणात् ॥ ७६० ॥ आविर्भूय तदा त्यक्त–च्छद्मा पद्मावती नत्रम् । उपसर्गहरं स्तोत्रं, कृत्वा दत्त्वा च तं जगौ ॥ ७६१ ॥ चिंतामण्याख्यमंत्राढ्यं, पार्श्वस्तवमिमं स्मर । स्मृत्याऽस्य मेघवीथ्येव, विध्यास्यति दवो द्रुतम् ॥ ७६२ ॥ राज्ञा तथा कृते सद्यः, प्रशशाम दवानलः । श्रीपार्श्वनाथनामापि, विघ्नं हंति 'तमोऽर्कवत्' ॥ ७६३ ॥ आस्तिक्यवासितस्वांतः, क्ष्माकांतः प्रस्थितस्ततः । प्रभुं नागपुरे ज्ञात्वा, जग्मिवांस्तत्र वेगतः ॥ ७६४ ॥ तत्र सर्वविमानश्री—निःस्यंदैरिव निर्मिते । दिव्ये समवसरणे, रूप्यस्वर्णमणीमये ॥७६५॥ प्राकाररेखात्रितयं(ये), सुमनःप्रचयांचितम् (ते) । त्रैलोक्यरक्षायंत्राभं(भे), श्रीपार्श्वं दृष्टवान्नृपः ॥७६६॥ युग्मम् ॥ चकोर इव शीतांशुं, मयूर इव वारिदम् । दरिद्रित इव द्रव्यम्, स प्रभुं प्रेक्ष्य पिप्रिये ॥ ७६७ ॥ भक्त्या प्रदक्षिणीकृत्य, भगवन्तं भुवः प्रभुः । शक्रवत् स्तोतुमारेभे, प्रमोदैरुदरंभरिः ॥७६८॥ त्रिभुवनविभो ! तानि व्यर्थान्यहानि ममागमं—स्तव पदयुगोपास्तिः स्वस्तिप्रदाऽजनि यत्र न । अहमिदमहर्मन्ये धन्यं यदत्र मयाऽचिरात्, सुरतरुरिव श्रेष्ठो दृष्टस्त्वमिष्टफलप्रदः॥७६९॥(हरिणी)स्मृतिरपि तव स्वामिन् ! कृपा ममाशु निरासुंपी, पथि पृथुदवज्वालाजालं दिधक्षुतया ऽऽपतत् । त्वमसि भगवन् ! भाग्यैर्लब्धोऽधुना स्तनयित्नुवद्, भवदवभवं तापव्यापं समापय सर्वतः ॥७७०॥(हरिणी) इति



१ वंदनशील . २ दग्धुमिच्छति. ३ कपटरहिता. ❀विमानश्रीः–विमानप्रभा ४ ईयरक्षरणै (झरणा ओथी) ५ दिनम्. ६ निरासकर्त्री. ७ दग्धुमिच्छया.

स्तुत्वा पुनर्नत्वा, स्थिते वीरांगदेऽग्रतः । आश्वसेनिर्जिनाधीशो, विदधे धर्मदेशनाम् ॥ ७७१ ॥ देहः सैकतगेहवत्, तरुणता शैलापगापूरव—ल्लक्ष्मीः स्त्रैणकटाक्षवत्, प्रणयिनीसंगस्तडिद्दंडवत् । ऐश्वर्यं खलमैत्र्यवत्, परिजनस्नेहः पताकाग्रवत्, सौख्यं वारितरंगवच्छ्रुसितमप्यंभोदवच्चंचलम् ॥ ७७२ ॥ विमृश्य बौद्धमतवत्, क्षणिकं सकलं जगत् । विधेयं पुण्यमेवैकं, तदक्षयनिधानवत् ॥ ७७३ ॥ निस्सीमसुखनिर्भासी, द्विविधोऽपि महोदयः । पुण्येनैवोल्लसत्युच्चैः, सलिलेनेव पादपः ॥ ७७४ ॥ इहास्तां विभवो भूयान्, कुटुंबं च महत्तमम् । परं भवांतरेऽवश्यं, पुण्यमेव सहाचरम् ॥ ७७५ ॥ देवपूजादयादान—शुभध्यानादिनिर्मलम् । सुकृतं यत् कृतं पूर्वं, तत्फलं युवयोरदः ॥ ७७६ ॥ संप्रत्यपि तथा पुण्य—योगः कोऽपि स कल्प्यताम् । येन व्यामोहितेवैति, द्रुतं मुक्तिरमाऽन्तिकम् ॥ ७७७ ॥ निगद्येत्थं स्थिते नाथे, ससुमित्रोऽपि भूपतिः । द्वादशव्रतविस्तीर्णं, प्रपेदे धर्ममार्हतम् ॥ ७७८ ॥ चिंतामणिमिव प्राप्य, धर्मं हृष्टो जिनेश्वरम् । नत्वा वीरांगदः प्राप, महाशालपुरं निजम् ॥ ७७९ ॥ विहारान् मेदिनीहारान्, बिंबान् डिंबापहारिणः । पवित्रास्तीर्थयात्राश्च, स्वदेशे मारिवारणम् ॥ ७८० ॥ वर्याः सपर्याश्चैत्येषु, साधर्मिकजनार्चनम् । कुर्वंतौ तौ नृपामात्यौ, सुकृतं तेनतुस्ततः ॥ ७८१ ॥ युग्मम् ॥ अथ राज्यं चिरं भुक्त्वा, स्वतनूजौ निजे पदे । विन्यस्य जिनगेहेषु, कृत्वा चाष्टाहिकामहम् ॥ ७८२ ॥ वीरांगदः सुमित्रोऽपि, श्रीमद्देवेंद्रसूरितः । मोक्षलक्ष्म्या इवार्न्वीक्षां, दीक्षां स्वीचक्रतुर्मुदा ॥ ७८३ ॥

---

१ धर्मं. २ तस्मात्. ३ उभयलोकसंबंधी. ४ क्रियतां युवाभ्यामिति शेषः. ५ पुण्ययोगेन-धर्मक्रियया. ६ भयनाशकान्. ७ हिंसानिवारणम्, ८ पर्यालोचनाम्.

युग्मम् ॥ अकपटतपःप्रोद्यद्दावानलेन कुकर्मणां, विपिनमचिराद् भस्मीकृत्याधिगत्य च केवलम् । हृषितहृदयैर्देवैः स्वर्गादुपेत्य कृतोत्सवः, शिवसुखपदं प्राप्तो वीरांगदः सुहृदन्वितः ॥ ७८४ ॥ ( हरिणी ) वीरांगदोदाहरणात् तदेवं, राज्यादि सद्धर्मफलं निशम्य । कुमारपाल ! क्षितिपाल ! शश्वन्निर्मोहि निर्मायतया तमेव ॥ ७८५ ॥ ( उपजातिः )

इतिश्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरिते महाकाव्ये पुण्यफलोपदेशो नाम पंचमः सर्गः ॥ पंचानां सर्गाणां मीलने ॥ ३११३ ग्रन्थाग्रम् ॥

## अथ षष्ठः सर्गः ॥

पुण्यद्रोः फलमावेद्य, तन्मूलमथ जल्पितुम् । हेमाचार्योऽभ्यधाद् भूय–श्चौलुक्यनृपतिं प्रति ॥ १ ॥ पुण्यस्य मूलं कारुण्य—मंकुरस्य सुवीजवत् । अन्ये सत्यादयस्तस्य, क्ष्मादिवत् सहकारिणः ॥ २ ॥ दीनानां मार्यमाणानां, भीतानां च तनूभृताम् । स्वप्राणानामिव त्राणं, कारुण्यं प्रणिगद्यते ॥ ३ ॥ कंदः कल्याणवल्लीनां, प्राणाः सर्वव्रतश्रियाम् । संसारापारपाथोधे—स्तरणिः करुणा स्मृता ॥ ४ ॥ रचयति नृणामायुर्दीर्घं शरीरमनामयं, त्रिदशसुदृशीभोग्यं भाग्यं गुणान् जगदुत्वणान् । बलमविकलं प्राज्यं राज्यं सितांशुसदृग् यशः, त्रिदिवशिवयोर्लक्ष्मीं चांते कृपाऽद्भुतवैभवा ॥ ५ ॥ ( हरिणीवृत्तम् ) सार्वजन्यमतत्वेन, जिनैरेव न केवलम् । निगद्यते दया पार—तीर्थिकैरपि तद्यथा ॥ ६ ॥ एकतः क्रतवः सर्वे, क्षोणीसर्वस्वदक्षिणाः । अन्यतो भयभीतस्य, प्राणिनः प्राणरक्षणम् ॥ ७ ॥ सर्वे वेदा न तत् कुर्युः, सर्वे यज्ञाश्च भारत ! । सर्वे तीर्थाभिषेकाश्च, यत् कुर्यात् प्राणिनां दया ॥८॥ कृपेयं कल्पवल्लीव, सेव्यमाना दिवानिशम् । दत्ते लोकोत्तरं पुण्य—सारस्येव समीहितम् ॥ ९ ॥ तथाहि जंबूद्वीपेऽत्र, भरतश्रीविभूषणम् । श्रीगोपगिरिरित्यासीत्, पुरं सुरपुरोपमम् ॥ १० ॥ अंतर्निवेश्य रत्नानि, पुनर्मन्थभयादिव । यत् त्रातं तनुभूतेन, वार्धिना परिखामिषात् ॥ ११ ॥ वभूव तत्र भूपालः, कालः प्रत्यर्थिहस्तिनाम् । श्रीमान् समरसिंहाख्यः, साक्षात् सिंह इवौजसा ॥१२॥ कर्पूरो मृगनाभिवत् सितगरुत् कादंनवं मौक्तिक—

१ प्रकटयित्वा–प्रकाश्य २ धर्मद्रुमूलम्. ३ पृथिव्यादिवत्. ४ नौका. ५ मतिमनुपमा सातं स्फीतं, प्रत्यन्तरे. ६ मनस्त्वेन–प्र. ७ अल्परूपधारिणा. ८ कस्तुरिकावत्. ९ हंसः. १० वार्दलवत्.

श्रेणिमें[1]चकरत्नवत् तुहिने[2]रुक्कांतोऽप्ययस्[3]कांतवत्। इंदुः कज्जलबिंदुवत् सुर[4]सरिद् वैवस्[5]वतीसिंधुव–च्छंभुः कैट[6]भवैरिवत् प्रतिबभौ यत्कीर्तिकांतेः पुरः॥१३॥(शार्दूलविक्रीडितम्) अमरश्रीभृतस्तस्य,समरश्रीरभूत् प्रिया। यस्यां सीमानमापन्ना,मूर्ति[7]स्फूर्तिः श्रियामिव ॥१४॥ बुद्धिसाराह्वयस्तस्य, बभूव सचिवः शुचिः। यद्बुद्धिविजितो जाने, गुरुस्तस्थौ नभःस्थले ॥१५॥ तत्रैव नगरे श्रेष्ठी, श्रेष्ठतत्तद्गुणोल्बणः। धनसाराभिधानोऽभूत्, प्रधानो व्यवहारिणाम् ॥ १६ ॥ धृतविस्फूर्तयो यस्य, कीर्त्तयोऽपि श्रियोऽपि च। अन्योन्यं स्पर्धयेवोच्चै–र्व्याप्नुवन् ककुभां[8] गणम् ॥ १७ ॥ धनश्रीरिति तस्यासीद्, रमणी रमणीयरुक्। अधिष्ठात्रीव या रेजे, भासा[9] लावण्यसंपदाम् ॥१८॥ तयोर्निर्विशतोः[10] सौख्यं, रतिकंदर्पयोरिव। भूयानपि व्यतीयाय, कालः कलित[11]संमदः ॥ १९ ॥ अन्यदाऽपत्यचिंताग्नि—संतप्तौ तावुभावपि। अगण्यपुण्यतः सर्व–सिद्धिः स्यादिति निर्णयात् ॥ २० ॥ अमारिवंदिनिर्मोक्ष—चैत्यदेवार्चनादिकम्। वितेनतुर्महिष्ठं[12] तें–न्निर्मलं निजचित्तवत् ॥ २१ ॥ युग्मम् ॥ तत्प्रभावादभूत् पुत्रो, धनश्रीधनसारयोः। देहसौंदर्यसंपत्त्या, पुष्पचाप[13] इवापरः ॥२२॥ अपुत्रयोस्तयोः पुत्र—जन्यो यः संमदोऽजनि। तदग्रतः समुद्रोऽपि, मन्ये गोष्पदसन्निभः ॥ २३ ॥ विरचय्योत्सवं तस्य, पितरौ नाम तेनतुः। पुण्यसारेण लब्धत्वात्, पुण्यसार इति स्फुटम् ॥ २४ ॥ यदा स श्रेष्ठिनः सौधे, पुण्यसारः सुतोऽजनि। तदा समरसिंहस्य, भूपतेरपि कन्यका ॥ २५ ॥ आहूता निजतातेन, नाम्ना मदनवत्यसौ। चांद्री कलेव धत्ते स्म, कांचित् कांतिं दिने दिने ॥ २६ ॥

१ कृष्ण ( नील ) रत्नवत् २ चन्द्रकान्त. ३ अयसा मध्ये कान्त –रमणीयः कस्कादित्वात् सत्वं सन्निधिमात्रेण लौहाकर्षक (चुम्बक इति ख्यात) प्रस्तरभेदस्तद्वत्. ४ गंगा. ५ यमुनानदीवत्. ६ कृष्णवत्. ७ शरीरविकाश:. ८ दिशाम्. ९ तेजसा. १० भुंजानयो. ११ कृतहर्षः. १२ पुण्यं–धर्मः. १३ कामदेव.

बाल्येऽपि रूपसंपत्तिं, तस्याः प्रेक्ष्य चमत्कृताः । मूर्धानं दुधुवुः के न?, हर्षावेशवशादिव ॥२७॥ अथ राज्ञा निजा कन्या, श्रेष्ठिना च निजोऽङ्गजः । अधीत्यर्थं विमुक्तौ ता—वेकोपाध्यायसन्निधौ ॥ २८ ॥ स्त्रीत्वेन भारतीशुभ्र—सान्निध्याध्यासनादिव । वेगान्मदनवत्यासी—च्छास्त्राब्धेः पारदृश्वरी ॥ २९ ॥ कुमारः पुण्यसारस्तु, बाल्यचापल्यकेलिभिः । पर्यध्ययनबुद्धित्वा—न्न तथाऽज्ञास्त किंचन ॥ ३० ॥ अन्यदा किंचिदुद्भिन्न—यौवनः श्रेष्ठिनंदनः । दृष्ट्वा तारुण्यपुण्यां तां, प्रोचेऽनंगतरंगितः ॥ ३१ ॥ राजकन्ये ! त्वमेवासि, मन्ये धन्येदृशी दृशोः । पीयूषवर्त्तिसदृशी, यस्या रूपश्रिरेधते ॥३२॥ हरेः सहस्रदृग्भ्योऽपि, वेद्मि हृद्यां स्वदृग्द्वयीम् । तदंदृष्टां मुहुर्या त्वां, बुभुक्षुरिव वीक्षते ॥३३॥ क्वचिद् रूपं कला क्वापि, त्वय्येवैतद् द्वयं पुनः । सौरभ्यं सौकुमार्यं च, मालत्यामेव हि स्थितम् ॥ ३४ ॥ तत् प्रसीद ममोद्दाम—कामार्त्त्यब्धौ निमज्जतः । पाणिग्रहणमाधाय, त्वं समुद्धर मां रयात् ॥ ३५ ॥ अवियोगप्रयोगेण, यथा शश्वदनश्वरी । आवयोः प्रथते प्रीति—र्निशाचंद्रमसोरिव ॥ ३६ ॥ स्वनकर्कंणेनैवाऽ—वज्ञां प्रज्ञापयन्त्यथ । तृणयंतीव दाक्ष्येण, विश्वं मदनवत्यवक् ॥ ३७ ॥ जानेऽधुना भवत्येव, जाड्यसीमा विवल्गति । स्वं परं चाविमृश्यैव, यो वक्ति सहसाऽप्यदः ॥ ३८ ॥ क्वाऽहं क्ष्मापसुता दक्षा, क्व त्वं मूर्खो वणिक्सुतः । तदावयोः कथं योगो, हंसीवायसयोरिव ॥ ३९ ॥ स्त्री कन्यैव वरं नैव, मूर्खकांतविडंबिता । शून्या शाला प्रशस्या हि, न पुनः स्तेनसेविता ॥ ४० ॥ शिलाशकलवद् वक्त्रा, स्वगले दयितं जडम् ।

१ धूतवंत.. २ भारतीरचितसानीप्यनिवासादिव. ३ अध्ययनाय परिगलाना पर्यध्ययना, पर्यध्ययना बुद्धिर्यस्य स तस्य भावस्तस्मात्. ४ रन्त्रम्. ५ हरिगदस्रदृग्द्वयाम्. ६ मोक्तुमिच्छुः. ७ स्तनाग्रिकोणसंकोचनेन. ८ वाक्यमेतद्वचनम्.

निमज्जयति काऽऽत्मानं, दुःखाम्भोधौ विदग्धधीः ॥ ४१ ॥ पुण्यसारो भृशं मम्लौ, तयेत्थमपमानितः । पद्माकर इवोद्दाम—
वारिवृष्ट्या कदर्थितः ॥ ४२ ॥ मत्वा मदनवत्याऽसौ, जडिम्नाऽऽत्मानमुज्झितम् । प्रसादयितुमैहिष्ट, विद्याप्राप्त्यै सरस्व-
तीम् ॥ ४३ ॥ उपोषितस्त्र्यहं पुष्प—कर्पूराद्यैः प्रपूज्य च । पुराद्बहिः स्थितां विद्याऽधिष्ठात्रीमारराध सः ॥ ४४ ॥
देहिनी सर्वविद्येव, प्रत्यक्षीभूय सारदा । ऊचे तं वत्स ! तुष्टाऽस्मि, वद तुभ्यं ददामि किम् ? ॥ ४५ ॥ तां नत्वा नृपक-
न्याया—स्तं वृत्तांतं निवेद्य च । तत्प्राप्तिकारिणीं विद्या—मनवद्यां ययाच सः ॥ ४६ ॥ तमभ्यधत्त वाग्देवी, पुण्यं ते
विद्यते महत् । भविष्यति ततोऽभीष्ट—मभ्यासादिव कौशलम् ॥ ४७ ॥ "यदाशाया न विषयं, दुर्घटं च जनेन यत् ।
तदप्यारोपयत्याशु, प्राक्पुण्यं प्राणिनां करे" ॥ ४८ ॥ एनं श्लोकं हृदि ध्याये—स्त्वं मंत्रमिव संततम् । उक्त्वेत्यंतर्दधे
देवी, पुण्यसारोऽप्यगाद् गृहम् ॥ ४९ ॥ युग्मम् ॥ सम्यग्विमृश्य श्लोकार्थं, समर्थं स्वार्थसाधने । पुण्य एवानिशं रेमे,
सोऽम्बुजे राजहंसवत् ॥ ५० ॥ कालेन कियताऽप्येष, विटपेटकयोगतः । पर्यटन्नगरे नाना—कौतुकानि व्यलोकयत्॥५१॥
पुण्यसारो विटैः साकं, वसन् क्रीडन् भ्रमन् हसन् । अश्नन् पिबन् मिलन् जल्पन्, प्रायो वेश्मनि नाऽऽगमत् ॥५२॥ विटैः
सत्क्रियमाणोऽसौ, चिकीर्षुः प्रतिसत्क्रियाम् । जहार हारमन्येद्यु—र्जनन्या द्रविणोज्झितः ॥ ५३ ॥ गवेषितोऽपि न
क्वाऽपि, हारः प्रापि धनश्रिया । भ्रमाभावान्न चाज्ञायि, तद्गृहीता निजोऽङ्गजः ॥ ५४ ॥ तद्व्यये स्वर्णदीनार—सहस्रं
सोऽहरत् पुनः । ज्ञाताऽऽस्वादो हि चौर्यादौ, कोऽवस्थातुं प्रगल्भते ? ॥ ५५ ॥ हृते हारधने ज्ञात्वा, धनसारोऽतिदुःखितः ।

१ कमलसमूह' २ मा० प्र. ३ सप्तम्येकवचनम्. ४ हारमूल्यव्यये. ५ विरतुम् ६ चेष्टते.

भृत्यान्निर्भर्त्स्य युष्मासु, कः स्तेन ? इति पृष्टवान् ॥५६॥ पुण्यसारस्य तत्कृत्यं, विदन् कश्चन सेवकः । अची(च)कथदिमे
श्रेष्ठिन् !, गृहीते त्वत्तनूरुहा ॥ ५७ ॥ तच्छ्रुत्वा धनसारस्तं, पुत्रमाहूय तत्क्षणम् । ज्वलन्निवातिरोपेण, रूक्षाक्षरमिदं
जगौ ॥ ५८ ॥ बुधाभ्यासे[1] कलाभ्यासं, विवर्ज्यानार्य ! सर्वथा । त्वं पर्यटन् विटैः साकं, किं रे जातोऽसि तस्करः ? ॥५९॥
वटा इव विटा नूनं, कुलीना अपि नोचिताः । सतामासेवितुं यत्ते, स्मृताः किंपुरुषालयाः[2] ॥६०॥ याञ्चा चेत् किमु लाघ-
वेन ? जडता चेच्छून्यभावेन किं ?, लोभश्चेद् दुरितेन किं ? धनमदश्चेत् सीधुपानेन[3] किम् ? । मोहश्चेन्निगडेन किं ? व्यस-
निता चेत् पारवश्येन किं ?, नैःस्व्यं चेन्मरणेन किं ? विटरतिश्चेदसत्यमार्गेण किम् ? ॥ ६१ ॥ (शार्दूलविक्रीडितवृत्तम् ,
उत्तमोऽपि कुसंगेन, दधात्यधमतां ध्रुवम् । अपवित्रं न किं वारि, वारुणी[4]कुंभसंभृतम् ? ॥ ६२ ॥ इयच्चिरं न मद्गेहे)
यद् दासा अपि तेनिरे । तत् त्वं तन्वंस्तनूजोऽपि, स्तेयं किं नैव लज्जसे ? ॥ ६३ ॥ स्वर्णपुष्पैः परे पुत्राः, पूजयंति स्वमा-
तरम् । हरसे त्वं तु तद्धार—महो ते सत्तनूजता ॥ ६४ ॥ स्वर्णदीनाररोचिष्णु—र्हारो दत्तो भवेद् यदि । तदा त्वया
समागम्यं, मंदिरे मम नान्यथा ॥ ६५ ॥ इत्थं निर्भर्त्सितः पित्रा, मषीव श्यामलाननः । गेहात् तदैव निर्गत्य, पुण्यसारः
परामृशत् ॥६६॥ धिग् धिग् मे जीवितं योऽहं, द्रोहं तन्वन् स्ववेश्मनि । हक्कितोऽस्मि तथा पित्रा, यथा कर्मकरोऽपि न
॥६७॥ कलानिधिर्वर्द्धिततातऋद्धिः, स्यात् कोऽपि वार्धेर्विधुवत् सुपुत्रः । अहं तु संतापकरः स्ववप्तु[5]—र्जातोऽस्मि भानोः शनि-
वत् कुपुत्रः ॥६८॥ (उपजातिवृत्तम्) देशान्तरादुपादाय, धनं देयं प्रदाय च । ईदृक् कुकर्म निर्मास्ये, प्राणान्तेऽपि पुनर्नहि

१ पंडितान्तिके. २ कापुरुषाश्रयाः, पटपक्षे किंपुरुषा—व्यंतरविशेषास्तेषामाश्रयाः. ३ मदिरापानेन. ४ मदिरा. ५ पित्रोः, प्र.

॥६९॥ ततः सरस्वतीदत्त-श्लोकार्थं मनसा मृशन् । अपराह्णेऽभिमानेन, कुमारो निरगात् पुरात् ॥७०॥ वर्त्म किंचिदजानानः, पुण्येनेव प्रणोदितः । प्राचेतसीं दिशं श्रित्वा, स चचाल विशालधीः ॥ ७१ ॥ सुकुमारे कुमारेऽस्मिन्, कथंचित् पादचारतः । गव्यूतिद्वितीयेऽतीते, भानुमानस्तमासदत् ॥ ७२ ॥ चिराय न स्थितिं क्वापि, करोमीति रमा बुधान् । बोधयंतीव पद्मेभ्य—श्चक्रे कौमुदमास्पदम् ॥ ७३ ॥ पुण्यसारस्य चक्राणां, स्त्रीणां च विरहस्पृशाम् । हृदो विनिर्गतैर्दुःखै—रिव ध्वांतैर्भृतं जगत् ॥ ७४ ॥ कर्ताऽधुना कुमारः कि-मिति द्रष्टुमिवाभवत् । ताराकैतवतः शंके, द्यौरुत्तानविलोचना ॥७५॥ ध्वांतेऽभिसृत्वरे विश्वक्, पुरः प्रस्थातुमक्षमः । कुमारः स्थितवांस्तत्र, पथिस्थवटकोटरे ॥ ७६ ॥

इतश्च तत्रैव वटे, कामाख्या काऽपि यक्षिणी । विद्यते तां तदा द्रष्टुं, कमलाख्याऽऽगता सुरी ॥ ७७ ॥ तामभ्युत्थाय कामाख्याऽ-प्राक्षीत् सखि ! कुतोऽधुना । त्वमायासीः ? किमद्राक्षीः, कौतुकं ? तन्निवेदय ॥७८॥ सा बभाण सुवर्णाख्य-द्वीपात् स्थानान्निजादहम् । भवद्दिदृक्षया नुन्ना, प्रस्थिता गगनाध्वना ॥७९॥ धात्रीं विचित्रां पश्यंती, सुराष्ट्रदेशमंडनम् । वलभीपुरमभ्येत्य, यदपश्यं ब्रवीमि तत् ॥ ८० ॥

तत्रास्ति वलभीपुर्यां, श्रेष्ठी श्रेष्ठतमद्युतिः । कामदेवाभिधो रूपात्, कामदेव इवापरः ॥ ८१ ॥ येन स्वमंदिरेष्वेव, न्यस्तशस्तोरुवस्तुषु । पूर्यंते स्म श्रियो नाना—स्थानभ्रमणचापलम् ॥ ८२ ॥ तस्य नाम्ना गुणेनापि, लक्ष्म्या पत्न्या समं

१ पश्चिमाम्. २ गव्यूतिद्वयमायाते, प्र. ३ रमाऽभ्यधात्, प्र. ४ चक्रवाकपक्षिणाम्. ५ आकाशम् ६ विकसितलोचना. ७ "तत्पुरुषे कृतिबहुलम्" इति सप्तम्या अलुक्. ८ पष्ठ्येकवचनम्. ९ कान्तिगुणेन.

सुखम् । भुंजानस्याभवन्नष्टाऽ—भीष्टाः पुंत्र्यः क्रमादिमाः ॥ ८३ ॥ धनश्रीः समरश्रीश्च, नागश्रीविमलश्रियौ । सोमश्रीः कमलश्रीश्च, सुंदरश्रीगुणश्रियौ ॥ ८४ ॥ युग्मम् ॥ कलाकलापसंपन्ना—स्तारुण्येन विशेषिताः[*] । ता देव्य इव रूपेण, गीर्वाणानप्यमूमुहन् ॥ ८५ ॥

कुमारीणां तासां तरुणिमवने विभ्रमघने, लसल्लावण्यांभःकिशलयिततत्तद्गुणतरौ ।

चलत्तद्भ्रूचापप्रसृमरकटाक्षोरुविशिखै—र्भ्रमन् कामव्याधो न कति हतवान् कामुकमृगान्? ॥८६॥ (शिखरिणीवृत्तम्)

कामदेवः कनीतुल्यान्, क्वाप्यपश्यन् वरान्[2] वरान्[3] । तदर्थमारराधोच्चै—र्यथाविधि गणाधिपम् ॥ ८७ ॥ स प्रत्यक्षस्तमाचष्ट, तुष्टस्ते करवै किमु? । ऊचे श्रेष्ठी सुतानां मे, देहि लोकोत्तरान् वरान् ॥ ८८ ॥ ध्यात्वा विनायकोऽवादी—देक एव वरः परः । भविता त्वत्तनूजाना—मष्टानामपि तुष्टिकृत् ॥ ८९ ॥ पाणिग्रहणसामग्रीं, त्वं गृहे कुरु तत्कृते[4] । लग्नक्षणेऽहमानेष्ये, वरं स्मरमिवापरम् ॥९०॥ देवादेशात् ततः काम—देवो भृत्यैर्व्यदीधपत्[5] । नानालंकारनेपथ्य—मंडपाद्यं मनोरमम् ॥ ९१ ॥ खाद्यादीनि च भक्ष्याणि, स तथा राश्यचीकरत् । यथा वितेनिरे तानि, द्रष्टॄणां पर्वतभ्रमम् ॥ ९२ ॥ शुभे दिने यवानुप्त्वा, वर्धमानेषु सप्तसु[6] । गायंतीषु पुरंध्रीषु, धवलध्वनिबंधुरम् ॥ ९३ ॥ निवेश्योर्णामयं पाणौ, कंकणं कुलयोषितः । वर्णके[7] स्वर्णवर्णास्ताः, कनीरष्टापि चिक्षिपुः ॥ ९४ ॥ युग्मम् ॥ सज्जयित्वाऽधुना वेदिं, मांगल्यकलशस्तनीम्[8] । तोरणभ्रूधरां मध्ये—क्षामां कन्यामिवापराम् ॥ ९५ ॥ स्वनंदिनीः कुलस्त्रीभिः, संस्नाप्य

---

* भूषिताः. २ श्रेष्ठी. २ श्रेष्ठान्. ३ पतीन्. ४ कन्याकृते. ५ अकारयत्. ६ सरावेषु. ७ पिष्ट(पिठी)मर्दने. ८ मांगल्यकलशा एव स्तनौ यस्याः सा ता वेदिम् (चोंरी).

परिभूष्य च । वरस्य मार्गयन् मार्गं, कामदेवोऽस्ति मंडपे ॥ ९६ ॥ युग्मम् ॥ श्रेष्ठिनस्तस्य पुत्रीणा—मष्टानामपि संप्रति । विनाऽपि वरमाश्चर्यं, वर्तते पाणिपीडनम् ॥ ९७॥ वलभ्यामेतदाकर्ण्य, सर्वं दृग्भ्यां निभाल्य च । अहं विस्मयमानाऽन्त—स्त्वदंतिकमुपागमम् ॥९८॥ कामाख्या स्माह सख्येतद्, वीक्षेऽहमपि संप्रति । प्रत्यूचे साऽपि यद्येवं, तर्ह्यागच्छ मया समम् ॥ ९९ ॥ वटस्थितस्तदाकर्ण्य, पुण्यसारोऽपि विस्मितः । स्ववृत्तज्ञापनापूर्वं, ते देव्यौ प्रत्यवोचत ॥१००॥ नीत्वा मां तत्र चित्रं तद्, दर्शयित्वा च चेत् पुनः । आनयेथे युवां तर्हि, भवत्सार्थे समेम्यहम् ॥ १०१ ॥ तदुक्त्या मुदिते देव्यौ, तदैव-प्रेरिते इव । तद्वाक्यं प्रतिपेदाते, कः सतां न हि मानदः[1] ? ॥ १०२ ॥ तं पुण्यसारमादाय, पुण्यसारमिवात्मनः । ते देव्यौ जग्मतुस्तिग्म—वेगेन वलभीं पुरीम् ॥ १०३ ॥ कामदेवगृहस्याग्रे, तं मुक्त्वाऽवोचतां च ते । आयास्त्वं प्रातरत्रैव, नयावस्त्वां यथा वटम् ॥ १०४ ॥ ततस्ते जग्मतुर्देव्यौ, तत्कौतुकमवेक्षितुम् । मया दृश्यं कथमिति, ध्यायंस्तत्र स च स्थितः ॥ १०५ ॥ तदैव लग्ने नेदिष्ठे, गृह्यतां स्वसुतावरः । उक्त्वेति पुण्यसारं तं, गणेशः श्रेष्ठिने ददौ ॥ १०६ ॥ निरीक्ष्य कामदेवस्तं, दीव्यंतं[2] दस्रदेववत्[3] । निमग्नवानिवामंद—तमानंदपयोनिधौ ॥ १०७ ॥ तदास्यचंद्रं निस्तंद्रं[4], दृष्ट्वा मंडपवासिनः । प्रमोदमेदुरे कस्य, नास्तां[5] नयनकैरवे ॥ १०८ ॥ काऽहं केऽमी किमेतन्मे, तन्वंतीति विमर्शिनम्[6] । पुण्यसारं समानीय, कामदेवः स्ववेश्मनि ॥ १०९ ॥ संस्नाप्य[7] दिव्यशृंगारं, कारयित्वा च देववत् । स्वकन्याधिष्ठितं मातृ—मंदिरं[8] समुपान-

1 मानं-सत्कारं ददातीति मानदः. 2 कान्तिमन्तम्. 3 अश्विनीकुमारवत्. 4 आलस्यरहितं-तेजस्विनं-निष्कलंकमित्यर्थं . 5 न आस्ताम् इति च्छेदः. 6 विचारिणम्. 7 स्नानं कारयित्वा. 8 मातृगृहम्. ( मांयरु ).

यत् ॥ ११० ॥ युग्मम् ॥ कन्या निरूप्य तद्रूपं, सुधाञ्जननिभं दृशोः । कृतार्थं मन्यमानाः स्वं, प्रत्येकं हृद्यचिंतयन् ॥१११॥
कामोऽयं किमु निस्सीम—कामनीयकसंपदा । यद्वा संभाव्यते तस्य, केयं कायवियोगतः ॥ ११२ ॥ अस्त्यस्माकं महद्भाग्यं,
यँदयं जायते पतिः । न हि चिंतामणिः पाणिं, विना पुण्यं प्रपद्यते ॥ ११३ ॥ इति ध्यानभृतां तासां, कटाक्षाः स्वागतक्रि-
याम् । रोमाञ्चेन सहोत्थाय, पुण्यसारस्य तेनिरे ॥ ११४ ॥ त्रिभिर्विशेषकम् ॥ ततोऽर्चितानां मातॄणां, पुरतो द्विजपुंगवः ।
कुमारस्य कनीनां च, पाणिपद्मान्ययोजयत् ॥ ११५ ॥ कुमारेण वधूभिश्च, सव्येतरकरार्पणात् । परस्परापरित्यागे,
वितीर्णः प्रतिभूरिव ॥ ११६ ॥ काक्षेण वीक्षमाणास्ताः, स्थायं स्थायं पुनः पुनः । अपत्रपाशिखाभंग—मिव किंचित् तदाऽऽ-
चरन् ॥ ११७ ॥ तत्राऽऽचारेण नो नाश—भिया वद्ध्वाऽञ्चलान् मिथः । आनीय च वधूयुक्तं, वरं वेद्यंतरं शुचि ॥ ११८ ॥
हुत्वाऽनलं चतुष्कृत्वो, भ्रमयामासिवान् द्विजः । चतुर्गतिभवभ्रांतिं, पुरस्ताद् ज्ञापयन्निव ॥ ११९ ॥ युग्मम् ॥ विश्वेऽपि
निःसपत्नं यत्, तद् रत्नाश्वाम्बरादिकम् । कामदेवः स ददिवान्, जामात्रे यौ[11]तकं मुदा ॥ १२० ॥ हर्षयामास च प्रीति—
गौरान् पौरान् स्वबंधुवत् । दिव्यभोजनतांबूल—दुकूलाभरणादिभिः ॥१२१॥ ततः प्रियाभिरष्टाभि—रिन्द्राणीभिरिवाद्रिभित्[12] ।
कुमारः श्वशुरादेशा—दध्यास्त सदनं नवम् ॥ १२२ ॥ अंगसंवा[13]हनाऽऽलाप—पुष्पपत्रार्पणादिभिः । प्रियाभिर्लोभ्यमानोऽपि,
प्रियोऽभिद्यत नाश्मवत् ॥ १२३ ॥ किंतु मोहितवद् दध्या—वहो पुण्यस्य वल्गितम् । दुर्घटं घटयत्येव, यज्झटित्येव देहि-

१ दृष्ट्वा. २ कामस्य. ३ निस्सीमकामनीयकसंपत्. ४ युवाऽयम्—प्र. ५ गोत्रदेवीनाम्. ६ दक्षिणवामहस्तार्पणात्. ७ लग्नकः ( जामीन ). ८ अपरम् अपेक्ष्य त्रपा० अन्यहेतुकलज्जाशिखरभंगमिव. ९ प्रपूज्य—वह्नौ घृतादिकं प्रक्षिप्य. १० भ्रमणम्. ११ विवाहकाले लब्धं धनं—यौतकम्. १२ इन्द्रः. १३ अङ्गसंमर्दनम्.

नाम् ॥ १२४ ॥ क्व स गोपगिरिर्दुर्गः[1], क्वैषा च वलभीपुरी । क्व तद्वासी कुमारोऽहं, क्वैताः श्रेष्ठितनूरुहः ॥ १२५ ॥ परं पितुरुपालंभ—देवीसंगमनादिना । मत्पुण्यमेव सकलं, तदिदं पर्यणीनमत्[2] ॥ १२६ ॥ मन्ये श्लोकोऽपि[3] वाग्देव्याः, कृत्येनाऽनेन संप्रति । सत्यार्थतां दधाति स्म, न मृषा देवतोदितम् ॥ १२७ ॥ आसां च दक्षतां ज्ञातुं, श्लोकं स्वज्ञापनाकृते । लिखित्वा यामि मां तेन[4], विदंत्येताः प्रिया न वा ॥ १२८ ॥ इति ध्यानपरे पुण्य—सारे तं मंदिरात् ततः । प्रस्थापयितुकामेव, यातुकामा निशाऽजनि ॥ १२९ ॥ पड्भिः कुलकम् ॥

अथ वैवाहिकीं बिभ्रद्, भूषां मुक्त्वा परं धनम् । शंकाभंगच्छलं कृत्वा, कुमारो निर्गतस्ततः ॥ १३० ॥ नितान्तं कांतभक्तत्वाद्, गुणश्रीरष्टमी प्रिया । तत्पृष्ठे निर्ययौ हस्ते, वहंती कनकालुकाम्[5] ॥ १३१ ॥ स तस्यामेव पश्यंत्यां, बहिर्द्वारप्रकोष्ठके[6] । एकं लिलेख सुश्लोकः, श्लोकं[7] स्वज्ञापनाकृते ॥ १३२ ॥ पुण्यसारस्ततो गत्वा, पूर्वसंकेतिताऽऽस्पदम् । समागंस्त तयोर्देव्यो—स्तद्वर्त्म[8] प्रेक्षमाणयोः ॥ १३३ ॥ तं पारिणेत्रचिह्नाढ्यं, दृष्ट्वा देव्यावपृच्छताम् । त्वमेव पर्यणैषीः[9] किं ?, कामदेवकनीरिमाः ॥ १३४ ॥ कुमारेणोमिति प्रोक्ते, स्मेरे देव्यौ जजल्पतुः । धन्यस्त्वं परिणिन्ये य—स्तादृशीः पद्मलोचनाः ॥ १३५ ॥ पुण्यसारोऽवदत् सोऽयं, प्रसादो युवयोर्मयि । पंगोरिव न चेदत्र, कथं स्यान्मे समागमः ? ॥ १३६ ॥ त्वं तिष्ठासुः[10] प्रतिष्ठासु[11]—रथवेति निवेदिते । देवीभ्यां सोऽवदन्नंतुं, पितॄनेष्याम्यहं[12] सह ॥ १३७ ॥ तं कुमारं समादाय, व्योम्नोत्पत्य



---

१ नगरम्. २ परिणतम्. ३ सर्ग ६ श्लोक ४८. ४ श्लोकेन. ५ सुवर्णभृङ्गारम्. ६ गृहद्वारपिंडे. ७ सर्ग ६ श्लोक १८६. ८ मार्गम् ( वाट ). ९ "ओमाङोश्च" इतिपररूपम् १० स्थातुमिच्छुः. ११ प्रस्थातुमिच्छु . १२ आ इष्यामि—आ इण् दि० लृट्, आ इण् अदादिः लृट्.

च तत्क्षणम् । मुक्त्वा च तद्भटाभ्यर्णे, तिरोधत्तः स देवते ॥ १३८॥ त्रियामाजागरोद्विग्नः, पुण्यसारस्तदा क्षणम् । शय्यां
कृत्वोत्तरीयं स्वं, निदद्रौ प्रमदोद्धुरः ॥ १३९ ॥
निर्वासितं सुतं मत्वा, पुण्यसारप्रसूरथ । तन्वंत्यमंदमाक्रंदं, जगाद दयितं प्रति ॥ १४० ॥ स्वामिंस्तवाभवत् कोऽद्य,
निंद्योऽयं धीविपर्ययः । येन प्राणाधिकः पुत्रो, गृहान्निर्वासितस्त्वया ॥ १४१ ॥ अथाहरत हाराद्यं, यद्ययं बाल्यकेलिभिः ।
शिक्षणीयस्तदा सम्यग्, निष्काश्यो न तु भृत्यवत् ॥ १४२ ॥ स्मरसि त्वं स्मराकारो, निःसुतस्य सुतस्तव । उत्पत्स्यते कथं-
कारं, कियताऽर्थव्ययेन च ॥ १४३ ॥ अस्थिरस्य धनस्यार्थे, निर्भर्त्सयति कः सुतम् ? । आरकूटकृते को हि, परित्यजति
कांचनम् ? ॥ १४४ ॥ तदुत्तिष्ठ सुतं सद्यो, मृगयित्वा समानय । भोक्ष्ये प्रेक्ष्य मुखं तस्य, नान्यथेति विनिश्चयः ॥ १४५ ॥
धनसारोऽवदद् भद्रे !, निराकर्तुं कुकर्मताम् । शिक्षितस्तनयो नो चे-न्मम प्राणाधिकोऽस्ति सः ॥१४६॥ स्तेयादिकृत् तनू-
जोऽपि, कुलप्रध्वंसहेतवे । प्राणनाशाय पीयूष—मपि हि क्ष्वेडमिश्रितम् ॥ १४७ ॥ यदि व्यसनिनं पुत्रं, शिक्षयेन्न पिता
तदा । स तत्पापेन लिप्येत, प्रजापापेन भूपवत् ॥ १४८ ॥ इत्युदित्वा चतुर्दिक्षु, भुजिष्यान् प्रेष्य सत्वरम् । उदतिष्ठत्
स्वयं श्रेष्ठी, पुण्यसारं विलोकितुम् ॥ १४९ ॥ नगरे मित्रवेश्मादौ, बहिर्देवकुलेषु च । नष्टवस्त्विव तं श्रेष्ठी, निशां सर्वां व्य-
लोकयत् ॥ १५० ॥ अपश्यंस्तनयं क्वाऽपि, प्रातर्देवनियोगतः । ससार धनसारस्तां, पुण्यसाराश्रितां दिशम् ॥ १५१ ॥ गव्यू-
तिद्वयमाक्रम्य, सोऽपश्यद् वटभूरुहः । तले सुप्तं सुतं पारि—णेत्रवेषादिभासुरम् ॥ १५२ ॥ उपसर्पति यावत् तं, पिता प्रमद-

१ रात्रिः. २ हर्षोत्कटः. ३ माता. ४ पतिम्. ५ धीविपर्ययेण. ६ पित्तलकृते. ७ विष०, ८ सेवकान्.

मेदुरः । तावत् सोऽपि जजागार, कुमारः कलहंसवत् ॥ १५३ ॥ लज्जमानः समानोऽपि, स भालस्पृष्टभूतलः । अवन्दिष्ट पदौ वप्तु—र्विनेय इव सद्गुरोः ॥ १५४ ॥ निर्भरं परिरभ्योच्चैः, स्रवदश्रुविमिश्रदृक् । अवोचत् तनयं तातो, विनयं शिक्षयन्निति ॥ १५५ ॥ तर्जयन्नपि तातः स्यात्, सुतस्य हितहेतवे । विकाशायैव पद्मस्य, तापयन्नपि तापनः ॥ १५६ ॥ अशिक्षितः सुतो नैव, महत्त्वमधितिष्ठति । अघृष्टं किमु माणिक्यं, महार्घत्वमुपैति हि ? ॥ १५७ ॥ त्वं वाङ्मात्रेण चेद् वत्स !, पूर्वेद्युः शिक्षितो मया । निर्यातोऽसि कथं गेहाद्, देहाज्जीवितवज्जवात् ॥ १५८ ॥ त्वद्वियोगाऽनलप्लुष्टा, नाश्नाति जननी तव । त्वन्निमित्तं निशामेनां, भ्राम्यञ् श्रान्तोऽहमप्यलम् ॥ १५९ ॥ दुःखध्वान्ताऽपहे वत्स !, त्वय्याऽऽयाते पुनर्गृहम् । विडंबयतु मार्तंड—मण्डलाधिष्ठितं नभः ॥ १६० ॥ इत्याद्युक्त्वा करे धृत्वा, पुण्यसारं बलादपि । प्रस्थितः सुस्थिताऽऽत्माऽसौ, धनसारो गृहं प्रति ॥ १६१ ॥ पङ्क्तिःकुलकम् ॥ पित्रा समं गृहं प्राप्तः, पुण्यसारोऽथ दृष्टवान् । पद्मिनीमिव निष्पद्मां, जननीं स्वविनाकृताम् ॥ १६२ ॥ हृतहारादतिश्रेष्ठं, हारमुत्तार्य कण्ठतः । दत्त्वा च प्राभृतव्याजाद्, विनयात् तां ननाम सः ॥ १६३ ॥ अवशिष्टानलङ्कारा—नुपदीकृत्य चाखिलान् । जनकाय ददौ पुण्य—सारो हृतधनाऽऽस्पदे ॥ १६४ ॥ पुनःपुनः स पृष्टोऽपि, पितृभिः पुत्रवत्सलैः । पाणिग्रहमहं नैव, गूढमन्त्रमिवावदत् ॥ १६५ ॥ ततस्तथा कुमारोऽभूद्, धर्मनिष्ठो यथाऽखिलम् । कुलमप्यपुनाद् गौरी—गुरुं गंगाप्रवाहवत् ॥ १६६ ॥

इतश्च सा गुणश्रीस्तं, प्रभातेऽप्यनुपागतम् । पतिं वीक्ष्य विलक्षाऽऽस्या, स्वसृभ्यस्तदची(च)कथत् ॥ १६७ ॥ ताश्च साऽपि च

१ सूर्यः. २ दग्धा, ३ निर्गता पद्मा–लक्ष्मीः शोभा वा यस्या सा तामिव ४ हिमालयम्.

सम्भूय, गृहोद्यानादिभूमिषु । सम्पश्यन्त्योऽपि न प्रापुः, पतिं पुण्यमिवात्मनः ॥ १६८ ॥ तत्स्वरूपं परिज्ञाय, कामदेवः सुतामुखात् । मृगयामास सर्वत्र, पुण्यसारं पुरान्तरे ॥ १६९ ॥ ततस्तं क्वाप्यनासाद्य, मार्गपातितरत्नवत् । निमग्न इव दुःखाब्धौ, श्रेष्ठी कष्टमयोऽजनि ॥ १७० ॥ अष्टौ तत्तनयाः प्रेयो—वियोगे स्रवदस्रवः । हृतप्राणा इवात्युच्चै—रेवं परिदिदेविरे ॥१७१॥ हा कान्त ! स्वान्तविश्रान्त !, हा निशान्त ! गुणावलेः । हा स्मराकार ! हा प्राणा–धार ! हा हारनिर्मल ! ॥ १७२ ॥ यदस्मान् परिणीय त्व—महासीर्बद्धवैरवत् । कूपे निक्षिप्य तद्रज्जु—च्छेदमातनुथा न किम् ? ॥ १७३ ॥ नलोऽपि त्यक्तवान् पत्नीं, कष्टमासेदिवान् परम् । त्वं तु कष्टं विनाऽप्यस्मान्, अहो ? ते पुरुषव्रतम् ॥ १७४ ॥ अस्माभिः सेव्यमानोऽपि, बहुधा परमाप्तवत्[1] । मुमुक्षुरे(रि)व त्वं नाथ !, सन्मुखं नैव दृष्टवान् ॥ १७५ ॥ अस्माकं मन्दभाग्यानां, त्वादृशः स्यात् कथं पतिः । कटुतुम्बीलतानां हि, न कल्पद्रुमसंगमः ॥ १७६ ॥ रे यूयं व्रजत प्राणा !, जीव ! त्वमपि याहि रे । रे हृत् ! प्रसह्य दह्यस्व, रे देह ! भव भस्मसात् ॥१७७॥ यद्युष्माकं समस्तानां, स स्वामी गतवान् क्वचित् । यूयं स्थित्वा विना तेन, किमर्थं[2] साधयिष्यथ ॥ १७८ ॥ सप्तभिः कुलकम् ॥ कामदेवोऽथ रुदतीः, स्वसुताः प्रत्यवोचत । मा स्म ताम्यत हे वत्सा ! यूयं वरयितुः कृते ॥ १७९ ॥ भवतीभ्यः पुराऽदायि, येनैष प्रवरो वरः । स एव पुनरानीय, दास्यत्येनं गजाननः ॥ १८० ॥ अहमाराधयिष्यामि, तदर्थमधुनैव तम् । इत्युदीर्य कथंचित् ताः, पुत्र्यः पित्रा प्रबोधिताः ॥१८१॥ गुणश्रीरथ तत्पुत्री, शारदावद् विशारदा । शोकं कृत्वा मनाक् स्तोकं, चेतसीति व्यचिन्तयत् ॥१८२॥ सदाकारपरिज्ञात–

1 परमात्मवत्, प्र. 2 क्रमर्थम्, प्र.

बुद्धिभारः प्रियः स नः । त्यजन् कुतोऽपि स्वं रूप—मविज्ञाप्य कथं त्यजेत् ॥ १८३ ॥ मन्ये पतिर्बहिर्द्वारि, गच्छंस्तुच्छं विलम्बितः । निश्चितं लिखति स्मैव, किञ्चिज्ज्ञापयितुं निजम् ॥ १८४ ॥ पश्यामीति समुत्थाय, गुणश्रीरतिसत्वरम् । उपेत्य तत्र च श्लोक—मेकमेवं व्यलोकत ॥ १८५ ॥ त्रिभिर्विशेषकम् ॥ "क्व स गोपगिरिः क्वेयं, वलभी क्व विनायकः । दूरादेत्य कुमारोऽत्र, परिणीय कनीयंयौ" ॥१८६॥ तस्य दर्शनतः पत्यु—र्दर्शनादिव मोदिनी । सेत्थं समर्थयामास, तदर्थं मतिवैभवात् ॥ १८७ ॥ नूनं गोपगिरिस्थान—वासी दासीकृतस्मरः । असत्यपतिस्ततोऽत्रैन—मानिनाय विनायकः ॥१८८॥ अस्मद्दाक्ष्यपरीक्षार्थं, श्लोकमेनं विलिख्य सः । मुक्त्वा चास्मान् गतो गेह—महो ? तस्यातिधूर्तता ॥ १८९ ॥ सा निश्चित्य पतिस्थानं, जगाद जनकं निजम् । श्लोकेनानेन विज्ञातं, मया पतिपुरं पितः ! ॥ १९० ॥ ततः प्रहिणु मां तूर्णं, वाणिज्य-व्याजतो यथा । गत्वा गोपगिरिं कान्त—मानयामि स्वबुद्धितः ॥ १९१ ॥ कामदेवोऽवदज् ज्ञातं, पतिस्थानं त्वया परम् । तन्नामाद्यपरिज्ञाय, वत्से ! त्वं ज्ञास्यसे कथम् ? ॥ १९२ ॥ किञ्च मार्गोऽतिदुर्गोऽस्ति, लुंटाकैः परितः स्थितैः । दृष्ट्वा त्वां च सुरस्त्रीवद्, ग्रहीष्यन्ति स्मरातुराः ॥ १९३ ॥ तस्मादत्रैव तिष्ठ त्वं, वत्से ! मा स्म श्रमं विधाः । कारयिष्येऽहमेव द्राग्, निजाप्तैस्तद्गवेषणम् ॥ १९४ ॥ गुणश्रीस्स्माह तत्याज, सोऽस्मान् दाक्ष्यदिदृक्षया । तत् स्याद् व्यक्तं[3] तदाऽस्माभिः, स्वयं ज्ञायेत यद्ययम् ॥ १९५ ॥ मार्गोपसर्गसंसर्ग—प्रतिघाताय च स्वयम् । त्वत्तः पुंवेषमादास्ये, रक्षायन्त्रमिवात्मनः ॥१९६॥ तात ! त्वं जननी चेयं, भगिन्यः सकला इमाः । यूयं शृणुत निःसीमां, प्रतिज्ञां मामिकामिमाम् ॥१९७॥

१ भाव, प्र. २ आत्मीयम्. ३ दाक्ष्यम्.

षण्मास्या निजकान्तं चे-न्नाऽऽनयामि नयाऽमितम् । तदा विशामि तत्रैव, चितावह्नौ पतंगवत् ॥ १९८ ॥ ततो रम्ये दिने तात—दत्तपुंवेषभासुरा । जनकादीननुज्ञाप्य, गुणश्रीश्चलति स्म सा ॥१९९॥ तदीया गोत्रिणोऽन्येऽपि, व्यवहार-विधित्सया । प्रतस्थिरेऽतिसौस्थ्येन, तत्सार्थेऽनर्थहारिणि ॥ २०० ॥ वलभीतो विनिर्गत्य, गुणश्रीः स्वजनं जगौ । गुण-चन्द्र इति ख्याप्यं, मन्नामाऽतः परं जने ॥ २०१ ॥ तुंगं तुरंगमारुह्य, गुणश्रीर्नरवेषभृत् । रक्षन्ती स्वांगवत् सर्वं, सार्थमुन्मादिसादिभिः ॥ २०२ ॥ दानं सानन्दमर्थिभ्यो, ददानाऽतिवदान्यवत् । स्मरन्ती च पतिश्लोकं, प्राप गोपगिरेर्बहिः ॥ २०३ ॥ युग्मम् ॥ धन्यं पुरमिदं यत्र, मदीयो वसति प्रियः । इति रोमाञ्चिताङ्गी सा, तदपश्यन्मुहुर्मुहुः ॥२०४॥ तावत् समरसिंहस्त-त्पुरेशो मागधव्रजात् । गुणश्रीविलसद्दान—तोषितादिति शुश्रुवान् ॥ २०५ ॥ वलभीपुरतः श्रेष्ठि—कामदे-वस्य नन्दनः । गुणचन्द्रो गुणी प्रातः, पुरमध्यमुपे(पै)ष्यति ॥२०६॥ ततो राड्मानदानाय, गुणश्रीसन्मुखं मुदा । सचि-वान् प्रेषयामास, प्रतिदेहानिवात्मनः ॥२०७॥ कामदेवसुता प्रीत्या, तांस्तथोपाचरत् स्वयम् । यथा ते तद्गुणक्रीता—स्त-दीया इव जज्ञिरे ॥ २०८ ॥ स्वं सार्थं वहिरावास्य, श्रीगोपगिरिनायकम् । प्रधानैस्सह साऽपश्यद्, गुणश्रीर्नरवेषिणी ॥ २०९ ॥ रञ्जयामास चानेकै—र्देश्यैर्दिव्यैरुपायनैः । लोकातिशायिभिस्तैस्तै-र्विनयाद्यैर्गुणैरपि ॥ २१० ॥ दत्त्वा समरसिंहोऽपि, स्वसौधसविधे गृहम् । आनन्द्य चातिथेयीभिः, क्रियाभिस्तामतिष्ठिपत् ॥ २११ ॥ आग्रहात् तस्य भूपस्य, गुणश्रीरेत्य नित्यशः । वारद्वयं तदास्थानीं, परिचस्कार मित्रवत् ॥ २१२ ॥ अद्राक्षीच्च गवाक्षस्था, स्वप्रियज्ञीप्सया

1 नयेनाऽमितम्—अपरिच्छिन्नं-विशालनयमित्यर्थ. 2 व्यापारं विधातुमिच्छया. 3 अश्ववारैः, 4 स्व-प्र. 5 देशेषु जातानि देश्यानि तैः. 6 भूषयामास.

मुहुः । पुरतोऽनेकशः पौरा-नेहिरे[1]याहिरापरान् ॥ २१३ ॥ यातायातपरं दृष्टे-रग्रतोऽपि पतिं पुरम् । पुण्यसारं न वेत्ति स, सम्यक् परिचयं विना ॥ २१४ ॥ नामाकारपरिज्ञानं, विना प्रियमजानती । अदंदह्यत सा कामं, वह्निस्पृष्टेव पद्मिनी ॥ २१५ ॥ पुण्यसारोऽपि तां शृण्वन्, कामदेवस्य नन्दनम् । श्वशुर्य[2]निश्चयाभावा-न्मन्दाक्षा[3]च्च ददर्श न ॥२१६॥ अन्यदाऽभ्युद्यदामोद-मेदुरैश्चन्दनादिभिः । सुपर्व[4]पंकजाक्षीवद्, वासयन्तीं दिशो दश ॥२१७॥ निजाङ्गसङ्गीपुरुषो-चितशृङ्गारभंगिभिः । मोहयन्तीं मनः काम-देववत् पौरसुभ्रुवाम् ॥ २१८ ॥ गच्छन्तीं राजसेवार्थं, तां गुणश्रियमैक्षत । वातायनस्था मदन-वती समरसिंहभूः ॥ २१९ ॥ त्रिभिर्विशेषकम् ॥ तद्रूपदर्शनादेव, मकरध्वजमार्गणैः । हृदि विद्धेव सा भूप-पुत्री चिन्तितवत्यदः ॥२२०॥ वन्दिवृन्दस्तवैः पूर्वं, ततो गन्धर्वगीतिभिः । तदन्वामोदवातेन, ज्ञापितः कोऽयमुत्तमः ॥२२१॥ कामः किमेष ? सोऽनंगः, किं दस्रः ? स[5] द्वितीयभृत् । किमैलः[6] ? स वभूव प्राक्, किं देवः ? सोऽनिमेषदृक् ॥२२२॥ अनंगश्चेत् तपस्तप्त्वा, प्राप्नोत्यनुपमं वपुः । तदैतदुपमामान-पात्रं भवति नाऽन्यथा ॥ २२३ ॥ असौ वीक्षितमात्रोऽपि, पश्यतोहरवन्मम । हरते हृदयं किञ्चित्, न वेद्मयत्र निबन्धनम् ॥ २२४ ॥ जीवितं यौवनं चापि, तदैवैतत् फलेग्रहि[:] । पुरूरवा इवोर्वश्या, यदाऽयं मे प्रियो भवेत् ॥ २२५ ॥ पञ्चभिः कुलकम् ॥ अथ तस्यां प्रयातायां, दृष्टिमार्गात् गुणश्रियाम् । शून्येव साऽनुयुंक्ते स्म, सखीं कोऽयं पुमानिति ? ॥ २२६ ॥ शंसति स्म वयस्या तां, दाक्ष्यालक्षिततन्मनाः । गुणश्रियः कुतोऽपि प्राक्, स्थानाद्यं ज्ञातपूर्विणी ॥ २२७ ॥ अयं वरेण्यलावण्यो, गुणचन्द्र इति श्रुतः । श्रेष्ठिनः काम-

१ गमनागमनक्रियाततपरान्. २ श्वशुरस्यापत्यं पुमान्. ३ लज्जातः. ४ देवाङ्गनावत्. ५ अश्विनीकुमारः सद्वितीयः-द्वौ स्त इत्यर्थ . ६ पुरूरवस् राजा-उर्वशीवल्लभः.

॥ २२८ ॥ व्यवसायचिकीरत्राऽऽ-यातः श्रीवलभीपुरात् । भवत्तातस्य निस्सीम—प्रेमपात्रं
देवस्य, तनयो विनयोत्तमः ॥ २२८ ॥ व्यवसायचिकीरत्राऽऽ-यातः श्रीवलभीपुरात् । कलाकेलिकलो राज-कुलं गच्छत्यनाकुलः ॥२३०॥
प्रवर्तते ॥२२९॥ युग्मम् ॥ अनेन वर्त्मना सैष, त्वत्तातस्योपरोधतः । पारिजातेति सम्प्रति ॥ २३१ ॥ एतदीया गुणाः स्फार—
अस्मिन् पुरंसुरोद्याने, स्फुरत्तरुणसत्तरौ, । अयमेव वपुर्लक्ष्म्या, मन्येऽहं भाग्य-
सौरभाः कमला इव । सकर्णैर्वर्णिताः कस्य, न भवन्त्यौपकर्णिकाः ॥ २३२ ॥ तामेव कामिनीं धन्यां, गुणश्रीगुणगौरवम् । तस्यां
वैभवैः । याऽस्य पाणिगृहीती स्यात्, रोहिणीव सितद्युतेः ॥ २३३ ॥ सखीमुखादिति श्रुत्वा, विवेकमुक् । गुणश्रियां स्त्रियां
मदनवत्यासीद्, विशेषेणानुरागिणी ॥ २३४ ॥ यौवनाधिष्ठितानां स्याद्, मनः प्रायो वलात् प्रेम, यः
सा स्त्री, रज्यति स्मान्यथा कथम् ? ॥२३५॥ यद्वा न यौवनस्यैष, दोषः किन्तु विधेर्ध्रुवम् । अस्थानेऽपि करेणुवत् ॥२३७॥
कारयति चेतसा ॥२३६॥ ततः सा तद्गुणौघस्य, स्मारं स्मारं स्मरातुरा । महामोहान्धजम्वाले, मज्जति स्म पुष्पचापप्रतापोत्थ—
स्नानांगरागतांम्बूल—गीतनृत्योत्सवादिकम् । विषवन्न मुदे तस्या, विरहिण्या व्यजृंभत ॥ २३८ ॥ जलजलजजलार्द्राचन्दनस्यन्द-
स्तस्यास्तापः स कोऽप्यभूत् । यत्राभुवन् वृथोपायाः, प्रतिकूले विधाविव ॥ २३९ ॥ विषमोऽयं शम्यतां
चन्द्र—प्रभृतिभिरतिशीतैः शान्तिमायाति तापः । वपुषि विरहभाजां त्वेधते तैः स कामं, कथमिति सख्याचचक्षेऽथ,
तद्भिषग्भिः ॥ २४० ॥ (मालिनीवृत्तम्) वियुक्तचक्रवाकीवद्, विक्लवां वीक्ष्य तां रहः । दक्षा शोच्या येनेदृशी
नाम्नोक्त्याऽपि प्रियंवदा ॥ २४१ ॥ वाधते त्वद्वपुर्व्याधि-राधिर्वा कोऽतिदुर्धरः ? । तपर्तुनेव वल्ली त्वं,

१ पुरमेव सुरोद्यानं-नन्दनवनं तस्मिन् २ आचारार्थे क्विप् ३ उपकर्णे भवा औपकर्णिका. ४ ऊढास्त्री. ५ जलेनार्द्रीकृतं व्यजनं-जलार्द्रा. ६ ताप,

कृता ॥ २४२ ॥ सा जगाद गवाक्षाग्रे, गच्छन् दृष्टस्तदा मया । यः कुमारः प्रभास्फारः प्रभाकर इवापरः ॥ २४३ ॥ तस्मिन्निंध्यानमात्रेऽपि, मुदा स्फारितदृग्दला । पद्मिनीवानुरक्ताऽसि, जाताऽसीदृक् तु तत्कृते ॥ २४४ ॥ सम्प्रति व्योम्नि दिक्चक्रे, पृष्ठे पार्श्वे पुरोऽपि च । तमेवैकं विलोकेऽहं, ब्रह्माऽद्वैतमिवात्मवित् ॥ २४५ ॥ स तदा दूरतोऽदर्शि, शीतांशुरिव शीतलः । अधुना हृदयस्थास्तु, कथं दहति वह्निवत् ? ॥ २४६ ॥ दुःखस्यैतन्निदानं ते, न्यवेद्यत मया सखि ! । तच्चिन्तय तदार्ति मे, यदि मद्धितमिच्छसि ? ॥ २४७ ॥ प्रियंवदोचे वेद्म्येवं, वयस्येऽहं मनस्तव । विदुष्यऽपि यदप्राक्षं, केवलं नर्मकर्म तत् ॥२४८॥ श्रेयसे प्रेयसे तस्मै, किं मुधा हृदि खिद्यसे? । यद् योग्ययोर्न योगः स्याद्, दुर्घटः स्वर्णरत्नवत् ॥ २४९ ॥ राज्ञः कन्याऽसि धन्या त्वं, गुणचन्द्रः स्फुरद्गुणः । युवयोर्घटनायां हि, किं न्यूनं ननु वल्गति ? ॥ २५० ॥ विलोक्यतेऽनुकूलत्वं, केवलं प्रबलं विधेः । अवश्यं यस्य वश्यानि, कार्याणि निखिलान्यपि ॥ २५१ ॥ दृष्टो विधिरपि प्रायः, सोद्योगो योग्ययोजने । गौरीगिरीशयोः पद्मा-पेन्द्रयोः संगमान्मिथः ॥ २५२ ॥ त्वन्मात्रे प्रणिगद्यैतत्, कारयेऽद्य तथोद्यमम् । यथा भवति तेऽभीष्टं, कष्टं मा स्म कृथाः सखि ! ॥ २५३ ॥ आश्वास्येति सुतां राज्ञः, सा तदैव प्रियंवदा । तज्जनन्याः पुरः सर्वं, तद्वृत्तांतं न्यवेदयत् ॥ २५४ ॥ ज्ञात्वा मदनवत्यास्तत्, समरश्रीर्मनीषितम् । एकांते निजकांताय, कथयामास सादरम् ॥ २५५ ॥ नृपः समरसिंहस्ता-माह स्म सुचिरं मम । अस्त्येव देवि ! त्वत्पुत्री-पाणिग्रहमहोद्यमः ॥ २५६ ॥ किंतु तादृग्वराभावा-दनुद्यम इवास्म्यहम् । परं भव्यमभूद् रक्ता, गुणचंद्रे यदात्मजा ॥ २५७ ॥

१ दृष्टमात्रे. २ तमत्रैकम्, प्र. ३ वं. प्र० ४ लक्ष्मीकृष्णयो . ५ वाछितम्. ६ उत्सवप्रयत्न .

वरः सोऽयं वरेण्यश्रीः, पुण्यैरेवाप्यते प्रिये ! । परं वणिक्सुतोऽस्तीति, चिंता मनसि मे मनाक् ॥ २५८ ॥ राज्ञी हृष्टा समाचष्ट, स्वामिंश्चिंतेयमुज्झ्यताम् । वाणिजा* हि न सामान्या, लोकोत्तरगुणत्वतः ॥ २५९ ॥ कुलं शीलं सदाचारो, विवेको विनयो नयः । श्रेयस्यं[1] च यशस्यं[2] च, वणिक्ष्वेवाखिलं किल ॥ २६० ॥ तदियं दीयतामेव, गुणचंद्राय नंदिनी । संबंधोऽस्त्वनयोः श्लाघ्यः, कौमुदीचंद्रयोरिव ॥ २६१ ॥ अंगीकृत्य प्रियोक्तं तत्, तत्क्षणं क्षोणिवल्लभः । गुणश्रियं समाकार्य, रहः कार्यविदूचिवान् ॥ २६२ ॥ दैवात् प्रीतिलतावार्द—सौहार्दमिदमावयोः । जज्ञे तद् येन न क्वापि, दीप्यते[3] किंचिदंतरम् ॥ २६३ ॥ अधुना तद्दृढत्वाय, त्वमंगीकुरु मेऽङ्गजाम् । यद्रूपस्य पुरः सर्वा, देव्यो वहुतृणं गुणिन् ! ॥२६४॥ चिंताऽऽचांता गुणश्रीस्तं, जगौ गोपगिरीश्वरम् । संबंधोऽयं प्रजावंधो !, कथमौचित्यमंचति ? ॥ २६५ ॥ क्व विवस्वान् क्व खद्योतः, क्व मेरुः क्व च सर्षपः । क्व कल्पद्रुः क्व धत्तूरः, क्व माणिक्यं क्व कर्करः ॥२६६॥ क्व देवः श्रीजितश्रीदः[6], क्वाऽहं रंको वणिक्सुतः । न महोदधिसंबंधं, तडागोऽर्हति कर्हिचित् ॥ २६७ ॥ यो देववत् सदाऽऽराध्यो, दूरस्थैरेव यत्नतः । स्वमेऽप्य स्पृहणीयं त—त्सुताविवाहसाहसम् ॥ २६८ ॥ न साजात्यं न तुल्यर्द्धि—रेकत्रावस्थितिर्न मे । न मातापितरावत्र, कथं कार्यमिदं भवेत् ? ॥ २६९ ॥ पुनस्तमालपद् भूपः, स्वरूपं यदिदं त्वया । विज्ञप्यते स तत् सर्वं, विदन्नस्मि हृदन्तरे ॥२७०॥ परं कदाऽपि त्वां दृष्ट्वा, देवे देवीव मत्सुता । त्वय्यन्वरज्यतात्यर्थं, प्रार्थयेऽहं ततः कृतिन् ! ॥२७१॥ तस्माद् धनादिसंकोचं, पित्रादेरपि चोत्तरम् । प्रत्यादिश्य मदादेशं, प्रेमवृद्ध्यै प्रमाणय ॥ २७२ ॥ गाढमाग्रहमालोक्य, गुणश्रीर्धरणीशितुः ।

---

* वणिजो द्वि. प्र. १ श्रेयस्त्वम्. २ यशस्त्वम्. ३ शोभते ( दृश्यते ). ४ व्याप्ता. ५ सूर्य. ६ श्रिया जित. श्रीदो –धनदो. येन सः. ७ निराकुल–दूरीकुल.

वृद्धानापृच्छ्य दास्यामि, प्रातरुत्तरमित्यवग् ॥ २७३ ॥ ततोऽभ्येत्य निजं वेश्म, विस्मेरा[1] कामदेवभूः । तच्छ्रीसमरसिंहस्य, वाक्यं वृद्धाग्रतोऽभ्यधात् ॥२७४॥ अन्वयुंक्त[2] च किं युक्त—मत्र वृद्धा ! निगद्यताम् ? । दैवेन कीदृशे कार्य[3]—संकटे पातिताऽस्मि हा ॥ २७५ ॥ एकतोऽयं नृपः पुत्रीं, दत्ते तत्त्वमसंविदन् । अन्यतोऽहं कृतच्छद्म—पौंस्ना[4] नारी करोमि किम् ? ॥ २७६ ॥ प्रादुष्करोम्यथ स्वात्म—रूपं तर्ह्यखिले पुरे । विडंबना ममोच्चैः स्यात्, प्रियप्राप्तिश्च नो तथा ॥ २७७ ॥ गुणश्रीवाचमाचम्य, किंचिद् रम्यं तदुत्तरम् । ध्यानादपि[5] न पश्यंतो, वृद्धास्तामाचचक्षिरे ॥ २७८ ॥ वार्धकेनैव वृद्धाः स्मो, न वयं शुद्धया धिया । चिन्तयन्तोऽपि तेनेह, किंचिज्जानीमहे न हि ॥ २७९ ॥ त्वद्बुद्धिरेव सर्वेषु, कार्येष्वायाति धुर्यताम् । यथोचितं त्वमेवोच्चै—र्ध्यात्वा वत्से ! विधत्स्व तत् ॥ २८० ॥ गुणश्रिया ततोऽध्यायि, निषिद्धोऽप्येष भूधवः । न स्थास्यति ध्रुवं कन्या—पाणिग्रहमहाग्रहात् ॥ २८१ ॥ न चाऽर्वाक् स्वप्रियप्राप्तेः, स्त्रीत्वं वक्तुं ममोचितम् । परिणेष्येऽधुना तस्मात्, पुंवेषस्था नृपात्मजाम् ॥ २८२ ॥ पड्भिर्मासैर्यदि प्राप्तः, प्रेयानत्र मया तदा । भूपात्मजाऽपि तस्यैव, भवित्री प्राणवल्लभा ॥ २८३ ॥ अथ नैव प्रियः प्राप्तः, प्रमीतायां[6] तदा मयि । यथेच्छं तनुतां राज—नंदिनी स्वमनीषितम्[7] ॥२८४॥ ततः प्रातर्नृपास्थानीं, पुण्यसारप्रियाऽगमत् । तन्निर्बंधात् प्रपेदे च, तत्पुत्रीपाणिपीडनम् ॥२८५॥ श्रुत्वा मदनवत्यासीत्, तमुदंतमनंतमुत् । स्त्रीणां प्रायः प्रियप्राप्तिः[8], सुधातोऽप्यधिकायते ॥ २८६ ॥ भूपः समरसिंहोऽथ, प्रीतस्तुच्छेतरोत्सवैः । तया गुणश्रिया सार्कं, स्वकन्यां पर्यणीनयत् ॥ २८७ ॥ गुणश्रीपाणिना स्पृष्टा,

१ आश्चर्यवती. २ अपृच्छत्. ३ कार्यवैषम्ये. ४ पुंसो भावः पौंस्नं, कृतं छद्मना पौंस्नं यया सा. ५ विचारणादपि. ६ मृतायाम् ७ स्ववाञ्छितम्. ८ पतिप्राप्तिः.

चित्ते मदनवत्यधात् । यं संमदं न सोऽध्वन्योऽ—भवत् कविगिरामपि ॥ २८८ ॥ तदा वद्धाञ्चला गोप—गिरिनाथसुताऽञ्चले । गुणश्रीर्वेदिमध्यस्था, विस्मिता ध्यातवत्यदः ॥ २८९ ॥ कलयितुमलं सर्वद्रीची कविप्रतिभा न यत्, प्रविशति मनःस्फूर्तिर्यस्मिन्न विष्टपलंघिनी । विलसति न यज्ज्योतिर्ज्ञानेऽप्यनागतवेदके, तदपि सहसा कार्यं दैवस्तनोत्यतिकौतुकम् ॥ २९० ॥ ( हरिणी वृत्तम् ) अदृष्टमश्रुतं चापि, विदधे विधिनाऽत्र यत् । हृणीयमानहृदयं, स्त्रीपाणिग्रहणं स्त्रिया ॥ २९१ ॥ पाणिमुक्तिक्षणे क्षोणी—श्वरः श्रेष्ठितनूरुहे । हास्तिकाश्वीयहेमाद्यं, माद्यत्प्रीतिः प्रदत्तवान् ॥ २९२ ॥ युता समरसिंहाद्यैः, प्राग्रैर्नासीरचारिताम् । तां समादाय मदन—वतीं सा स्वगृहं ययौ ॥२९३॥ कारयित्वाऽन्तरेऽऽवासं, विपुलं निजचित्तवत् । गुणश्रीर्मंदिरं तत्र, राजपुत्रीमतिष्ठिपत् ॥ २९४ ॥ ततः सा स्वपरीवार—मित्यूचे चतुराशया । निरूप्यं न स्वरूपं मे, पुरतोऽस्याः कदाचन ॥ २९५ ॥ गोष्ठ्यां सुधासधर्मायां, प्रवृत्तायां मिथो निशि । स्वं निह्नोतुमनाः स्माह, गुणश्रीर्नृपनंदिनीम् ॥ २९६ ॥ प्रिये ! व्रतविशेषस्य, पर्युपास्तिकृते मया । षण्मासीप्रमितं ब्रह्म—व्रतमस्त्युररीकृतम् ॥२९७॥ मासा द्वित्रा गतास्तत्र, तस्मिन्नवसिते सति । त्वया सार्धं प्रवर्धिष्णु—प्रेम्णा भोक्ष्येऽन्वहं सुखम् ॥२९८॥ तावत् त्वं मा स्म दूनाऽभू—रेवमाश्वास्य तामसौ । गोष्ठ्या भूपादिदानैश्च, प्रीणयामास नित्यशः ॥२९९॥ चतुर्भिः कलापकम् ॥ अनंगरंगभंगेन, खिन्ना मदनवत्यपि । कथंचिद् दिवसान् क्लेश—विवशानत्यवाहयत् ॥ ३०० ॥

पुण्यसारकुमारोऽथ, कामदेवैभुवा समम् । दृष्ट्वा मदनवत्यास्तं, पाणिग्रहमहोत्सवम् ॥ ३०१ ॥ सर्वथाऽपि परित्यक्त—

१ अग्रेसरताम्-अग्रगमनताम्. २ आवासम् अन्तरा-आवासमध्ये. ३ ब्रह्मव्रते समाप्ते सति. ४ गुणश्रिया, गुणचन्द्रेण वा.

तदीयाप्तिमनोरथः । हिमक्लिष्टेंदुमंदश्री—र्मनसि ध्यातवानदः ॥ ३०२ ॥ युग्मम् ॥ मया मदनवत्यर्थं, प्रार्थिता प्राक् सरस्वती । आह स श्लोकमेकं मां, सा तत्प्राप्तिनिबंधनम् ॥३०३॥ स्मरतोऽपि तमन्तमें, मंत्रवत् तत्समीहया । कुमारो गुणचंद्रस्तां, परिणिन्येऽनुरागिणीम् ॥३०४॥ श्लोकेन वंचयामास, वाणी धूर्तेव मां कुतः । ध्यानात् प्रत्यक्षयित्वा ता—मुपालप्स्येतमामहम् ॥ ३०५ ॥ पुण्यसारस्ततो ध्यान—प्रकटां वागधीश्वरीम् । महतीभक्तिरानम्य, योजयित्वा करौ जगौ ॥ ३०६ ॥ देवि ! श्लोकस्त्वयोक्तोऽभू—न्मह्यं नृपसुताप्तये । मयि तद्ध्यायकेऽप्यासीत्, सा परस्य परिग्रहः ॥ ३०७ ॥ उक्तिर्यदि त्वदीयाऽपि, मृषोद्यत्वेन दूषिता । भानुप्रभा तदा किं न, स्यात् तमिश्रे(स्रे)ण मिश्रिता ? ॥३०८॥ त्वयाऽपि वंचितोऽहं चेद्, वात्सल्यरसकुल्यया । वंचयित्री ध्रुवं तर्हि, पुत्रं माताऽप्यतः परम् ॥३०९॥ वाणी बभाण मां वत्स !, किमुपालंभसे मृषा ? । दैवीवाग् मेरुचूलेव, न चलत्येव कर्हिचित् ॥३१०॥ वंचयेऽहं प्रपंचेन, सामान्यमपि नो जनम् । निर्व्याजं भक्तिभाजं च, किं पुनस्त्वां नरोत्तमम् ? ॥३११॥ अद्यापि राजपुत्रीं तां, स्ववधूं चेद् विधित्ससे । निर्मिमीष्व तदा मित्रं, कामदेवतनूरुहम् ॥ ३१२ ॥ देव्यामुक्त्वेति यातायां, पुण्यसारो व्यचारयत् । अधुनाऽपि जगादेयं, किमेतदसमञ्जसम् ॥ ३१३ ॥ परकीया प्रिया साऽऽसीत्, परस्त्रीविमुखस्त्वहम् । तन्मे कथं भवित्री स्त्री, वंचितोऽस्मि पुनर्ध्रुवम् ॥ ३१४ ॥ तथापि गुणचंद्रेण, सार्धं निर्माय सौहृदम् । श्रुताधिष्ठायिकाऽऽदिष्टं, वितनिष्ये प्रियेप्सया ॥३१५॥ ततः स धिषणासारः, पुण्यसारः स्वमानसे । गुणश्रियं सखीकर्तुं, कामयामास तत्क्षणम् ॥ ३१६ ॥ गुणश्रीरपि कांतस्य,

१ तुषारकणा रेणुकणा वा हिमम्. २ महती भक्तिर्यस्य स. ३ मृषावचनत्वेन. ४ विधातुमिच्छसि. ५ प्रियामाप्तुमिच्छया.

किंवदंतीमपि क्वचित् । अविदन्ती विधाप्य द्राग्, वेदीं द्वारबहिर्भुवि ॥३१७॥ तत्र स्थित्वा स्वयं भूत्यै–र्वाणिज्याद्यं व्यदीधपत् । व्यवहारचिकीः प्रेयान्, कदाऽप्यत्राऽऽपतेदिति ॥ ३१८॥ युग्मम् ॥ पुण्यसारस्तदा वेद्या–मुपविष्टां गुणश्रियम् । संगंतुं गतवांस्तुंग–चंगरंगतरंगिहृत् ॥ ३१९ ॥ दूरतोऽपि समायांतं, गुणश्रीः प्रेक्ष्य तं पुरः । अजानानाऽपि कांतं स्वं, प्रमोदाद्वैतमासदत् ॥ ३२० ॥ प्रथमं रचयामास, साऽभ्युत्थानं हृदा मुदा । विस्तृताभ्यां ततो दृग्भ्यां, तदन्वङ्गेन तं प्रति ॥ ३२१ ॥ पदानि कतिचिद् गत्वा, निवेश्य स्वासनेऽद्भुते । वाचा सुधामुचा सा तं, वार्तयामासुषी चिरम् ॥३२२॥ पुण्यसारोऽपि तद्दृष्टि–तद्गोष्ठीरसमापिबन् । निमग्न इव पीयूष–पयोधौ निदधौ मुदम् ॥ ३२३ ॥ मिथः स्त्रीपुंसभावं तौ, न यद्यप्यवजग्मतुः । तथापि तन्मनोनेत्रे, निस्तुषं सुखमापतुः ॥ ३२४ ॥ नूनं दृङ्मनसी एव, प्रियाप्रियविवेचिनी । स्यातां सद्योऽपि तद्दृष्ट्या, प्रीतिद्वेषभृते हि ते ॥ ३२५ ॥ स्वचित्तमिव तच्चित्तं, प्रीतं प्रेक्ष्य स्वसन्निधेः । पुण्यसारस्त्वया सार्धं, मैत्री मेऽस्त्वित्ययाचत ॥ ३२६ ॥ अभाषिष्ट गुणश्रीस्तं, मैत्र्यै मे केयमर्थना । न हि पीयूषपानार्थं, प्रार्थ्यते कोऽपि कुत्रचित् ॥३२७॥ सोऽपि स्याद् धन्यमूर्धन्यो, यस्ते दास्यमपि श्रयेत् । किं वाच्यः स तु यं प्रीत्या, त्वं वयस्यीयसि स्वयम् ॥ ३२८ ॥ इति तज्जल्पितानल्प—प्रमोदामोदमेदुरः । प्रीतिं गुणश्रिया सार्धं, पुण्यसारश्चकार सः ॥३२९॥ एकत्रावस्थितिक्रीडा–सूक्तसारकथारसैः । तत्प्रेमेन्दुकरैर्वार्द्धि–रिवावर्द्धिष्ट संततम् ॥ ३३० ॥ अजनिष्ट तयोरैक्यं, मन्येऽन्योन्यानुवेधतः । अन्यथा कथमापन्नौ, तदात्मानौ सरूपताम्? ॥ ३३१ ॥ एवं प्रियोल्लसत्प्रीति—हृष्टा सा श्रेष्ठिनं-

---

१ अविंदंती, प्र. अविंदती, प्र. २ अन्तर्भूतणिजर्थः पा धातुरत्र, ३ आत्मनः वयस्यमिच्छसि. ४ अतिहर्षरूपगंधेन पुष्टः. ५ संवन्धतः. ६ समान (एक) रूपताम्.

दिनी। षण्मासीं सप्तभिर्घस्रै—रपूर्णामत्यवाहयत् ॥ ३३२ ॥ तथापि स्वप्रियोदंतः, क्वापि नाऽऽपि तया यदा। तदा मृत्युकृतेऽवादि, विजने स्वपरिच्छदः ॥ ३३३ ॥ प्रत्यज्ञायि मया पूर्वं, षड्भिर्मासैः पतिं यदि। न प्राप्नोमि तदा वह्नौ, सतीवत् स्वं जुहोम्यहम् ॥३३४॥ क्रमेण सोऽतिचक्राम, प्रियः प्राप्तो न कुत्रचित्। तदद्य नगराद् बाह्ये, रच्यतां चंदनैश्चिता ॥ ३३५ ॥ तया गिरा ज्वलद्दाव—कीलयेवाकुलीकृतः। व्याजहार परिवार—स्तां प्रति स्खलदक्षरम् ॥३३६॥ अद्यापि त्वत्प्रतिज्ञायां, सप्तदिन्यवशिष्यते। निश्चितं लप्स्यते क्वाऽपि, मृग्यमाणः पतिस्तव॥३३७॥अथाभाग्यान्न स प्राप्त—स्तथापि न तवोचितः। मृत्युः साधयितुं येन, तथा जीवस्य दुर्गतिः ॥ ३३८ ॥ दुर्लभं नृभवं प्राप्य, धर्मं निर्माहि निर्मलम्। यस्मादिहेप्सितं सर्वं, परलोके च सद्गतिः ॥ ३३९ ॥ भवे भवे विवोढाऽस्ति, धर्मस्त्वत्यंतदुर्लभः। शैले शैले दृशद्राशिः, पद्मरागः क्वचित् पुनः ॥ ३४० ॥ तत्पिधेहि मतिं मृत्यो—र्निधेहि सुकृते मनः। विधेहि स्वजनोद्गीर्णं, धेहि जीवितमात्मनः ॥३४१॥ ततः श्रेष्ठिसुताऽऽचष्ट, साक्षेपं स्वजनान् प्रति। विदद्भिरपि मच्चित्तं, भवद्भिः किमुदीरितम् ॥३४२॥ इयत्कालं न यो लब्धः, सोऽधुना लभ्यते कथम्?। जन्मन्यपि न सिद्धं यत्, प्रांते सिध्यति तत् कथम्? ॥३४३॥ तदलब्धौ च जीवामि, कथं भंक्त्वाऽऽत्मसंगरम्?। एकं दुःखं प्रियाभावो, द्वितीयं वागसत्यता ॥ ३४४ ॥ मम वल्लभतोऽप्यस्ति, सत्यमत्यंतवल्लभम्। तत् कीदृग् व्यवतिष्ठेत, संगरो यदि भंगुरः ॥३४५॥ आपत् समापततु संपदपैतु दूरं, ज्ञातिः परित्यजतु सर्पतु चापकीर्तिः।



---

१ आत्मानम् ( देहम् ). २ षण्मासी. ३ कर्तरि षष्ठी. *कर्मणि प्रथमा. ४ कारणेन ५ एवं मृत्युना. ६ पतिः. ७ रक्तवर्णमणिविशेषः प्रवालो वा ( चुनी-पोखराज ). ८ जानद्भिः. ९ कथितम्. १० प्रतिज्ञाम्. ११ पतितोऽपि. १२ सत्यम्.

आत्मा प्रयातु सकलं कुलमंतमेतु, न स्वीकृतं कृतधियस्तदपि त्यजंति ॥ ३४६ ॥ (वसंततिलकावृत्तम्) तदद्य दुःखमोक्षाय, निर्मांती धर्मकर्मवत् । मरणं वारणीयाऽहं, न भवद्भिः कथंचन ॥ ३४७ ॥ एवं स्वजनमाबोध्य, चितां श्रीखंडसंचिताम् । गुणश्रीस्तत्क्षणं तेन, बहिर्देशे व्यदीधपत् ॥ ३४८ ॥ परिच्छदेन सर्वेण, शोकोच्चैःस्रवदश्रुणा । वृता साऽश्वोरसं श्रित्वा, चितापार्श्वमशिश्रियत् ॥ ३४९ ॥ तन्निशम्यानलज्वाला—जालाऽऽचांतेव चेतसि । प्रतिरोमज्वलत्तीव्र-शूचीविद्धेव वर्ष्मणि ॥ ३५० ॥ धारालेनाश्रुवर्षेण, वार्षिकांबुदवीचिवत् । प्रथिष्ठमपि पंथानं, जनयंतीव पंकिलम् ॥३५१॥ प्राणान्निष्काशयंतीव, मुष्टिघातैरुरस्तटात् । तदैव विह्वलीभूता, पृष्ठे मदनवत्यगात् ॥३५२॥ त्रिभिर्विशेषकम् ॥ राजाऽपि राजलोकोऽपि, पौरवर्गोऽपि दुःखितः । तत्राऽऽजगाम वेगेन, तं निवारयितुं मृतेः ॥ ३५३ ॥ ऊचे समरसिंहस्तां । वत्स! स्वजनवत्सल ! । अकस्मात् कारणात् कस्मा—न्म्रियसे? क्लेशवानिव ॥३५४॥ न्यूनं किमपि ते वस्तु, न्यक्कृतोऽस्यथ केनचित् । इष्टानां किमुतानिष्टं, किं ते दुःखं निवेदय? ॥ ३५५ ॥ इदं वपुरियं लक्ष्मी—रियं स्त्री स्वजनोऽप्ययम् । एतत् सर्वं वृथैव त्वं, न परित्यक्तुमर्हसि ॥ ३५६ ॥ त्वं वाङ्मयाब्धिपारीण—स्त्वं कलैकनिकेतनम् । त्वं दक्षशेखरो ब्रूहि, किमित्येवं व्यवस्यसि? ॥ ३५७ ॥ एवं नृपेण पौरैर—प्युच्चैः पृष्टाऽपि सा तदा । विगोपनभिया स्वस्य, नाब्रवीन्मृत्युकारणम् ॥ ३५८ ॥ पंचभिः कुलकम् ॥ ततः कर्णे लगित्वाऽऽत्म—वृद्धानां श्रेष्ठिनंदिनी । उवाच वाचिकान्येवं, पित्रा-

---

१ नाशम्. २ मुख्याश्वम्. ३ व्याप्ता. ४ शरीरे. ५ वृष्टया. ६ पृथुतरम्, प्रविष्टम्, प्र. ७ गुणचंद्रं, तां, प्र–गुणश्रियम्. ८ गुणश्रियम्. ९ तिरस्कृतः. १० मातृपित्रादीनाम् ११ कुत्सनभयात्. १२ सदिष्टाः वाच –वाचिकानि ( सदेशा ).

दीन् प्रति दीनगीः ॥ ३५९ ॥ प्रणाममेतमन्त्यं मे, जानीतं पितरौ ! युवाम् । क्षमेथां च मदागस्तद्, यत् कृतं शैशवादपि ॥ ३६० ॥ अन्याऽतिधन्या कन्या सा—दिंदुज्योत्स्नेव मोदिनी । पित्रोरहं तु पापात्मा, तपश्रीरिव तापिनी ॥३६१॥ हे स्वसारोऽनलेऽसारं, हुत्वा जीवितमात्मनः । तथा शीघ्रं समायात, यथा मिलत मे पुरः ॥ ३६२ ॥ सख्यः ! सख्येन यत् किंचिद्, युष्मदग्रे जगे मया । तदरम्यमपि क्षम्य—मंतिमोऽयं कृतोऽञ्जलिः ॥ ३६३ ॥ त्रिःपरीय चितां प्रीत्या, गुणश्रीर्मन्दमूचुषी[3] । जगत्साक्षिंस्तथा लोक—पालाः ! शृणुत मद्वचः ? ॥३६४॥ पापिन्याऽत्र मया प्राप्तो, न प्रेयांस्तद् भवांतरे । स एव मे प्रियो भूयाद्, भवदीयप्रसादतः ॥ ३६५ ॥ युग्मम् ॥ ततो नृपादिभिर्लोकै—र्हाकारमुखराननैः । मा मेति वार्यमाणाऽपि, यावद् विशति सा चिताम् ॥३६६॥ तावद् विज्ञाय तल्लोकात्, पुण्यसारोऽतिविह्वलः । तत्रागाद् बाष्प-पूरेण, कुर्वन्नुदकिलामिलाम् ॥ ३६७ ॥ गुणश्रीपरिवारेण, स्नेहेन च भृशेरितः । स कृपारसपाथोधि—स्तां प्रति प्रोचि-वानिति ॥ ३६८ ॥ किमेतत् कर्म निर्मातुं, भवान् मित्रोपचक्रमे । ईदृग्भवादृशः कश्चिद्, विपश्चिच्चक्रुवान्न हि ॥ ३६९ ॥ मामभ्यधाः सदाऽपि त्वं, तवाकथ्यं न किंचन । यद्येतत् सत्यमाचक्ष्व, प्रविशस्यनलं किमु ? ॥ ३७० ॥ मृत्युहेतुमनु-क्त्वैव, म्रियतेऽथ त्वया सखे ! । तदा मयाऽपि मर्तव्य—मवश्यमिति मे ग्रहः ॥ ३७१ ॥ निवारयति पातकाद्, दिशति मार्गमत्युज्ज्वलं, न मर्म वदति क्वचित्, प्रकटयत्यशेषान् गुणान् । समुद्धरति संकटाद्, वहति हर्षमभ्युन्नतौ, सह त्यजति

१ सूर्यश्रीः—सूर्यताप इव, तापिनी-संतापकारिणी. २ निवार्य परिभ्रम्य. ३ उक्तवती. ४ हे सूर्य ! ५ उदकगुणाम्, ( पंकिलाम् ). ६ हे मित्र. ७ आरब्धवान्. ८ कृतवान्, प्र. ९ आग्रहः—प्रतिज्ञा.

जीवितं, स्फुरति मित्रकृत्यं ह्यदः ॥ ३७२ ॥ ( पृथ्वीवृत्तम् ) चित्तेन निर्विकल्पेन, जल्पित्वेति तदैव सः । सज्जीभवितुमारेभे, झंपां दातुं चितान्तरे ॥ ३७३ ॥ तादृग्निरूप्य तत्प्रेम, मरणांतं प्रतीतहृत् । स्वरहस्यं रहस्यूचे, गुणश्रीस्तं प्रति स्फुटम् ॥ ३७४ ॥ तन्निशम्यातिविस्मेरः, पुण्यसारो व्यचिंतयत् । अहो पत्नी ममैवेयं, गुणश्रीः स्पष्टमष्टमी ॥ ३७५ ॥ श्लोकसंकेतमात्रेण, कथमत्रेयमागमत् । कथं च कन्यां राज्ञोऽस्य, परिणिन्ये नृवेपभाक् ॥ ३७६ ॥ कथं गोपायति स्म स्वं, नृपाद्यैः प्रश्निताऽप्यलम् । कथं वा प्रियमप्राप्य, वह्नौ विशति सत्यतः ॥ ३७७ ॥ तदेतस्या गुणाः पांथी—भवंति न हि वाक्पथे । वैदग्धीदृढतागूढ—मंत्रतासत्यतादयः ॥ ३७८ ॥ मयाऽप्येषा सखीचक्रे, साधु वाग्देवतोदितात् । नो चेदस्यां मृतायां मे, म्रियेरंस्तत्र ताः प्रियाः ॥ ३७९ ॥ प्रियाणां वर्यचातुर्य—वीक्षायै दाक्ष्यमीदृशम् । कृत्वा मयैव क्लृप्ताऽऽसीत्, स्वस्यानर्थपरंपरा ॥३८०॥ ध्यात्वेति मज्जनाकंठ—ममंदानंदवारिधौ । वदति स्म विनोदेन, पुण्यसारो निजप्रियाम् ॥ ३८१ ॥ सप्तभिः कुलकम् ॥ अहो ते कृत्रिमा प्रीति—रेतावंति दिनान्यभूत् । स्निह्यतेऽपि न मह्यं यत्, त्वयैतज्जातु जल्पितम् ॥ ३८२ ॥ इदं यदि त्वया प्रीति—प्रारंभेऽप्यभणिष्यत । तदा तदैव त्वत्प्रेयान्, मयाऽथामेलयिष्यत ॥ ३८३ इदानीमपि ते सिद्धं, साध्यं यन्मां त्वमभ्यधाः । परं किंचन वच्मि त्वां, यदि मह्यं न कुप्यसि ? ॥ ३८४ ॥ इति तद्वाक्सुधासारैः, प्रमीतोज्जीवितेव सा । वामांगस्फुरणात् कांतं, संप्राप्तमिव जानती ॥ ३८५ ॥ धनसारसुतं स्माह, मन्मनोदाहचंदन ! । यथेच्छमुच्यतां कोपः, कस्त्वां पतिविदं प्रति ? ॥३८६॥ युग्मम् ॥ सोऽभ्यधात् सुभगे ! कां(का)ते,

---

१ पुण्यसारः. २ दृष्ट्वा. ३ सत्येन–प्रतिज्ञातः. ४ मज्जन् सन्.

प्रीतिस्तं कुपतिं प्रति? । सस्नेहामप्यहो यस्त्वां, निःस्नेहामिव मुक्तवान् ॥ ३८७ ॥ तस्मिन् विधीयते प्रीति—र्यः स्वस्मिन् प्रीयतेतमाम्। विरक्ते क्रियमाणा सा, स्यादंधमुखमंडनम् ॥ ३८८ ॥ मर्तव्यं म्रियमाणेन, सार्धमित्थं जनश्रुतिम्। मत्वाऽपि म्रियमाणाऽसि, तस्मै कुप्रेयसे किमु ? ॥ ३८९ ॥ तत् तदाशामपास्यैव, चिंत्यतामपरो वरः । यस्तनोति त्वयि-प्रीतिं, कोक्यां कोक इवोच्चकैः ॥ ३९० ॥ तस्येत्यनिष्टवाक्येन, प्रदोषेणेव पद्मिनी । परिम्लानमुखाऽम्भोजा, गुण-श्रीर्गदति स्म तम् ॥ ३९१ ॥ त्वं सुचयैंकधुर्योऽपि, निंद्यं किमिति जल्पसि ?। आद्रियन्ते भवादृक्षा, न हि पापोपदेशिताम् ॥ ३९२ ॥ कुलीनानां मृगाक्षीणां, निःस्नेहोऽपि पतिर्गतिः । वल्लरीणां हि शुष्कोऽपि, तरुरेवावलंबनम् ॥ ३९३ ॥ मुमोच न च निःस्नेहः, स मां किंतु विदग्धताम् । श्लोकसंकेततः शंके, परीक्षामासिवान् स्वयम् ॥ ३९४॥ यत्र जीवति जीवंति, म्रियंते च मृते स्त्रियः । म्रियते तत्कृते नो चेत्, किं नु मर्त्तव्यमश्मने ? ॥ ३९५ ॥ अपरप्रियनिर्माणं, यत् त्वं वदसि मां प्रति । तद् युज्यते पणस्त्रीणां, कुलस्त्रीणां न धार्मिक ! ॥३९६॥ हास्यमेतत् ततो हित्वा, यदि जानासि मत्प्रियम्। तर्ह्यानयेह वेगेन, नो चेन्मर्तुं प्रयच्छ मे ॥३९७॥ तादृग्निजप्रियाप्रेम—स्थैर्येण चित्ते चमत्कृतः। पुण्यसारो बभाषे तां, वाचं पीयूषधर्मिणीम् ॥ ३९८ ॥ यद्येवं निश्चयस्तेऽस्ति, तर्ह्याश्रय निजाश्रयम्। सौभागिनेयि ! कांतं ते, यथाऽऽनीय प्रदर्शये ॥३९९॥ सा स्माह नाभिः कूटाभिः, प्रतीयेऽहं त्वदुक्तिभिः । प्रियमेलोऽसि सत्यं चेत्, तर्ह्यत्रैव स मेल्यताम् ॥ ४०० ॥ प्रियस्तां पुनराचष्ट, सम्यक् परिचयं विना । तमानीतमपीह त्वं, कथं विज्ञास्यसे वद ? ॥४०१॥ गुणश्रीः स्माह सुश्लोक !,

१ प्रीति॰. २ स्थैर्येण. ३ धर्षिणीम्. प्र. ४ सुभगाया.—पतिप्रियायाः स्त्रिया अपत्यं स्त्री सौभागिनेयी तत्संबोधनम्. ५ न आभिः. ६ मिलधातोर्णिजन्तात् कर्मणि लोट्.

स्मित्वा तेनोदिते तस्मिन्, श्लोके संकेतश्लोकपाठतः । प्रत्याययिष्यते मां चेत्, तर्हि ज्ञास्यामि तं प्रियम् ॥ ४०२ ॥
स्मित्वा तेनोदिते तस्मिन्, श्लोके
संकेतश्लोकपाठतः । प्रत्याययिष्यते मां चेत्, तर्हि ज्ञास्यामि तं प्रियम् ॥ ४०२ ॥ अमांतमिव हृन्मध्ये, कांते स्नेहरसं भृशम् ।
तच्छ्रुतिमात्रतः । नृत्यंतीव मुदा चित्ते, सा तं ज्ञातवती प्रियम् ॥ ४०३ ॥ उपोषिते इव दृशौ, तदालोकसुधारसम् । स्वादयंती करे [1]धृत्वा,
धारयंती बहिर्देहे, सात्त्विकस्वेदकैतवात् ॥ ४०४ ॥ अमुच्यंतार्यपुत्रेण, तृणवत्
गुणश्रीर्निजगाद तम् ॥ ४०५ ॥ युग्मम् ॥ स्वामिन्! केनापराधेन, स्नेहाधीनहृदः प्रियाः ।
प्रथमेऽह्न्यपि ॥ ४०६ ॥ स्त्रीणां प्रेम वरं प्राणान्, [2]पत्ये मुंचंति याः क्षणात् । न तु पुंसां, विना दोष—मपि प्रीतप्रिया-
मुचाम् ॥ ४०७ ॥ तदानीं वंचयित्वा मां, निलयात् त्वं पलायथाः । इदानीं करलग्नायां, मयि यासि कथं वद ? ॥४०८॥
उक्त्वेति रुदती तारं, सा प्रीतिवचनामृतैः । [3]वर्षाब्दोक्षितवल्लीव, सोल्लासा प्रेयसा कृता ॥ ४०९ ॥ गुणश्रीः स्वं प्रियं प्राप्य,
यं प्रमोदं समासदत् । तं विवेचयितुं शक्तः, सहस्ररसनोऽपि न ॥४१०॥ प्रियदर्शनसेवात्र, सुधा साऽन्या मुधा बुधाः ! ।
आत्मा यत्पानतस्तापं, सर्वांगीणं विमुंचति ॥ ४११ ॥ पुंवेषोऽयं त्वयोत्तार्यो, गृहं गत्वाऽत्र न प्रिये ! । इत्युक्त्वा तां करे
कृत्वा, कुमारोऽभूत् [4]पुरोन्मुखः ॥ ४१२ ॥ एतत् किमिंद्रजालाभ—मित्युच्चैः संशयालवः । व्यावर्तिषत ते सर्वे, भूपाद्याः
स्वगृहान् प्रति ॥ ४१३ ॥ प्रेयसा सममासाद्य, गुणश्रीः सद्म तत्क्षणम् । तदादेशान्निजं रूपं, नटीव प्रकटं व्यधात्
॥ ४१४ ॥ सा संप्राप्तनिधानेव, तथोत्सवमतीतनत् । यथा पौरव्रजो जज्ञे, विस्मयार्पितमानसः ॥ ४१५ ॥ निभाल्य
निजनाथस्य, स्त्रीत्वं मदनवत्यथ । प्रातः कुमुदिनीवाति—म्लाना पित्रोस्तदभ्यधात् ॥ ४१६ ॥ तावपि स्फूर्जदाश्चर्यौ,

1 सर्ग ६ श्लोक १८६. २ पत्यै, प्र. ३ प्रावृड्मेघसिक्तवल्लीव. ४ नगरसन्मुखः.

समाकार्य गुणश्रियम् । विचित्रं तच्चरित्रं तत्, प्रश्नयांचक्रतुस्तराम् ॥४१७॥ तया प्रोक्ते निजे वृत्ते, भूधवः क्रोधवन्मनाः। अहो स्त्रीसाहसं गाढ—मिति ध्यायन्नुवाच ताम् ॥ ४१८ ॥ अप्रकाश्य निजं रूपं, वंचयित्वा च मां त्वया । मत्कनी परिणीयेयं, किमित्येवं व्यडंब्यत ॥ ४१९ ॥ साऽभ्यधादतिनिर्बंधे, देवेन विहिते सति । स्वविगोपनभीत्याऽह—मकृत्यं कृतवत्यदः ॥ ४२० ॥ अधुना तु प्रियासौ य—न्मयाऽऽत्मा प्रकटीकृतः । स्वसाध्यसिद्धौ जातायां, नाकीर्तिः काचनेति तत् ॥ ४२१ ॥ ततो गोपगिरींद्रस्तां, प्रेष्य पप्रच्छ मंत्रिणम् । कर्तुमस्याः सुताया मे, सांप्रतं किमु सांप्रतम् ॥ ४२२ ॥ उवाच धीसखो ध्यात्वा, देव ! यत्पाणिपीडनम् । अस्या गुणश्रिया सार्धं, बभूव व्यर्थमेव तत् ॥ ४२३ ॥ एतद्योग्यो वरः कोऽपि, नान्यो मान्योऽस्ति सद्गुणैः । तदस्मायेव कन्येयं, पुण्यसाराय दीयताम् ॥ ४२४ ॥ युक्तं मंत्रिवचः श्रुत्वा, श्रीगोपगिरिभूपतिः । धनसारं समाकार्य, सुतवृत्तप्रमोदितम् ॥ ४२५ ॥ वितीर्य तत्तनूजाय, विधिवत् तनयां निजाम् । तयोर्विरचयामास, विवाहं विस्तृतोत्सवम् ॥ ४२६ ॥ युग्मम् ॥ चिरेप्सितां राजसुतां, प्राप्य न्यक्कृतपूर्विणीम् । धनश्रीनंदनो दध्यौ, हृदि वर्धिष्णुसंमदः ॥ ४२७ ॥ धन्यानामपि मूर्धन्योऽ—स्म्यहं येन मयाऽधुना । विवाह्य स्वस्त्रिया व्यूहेऽ—निच्छंत्यपि नृपात्मजा ॥ ४२८ ॥ एकां सरस्वतीमेव, स्तुवेऽहं भक्तवत्सलाम् । एकप्रियार्थमाराद्धा, या दत्ते स्म प्रियाद्वयीम् ॥ ४२९ ॥ यद्वा किमपरैर्वर्ण्यं, पुण्यमेवैकमुल्बणम् । यस्याग्रे किंकरायंते, समस्ता अपि सिद्धयः ॥ ४३० ॥ पुण्यसारं पतिं लब्ध्वाऽ—थ्यासीन्मदनवत्यपि । धिग् धिग् दैवमयोग्यं यैः, संबंधं तनुतेऽरिवत् ॥४३१॥ अनेनैव विडंब्य

१ सप्रति. २ युक्तम्. ३ मया व्यूहे-ऊढा इत्यर्थः. ४ दैवः. ५ देवेन.

स्त्री—स्त्रीत्वेन निखिले पुरे, । यच्चक्रेऽहमनिष्टस्य, पुण्यसारस्य वल्लभा ॥ ४३२ ॥ परं दैवकृते कार्ये, किं करोत्यभिमानिता ।
ध्यात्वेति दध्रे मदन—वती प्रीतिं परां प्रिये ॥ ४३३ ॥

अथ विज्ञपयामास, गुणश्रीः स्वपतिं प्रति । भग्नीभिर्यत् प्रतिज्ञातं, मत्प्रयाणेऽवधेहि तत् ॥४३४॥ षण्मासांते सकांता चेत्, स्वसस्त्वं न समेष्यसि । दुःखांताय तदा प्राणान्, होष्यामः प्रबलेऽनले ॥ ४३५ ॥ दिवसाः संति पंचैव, तन्मृत्यवधिमध्यतः । तद् वरिष्ठ ! प्रतिष्ठस्व, त्वं द्रुतं वलभीं प्रति ॥४३६॥ नो चेद् भवद्वियोगार्त्ता, भगिन्यः पितरौ च मे । जातवेदसि लप्स्यंते, शलभैः सुलभां गतिम् ॥ ४३७ ॥ पित्रे राज्ञे च विज्ञप्य, तदनुज्ञामवाप्य च । रतिप्रीतियुतः काम, इव स्त्रीद्वयभासुरः ॥ ४३८ ॥ धनसारतनूजन्मा, पवनानिव रूपिणः । वाजिप्रष्ठानधिष्ठाय, प्रातिष्ठत पुरात् ततः ॥ ४३९ ॥ युग्मम् ॥ ग्रामीणानां प्रतिग्रामं, विनोदैर्मोदयन् मनः । महीं महीयसीमेष, ययौ ज्योत्स्नेव संचलन् ॥ ४४० ॥ सिथः प्रियाप्रियालाप—कलापामृततर्पितः । प्रस्थास्नुरपि सोऽश्रांतं, न वर्त्मश्रांततामधात् ॥ ४४१ ॥ इत्यविच्छिन्नयानेन, पुण्यसारः समासदत् । पंचमे दिवसे प्रात—र्वलभीपुरगोचरम् ॥ ४४२ ॥ तस्मिन्नेव दिने तत्र, कामदेवतनूरुहाः । सप्ताऽप्यभ्येत्य वप्तारं, दुःखतप्ता व्यजिज्ञपन् ॥ ४४३ ॥ षण्मासी परिपूर्णाऽऽसीन्, नायासीद् भगिनी परम् । नूनं सा न प्रियं प्राप, तेन जीवति नैव च ॥ ४४४ ॥ इयच्चिरं स्वकांताशां, द्रविणाशां दरिद्रवत् । कृत्वा वृथाऽसहिष्मोच्चै—र्दुस्सहं विरहानलम् ॥ ४४५ ॥ तत्प्रसद्य पितः ! सद्यः, सोद्यमीभूय दीयताम् । अस्मभ्यं सर्वदुःखद्रु—दहनाय धनंजयः ॥ ४४६ ॥ दुहितृणां

१ स्त्रिया' स्त्री स्त्रीत्वं तस्या भावस्तेन. २ अग्नौ ३ श्रेष्ठान्. ४ प्रस्थानशीलः. ५ निरन्तरम्. ६ अग्निः.

तया वाचा, विद्युतेव हृदि क्षतः[1] । लहरीरिव दुःखाब्धेः, कामदेवो जगाद गाः ॥ ४४७ ॥ धत्त वत्साः ![2] किमौत्सुक्य-मेकः सार्थः करिष्यते । उदग्रो जाग्रदस्त्येव, मंत्रोऽयं मन्मनस्यपि ॥ ४४८ ॥ निषिद्धा अपि यद् यूयं, नैव स्थास्यथ मृत्युतः । म्रियमाणाश्च नो युष्मा—नहं शक्ष्याम्यवेक्षितुम्[3] ॥ ४४९ ॥ ततस्तथा विधास्येऽहं, भवतीभिः सहाग्रतः । यथा न मे वियोगः स्या—दिहेव सहवासतः ॥ ४५० ॥

अथार्पयित्वा वेश्मादि, स्वेषां[4] पुत्रीप्रियान्वितः । श्रेष्ठी समाश्रयद् वाह्ये, ज्वलदग्निचितां[6] चिताम् ॥ ४५१ ॥ अश्रूणि चीवरक्नोपं[7], वर्षन् पौरजनोऽखिलः । एत्य तस्य समर्यादं[8], समर्यादमिदं जगौ ॥ ४५२ ॥ [10]श्रेष्ठिन्नवात् किमारब्धं, गर्हितं जगदर्हितैः । न प्रागमृत कोऽपीत्थं, पुत्रीजामातृहेतवे ॥ ४५३ ॥ जामाता यदि न प्राप्तो, मर्तव्यं तर्हि किं त्वया । मृते पितरि पुत्रेऽपि, केनापि म्रियते न हि ॥ ४५४ ॥ अथ मर्तुमना एव, तथाऽप्यासायमास्स्व[11] भोः[12] ! । दैवात् कदाचि-दभ्येति, दुहिता ते प्रियान्विता ॥४५५॥ एवं निवार्यमाणोऽपि, स्वजनैः शोकसंकुलैः । सोऽभवत् सकुटुंबोऽपि, चितायां पा(या)तुमुद्यतः ॥४५६॥ तदा वृक्षाग्रमारुह्य, कोऽपि पश्यन् दिशोऽखिलाः । तमूचे केचिदायांति, हयारूढास्त्रयो जनाः ॥ ४५७ ॥ कामदेवस्तया वाचा, सुधावृष्ट्येव तर्पितः । कृतोद्यमोऽपि झंपार्थं, क्षणमात्रं व्यलंबत ॥ ४५८ ॥ तावद् दृष्ट्वा पुरासन्नं, सर्पंतं धूममब्दवत् । गुणश्रीः प्रियमाचष्ट, भग्नीनां[13] मृत्युशंकिनी ॥ ४५९ ॥ अभ्रंलिहः पुरः स्फूर्ति[14], धूमस्तोमः

१ ताडितो व्रणयुक्तो वा. २ अस्माभिरिति शेष.. ३ शक्नोमि, प्र. ४ स्वकीयानां—स्वसंबंधिजनानाम्. ५ समासदद्, प्र. ६ कृतचयां—चर्चितताम् ७ वस्त्रक्लिन्नम्. ८ समीपम्. ९ मर्यादापूर्वकम्. १० श्रेष्ठिन् भवान्, प्र. ११ सायंकालपर्यन्तम्. १२ तिष्ठ. १३ भग्नीनामय शंकिनी, प्र. १४ वृद्धिम्.

समेति यत् । मन्येऽनेन स्वसारो मे, प्राविशन्नाशुशुक्षणौ ॥ ४६० ॥ प्रमीता यदि तास्तर्हि, वृथैवायं मम श्रमः । जीवन्तीषु ततस्तासु, कथंचिद् व्रज वल्लभ ! ॥ ४६१ ॥ ततस्तत्प्रेरितः पुण्य—सारः सारतरत्वरम् । धूमाश्रितां दिशं श्रित्वा, प्रेरयामासिवान् हयान् ॥ ४६२ ॥ दूरादालोकयन् वह्नि—ज्वालाः कवलितांबराः । संनिकर्षात् पुनः शृण्वं—स्तुमुलं जनतोत्थितम् ॥४६३॥ चिताऽन्तिकं परिप्राप्तः, पुण्यसारो न्यभालयत् । श्रेष्ठिनं ससुतास्त्रीकं, दिष्टांताविष्टचेतसम् ॥४६४॥ युग्मम् ॥ हयाद् रयात् समुत्तीर्य, जामाता विनयोन्नतः । श्वश्रूश्वशुरपादाब्जे, भृंगयामास मस्तकम् ॥४६५॥ गुणश्री राजपुत्री च, प्रणामप्राभृतार्पणात् । आनंद्य पितरौ ज्येष्ठा, भगिनीरप्यभ्यनंदताम् ॥ ४६६ ॥ पुण्यसारमुखालोक—रसैरुल्लासमासदत् । सकुटुम्बोऽपि स श्रेष्ठी, पयोभिरिव पादपः ॥ ४६७ ॥ तल्लोचनानां शोकाश्रु—स्थाने हर्षाश्रुबिंदवः । आसन्नर्स्त्यादिधातूनां, पदे भू(भु)वादयो यथा ॥४६८॥ कामनीयकमालोक्य, जामातुर्विश्वजित्वरम् । तदा न त्यक्तवान् कस्को, मन्मथाऽऽलोककौतुकम् ॥ ४६९ ॥ स्वोत्संगसंगिनीं कृत्वा, कामदेवो गुणश्रियम् । ऊचे वत्से ! गुणान् वच्मि, कांस्कान् लोकोत्तरांस्तव ॥ ४७० ॥ इदं साहसमत्युग्रं, प्रज्ञेयं विश्वदृश्वरी । इदं दुष्करकर्तृत्वं, त्वत्तो नान्यत्र कुत्रचित् ॥४७१॥ न केवलं त्वयाऽऽनीतः, स्फीतमत्या निजः पतिः । किंतु जीवितमप्यस्य, कुटुम्बस्य विनश्यतः ॥४७२॥ यथा कमलया विश्व—स्पृहणीयगुणौघया । प्रतिष्ठां प्रापितो वार्धि—स्तथाऽहं सुतया त्वया ॥ ४७३ ॥ द्वितीया का ? द्वितीयाऽसा—विति पृष्टा जगाद

१ वह्नौ २ कोलाहलम्. ३ मरणाविष्टमानसम्. ४ अस् भुवि, आदिना भूज् व्यक्ताया वाचि. इण् गतौ. ५ स्थाने. ६ 'अस्तेर्भूः' इति भूः, आदिना 'भुवो वचि.' इति वृच्. 'इणो गा लुङि' इति गा. ७ विश्वं पश्यतीत्येवंशीला ८ विस्तृतमत्या. ९ लक्ष्म्या.

सा । पुत्री समरसिंहस्य, तातेयं मत्प्रियप्रिया ॥ ४७४ ॥ कामदेवस्ततो लक्ष्मी—धर्माविव वधूवरौ । पुरस्कृत्य निजं धाम, जगाम प्रकृतोत्सवः॥४७५॥अतिपथ्यैर्महातिथ्यै–र्नैपथ्यैश्च नवैर्नवैः । जामातरं स सच्चक्रे, सच्चक्रैकशिरोमणिः ॥४७६॥ स्वपुत्रीभ्योऽपि मदन–वर्ती सोऽमानयत्समाम् । आत्मीयोऽयं परो वेति, क्व विभागो महात्मनाम् ॥४७७॥ नवानामपि पत्नीनां, पुण्यसारः समोऽजनि । तत्संख्यानां यथा ब्रह्म—गुप्तीनां मुनिसत्तमः ॥ ४७८ ॥ सुधांशोरिव जामातु—र्विश्वजीवातुसन्निभान् । गुणान् निभालयञ्श्रेष्ठी, दक्षवत् पिप्रियेतमाम् ॥५७९॥ पुण्यसारे सुखेनैवं, सस्त्रीके तत्र तिष्ठति । समागमञ्जनाः क्ष्मापै—तत्पित्राऽऽदेशपेशलाः ॥४८०॥ पुण्यसारं प्रणम्योचु–स्ते धीमन् ! विरहस्तव । तापयत्यर्कवद् गोप–गिरींद्रं पितरावपि ॥ ४८१ ॥ प्रस्थाय तदितस्तूर्णं, दाक्षिण्यैकनिधे ! त्वया । स्वजनोत्तापशांत्यर्थं, पुष्करावर्तकायतां ॥ ४८२ ॥ तदनिष्टमिव श्रुत्वा, कामदेवोऽतिविव्यथे। तादृशानां प्रयाणोक्ति—र्न स्यात् कस्यार्त्तिकारणम् ? ॥ ४८३ ॥ तदीयं सर्वमश्वीयं—स्वर्णाद्यं यौतकार्पितम् । दत्त्वाऽनर्घ्यांश्च वेषादीन्, भूपवैवाहिकोचितान् ॥ ४८४ ॥ सत्कृत्य च पुनर्दिव्य—वस्त्राभरणदानतः । कुमारं स नवस्त्रीकं, श्रेष्ठी प्रातिष्ठिपत् ततः ॥४८५॥ युग्मम् ॥ प्रयाणसमये पुत्रीः, पित्रोः प्रणतिकारिणीः । पिता पल्लवितप्रीतिः, प्रत्येकमिदमन्वशात् ॥ ४८६ ॥ पत्यौ प्रीतिरकृत्रिमा, श्वशुरयोर्भक्तिः, सपत्नीजने—ऽनु-

*अर्थधर्मौ. १ अतिहितकारिभिः. २ अतिशयेन अमानयत्. ३ नवानाम्. 'वसहि कैह निसज्जिंन्दिय–कुड्डिंतर पुव्वकीलिए पणिए । अइमायाहार विभूसणाइ नववंभचेरगुत्तीओ ॥ १ ॥' इति संक्षितानाम्. ४ चन्द्रस्य. ५ रोहिणीपिता–चंद्रस्य श्वशुर–दक्षप्रजापतिस्तद्वत्. ६ सगरसिंहधनसारादेवसुन्दराः. ७ पुष्करावर्तक शब्दादाचारार्थे क्यङ्, पुष्करावर्तकाऽयतां. प्र. ८ अश्वानां समूहोऽश्वीयः. ९ विवाहकाले लब्धं धनं–यौतकम्. १० मेघग० प्र. ११ आगतैः.

त्सेको, विनयो ननांदरि, महान् स्नेहः कुटुंबेऽखिले । देवार्चादिरतिः, कुकर्मविरतिः, क्षांतिप्रियोक्तित्रपा—दानाद्यानि च, सुभ्रुवां विदधते स्थेष्ठां प्रतिष्ठां गृहे ॥४८७॥ (शार्दूलविक्रीडितवृत्तम्) इमान् कुलवधूधर्मान्, निर्मिमाणाः स्वशर्मणे। पंताकायध्वमात्मीये, वंशे यूयं सुताश्चिरम् ॥ ४८८ ॥ ततः स्वयं कियद्दूरं, परीणीय सुतापतिम् । कामदेवो न्यवर्तिष्ट, स्पष्टकष्टः कथंचन ॥ ४८९ ॥ कुमारोऽपि स्वपत्नीस्ताः, पित्रादिविरहार्दिताः । कथादीनां विनोदेन, मोदयन् प्रस्थित-स्ततः ॥ ४९० ॥ मदनस्येव शस्त्रीभि—र्नवस्त्रीभिः सह व्रजन् । रथस्थः सोऽन्यदा मार्गे, मार्गं यूथमुदैक्षत ॥ ४९१ ॥ कांश्चित् प्रौढप्रियानेत्र—जितनेत्रानिवं द्रुतान् । उत्फालान् कांश्चन व्योम-क्रान्तिक्रीडापरानिव॥४९२॥कांश्चिच्चक्रोरुचीत्कारैः, स्तंभितानिव निश्चलान् । स कुरंगानपि प्रेत्त—रंगान् दृष्ट्वा विमृष्टवान् ॥ ४९३ ॥ युग्मम् ॥ वनक्रोडे गलत्पीड—क्रीडया स्वान्तहर्षिणः । इत्थं मया क्व सारंगा, निरीक्षांचक्रिरे पुरा ॥ ४९४ ॥ इत्यंतश्चिंतयन्नेव, पौनःपुन्यान्मुमूर्च्छ सः । प्राक्तनं जननं स्वस्य, दृष्टवांश्च यथास्थितम् ॥ ४९५ ॥ तत्कालं प्रेक्ष्य मूर्च्छालं, प्रियमत्याकुलाः प्रियाः । चंदनाद्युपचारेण, चैतन्यं प्रापयंश्चिरात् ॥ ४९६ ॥ मूर्च्छाहेतुं प्रियापृष्टः, पतिः प्रोचे मृगेक्षणात् । मूर्च्छितो ज्ञातवाञ् जाति—स्मृत्याऽहं प्राग्भवं निजम् ॥ ४९७ ॥

तथाहि विश्वहृद्ग्राहि-श्रीभृते क्वापि पर्वते । धर्ममंदः पुलिंदोऽहं, सस्त्रीकः प्राग्भवेऽभवम् ॥ ४९८ ॥ सप्रियोऽपि वहंश्चंड—कोदंडकांडमंडितम् । मृगव्यां कर्तुमन्येद्यु—र्व्याधवद् विपिनेऽभ्रमम् ॥४९९॥ स्फाराञ् कार्मुकटंकारान्, श्रुत्वा

१ स्वेष्टाम्, प्र. २ प्रापय्य. ३ मृगाणामिदं मार्गम्. ४ निवाद्भूतान्. प्र. ५ दत्त०. ६ मृगेक्षणा. । प्र. ७ धनुः. ८ बाण०. ९ द्वितीयान्तम्. १० धनुर्ध्वनीन्.

दावोदरंभरीन् । वने वनेचरास्तत्र, तत्रसुः प्राणिनोऽखिलाः ॥ ५०० ॥ ततः परस्पराभंगाऽ–नंगरंगतरंगितम् । शरव्यीक्रियते स्मैकं, मृगस्य मिथुनं मया ॥ ५०१ ॥ सन्निकृष्टं समाकृष्ट—कार्मुकं वीक्ष्य मां मृगः । नंष्टुं सहोऽपि नाऽनेशद्, विमृशन् गर्भिणीं मृगीम् ॥ ५०२॥ किंतु तां परमप्रेम्णा, समाच्छाद्य स्ववर्ष्मणा । पश्यन् मां त्रस्तया दृष्ट्या, दीनवत् तस्थिवान् पुरः ॥ ५०३ ॥ तथा मया निभाल्यापि, निस्त्रिंशत्वेन सा मृगी । सक्रियेव कृतघ्नेन, निजघ्नेऽरुंतुदेषुणा ॥ ५०४ ॥ तेन बाणेन निर्भिन्ना, हरिणी धरणीं गता । विदीर्णोदरनिर्गच्छ—द्गर्भा मरणमानशे ॥ ५०५ ॥ प्रमीत-हरिणीं प्रेक्ष्य, प्रीत्या भीत्या च तत्क्षणम् । दीर्णहृत् पक्ववालुंकी–फलवन् मृतवान् मृगः ॥ ५०६ ॥ गत्वा दृष्ट्वा च सारंग—मिथुनं तत् तथा मृतम् । भुवि स्फुरंतं गर्भं च, किंचिच्चैतन्ययोगतः ॥५०७॥ अहं मच्छलभा साऽपि, जुगुप्सामासिवोच्चकैः । अनुतापाग्निसंतप्त—मानसौ स्वं कुकर्म तत् ॥५०८॥ युग्मम् ॥ आजन्माऽविद्धकर्णोऽपि, धर्माक्षरशलाकया । दैवात् तदा स्फुरच्चारु—कारुण्योऽहमचिंतयम् ॥ ५०९ ॥ मृगव्यं सत्यमेवाहुः, पापर्द्धिं शुद्धबुद्धयः । आयःशूलिकता यस्मि–न्नीदृशी जंतुघातिनी ॥ ५१० ॥ समंतूनप्यहो जंतून्, क्षमंते केचिदुत्तमाः । मयाऽनाथ्येण मार्यंते, हंत निर्मंतवोऽपि ते ॥ ५११ ॥ अहो मे मूढता काऽपि, सकृत्तृप्तिकृते कृतेः । अमीषां जन्मिनां जन्म, निखिलं खलु लुप्यते ॥ ५१२ ॥ इयत्कालं वृथा

---

१ वन० २ परस्परम् अखंडकाम ( शृंगार ) रसनिमग्नम्. ३ लक्ष्यीक्रियते. ४ प्राप. ५ चिर्भटीफलवत् ( काकडी ). ६ मृगयां. ७ पापर्द्धिम्. ८ अयः-शूलेन अर्थात् अन्विच्छतीति–अयस्शूलशब्दात् ठक् ततो भावे तल्, "तीक्ष्णोपायेन योऽन्विच्छेत् स आयःशूलिको जनः" इत्युक्तः तीक्ष्णकर्मणाऽर्थकरः–आयःशूलिकः तस्य भावस्तत्ता ( अतिक्रूरता ). ९ हिंसनात्.

काल—धर्मं नीता मयाऽङ्गिनः । नियमोऽतः परं याव-ज्जीवं जीववधेऽस्तु मे ॥५१३॥ पक्षिवत् पोषयन् प्राणान्, कंदमूलफलादिभिः । अंहसा मांसलं मांस-मपि नाश्नामि कर्हिचित् ॥ ५१४ ॥ इत्यभिग्रहमत्युग्र-मादायाऽहं दयालुहृत् । यतिस्थितिमिवाऽऽमायां, जायां प्रति तमभ्यधाम् ॥ ५१५ ॥ साऽपि धर्मोन्मुखी किंचित्, सुमुखी मांसभक्षणे । जग्राहाभिग्रहं प्रायः, सती पत्यनुवर्तिनी ॥ ५१६ ॥ ततो वनेचराञ् जीवान्, पश्यंतौ निजजीववत् । नियमं पालयंतौ च, कालं निन्यिवहे बहुम् ॥ ५१७ ॥ अंतेऽहं भद्रभावेन, मृत्वा कारुण्यपुण्यतः । अस्मिं निःसीमसौख्यैक-पात्रं मर्त्योऽप्यमर्त्यवत् ॥ ५१८ ॥ प्रिया दयैकजीवातुः, सा तु मद्विरहातुरा । मृत्वोदपादि कुत्राऽपि, न वेद्मि तदहं हहा ॥ ५१९ ॥ इति ब्रुवत एवास्य, पुण्यसारस्य दृक्पथे । अवातारीद् दिवः साधु—श्चारणः पापवारणः ॥५२०॥ अवतीर्य रथात् तूर्णं, द्वेधाऽपि प्रमदान्वितः । कुमारस्तं नमश्चक्रे, मुनिं व्रतमिवांगिनम् ॥५२१॥ श्रेयोराशिमिव प्राप्य, तदाशीर्वादमादरात् । कुत्र मे प्राग्भवस्त्रीति, पृच्छति स्म स तं ततः ॥ ५२२ ॥ विज्ञाय ज्ञानतः साधु—रभिधत्ते स तं प्रति । गुणश्रीरियमुद्दाम—प्रीतिस्ते प्राग्भवप्रिया ॥ ५२३ ॥ स्मरसि त्वमियं धृत्वा, पुंवेषं त्वत्पुरं गता । मृतिव्यतिकरेण त्वां, धीमन्नासादयिष्यति ॥ ५२४ ॥ पुष्णाति प्राग्भवप्रीते-रेव कांतास्वियं त्वयि । पुष्कलं प्रेम तारासु, रोहिणीव सितद्युतौ ॥ ५२५ ॥ किंच दृष्ट्वा पुरोपात्तो-दात्तजीवदयाव्रतात् । ईदृक्फलं ततः कार्यं, भवेऽस्मिन्नपि तत् त्वया ॥ ५२६ ॥ कृपैव सर्वजीवानां, परमानंददायिनी ।

१ पापेन पुष्टम्. २ स्वभार्याम्. ३ अभिग्रहम्. ४ धर्मसन्मुखी. ५ जातोऽस्मि इत्यर्थः. ६ दृष्टिमार्गे—दृष्टिविषये. ७ आनन्देन स्त्रिया च युक्तः. ८ भूतार्थे भविष्यद् "अभिज्ञावचने लृट्" इति ९ कान्तासु—अन्यस्त्रीषु इयं—गुणश्रीः. १० पूर्वभवस्वीकृतविशालजीवदयाव्रतात्. ११ जीवदयाव्रतम्.

यथा कुमुदखंडानां, चंद्रिकैव विकाशिनी ॥ ५२७ ॥ यथा सदप्यसद्देश्यं, देहं चेतनयोज्झितम् । कृतमप्यकृतप्रायं, पुण्यं निष्करुणं तथा ॥ ४२८ ॥ तां निशम्य मुनेर्वाचं, पुण्यसारः प्रियान्वितः । जगृहे निधिवच्छ्राद्ध—धर्मं जीवदयामयम् ॥ ५२९ ॥ तं चारणमुनिं नत्वा, प्रस्थितः सुस्थितस्ततः । प्राप गोपगिरिद्रंगं, स पित्रालोकनोत्सुकः ॥ ५३० ॥ तत्पित्रा धनसारेण, राज्ञा चागत्य संमुखम् । कृतोत्सवो निजं सद्म, पुण्यसारः समाश्रयत् ॥ ५३१ ॥ स्त्रीणां विरहसंतप्तं, चेतः सिंचन्नहर्निशम् । अकृत्रिमप्रेमरसैः, स सुखं तस्थिवान् गृहे ॥ ५३२ ॥ भूमान् समरसिंहोऽथ, पुत्राभावान्निजे पदे । पुण्यसारं तमारोप्य, प्रव्रज्य च दिवं ययौ ॥ ५३३ ॥ पुण्यसारस्ततः स्फारै—रनीकैर्जगतीं जयन् । सुखं न्यवीविशत् स्वाज्ञां, राज्ञां मूर्धनि माल्यवत् ॥ ५३४ ॥ गुणश्रियं गुणोद्दामां, पट्टराज्ञीं व्यधत्त च ( स ) । कल्पवल्लीव पत्यौ स्यात्, प्रीतिः स्त्रीणां प्रियंकरा ॥५३५॥ कष्टादिरक्षणान्न्याय—शिक्षणात् पोषणादपि । बभूव स हितोऽत्यंतं, पितृवत् प्रकृतीः प्रति ॥ ५३६ ॥ विदन् दयाफलं तादृग्, वैभवाद्यं स भूपतिः । अभयोद्घोषणापूर्वं, जीवघातं न्यवारयत् ॥५३७॥ अहं पूर्वं पुलिंदोऽपि, चारुकारुण्यपुण्यतः । इहापि प्राप्तवानस्मि, संपदं शातमन्यवीम् ॥ ५३८ ॥ प्रत्येकमुपदिश्येति, स धर्माचार्यवन्नृपः । अपरैरपि भूपालै—र्दयोदयमसूत्रयत् ॥ ५३९ ॥ युग्मम् ॥ दूरीकृतमनःसादान्, स प्रासादान् व्यदीधपत् । पुण्यलक्ष्मीविनोदाय, कृत्रिमान् पर्वतानिव ॥ ५४० ॥ पुण्यसारो ददौ दानं, दीनादिभ्यो दिने दिने । परलोकाध्वने नूनं, न्यासीकुर्वन्निव श्रियम् ॥ ५४१ ॥ मोक्षद्वारप्रतीहारान्, हारान् श्रेयःश्रियां हृदि । परमेष्ठिनमस्कारान्, स

१ षाण्मासिकविरहेण संतप्तम्. २ विपुलैः. ३ हितकरः. ४ तादृग् वैभवाद्यं दयाफलं विदन्नित्यन्वयः. ५ शतमन्यो. (इन्द्रस्य) इयम्. ६ विषादान्.

ससार स्वनामवत् ॥ ५४२ ॥ एवमावर्जयन् पुण्यं, न्यायेनोल्लासयन् यशः । आस्वादयन् सुखं भूप-श्चिरं राज्यमपालयत् ॥ ५४३ ॥ गतोऽथ वाहकेल्यर्थं, पार्थिवः प्राप्य सद्गुरुम् । तद्देशनारसं तृष्णाऽऽ—तुरवत् पीतवानिति ॥ ५४४ ॥ मानुषत्वाद्यमासाद्य, स्वहिते यः प्रमाद्यति । विलंबते स दुर्बुद्धिः, सुधापानार्थमर्थितः ॥ ५४५ ॥ गृहाऽऽशंसां मुक्त्वा चरणभरमादृत्य सुचिरं, तपस्यंतः संतः क्वचिदपि वने दूरितजने । समाधिस्वःकुल्याजलविगलिताशेषकलुषा—स्तदाप्तुं कैवल्यं कतिचन यतंते सुकृतिनः ॥ ५४६ ॥ ( शिखरिणीवृत्तम् ) प्रबुद्धात्मा नृपो दत्त्वा, राज्यं स्वतनुजन्मने । गुरोस्तस्यैव पादांते, दांतात्मा व्रतमाददे ॥ ५४७ ॥ तपस्तपर्तुनाऽऽशोष्य, कालुष्यसलिलं घनम् । पुण्यसारो विपद्यांते, दिवमासेदिवान् मुदा ॥ ५४८ ॥ ततश्च्युत्वा विदेहेषु, मुक्त्वा चैश्वर्यमद्भुतम् । व्रतेन केवलं लब्ध्वा, स गमी मोक्षमक्षयम् ॥ ५४९ ॥ त्वं पुण्यसारकथया फलमाकलय्य, कारुण्यकल्पतरुकल्पितमित्यनल्पम् । निःशेषदर्शनमतं सुकृतैकसारं, तत् पालयस्व नरपाल ! कुमारपाल ! ॥ ५५० ॥ ( वसंततिलकावृत्तम् )

इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरित्रे महाकाव्ये कारुण्योपदेशो नाम षष्ठः सर्गः ॥ षण्णां सर्गाणां मीलने ग्रन्थाग्रम् ३७४३ ॥

१ दूरं जाता जनाः यस्य (यस्मात्) तत् तस्मिन्. २ गंगा. ३ प्रसिद्धम्. ४ समीपे. ५ शोषयित्वा. ६ प्राप्तवान्. ७ सम्मतम्. ८ कारुण्यम्.

## अथ सप्तमः सर्गः ॥

अथोदितस्य धर्मस्य, भेदज्ञापनकाम्यया । उज्जंगार[1] गिरं राज—गुरुर्गुर्जरनायकम् ॥ १ ॥ यतिश्राद्धगतत्वेन, धर्मो विस्फुरति द्विधा । यं प्राप्य यानवज्जीव—स्तरत्येव भवार्णवम् ॥२॥ तत्रादिमो भवेत् पंच[2]—महाव्रतमयात्मकः । धीराणामतिनेदीया—नध्वा सिद्धिपुरस्य यः ॥ ३ ॥ द्वितीयोऽपि स सम्यक्त्व—मूलः[3] स्याद् द्वादशव्रती । सम्यक्त्वाप्तिस्तु जीवस्य, प्रोचे प्राच्यैरिति श्रुते[4] ॥४॥ जीवोऽनादिरसौ कर्माऽ—प्यनादि स्यात् प्रवाहतः । योगोऽप्यनादिरनयोः, सुवर्णमलयोरिव ॥ ५ ॥ स्याज् ज्ञानावरणीयाद्यं, मूलतः[5] कर्म चाष्टधा । भेदतो[6]ऽप्यष्टपंचाश—च्छतप्रकृतिसंयुतम् ॥६॥ ज्ञानदृष्ट्यावृति[7]वेद्य–विघ्नानां तत्र कीर्तिताः । सागरोपमकोटीनां, त्रिंशत्(३०)कोट्यः परास्थितिः॥७॥ मोहस्य सप्तति(७०)र्नाम—गोत्रयोर्विंशतिस्तथा(२०)। आयुषश्च त्रयस्त्रिंशत्(३३),सागरा नारके सुरे॥८॥ततः शैलसरिद्ग्राव–घोलनासंनिभात् स्वयम् । यथाप्रवृत्तिकरणात्, क्षीणेषु बहुकर्मसु ॥ ९ ॥ सागराणां कोटीकोट्यां, प्रत्येकं[8] सर्वकर्मणाम् । स्थितायां[9] किंचिदूनायां, जीवाः कृतभवभ्रमाः ॥ १० ॥ रागद्वेषपरीणाम—मयं दृढतरस्थितिम् । दुर्भेदं ग्रंथिमायांति, घट्टं[10] श्रांता इवाध्वगाः ॥ ११ ॥ त्रिभिर्विशेषकम् ॥ निवर्तंते ततः केचिद्, रागाद्यरिपरिक्षताः[11] । सैरस्वल्लोलकल्लोला[12], इव वेलान्तवारिताः[13] ॥ १२ ॥

१ उत् गॄ शब्दे. २ पंचमहाव्रतानि प्रचुराणि प्रधानानि वा आत्मा-स्वरूपं यस्य सः. ३ लः. प्र. ४ आगमे. ५ सामान्यतः–मूलभेदानाश्रित्य. ६ विशेषत —उत्तरभेदानाश्रित्य. ७ दर्शनावरण०. ८ ( सप्त ) ९ स्थितौ सत्याम्. १० स्नानायावतरणस्थानम् ( घाट ). ११ रागादिशत्रुपरिहताः. १२ समुद्र०. १३ तीरान्तनिवारिताः.

भ्रमंति केऽपि तत्रैव, कर्मरुद्धा शरीरिणः । राधावेधाय यंत्रोर्द्ध्वं—वद्धाश्चक्रगणा इव ॥ १३ ॥ भाविभूरिशुभाः केचित्, तं ग्रंथिं प्रौढशक्तितः । भिंदंत्यपूर्वकरण-वज्राग्रेण गिरींद्रवत् ॥१४॥ कृतेऽन्तरकरणेऽथा—निवृत्तिकरणस्थिताः । क्षिपं-त्यंतर्मुहूर्तेन, जीवाः कर्माणि भूरिशः ॥ १५ ॥ शांतेऽभ्युदीर्णे मिथ्यात्वे, सत्यूषरगताग्निवत् । लभंते निर्वृतिप्राप्ति-हेतुं सम्यक्त्वमंगिनः ॥ १६ ॥ यद् ग्रंथिभेदे प्रथमं, सम्यक्त्वं जायतेऽङ्गिनाम् । अंतर्मुहूर्तप्रमितं, तदौपशमिकं खलु ॥ १७ ॥ नैसर्गिकमिदं प्रोक्तं, सम्यक्त्वं पूर्वसूरिभिः । जातं गुरूपदेशेन, तदाभिगमिकं पुनः ॥१८॥ सद्देवगुरुधर्मेषु, या देवगुरुधर्मधीः । सम्यक्त्वमवगम्यं त—न्मिथ्यात्वमितरत् ततः ॥ १९ ॥ क्षीणनिःशेषरागादि—दोषस्त्रिभुवनार्चितः । यथार्थवादी सर्वज्ञो, देवोऽर्हन्नेव नापरः ॥२०॥ सरापसंसारमूर्च्छालाः, करालाः कोपचेष्टितैः । विप्रलंभपरा देवा, मुक्त्यै न प्रभविष्णवः ॥२१॥ चारित्रकमलाकेलि—दीर्घिका ब्रह्मचारिणः । शुद्धधर्मोपदेष्टारो, गुरवः स्युः शिवंकराः ॥ २२॥ लोलुपा निष्कृपा ब्रह्म—भ्रष्टाः क्लिष्टाः कषायिणः । धर्मविप्लावका नैव, गुरवो हितहेतवे ॥ २३ ॥ मुक्तिलक्ष्मीशिरश्शूलः, प्रतिकूलो भवद्विषाम् । विश्वानुकूलः कारुण्य—मूलो धर्मो जिनैर्मतः ॥ २४ ॥ हिंसामयोऽपि धर्मश्चे—न्निर्वाणाय प्रगल्भते । जीवानां जीवितव्याय, विषास्वादस्तदा न किम् ? ॥ २५ ॥ यच्चित्तौकसि सम्यक्त्व—दीपो देदीप्यते सदा । न मिथ्यात्वतमः—स्तोम—स्तान् विहस्तयति क्वचित् ॥ २६ ॥ अंतर्मुहूर्तमपि यः, सम्यक्त्वं वहते हृदि । अपार्धपुद्गलपरा—वर्तस्तस्य

१ ऊर्द्ध्, प्र. २ क्षीणे सति. ३ उदयं प्राप्ते. ४ अधिगमिकमित्यर्थः. ५ सम्यक्त्वात्. ६ अपस्मारो-रोगविशेषः (वाई) ७ नाशकाः. ८ भवा.-चतुर्गतयः त एव द्विपस्तेषाम्- ९ चेष्टते. १० गृहे. ११ भृशं दीप्यते. १२ व्याकुलयति,

भवो[1] भवेत् ॥ २७ ॥ सम्यक्सम्यक्त्वभृत् प्राणी, प्राप्नोति त्रिदशश्रियम् । वद्धायुष्को न चेत् पूर्वं, नरकादौ कुकर्मणा ॥ २८ ॥ चारित्रादपि सम्यक्त्वं, कथयंत्यधिकं जिनाः । सिध्यंति यदचारित्रा, न सम्यक्त्वोज्झिताः पुनः ॥ २९ ॥ स्वं रुरोचयिषध्वं[2] चे—न्मुक्तिवध्वै सचेतनाः । सम्यक्त्वभूषणेनैव, भूषयध्वं तदाऽन्वहम् ॥ ३० ॥ शमसंवेगनिर्वेद—करुणाऽऽस्तिकताऽऽत्मभिः । सम्यक्त्वं लक्षणैरेभि—र्लक्ष्यतेऽतिविचक्षणैः ॥ ३१ ॥ भक्तिः प्रभावना स्थैर्यं, दाक्ष्यं च जिनशासने । तीर्थशुश्रूषणं चास्य[3], भवेद् भूषणपंचकम् ॥३२॥ शंका कांक्षा जुगुप्सा च, मिथ्यादृक्स्तवसंस्तवौ[4] । सम्यक्त्वे दूषणान्याहुः, पंचेमानि मुनीश्वराः ॥ ३३ ॥

अणुव्रतानि पंचादौ, दिग्विरत्यादिकं त्रयम् । शिक्षाव्रतानि चत्वारि, स्यादेवं द्वादशव्रती ॥ ३४ ॥ द्विधात्रिधापि[5] च स्थूल—हिंसादेर्विनिवर्तनम्[6] । अहिंसाप्रमुखा पंचा—णुव्रती गदिता जिनैः ॥ ३५ ॥ त्रसानां मंतुमुक्तानां[7], हिंसां संकल्पकल्पिताम्[8] । स्थावराणामपि व्यर्थाम्, वर्जयेत् करुणापरः ॥ ३६ ॥ देवातिथ्यादिपूजार्थं, वेदस्मृत्यादिवाक्यतः । विधीयते वधः सोऽपि, नरकप्राप्तिलग्नकः[9] ॥ ३७ ॥ यदि भजति पयोधिर्धन्वतां[10] शीतरश्मि—र्वहति दहनभावं पुष्यति ध्वांतमर्कः । दिनमपि रजनीत्वं याति रात्रिर्दिनत्वं, तदपि हि सुकृतं न प्राणिघातः प्रसूते ॥ ३८ ॥ ( मालिनी )

१ संसारः. २ आत्मानं रोचयितुमिच्छत चेन् मुक्तिस्त्रियै. ३ सम्यक्त्वस्य. ४ प्रशंसापरिचयौ. ५ दिना, प्र. दुविहं तिविहेणं. ६ हिंसादे', प्र. ७ अपराधरहितानाम्. ८ संकल्परचिताम् ( निरपेक्षां च). ९ प्रतिभूः. १० मरुस्थलताम्.

न तच्छास्त्रं न सा देव—पूजा न स कुलक्रमः । न तत् पुण्यं भवेद् यत्र, प्राणिप्राणप्रमापणम् ॥ ३९ ॥ ततो दुर्जनमैत्रीवत्, कृत्वा हिंसां[1] दवीयसीम्[2] । सन्मैत्रीमिव कुर्वीत, दयां नेदीयसीं[3] सुधीः ॥ ४० ॥ ( १ )

दोषानिहाप्रतिष्ठादीन्, मूकत्वादीन् परत्र च । असत्यफलमालोक्य, स्थूलं तत्[4] सुकृती त्यजेत् ॥४१॥ ध्वांते दीपोऽम्बुधौ यानं, शीतेऽग्नी रुजि[5] भेषजम् । प्रतिक्रियेति सर्वत्रा—प्यस्ति नासत्यवादिनः ॥ ४२ ॥ असत्यं निगदन्नन्य—दपि चेद् याति दुर्गतिम् । तदा धर्मान्यथाभाषी, को वेद क्व गमी जनः? ॥ ४३ ॥ सर्वथाऽपि व्यपाकृत्य, तदलीकं व्यलीकवत्[6] । सत्यमेव समाश्रेयं, विश्वासादिगुणास्पदम् ॥ ४४ ॥ ( २ )

हस्तच्छेदशिरश्छेद—शूलक्षेपादिकाः क्रियाः । चौर्योपचारमालोच्य, स्थूलं तत्[7] परिवर्जयेत् ॥ ४५ ॥ वधादप्यधिकं स्तेयं[8], तेनैको[9] यद् विपद्यते । धने हृते पुनः प्रौढ—क्षुधैव सकलं कुलम् ॥ ४६ ॥ दत्त्वा प्राणानपि द्रव्यं, त्रायंते जनतास्ततः । तत् प्राणाधिकमामृश्य, न हर्तव्यं विवेकिना ॥ ४७ ॥ स्वस्य मीमांसमानेन[10], मांसलं[11] कुशलं चिरम् । स्तेयं बुद्धिमता हेयं, प्राणघ्नं कालकूटवत् ॥ ४८ ॥ ( ३ )

अकीर्त्तिं षंडतां[12] द्रव्य—हानिं चाब्रह्मणः फलम् । विदन् सदा स्वदारेषु, विदधीत सुधी रतिम् ॥ ४९ ॥ जितेन्द्रियो गृहस्थोऽपि, यः शीलं परिशीलति । रक्तेव तद्गुणैरेत्य, सुकृतश्रीर्वृणोति तम् ॥ ५० ॥ स्वकीया परकीया च, पण्यस्त्री

---

१ हिंसनम्. २ अतिशयेन दूराम्. ३ अतिशयेन समीपस्थाम्. ४ असत्यम्. ५ रोगे. ६ अकार्यवत्. ७ फलम् ०कारं, प्र. ८ चौर्यम्. ९ वधेन १० विचारयता. ११ पुष्टम्. १२ नपुंसकतां, षंढताम्, प्र.

कन्यका तथा । एवमस्ति समस्ताऽपि, स्त्रीणां जातिचतुष्टयी ॥५१॥ तन्मध्ये स्ववधूरेव, सेवनीया सतां मता । शेषास्तु स्वसवित्रीव—चिंतनीया दिवानिशम् ॥५२॥ परस्त्रीं ये तु सेवंते, कामेनांधंभविष्णवः । नरके ते न पश्यंति, तप्तायःपुत्रिकाः पुरः ॥ ५३ ॥ या दत्त्वा दक्षिणं हस्तं, निजमप्युज्झति प्रियम् । तस्यां दास्यामिव त्यक्त—शीलायां प्रेम कीदृशम् ? ॥५४॥ क्षणतापकरी वह्नि—ज्वालामालाऽऽश्रिता वरम् । न पुनः परपत्नीयं, तापिनी भूरिशो भवान् ॥५५॥ घृणीयते घ्न(घ्नं)ती या न, प्रियंतुक् पितृबांधवान् । स्प्रष्टव्याऽपि न साऽन्यस्त्री, शस्त्रीवानर्थकारिणी ॥ ५६ ॥ निर्मलोऽपि कुलाचारो, निःश्वासादिव दर्पणः । मलिनः स्याद् यदाऽऽश्लेषाद्, वर्ज्यास्ता वारयोषितः ॥ ५७ ॥ प्रासादध्वजतः कुशाग्रजलतः सौदामिनीदामतः, कुंभींद्रश्रुतितः खलप्रकृतितः शैलापगापूरतः । लक्ष्मीतः कपिकेलितस्तरलतामुच्चित्य मन्ये विधि—र्वारस्त्रीहृदयं व्यधत्त तदलं तेनैव तेभ्यश्चलम् ॥५८॥ (शार्दूलविक्रीडितम्) । हसित्वाऽपि रुदित्वाऽपि, कूटान्युक्त्वाऽपि कोटिशः । या छिनत्त्येव सर्वस्वं, सा वेश्या प्रीतये कथम् ? ॥ ५९ ॥ विषं हृद्यमृतं वाचि, नेत्रेऽश्रूणि मुखे स्मितम् । वहंत्यश्छलयंत्येव, यास्ता वारवधूस्त्यजेत् ॥ ६० ॥ एवं कन्याऽपि नो काम्या, कामांधेनापि देहिना । अकीर्त्तिः पातकं चापि, प्रगल्भेतेतरां यतः ॥ ६१ ॥ तत् त्यक्त्वा परपत्न्याद्यं, धार्यं ब्रह्मव्रतं शुचि । भजंते यत्प्रभावेण, दासत्वं त्रिदशा अपि ॥ ६२ ॥ (४)



१ अनन्धा अन्धा भवन्ति इति. २ परस्त्रीसेवका. ३ वामेतरम् ४ घृणा—दया करोतीति घृणीयते. ५ प्रियरुक् प्र. प्रियं तोजति रोजयति वा—हिनस्तीत्यर्थः, सा प्रियतुक् प्रियरुक् वा. ६ कर्णत. ७ सचित्य—गृहीत्वा. ८ चेष्टेतेतराम् ९ कन्याकामनत'.

प्रायः परिग्रहाधिक्यं, पापव्यापारकारणम्। सं[1] च दुःखतरोर्मूलं, ततः कल्प्या[2] तदल्पता[3] ॥६३॥ विभवेन[4] महिष्ठेना[5]ऽऽ—रंभाः स्थूलं[6]भविष्णवः। सुकृतं तिरीयंत्येव[7], भानुमुड्डीनपांशुवत् ॥ ६४ ॥ तत्परिग्रहमानेन, सेव्यः संतोषसन्निधिः। पारिपार्श्विकतां[8] यस्मि[9]—न्नाश्रिते न्यूनतैव न ॥ ६५ ॥ (५)

दशदिग्गमने यत्र, मर्यादा काऽपि तन्यते। दिग्विरत्याख्यया ख्यातं, तद् गुणव्रतमादिमम् ॥ ६६ ॥ भ्रमेण[10] मार्यमाणानां, प्राणिनां परिरक्षणात्। तटायमानं लोभाब्धेः, श्राद्धस्यैतदपि व्रतम् ॥ ६७ ॥ (६)

यत्र सोसूत्र्यते[11] संख्या, शक्त्या भोगोपभोगयोः। भोगोपभोगमानाख्यं, द्वितीयं तद्गुणव्रतम् ॥ ६८ ॥ सकृत्सेवोचितो भोगः, प्रोक्तोऽन्नकुसुमादिकः। मुहुः सेवोचितस्तूप—भोगः स्वर्णप्रियादिकः ॥ ६९ ॥ मांसं मद्यं दधिसारं, मधूदुंबर[12]पंचकम्। रजनीभोजनाऽनंत—कायाऽज्ञातफलानि च ॥ ७० ॥ तुच्छफलं[13] बहुबीजं, वृंताकं करका हिमम्। चलितरसं संधानं, मृद् घोलवटका विषम् ॥७१॥ अभक्ष्याणि जिनोक्तानि, द्वाविंशतिमिमानि यः। वर्जयेत् पापमूलानि, स विवेकीति कीर्त्यते ॥ ७२ ॥ त्रिभिर्विशेषकम् ॥ पंचेंद्रियवधेनैव, पलमुत्पद्यतेऽखिलम्। तदश्नंतः कथं न स्यु—र्मानवा अपि कौणपाः? ॥७३॥ परेषां पिशितेनैव, येऽनिशं स्वांगपोषिणः। तेषां निस्त्रिंशचित्तानां, व्याघ्रादीनां च का भिदा? ॥७४॥ तत् कृपार्मितं[13] धर्मं, जानन् भुंजीत जातु न। तदा चोत्पन्नतद्वर्णा—नेकजीवाकुलं पलम् ॥७५॥ जीवतोऽपि मृतस्येव,

---

१ पापव्यापारः. २ रचितव्या–कर्तव्या. ३ परिग्रहाल्पता. ४ परिग्रहेण ५ अतिमहता ६ अस्थूला स्थूला भवंतीति. ७ आच्छादयंति. ८ अनुचरताम्. ९ संतोषे. १० चलनेन–गमनेन. ११ असन्त सूत्र्यते–विरच्यते–निर्धीयते इति यावद्. १२ वटपिप्पलो(पिपर)दुम्बरप्लक्षकदुम्बरफलानि. १३ वेष्टित–युक्तम्.

वैकल्यं येन जायते । लोके शास्त्रे च सावद्यं, तन्मद्यं कोऽभिलष्यति ॥ ७६ ॥ गलितत्रपुपानेन, मरणं सुंदरं नृणाम् । कापिशायनपानेन, न तु विश्वग्विडंबनम् ॥ ७७ ॥ अकीर्त्युन्मत्ततादीनां, दोषाणामेकमास्पदम् । वर्जनीयं प्रयत्नेन, मद्यं सविषवारिवत् ॥७८॥ यस्मिन्नंतर्मुहूर्तोर्द्ध्वं, तद्वर्णाः प्राणभृद्गणाः । मूर्च्छन्ति नवनीतं तत्, त्यक्तव्यं पुण्यकांक्षिणा ॥७९॥ मक्षिकावदनोद्वांतं, प्रमीतानेककीटकम् । जुगुप्सनीयं निष्ठ्यूत-मिव स्वाद्यं न मध्वपि ॥ ८० ॥ प्लक्षपिप्पलकाकोदुं-वरोदुंबरभूरुहाम् । वटस्य च फलं कृम्याऽऽ-कुलं प्राश्यं न जातुचित् ॥ ८१ ॥ प्रत्यक्षा यत्र वांत्यादि-दोषाः संति परःशताः । तिर्यग्भ्यस्तनुते कोऽन्य-स्तद्रात्रिभोजनं जनः ? ॥ ८२ ॥ नक्तव्रतादिव्याजेन, ये जडा निशि भुंजते । ते

---

१ माधविलताजातं मद्यं-कापिशायनं तत्पानेन. २ जीवसमूहाः. ३ उत्पद्यन्ते. ४ नक्ते-रात्रौ भोजनरूपं यद् व्रतं तदादिमिषेण-अथ नक्तं निर्णीयते, तत्र वाराहपुराणे धान्यव्रते पठ्यते-'मार्गशीर्षे सितेपक्षे, प्रतिपद् या तिथिर्भवेत् । तस्यां नक्तं प्रकुर्वीत, रात्रौ विष्णुं प्रपूजयेत् ॥ १ ॥ इति, अत्र नक्तशब्दः भोजनपरः, कालपरत्वे प्रकुर्वीत इत्यस्यानन्वयात् न हि कालः केनचित् कर्तुं शक्यते, तस्य भोजनस्य 'रात्राविति' कालविधिरतो दिवाभोजनरहितत्वे सति रात्रिभोजनं व्रतस्य स्वरूपम्, अन्यथा स्वतःप्राप्तस्य रात्रिभोजनस्य विधानवैयर्थ्यात्, तस्य च नक्तभोजनस्य विष्णुपूजनमंगम् तत्संनिधौ पठितत्वात्, तथा होमोऽपि तदंगं, 'होमं च तत्र कुर्वीत, इत्यभिधानात्, एवंच सति प्रधानाविरोधेन पूजाहोमयो दिवाऽनुष्ठानमुक्तं भवति, प्रधानस्य च नक्तस्य कालद्वयं भविष्यत्पुराणे दर्शितं-मुहूर्तोनं दिनं नक्तं, प्रवदंति मनीषिणः । नक्षत्रदर्शनान्नक्त-महं मन्ये गणाधिप ! ॥ १ ॥ इति, अस्य च कालद्वयस्याधिकारिभेदेन व्यवस्थामाह देवलः-नक्षत्रदर्शनान्नक्तं, गृहस्थस्य बुधैः स्मृतम्, यतेर्दिनाष्टमे भागे, तस्य रात्रौ निषिध्यते ॥ १ ॥ स्मृत्यन्तरेऽपि-नक्तं निशायां कुर्वीत, गृहस्थो विधिसंयुतः । यतिश्च विधवा चैव, कुर्यात्तु सदिवाकरम् ॥१॥ सदिवाकरं तु तत्प्रोक्त-मन्तिमे घटिकाद्वये । निशानक्तं तु विज्ञेयं, यामार्द्धे प्रथमे सदा ॥२॥ इति रात्रिनक्तभोजने व्यासः । अन्यच्च-दिनस्याष्टमे भागे, मंदीभूते दिवाकरे । नक्तं तच्च विजानीयात्, न नक्तं निशिभोजनम् ॥१॥ नक्षत्रदर्शनान्नक्तं, गृहस्थेन विधीयते । यतेर्दिनाष्टमे भागे, रात्रौ तस्य निषेधनम् ॥२॥ इति मात्स्ये एकादशीमाहात्म्यम् ॥

नूनं गमिनोऽधस्ता—जानेऽहं जिनजल्पितात् ॥ ८३ ॥ पशवोऽपि निशि प्राय—स्त्यजंत्यशनमात्मनः । मानवास्तु तदश्नंत—स्तेभ्योऽपि किमु नाधमाः ? ॥ ८४ ॥ कंदजातिः समस्ताऽपि, नवः किशलयस्तथा । कुमार्याद्यास्तु सूत्रोक्ता—स्त्याज्यास्तेऽनंतकायकाः ॥ ८५ ॥ वपुष्यनंतकायानां, सूच्यग्रप्रमितेऽपि यत् । अनंता जंतवः सूक्ष्माः, संतीति भगवद्वचः ॥ ८६ ॥ येषां गूढानि पर्वाणि, स्युः शिराः संधयोऽपि च । ये च छिन्नरूढा[2] वृक्षा, ज्ञेयास्तेऽनंतकायकाः ॥ ८७ ॥ इतराण्यप्यभक्ष्याणि, दूषितानि जिनागमे । विषद्रुमफलानीव, भक्षयेन्नैव धार्मिकः ॥ ८८ ॥ ( ७ )

आर्त्तं रौद्रं च दुर्ध्यानं[3], हिंसोपकरणार्पणम्[4] । पापाचारोपदेशश्च[5], प्रमादपरिषेवणम्[6] ॥ ८९ ॥ सर्वोऽप्यनर्थदंडोऽयं[7], वृथा कल्मषकारणात्[8] । अपाकरणमस्य[9] स्यात्, तार्तीयीकं[10] गुणव्रतम् ॥ ९० ॥ युग्मम् ॥ अनिष्टवस्तुसंयोगा—दिष्टवस्तुव्ययादपि । रुक्प्रकोपान्निदानाच्च, चतुर्धाऽऽर्त्तं प्रकीर्त्तितम् ॥ ९१ ॥ यदग्न्यस्त्रविषव्याघ्र—द्विषद्दैत्यखलादिभिः । अनिष्टैः कष्टमार्त्तं[11] तत्, स्यादनिष्टार्थयोगजम्[12] ॥९२॥ स्त्रीपुत्रभ्रातृपित्राद्यै—रर्थराज्यसुखैरपि । विनष्टैर्या रुजाऽऽर्त्तं स्यात्, तदिष्टार्थव्ययोद्भवम्[13] ॥ ९३ ॥ वातपित्तमरुत्कुष्ठ[14]—काशश्वासज्वरादिभिः । गदैर्यो मेदुरः खेद—स्तद् रोगार्त्तं[15] निवेदितम् ॥ ९४ ॥ राज्यं प्राज्यं शुभा भोगाः, प्रीताः पद्यो धनं घनम् । कथं स्यादिति धीः शश्व—न्निदानार्त्तं[16] श्रुते श्रुतम् ॥ ९५ ॥

---

१ ना, प्र. २ छिन्ना- सन्तः पुना रोहन्तीति. ३ अपध्यानानर्थदंडः ( १ ). ४ हिंस्रप्रदानानर्थदंडः ( २ ). ५ पापोपदेशानर्थदंडः ( ३ ). ६ प्रमादाचारितानर्थदंडः (४). ७ चतुर्विधोऽपि. ८ पाप०, ९ चतुर्विधस्याप्यनर्थदंडस्य. १० तृतीयमेव. ११ कष्टमिति यत्कष्टं चिंत्यते तद् आर्तध्यानम्. १२ अनिष्टसंयोगजार्तम् (१) *कष्टम्. १३ इष्टवियोगजार्त्तम् ( २ ). १४ वातजन्यः कुष्ठः-मरुत्कुष्ठः. १५ रोगचिन्तार्त्तम् ( ३ ). १६ अग्रशोचार्त्तम् ( ४ ).

हिंसाहर्षान्मृषाहर्षा–चौर्यात् संरक्षणादपि । भवत्यङ्गभृतां चित्ते, रौद्रध्यानं चतुर्विधम् ॥ ९६ ॥ हतनिष्पीडितक्षुण्ण–जंतुजातविलोकनात् । हर्षोत्कर्षो नराणां यो, [1]हिंसारौद्रं न्यगादि तत् ॥ ९७ ॥ हिंस्रमार्गोपदेशेन, कूटकल्पनयाऽपि च । जनवंचनया हर्षो, [2]मृषारौद्रं व्यवस्थितम् ॥ ९८ ॥ चौर्येच्छा चौर्यमाचर्य, प्रमोदस्तदुपाहृतैः । धनैश्च चित्तसंतोष–[3]श्चौर्यरौद्रमुदीरितम् ॥ ९९ ॥ शितैः शस्त्रैर्विशस्यारीन्, भंक्त्वा ग्रामपुराणि च । रक्षणं संचितार्थानां, [4]तुर्यं रौद्रं प्रकाशितम् ॥ १०० ॥ अपध्यानद्वयमिदं, मंदिरं सर्वपाप्मनाम् । दूरे शल्यवदुत्सार्यं, नरकक्लेशभीरुणा ॥ १०१ ॥ विहाय [5]स्नेहविषयं, नार्पणीयं विवेकिना । मुशलोदूखलहल–यंत्रशस्त्रानलादिकम् ॥ १०२ ॥ वनं छिंधि कुरु क्षेत्रं, वृषान् [6]द्रव्येण वाहय । इत्यादि पापशिक्षा न, [7]प्रीतेरन्यत्र युज्यते ॥ १०३ ॥ द्यूतमाध्वीकमेषादि–योधनांदोलनादिकम् । भक्तादिविकथागीत–प्रेक्षणाद्यतिवीक्षणम् ॥ १०४ ॥ चैत्ये चतुर्विधाहारो, निद्रा निष्ठीवनं कलिः । वाणिज्यादिकथेत्यादि, प्रमादं [9]दूरयेत् कृती ॥ १०५ ॥ युग्मम् ॥ ( ८ )

त्यक्तदुर्ध्यानसावद्य–कर्तव्यस्य शुभात्मनः । समत्वं यन्मुहूर्तं स्यात्, तत् सामायिकमुच्यते ॥ १०६ ॥ अनेहसा घनेनापि, तपोभिरपि दुस्तपैः । न तत् कर्म क्षिपत्यंगी, यत् सामायिकमाचरन् ॥ १०७ ॥ ( ९ )

दिग्व्रतप्रमितेरह्नि, निशि यच्चाल्पनं पुनः । देशावकाशिकं तत् स्याद्, व्रतं सुकृतकारणम् ॥ १०८ ॥ ( १० )

---

१ हिंसानुबंधि ( १ ). २ मृषानुबंधि ( २ ). ३ स्तेयानुबंधि ( ३ ). ४ इत्येवं चिन्तनं–संरक्षणानुबंधि ( ४ ). ५ स्नेहिजनान्. ६ भाटकेन. ७ प्रीति विषयात्–पुत्रादेरन्यत्र. ८ मधुना–मधूकपुष्पेण निर्वृत्तं–मधूकपुष्पजातं मद्यं–माध्वीकम्. ९ दूरं कुर्यात्.

सर्वाहाराङ्गसंत्कारा–ब्रह्मव्यापारवर्जनम् । चतुष्पर्व्यां भवगद–स्त्यौषधं पौषधं स्मृतम् ॥ १०९ ॥ यावान् प्रयाति विधिवत्, पौषधव्रतसेवने । कालस्तावान् सचारित्र, इव मान्यो मनीषिणा ॥ ११० ॥ ( ११ )

अतिथिभ्योऽशनपानाऽऽ–वासपात्रादिवस्तुनः[1] । यत् प्रदानं तददतिथि–संविभागव्रतं भवेत् ॥१११॥ चित्तं वित्तं च पात्रं च, रत्नत्रितयवच्छुभम् । प्राप्य ये ददते दानं, तेषां श्रीरनपायिनी ॥ ११२ ॥ ( १२ )

एवं सम्यक्त्वमूलोऽसौ, श्राद्धधर्मोऽतिनिर्मलः । शिवाप्तये भवत्येवं[2], भव्यानां यतिधर्मवत् ॥ ११३ ॥ निरतीचारमेतं यः, प्रतिपालयते कृती । द्वेधाऽपि निर्वृतेः[3] पात्रं, स स्याद् भीमकुमारवत् ॥ ११४ ॥ ( तथाहि– )

अस्यैव जंबूद्वीपस्य, भरते भरिते शुभैः । पुरं बभूव कमल–पुरं परमऋद्धिभृत् ॥११५॥ यत्रार्हतेषु चैत्येषु, चला रेजुर्ध्वजांचलाः । आह्वयंत इव श्राद्धान्, जिनवंदनहेतवे ॥ ११६ ॥ बभासे तत्र भूमीशो, हरिवद्धरिवाहनः[4] । यश्चित्रं दानवारित्वं[5], न दधार कदाचन ॥ ११७ ॥ खड्गक्षतारितरुणीनयनोरुनीरैः, प्राप्तोदयः प्रसृमरो भुवनेऽभितोऽपि । सेवापरेतरविनिर्मितशैत्यतापो, यस्य प्रतापदहनः स्फुरति स्म नव्यः ॥ ११८ ॥ ( वसंततिलका ) तत्पत्नी मालतीत्यासी–न्मालतीव सुकोमला । शीलसौरभ्यशालिन्यां, यस्यां लीनोऽलिवत् प्रियः ॥ ११९ ॥ मंत्री विमलबोधोऽभूत्, तस्यास्तिकशिरोमणिः । नाप यत्समतां मत्या, वाक्पतिर्नास्तिकत्वतः ॥ १२० ॥ हरिवाहनभूपस्य, सिंहस्वप्नेन सूचितः । मालतीकुक्षिमाणिक्यं,

---

१ अतिथिभ्योऽशनावास–वास पात्रादिवस्तुन., प्र. २ क्रमेण इति शेषः. ३ सांसारिकसुखस्य, मोक्षसुखस्य च. ४ इंद्रवत्. ५ दानवानाम् अरित्वं–शत्रुत्वम्, दानस्य वारित्वं–निवारकत्वम्.

पुरा भवत्यजय्योऽयं, भीमवद् बलशालिनाम् । इतीव तं पिता भीम, इत्याह्वासीन्महोत्स-
तनयः समजायत ॥ १२१ ॥ पुरा भवत्यजय्योऽयं, भीमवद् बलशालिनाम् । इतीव तं पिता भीम, इत्याह्वासीन्महोत्स-
वात् ॥ १२२ ॥ तदा मंत्रिगृहेऽप्यासीत्, तनुजो मतिसागरः । स्वामिसेवकयोः पौर्वा—पर्याद् वृद्धिः क्रमो ह्ययम् ॥१२३॥
गुणैः सत्त्वमहत्त्वाद्यैः, साम्यमाशिश्रियाणयोः । कुमारयोरभूत् प्रेम, रामलक्ष्मणयोरिव ॥ १२४ ॥ एकत्र प्सानपानादि—
कर्मकर्मठचेतसोः । अवर्धिष्ट तयोः प्रीतिः, समानोदर्ययोरिव ॥ १२५ ॥ कुमारयोरतिस्फारं, शास्त्रं दृष्ट्वाऽभियोगतः ।
तत्स्पर्धयेव पुस्फोर, शस्त्रं मात्राधिकं ध्रुवम् ॥ १२६ ॥ ततस्तौ यौवनारंभ—सुभगंभावुकौ श्रिया । कंदर्पमपि निःस-
र्पद्—रूपदर्पं वितेनतुः ॥ १२७ ॥ नासत्यावपि नासत्या—विव तौ मिलितौ मिथः । द्वेधाऽपि स्वस्वरूपेण, कं नरं
जयतः स्म न ॥ १२८ ॥

अन्यदा प्रातरास्थानी—मास्थानं महीपतिम् । नमस्यितुं समायातां, तौ भीममतिसागरौ ॥ १२९ ॥ उभावपि नृपं
नत्वा, तत्पादौ पाणिपंकजे । प्रापय्य राजहंसत्व—मुपासांचक्रतुश्चिरम् ॥ १३० ॥ पुत्रयोः प्रेक्ष्य तादृक्षां, भक्तिं मुदित-

---

१ "यावत्पुरा निपातयोर्लट्" इति भविष्यत्यर्थे वर्तमानः, पुरा भवतीति-पश्चाद् भविष्यतीत्यर्थः. २ परंपरातः. ३ आश्रितवतो . ४ क्रियाकुशलचेतसो . ५ अति-विपुलम्. * प्रथमा. ६ प्रयत्नतः. ७ यौवनारंभेऽसुभगौ सुभगौ भवत इति सुभगंभावुकौ. ८ निर्गच्छन् रूपस्य दर्पो यस्य स तम्. ९ चक्रतुः. १० नासा त्यजतः त्यज ड नि० वा नासत्यौ-अश्विनीकुमारौ ( तौ हि सूर्यतेजोऽसहमानाया संज्ञायाः-सूर्यपत्न्या उत्तरकुरुषु अश्वरूपं धृत्वा तपस्यन्त्या अश्वरूपधारिणा सूर्येण संगताया अन्यपुरुषभिया तद्रेतो नासारंध्रेण त्यजन्त्यास्तन्नासा त्यागेन जातौ इति पुराणकथा ) अश्विनीकुमारावपि-अश्विनीकुमाराविवेति विरोधः अतः परिहारार्थं नास्ति असत्यं ययोरिति नासत्यौ असत्यरहितावपि अश्विनीकुमाराविव इति. ११ भीमः पराक्रमेणाथ, मत्या च मतिसागरः. १२ तस्थिवांसम्.

मानसौ । पुत्रिणां धुरि मेनाते, स्वात्मानं नृपमंत्रिणौ ॥१३१॥ मन्त्री विमलबोधोऽथाऽ—वदद् वत्सौ ! युवां स्वयम् । सर्वं
यद्यपि जानीथः, स्नेहाद् वच्मि तथाऽप्यहम् ॥१३२॥ गौरवं स्याद् गुणैरेव, न महत्त्वेन कर्हिचित् । रत्नं लघ्वप्यनर्घ्यं हि,
महीयांसोऽपि नोपलाः ॥१३३॥ हारो मौक्तिकसारोऽपि, गुणत्यागेन तत्क्षणम् । हृदयादुत्तरत्येव, तद् विधेयो गुणाग्रहः
॥ १३४ ॥ किंचेदं यौवनं नृणां, मद्यपानादृते मदः । अदृष्टिपटलं चांध्यं, विना मूर्च्छामचेतना ॥ १३५ ॥ अत एव न
जानंति, कृत्याकृत्यकथामपि । अपंथा[3] संचरंत्येवं, यौवनोन्मादिनो जनाः ॥ १३६॥ एतत् तारुण्यमेवैकं, नानाऽनर्थनिबं-
धनम् । अस्मिन्नैश्वर्यभोगोऽय—मनलानिलसंगमः ॥ १३७ ॥ परस्त्रीपरिहारोच्चैः—पादपाशनिवेशनात्[5] । वारणीया
विकुर्वाणाः[6], पंचेंद्रियहया रयात् ॥ १३८ ॥ असक्तं न प्रसक्तव्यं[8], विषयेषु[9] 'विषेष्विव' । अत्यासक्तिर्यदेतेषां, नाशयत्येव
जीवितम् ॥ १३९ ॥ श्रीरियं वशयत्येव, वेश्येव चतुरानपि । पुण्ययोगेन यस्त्वेनां, वशयेत् स विशारदः ॥ १४० ॥
विषमाः कामकोपाद्या, अंतरंगारयः स्मृताः । अंकीलिता[10] ध्रुवं काले[11]—व्यालवत् ते विकुर्वते[12] ॥१४१॥ अजित्वैतान्[13] बहिः
शत्रूञ्, जयन्नपि न विक्रमी । पराजयेत् तद् धीमान्, कामादीन् मोहराड्भटान् ॥ १४२ ॥ क्रीडां पीडामिवापास्य,
साधुन्नां खैलोच्छेदो, नयः प्रकृतिरंज[14]-
सत्तव्याः सकलाः कलाः । राजनीतिरहस्यं च, निश्चेयं निजनामवत् ॥ १४३ ॥

---

१ पुत्रवताम्. २ वृद्धत्वेन. ३ कुमार्गेण. ४ ते च, प्र. ५ पादबंधनार्थं पाशः ( दामण- पच्छाडी ). ६ विकारं प्राप्नुवन्तः. ७ फलाभिलाष-शून्यं-पुनेच्छारहितम्. ८ प्रसंगो न कार्यः. ९ विषयाणाम्. १० अबद्धा-अनियंत्रिताः. ११ कृष्णसर्पवत्. १२ विक्रियां कुर्वन्ति-प्राप्नुवंति. १३ अन्तरंगारीन्.
१४ प्रजाऽऽनन्दनम्.

नम् । कोशस्य वर्धनं चेति, मूलं राज्यमहीरुहः ॥ १४४ ॥ स्थाने वासो महोत्साह—श्चातुरी राजसन्निधिः । अच्छिद्रता
शुभेच्छा च, श्रीमेवस्कारकारणम् ॥ १४५ ॥ कारुण्यं व्यसनत्यागो, विवेकः पात्रसंग्रहः । दानं सत्योपकारौ च, करणी-
यानि भूभृताम् ॥ १४६ ॥ श्रव्यं षड्दर्शनीदेव—धर्मतत्त्वाद्यमन्वहम् । आत्मनीनं च कर्तव्यं, मतमार्हतमर्हतः ॥ १४७ ॥
किं बहूक्त्या तथा वत्सौ !, वर्तेयाथामतः परम् । पूर्वानतिशयीयाथां, यथा लोकोत्तरैर्गुणैः ॥ १४८ ॥ मंत्रिवाक्यमिदं
ताभ्यां, न्यस्तं हृदि रहस्यवत् । हितं चाप्तोपदिष्टं च, को न स्वीकुरुते कृती ॥ १४९ ॥ आरामिकस्तदागत्य, नरनाथं
व्यजिज्ञपत् । वर्द्धसे देव ! संप्राप्त—स्तवोद्यानेऽस्ति सद्गुरुः ॥ १५० ॥ दानेनानंद्य तं पर्ष—दन्वितो हरिवाहनः । पद्म-
वद् विकसद्वक्त्र—स्तं नंतुं प्राप्तवान् वनम् ॥ १५१ ॥ पंचधाऽभिगमं कृत्वा, प्रविष्टोऽन्तर्वणं नृपः । अभिनंदप्रभुं धर्म—
निधानमिव दृष्टवान् ॥ १५२ ॥ भक्त्या परीय त्रीन् वारान्, प्रणम्य च तदंतिके । 'जिनाग्रे शक्रवद्' भूमान्, सपुत्रोऽ-
पि निषेदिवान् ॥ १५३ ॥ पुण्यामृतप्रसविनीं, कलां चांद्रमसीमिव । देशनां कर्तुमारेभे, गुरुरागमपारगः ॥ १५४ ॥.

कल्पद्रुमो यथा भूमौ, मरौ दुग्धोदधिर्यथा । तथा भवेऽतिदुर्ल(ल)भः, प्रायोऽयं मानवो भवः ॥ १५५ ॥ तं प्राप्य
व्रतमार्हत्यं, तच्चेद् दुश्चरमुच्चकैः । श्राद्धधर्मस्तदा सेव्यः, सम्यक्त्वव्रतजीवितः ॥ १५६ ॥ देवो जिनो गुरुः साधु—र्धर्मः

१ सामीप्यम्. २ कलाकुशलयोग्यपुरुषसंग्रहः. ३ "सचित्तदव्वमुज्झणं—मचित्तमणुज्झणं मणेगत्तं । इगसाडिउत्तरासंगं, अंजलिसिरसि जिणदिट्ठे" इत्यादि देववंदनभाष्ये. ४ अभिनन्दनामानं सूरिम्. ५ प्रदक्षिणा कृत्वा. ६ उत्पादिकाम्. ७ अतिदुष्प्रापः. ८ चारित्रम्. ९ आदर्तुं योग्यम्—अस्तीति शेषः. १० सम्यक्त्वं व्रतानि च जीवितं—स्वरूपं यस्य सः.

कारुण्यवानिदम् । सद्दर्शनं व्रतानि स्यु—रहिंसाप्रभृतीनि च ॥ १५७॥ मिथ्यात्वगरलग्रस्ता—श्चेतनाः स्युः कथं जनाः ? । यदि सम्यक्त्वपीयूषं, न पीयेरन् यदृच्छया ॥ १५८ ॥ भवदावानलप्लुष्टाः[2], प्राप्नुयुर्निर्वृतिं[3] कथम् ? । चिरं चेन्नावगाहेरन्, जिनधर्मामृतांबुधिम् ॥ १५९ ॥ ईषैदासदमेवान्यद्, राज्याद्यं दुर्गतिप्रदम् । दुरासदं तु सद्धर्म—रत्नं मुक्त्येककारणम् ॥ १६० ॥

श्रुत्वेति प्रतिबुद्धात्मा, भीमोऽमात्यसुतान्वितः । श्राद्धधर्मं ससम्यक्त्व—माददे मुक्तिबीजवत् ॥ १६१ ॥ शंकादिदोषनिर्मुक्तं, पालयेतं युवामिमम् । संशय्यमानो मंत्रादि—रपि यन्न फलेग्रहिः ॥ १६२ ॥ गुरोः शिक्षामिमां पुत्रे, समित्रेऽभ्युपगत्वरे । तं वंदित्वा नृपो धाम, जगाम सपरिच्छदः ॥ १६३ ॥ युग्मम् ॥ भीमस्य नरिनर्त्ति स, कीर्तिः सच्चरितैस्ततैः । उद्यानस्य यथा लक्ष्मीः, सोल्लासैः पल्लवादिभिः ॥ १६४ ॥ कर्हिचिन्निजसद्मस्थं, हरिवाहननंदनम् । प्राप कापालिकः कोऽपि, कलाव्यूह इवांगवान् ॥१६५॥ कलां सौम्यां मुखे पुंष्यन्, जटाजूटस्फुरच्छिराः । हस्तन्यस्तत्रिशूलोऽङ्ग—ज्योतिर्जालजटालितः ॥ १६६ ॥ विरूपाक्ष इवाध्यक्षो, दत्त्वाऽऽशीर्वादमादरात् । कुमारदृष्टिनिर्दिष्टे, विष्टरे स निविष्टवान् ॥१६७॥ युग्मम् ॥ भानवीमिव कौमारीं, प्रभां वीक्ष्यातिशायिनीम् । मग्नात्मेवाद्भुतांभोधा—वाचष्ट स्पष्टगीः स तम् ॥१६८॥ स्फारोपकारपटहे—स्त्वं दविष्ठोऽपि नः स्फुटः । चंपकद्रुरिवोदार—सौरभैरभवः कृतिन् ! ॥ १६९ ॥ कति नाम नं

१ कर्मणिलिट् २ दग्धाः. ३ शान्तिम्, मुक्तिम् वा. ४ सुप्रापम्. ५ दुष्प्रापम् ६ सर्ग० ७ श्लो० ३३. ७ सफलः. ८ अतिशयेन नृत्यति स. ९ योगी–पाखंडी. १० धारयन्. ११ जटाबंधदीप्यच्छिराः. १२ अन्वितः. १३ रुद्रः. १४ कुमारेण दृष्ट्या प्रदर्शिते. १५ आसने. १६ दूरतरः. १७ नृ० प्र.

कीटाभा, जायंते हंत जंतवः। स जातः कथ्यते यस्यो—पकृतौ क्रमते मतिः॥ १७०॥ गत्वाऽन्तर्दशनं तनोति शुचितां, गव्यादिकुक्षिस्थितं, दुग्धीभूय जगद् धिनोति, नयति ध्वंसं क्षुधां पाशवीम्। शीताद्यं विदलत्यवत्यरिगणात् प्राणान्, परार्थेष्विति, प्रौढं चेत् तृणमप्यहो ननु तदा वाच्यो महीयान् किमु?॥१७१॥ (शार्दूलविक्रीडितं वृत्तम्) परार्थे बद्धबुद्धिं त्वां, निशम्य जनताऽऽननात्। प्राप्तोऽस्मि स्वार्थसिद्ध्यर्थं, श्रूयतामवधाय सः॥१७२॥ भुवनक्षोभणी नाम, विद्याऽवद्योज्झिताऽस्ति मे। द्वादशाब्दीं मया तस्याः, पूर्वसेवा व्यधीयत॥ १७३॥ उदेष्यमाणा तत्सिद्धि—स्त्वत्सान्निध्यमपेक्षते। धारालवारिभृत्सेकं, यथैवांकुरसंततिः॥ १७४॥ ऐष्यत्कृष्णचतुर्दश्यां, त्वं चेदुत्तरसाधकः। भवेद्विद्या तदा मे सा, सिध्येत् सिद्धिरिवांगिनी॥ १७५॥ सिद्धविद्योऽहमप्याशु, भवतो भवितोपकृत्। ऋते प्रत्युपकारं हि, कृतज्ञो नावतिष्ठते॥ १७६॥ स्वीचकार कुमारस्तत्, स्फारदाक्षिण्यपुण्यधीः। कल्पद्रुवन्महांतो हि, नेहंते हंतुमर्थनाम्॥ १७७॥ अर्वाक् कृष्णचतुर्दश्या, दर्शार्हीं मनसा मृशन्। कापालिकोऽपि तत्पार्श्वे, तस्थौ तद्रंजनाचिकीः॥ १७८॥ कथाः प्रथावतीस्तास्ता, मंत्रयंत्रकलामयीः। कुर्वन् भीमं स मायीव, पर्यमोहयतान्वहम्॥ १७९॥ तत्संपर्के शुभोदर्के—वितर्कविरसं भृशम्। विमृश्याथ क्षमानाथ—पुत्रं मंत्रिसुतोऽभ्यधात्॥ १८०॥ तवोज्ज्वलस्य नो योग्यो, योगोऽस्य मलिनात्मनः। कीदृशः सहवासो हि, तेजसस्तमसोऽपि च॥ १८१॥ अहो शिष्टोऽपि दुष्टात्मा, भवेद् दुष्टप्रसंगतः। जलं विमलम-



१ अप्रतिबंधेन वर्तंते. २ लोकान् पुनाति. ३ परोपकारेषु. ४ समर्थम्. ५ ध्यानं दत्त्वा. ६ स्वार्थः. ७ प्रत्युपकारी ८ दर्शादिनीम्. ९ विचारगत्. १० विस्तारवतीः.

प्युच्चै—र्जम्बालादाविलं यतः ॥ १८२ ॥ किंच पाखंडिसंपर्कात्, सम्यक्त्वमपि भज्यते । विनश्यति हि पीयूष—मारनालनिवेशतः ॥ १८३ ॥ भीमोऽभ्यधादसाध्वेतद्, यत् कुसंगात् सुधीः कुधीः । न मणिर्विषदोषाढ्यः, स्फुरेद् विषधराश्रयात् ॥ १८४ ॥ स्यात् साधुरितरो वाऽपि, प्रकृत्यैव न योगतः । एकांचलेऽपि न स्यातां, किं, समौ मणिकर्करौ ? ॥ १८५ ॥ सम्यक्त्वमपि तत् कीदृग्, यत् कुसंगेन नश्यति । अहो तदपि किं तेज—स्तमसा यत् प्रलीयते ॥ १८६ ॥ वयस्यस्तं विहस्योचे, प्रतिवंदी तवाद्भुता । परं स्फटिकवज्जीवो, भाव्यं द्रव्यमयं स्मृतः ॥१८७॥ यथैव स्फटिकस्तैस्तै—र्वर्णैः संयुज्यते जवात् । तथैवात्मेत्यसौ दुष्ट—स्त्याज्यो भीमोऽप्यमंस्त तत् ॥ १८८ ॥ ततो निशि चतुर्दश्यां, तीक्ष्णं कौक्षेयकं वहन् । तेन पाखंडिना साकं, भीमः प्रेतवनं ययौ ॥ १८९ ॥ अखंडं मंडलं तत्र, विरच्यार्चनां च सः । शिखाबंधचिकीर्भीम—मूर्ध्नि हस्तं न्यधित्सत ॥ १९० ॥ भीमो भीमोऽहंमुक्त—स्तमूचे मंत्रैर्नियंत्रणात् । कुरुष्व स्वांगिकीं रक्षां, छलं न स्याद् यथा तव ॥ १९१ ॥ अंतः सत्त्वमयी मेऽस्ति, रक्षा शौर्यमयी वहिः । प्रभूष्णवः परात् त्राणं, नेहंते हि मृगेंद्रवत् ॥ १९२ ॥ किंचाहं चेन्न शक्ष्यामि, स्वमपि त्रातुमातुरः । तदा त्रास्ये कथंकारं, त्वामन्यसाद् भयंकरात् ॥१९३॥ तदा कापालिकोऽध्यासीत्, कालिकार्चाचिकीर्षया । जिघृक्षितं मयाऽस्याऽऽसी—च्छिखाबंधच्छलाच्छिरः ॥ १९४ ॥ तद्

---

१ कर्दमात् कलुषम्. २ सयोगात्. ३ मतिसागरः. ४ प्रकृतैककल्पे प्रवृत्तं पुरुषमुद्दिश्य अप्रकृतकल्पान्तरापादने प्रतिवादिमतेऽनिष्टान्तरप्रसजकवाक्यम्. प्रतिवंदि, प्र. ५ कापालिकः. ६ रक्षाबन्धचिकी.. ७ निधातुं-स्थापयितुमैच्छत्. ८ भयाज्ञानरहितः. ९ मंत्र(रक्षा) बन्धनात्. १० समर्थाः. ११ पीडितः सन्, 'अन्यसाद्' इति अत्रापि योज्यम्. १२ ग्रहीतुमिष्टम्-अभिलषितम्.

ग्रहीतुं मया नास्य, शेके निःशंकचेतसः । भापयित्वा स्वशक्त्यैतद्, गृह्णाम्यह्नाय संप्रति ॥ १९५ ॥ ततः शैलोच्चशीर्षाग्रो, द्वारव्यात्ततराननः । कूपनिम्नश्रवा गुंजा-पुंजारुणविलोचनः ॥ १९६ ॥ ध्वजाऽऽयतस्फुरज्जिह्वो, दिक्कूलंकषदोर्हलः । आलानोरुयुगः स्थूलो—दूखलप्रतिमक्रमः ॥ १९७ ॥ कर्त्तिकां नर्तयन् पाणौ, 'घनः सौदामिनीमिव' । निर्घातोग्रैः स्वनिर्घोषै—र्भीषयन् भीषणानपि ॥ १९८ ॥ कोपात् कापालिकः काल, इवातिप्रातिकूलिकः । समेत्य समया भीमं, साक्षेपमिदमाख्यत ॥ १९९ ॥ चतुर्भिः कलापकम् ॥ रे रेऽयं दंभसंरंभैः, सर्वोऽप्यारंभि यन्मया । द्वात्रिंशल्लक्षणाढ्यस्य, तत् ते शीर्षजिघृक्षया ॥ २०० ॥ तल्लातुं न त्वयाऽदायि, कृपाण्या तीक्ष्णयाऽनया । छित्त्वाऽऽर्द्रकदलीच्छेद-मिदानीं तदुपाददे ॥२०१॥ स्मरेष्टं त्रायते यस्त्वां, मत्तो 'व्याघ्रात् कुरंगवत्' । जल्पन्नेवेति निस्त्रिंशः, स तं हंतुं प्रचक्रमे ॥२०२॥ अहो चेष्टाऽतिदुष्टाऽस्य, विमृश्येति नृपात्मजः । कंपयन् खड्गमत्युग्रं, भृकुटीविकटं जगौ ॥ २०३ ॥ यथाऽन्ये जघ्निरे क्लीवा—श्छद्मना छागवत् त्वया । तथा मामपि रे वीरं, जिघांससि गजेंद्रवत् ॥ २०४॥ विश्रब्धघातसंजात-पातकैः पवित्रमापदम् । हत्वा त्वामद्य तन्वेऽहं, विश्वमप्यकुतोभयम् ॥ २०५ ॥ इत्युक्त्वा वंचयित्वा च, तद्घातं कपिवत् ततः । उत्प्लुत्य स्कंधमारुक्षत्, तस्य शीर्षं चिकर्तिषुः ॥ २०६ ॥ भीमः स्कंधस्थितो दध्यौ, दशार्हीं मद्गृहे स्थितः । कलावांश्च न वध्योऽयं, महापातकसंभवात् ॥२०७॥ आहत्य मुष्टिभिर्मत्त-मल्लवद् वशयाम्यमुम् । कदाचित् प्रतिबुद्धः सन्, स्वीकुर्यादार्हतं मतम् ॥२०८॥

१ निर्गता शंका यस्मात्तन्निःशंक तादृक् चेतो यस्य स नि शंकचेतास्तस्य. २ तंडुलादिखंडनार्थं काष्ठादिकृतद्रव्यविशेषः ( खांडणी ). ३ आकाशे पवनाहतपवनजन्यशब्दो निर्घातस्तद्वदुग्रै , ४ स्वकीयशब्दैः. ५ आटोप-आडम्बर.. ६ आदातुम्. ७ लडथें लिट्. ८ विशालं-भयंकरं यथास्यात्तथा. ९ हंतुमिच्छसि. १० कर्त्तितुमिच्छुः.

ततः स मुष्टिभिर्वज्र—कल्पैस्तं मूर्ध्नि जघ्निवान् । गंभीरवेदिनं यंतो, श्रृणिपातैर्यथा दृढैः ॥ २०९ ॥ अरुंतुदैः प्रहारैस्तैः,
क्षणं मूर्च्छितमानसः । भीमाधिमूर्द्ध चिक्षेप, कोपात् कापालिकः क्षुरीम् ॥२१०॥ तदा त्वोदीत(चोदित)धीर्भीमः, सखड्गोऽ-
प्यविशद् द्रुतम् । तत्कर्णे कूपदेशीये, गुहायां हरिणारिवत् ॥२११॥ उत्कीर्णवांश्च कर्णस्य, मध्यं तीक्ष्णमुखैर्नखैः । मर्माविधं
व्यथां कुर्वन्, कर्णखर्जूरकीटवत् ॥२१२॥ मयाऽहो पृथुकर्णत्वं, स्वस्यैवानर्थकृत् कृतम् । यदत्रैष खनत्यंत—र्विलमध्यस्थिताखुवत् ॥२१३॥ इति ध्यायन् व्यथाऽऽकीर्णः, कर्णादाकृष्य तं वलात् । उच्छाल्य कंदुकमिव, व्योम्नि चिक्षेप दुर्व्रती ॥२१४॥ युग्मम् ॥
दूरमूर्द्ध्वं नभो गत्वा, यंतोच्छलितगोलवत् । यावत् पतति मूर्च्छालः, क्षमापालसुतः क्षितौ ॥२१५॥ तावत् पतत्पतंगाभं,
तं पतंतं नभस्तलात् । निरीक्ष्य यक्षिणी काचिद्, दधार करसंपुटे ॥ २१६ ॥ नीत्वा च सत्वरं स्वस्य, स्थानमास्थानवच्-
छ्रियाम् । शीतोपचारै रुचिरै—स्तस्य मूर्च्छामतुच्छयत् ॥ २१७ ॥ कुमारोऽथ समालोक्य, वेश्म तत् सुरवेश्मवत् । देवतां
तां च दिव्याङ्गीं, जातोऽद्भुतमयो भृशम् ॥२१८॥ स्वरेण मधुरेणाथ, सुधाऽऽसारैकसारणिम् । कर्णयोः पूर्णयंतीव, यक्षिणी
भीममाख्यत ॥ २१९ ॥ देव ! विंध्यो गिरिरयं, कृताभ्रोल्लेखशृंगभृत् । देवानामपि यः सेव्यो, मेरुवत् कामनीयकात् ॥२२०॥ अत्रेदं मंदिरं लक्ष्मि (क्ष्मी)—सुंदरं वैक्रियं मम । रिरंसार्थं वसंतीह, कमलाख्याऽस्मि यक्षिणी ॥ २२१ ॥ अधुना
गगने यांत्या, मया त्वं निपतन्नधः । निभाल्य पाणिपद्मेन, धृतो रत्नवदुत्तमः ॥ २२२ ॥ त्वल्लावण्यमिवापातुं, देवीभि-

१ चिरकालेन यो वेत्ति, शिक्षा परिचितामपि । गंभीरवेदी विज्ञेय, स गजो गजवेदिभि ॥ तथा—त्वग्मेदाच्छोणितस्रावाद्, मांसस्य क्रथनादपि [ छेदनादपि ] आत्मानं यो न जानाति, स स्याद् गंभीरवेदिता ॥ इत्युक्तलक्षणहस्तिनम्. २ हस्तिपः. ३ कन्दुकवत्. ४ सूर्यसदृशम्. ५ अद्भूयत्. ६ विकुर्वितम् ७ रमणेच्छायै.

वैधसाऽऽग्रहात् । कारयांचक्रिरे स्वीया, निर्निमेषा दृशो ध्रुवम् ॥ २२३ ॥ त्वद्रूपदर्शनादेव, मथिता मान्मथैः शरैः । त्वां शरण्यं प्रपन्नाऽस्मि, वीरकोटीर ! रक्ष माम् ॥ २२४ ॥ अन्या अपि न कामिन्यः, प्रार्थयंते नरं किल । विशिष्य प्रवरा देव्य—स्तन्मां मा स्मावजीगणः ॥ २२५ ॥ तच्छ्रुत्वाऽचिंतयद् भीमो, धिक् कामस्य दुरात्मताम् । विडंबयति यो देवी—रपि मानवकाम्यया ॥ २२६ ॥ अहो स्मरमहो येन, महांतोऽप्यधमा इव । रज्यंत्यनुचिते स्थाने, चटूनि घटयन्ति च ॥ २२७ ॥ कापालिकं मे व्यसनं, शीलत्राणादभूद् वरम् । न तु सौख्यमिदं तस्य, निर्मूलोन्मूलनोदयात् ॥२२८॥ तावद् विशुद्धसंबोध—पीयूपरसपायनात् । अस्याः स्मरगरोत्सर्प—न्मूर्च्छामुत्सादयाम्यहम् ॥२२९॥ कुमारोऽथावदद् देवि !, मत्प्राणपरिरक्षणात् । असि धर्मप्रिया प्राय—स्तेन त्वं तत्त्वमुच्यसे ॥ २३० ॥ मया पुरो गुरोश्चक्रे, पारदार्यविवर्जनम् । 'दुर्गं मत्तगजेनेव', तत् तं (त्व) द्योगेन भज्यते ॥ २३१ ॥ खंडिते च व्रतेऽवश्यं, नरकक्रोडखेलनम् । कालकूटे कवलिते, संदिग्धं मरणं किमु ? ॥ २३२ ॥ वरं मृत्यु सुशीलानां, कुशीलानां न जीवितम् । दुर्विधत्वं सतां श्लाघ्यं, न तु द्रव्यं कुकर्मणाम् ॥ २३३ ॥ किं चामी विषया वह्नि—शिखया समतामिताः । अंगिनां स्वप्रसंगेन, शीलांगानि दहंति ये ॥ २३४ ॥ का नाम तस्य वैदग्धी, कश्च शौंडिरिमक्रमः । मुष्णंति यस्य शीलस्वं, विषयाः परमोषिणः ॥ २३५ ॥ क्व देवी दिव्यरूपा त्वं, मलिनोऽहं क्व मानवः । स्तुत्यस्तत्रावयोर्योगः, कस्तूरीपंकयोरिव ॥ २३६ ॥ तस्माद् दूरं परित्यज्य,

१ रक्षकम्. २ शीलस्य. ३ प्रथममित्यर्थं. ४ परस्य दारा एव दारा यस्य स परदारस्तस्य कर्म पारदार्यं तस्य विवर्जनम्. ५ पारदार्यविवर्जनम् ६ पारदार्ययोगेन. *निर्धनत्वम् ७ स्वकीयसंबंधात्. ८ पाडित्यम्. ९ साभिमानताक्रम., कौशल्यपरंपरा वा. १० ब्रह्मधनम्. ११ परान् मुष्णन्तीति परमोषिणः.

रिरंसां[1] हिंसतामिव। दयालुतामिव धत्स्व, शीललीलां सुरोत्तमे !॥ २३७ ॥ सम्यक्त्वं च श्रय प्रेयः—श्रेयःसंवननौषधम्[2] यत्रार्हद्धर्मसाम्राज्य—लक्ष्मीर्लीलायतेऽन्वहम् ॥२३८॥ इति तद्वाक्सुधासेकात्, स्वांतशांतस्मरज्वरा। आलपन्मालतीपुत्रं, यक्षिणी शीलरक्षिणी ॥ २३९ ॥ यौवनेऽप्यचलं शीलं, यतिवद् बिभ्रता त्वया। नवरं पातकात् स्वात्मा, ममात्माऽपि च रक्षितः ॥२४०॥ गुरुस्त्वमेव मे गौर[4]—गुण! सम्यक्प्रबोधनात्। उक्त्वेत्यलंकारमिव, सम्यक्त्वं सा ततोऽग्रहीत् ॥२४१॥ निशीथे च निशम्याथ, कुतोऽपि मधुरध्वनिम्। किमीथं[7] इति सोऽप्राक्षीत्, कमलाममलाशयः ॥ २४२ ॥ सा स्माह साहसनिधे!, ज्येष्ठकल्पमधिष्ठिताः। साधवोऽत्रासते तेषां, स्वाध्यायध्वनिरेष कः ॥ २४३ ॥ हृष्टोऽभाषिष्ट तां भीमो, धर्मज्ञा त्वमपि ध्रुवम्। भवरोगागदंकारा, यदुपघ्ने महर्षयः ॥ २४४ ॥ पुण्यैकाश्रयवत् साधू—पाश्रयं मे प्रदर्शय। यथा निशीथिनीं शेषां, धर्मध्यानमयीं नये ॥ २४५ ॥ निशायां न विशत्यंत—र्वनिता देवताऽप्यतः। दवीयस्येव सा द्वाराद्, दर्शयामास तस्य तम् ॥ २४६ ॥ निशीथेऽपि शुभध्यानो—त्सर्गधीरप्रमद्वरान्। दृष्ट्वा महर्षीन् हर्षाश्रु—मिश्रो भीमः पराऽमृशत् ॥ २४७ ॥ उपस्कृत्य स्वांतं चिरमुचितमैत्र्यादियत्नाद्, विशुद्धामध्यात्मोपनिषदमधिष्ठाय तदनु। निलीनाः स्वच्छंदस्फुरदुरुचिदानंदजलधौ, परब्रह्मण्येते[11] विदधति निजं जन्म सफलम् ॥ २४८ ॥ (शिखरिणी)। [1]वयं तु विपय-

१ रंतुमिच्छां-भोगवाञ्छाम्. २ अतिशयप्रियमोक्षवशीकरणौषधम्. ३ सम्यक्त्वे. ४ कौऽति, ५ भीमकुमारम्. ६ विशुद्धगुण!. ७ कस्य अयमिति किमीथः ८ चतुर्मासीम्. ९ वैद्याः. १० यस्याः समीपाश्रये. ११ स्वच्छं कृत्वा. १२ रहस्यम्-अध्यात्मशास्त्रम्. १३ साधवः. १४ भागदमयं भंक्त्वा, संगत्वा (संगीत्य) गुरून् विदितात्मन-स्तापछि परमे रंक्त्वा, मंक्त्वा समाधिसुधाम्बुधौ। जिन! जिन! जिनेत्यास्ये जल्पन्, मनसापि तं स्मरन्, नयति गुरुवी कश्चित्कालं, पचेत्रिमपाटवः ॥२४९॥ प्र,

[1]च्छन्न-विषावेशवशं[2]वदाः । हहा स्वं न विजानीमः, पतंतं पंकसंकटे ॥२४९॥ कुट्टाकं[3] भवकोटीनां, लुंटाकं शिवसंपदाम् । वचोऽमीषां महर्षीणां, तच्छृणोमि किमप्यहम् ॥ २५० ॥ ततः कृपाणं-पाण्यग्रा—च्छित्वा नत्वा च तान् मुनीन् । भीमस्तदाशिस्तुष्टात्मा, पुरस्तेषां निविष्टवान् ॥ २५१ ॥ गवल[4]श्यामला तावद्, 'वेणीव गगनश्रियः[5]' । अवातारीदुपरितो, द्राघिष्ठैका[6] तदा भुजा ॥ २५२ ॥ केयं किमीया किं कर्त्री, ध्यायतीत्थं नृपोद्वहे[7] । तत्कौक्षेयकमाकृष्य, सा भुजा प्रस्थिताऽम्बरे ॥ २५३ ॥ एषा मत्खड्गमादाय, क्व यातीति बुभुत्सया । कुमारोऽपि समारोहत्, तामुत्प्लुत्य प्लवंगवत्[8] ॥ २५४ ॥ स्फुरन्नीलिमवाःपुरे[9], विपुले व्योमवारिधौ । वात्येव त्वरितं यांती, नाव्यामास भुजाऽऽयता ॥ २५५ ॥ बाहुस्थासिलता साऽपि, श्यामा दीर्घा च दिद्युते[10] । स्वर्धुनी[11]स्पर्धया यांती, कालिंदी[12]व नभस्तलम् ॥ २५६ ॥ नृपांगजो भुजारूढो, विमानस्थास्तुदेववत् । धात्रीं चित्रमयीं पश्यन्, विस्मयाय स्वमा[13]र्पयत् ॥२५७॥ कियद् व्योम समुलंघ्य, वाहायां क्वाऽपि कानने । कालिकामठमासायां, ततो भीमोऽवतीर्णवान् ॥२५८॥ महा[14]महास्थिकुड्याढ्यं, करोटि[15]कपिशीर्षकम् । उष्ट्रास्थिस्थपुट[16]द्वारं, द्विपदंतोच्चतोरणम् ॥ २५९ ॥ मृतवेणिध्वजाश्लि[17]ष्ट—मजाजि[18]नवितानितम् । घनासृग्मिश्रभूमीकं, मठं[19] दृष्ट्वा ममर्श सः ॥ २६० ॥ युग्मम् ॥ जुगुप्सायाः किमागारं, किं क्रीडापर्वतो भियाम् । किं मृत्यो राजधानी वा, किमयं पदमापदाम् ॥२६१॥ तत्रापि भीषणाकारां, कालरात्रिमिवांगिनीम् । कपालमालाऽऽभरण—धारिणीं कालिकां सुरीम् ॥२६२॥

१ विषयरूपविषावेशेन. २ वशीभूता.. ३ छेदकम्. ४ महिषवत् कृष्णा. ५ लक्ष्म्या . ६ अतिदीर्घा. ७ राजपुत्रे. ८ वानरवत् ९ नीलिमा एव वा-जलम् १० शुशुभे. ११ स्वर्गंगा. १२ यमुना. १३ आत्मानम्. १४ बृहद् बृहदस्थिकुड्याढ्यम्. १५ मस्तकास्थि. १६ विषमोन्नतप्रदेशद्वारम्. १७ आश्लिष्टं-युक्तम्. १८ अजिनं-चर्म. १९ मठः.

तदर्चाऽऽचरणव्यग्रं, तं च कापालिकं पुरः । तदुपांते नरं चैकं, दीनं भीमो न्यभालयत् ॥ २६३ ॥ युग्मम् ॥ किमेत-
दिति विस्मेरे, हरिवाहननंदने । कापालिकाय दत्त्वाऽसिं, तत्तनौ सा भुजाऽविशत् ॥ २६४ ॥ पाखंडी नैष सामान्यः,
किं कर्ता चासिना मम । पश्यामि गुप्तो ध्यात्वेति, स कोणे तत्र तस्थिवान् ॥ २६५ ॥ आचिंत्वा कालिकां सोऽथ, भी-
मासिं कलयन् करे । केशैः कृष्ट्वा स्वनेदिष्ठं, नरमित्यब्रवीद् रुषा ॥२६६॥ रेरे स्मरेष्टमात्मीयं, दिष्ट्याऽन्तस्तेऽधुनाऽऽगमत् ।
छित्त्वा यत् ते शिरः पद्म—मर्चयिष्यामि देवताम् ॥ २६७ ॥ स जगाद जिनेंद्रोऽस्तु, शरण्यः शरणं मम । तद्भक्तश्च
प्रभुर्भीम—श्चंडपाखंडिखण्डनः ॥ २६८ ॥ यो वारितोऽपि नैवास्थात्, त्वया दुष्टेन संसृजन् । यदि स स्यादिहाद्यश्च,
तर्हि त्वां चूरयेद् रयात् ॥ २६९ ॥ पाखंडी भीमनाम्नाऽपि, ज्वलन्नाचष्ट दुष्ट ! रे । भीमगूर्धैव देव्यर्चा, मयाऽऽसीत्
प्राक् चिकीर्षिता ॥ २७० ॥ स क्लीबवत् परं नष्ट—स्त्वमानीतोऽसि तत्पदे । सोऽपि विंध्ये मुनिपार्श्वेऽ—स्तीति देव्योदितं
मम ॥ २७१ ॥ अयं तस्यैव रे खड्गो, जीवितव्यमिवौजसः । आनायितो मयाऽस्तीह, त्वच्छिरश्छेदकाम्यया ॥ २७२ ॥
किंच यः शरणीचक्रे, जिनो भीमोऽपि च त्वया । न त्वां त्रातुमलंभूष्णू, तौ रुष्टे मयि दैववत् ॥ २७३ ॥ यद्येषा कालि-
का देवी, त्वयाऽशरणयिष्यत । अत्रास्यथास्त्वमेतर्हि, कदाचिदनया तदा ॥ २७४ ॥ इत्याक्षिप्य स तं हंतुं, यावदुद्य-
च्छतेऽधमः । तावद् भीमोऽतिभीमौजा—स्तमधिक्षिप्तवानिति ॥ २७५ ॥ रे रेऽधम ! किमाचक्षे, यद् भीमो नेशिवानिति ।
स तवाहं पुरोऽस्मीह, प्रहरस्व बलं यदि ॥ २७६ ॥ वेद्मि शक्तिं तदाऽहं चेद्, बलिनं हंसि कंचन । परं सर्वो बलिं दत्ते,

१ भाग्येन. २ नाशः—मृत्यु . ३ संसर्गं कुर्वन्. ४ जीवनमिव पराक्रमस्य. ५ 'भूते च' इति लिङ् निमित्ते लृङ् भूते भविष्यति च क्रियाऽतिपत्तौ. ६ तर्हि. ७ मरणकाले.

पशुभिर्द्वीपिभिर्न हि ॥ २७७ ॥ मयि प्रहरति त्वं क—स्तव देव्यपि न क्षमा । मृगं निघ्नति शार्दूले, त्राणशौंडो हि को भवेत् ? ॥ २७८ ॥ इत्युक्त्वा तत्करात् स्वासिं, पातयित्वा प्रहारतः । मल्लवत् प्रौढमल्लेन, तेन सार्धमयुद्ध सः ॥ २७९ ॥ अवेपत व्यथार्त्तेव, तत्पादप्रहताऽवनिः । तत्क्ष्वेडितप्रतिध्वानै—र्मठः पूच्चक्रुवानिव ॥ २८० ॥ तत्पाददर्दरैर्वन्याः, सिंहाद्या अप्यजागरुः । मृगाद्याश्च पलाऽऽयंत, कांदिशीकाश्चतुर्दिशम् ॥ २८१ ॥ चिरप्रसृमरोद्दाम—संग्रामव्यक्तधामभिः । असामान्यत्वमन्योन्य—मुभाभ्यामप्यमन्यत ॥ २८२ ॥ सुचिरं योधयित्वाऽथ, भीमो भूमौ निपात्य तम् । दत्त्वा हृदि पदं खड्गं, भयार्थमुदपीपटत् ॥ २८३ ॥ अभापिष्ट च रे दुष्ट !, गर्जितं क्व तवोर्जितम् ? । क्व च सा कालिका ? काला—न्मत्तस्त्वां त्रायतेऽत्र या ॥२८४॥ तदा तं पतितं वीक्ष्य, पशुवत् प्राणसंकटे । कालिका प्रकटीभूय, भूपांगजमभापत ॥२८५॥ वत्स ! मा स्म वधीरेनं, ममास्त्येष प्रियाकरः । नरोत्तमशिरः पद्म—परिपूजनयाऽन्वहम् ॥ २८६ ॥ अद्य मह्यं नरस्याऽस्य, शिरोवलिनिवेदनात् । अष्टोत्तरशतशिरः—पूजा पूर्तिमवाप्नुयात् ॥ २८७ ॥ ततः कापालिकस्यास्य, सिद्धा स्यां सर्वकार्यकृत् । परमेतदभाग्येन, त्वं प्रत्यूह इवाऽऽपतः ॥ २८८ ॥ त्वं कोऽपि वीरकोटीरो, यो मदग्रे मदर्चकम् । एवमाक्रम्य मशासि, देववद् भीपराङ्मुखः ॥ २८९ ॥ त्वत्सत्त्वेन प्रसन्नाऽस्मि, वरं वृणु यथेप्सितम् । जीवंतं च विमुंचेमं, न संतो ह्यल्पघातिनः ॥ २९० ॥ भीमस्तां स्माह यद्येवं, तर्हि जीववधं त्यज । लोकशास्त्रविरुद्धोऽयं, तव देवि ! न युज्यते ॥ २९१ ॥ उत्तमा त्वादृशी देवी, किं भवेज्जंतुघातिनी ? । शिशिरा हि शशिज्योत्स्ना, न तापपरिवर्धनी ॥२९२॥

१ सप्तम्यैकवचनम्. २ पादाघातजशब्दैः ३ उद् पट्ट चुरादि-ण्यन्तात् लुङ्.

इयच्चिरमहं वेद्मि, पाखंडी वधको ह्ययम् । घातयंती परं जंतू—स्त्वमेव वधिकाऽधिकम् ॥ २९३ ॥ त्वत्कृते प्राणिनो निघ्न—न्नयं वार्येत चेत् त्वया । न निहन्यात् तदा भृत्यो, यत् स्यात् स्वामिवशंवदः ॥२९४॥ कवलाहारराहित्यात्, त्वं नाश्नासि पलं ध्रुवम् । किमालंभयसे ? जंतू—न्निर्मंतून् क्रीडया ततः ॥ २९५ ॥ सामान्यस्यापि जीवस्य, वधोऽनर्थसमर्थकः । त्रैलोक्यत्राणशौंडानां, किं पुनर्महतामयम् ॥२९६॥ किं च पुण्यफलं साक्षाद्, देवीत्वं कलयंत्यपि । पापं तनोषि तद् देवि ! । विवेकः कीदृशस्तव ? ॥ २९७ ॥ तस्माज्जंतुवधं त्यक्त्वा, पापध्वांतकुहूनिशम् । कारुण्यं क्रियतां पुण्य—प्रकाशैकदिनोदयः ॥ २९८ ॥ इति प्रबोधिता तेन, देवी स्वीकृत्य तद्वचः । कापालिकं च निर्मोच्य, स्वं पदं प्रत्यपद्यत ॥ २९९ ॥

भीमोऽथ पृष्टवान् नम्रं, स्वमित्रं मतिसागरम् । कथं मां शिक्षयन्नस्य, पाशे त्वं पतितो विदन् ॥ ३०० ॥ स तं व्यजिज्ञपद् देव !, सायं प्राप्ता त्वदालयम् । त्वत्प्रिया त्वामपश्यंती, मुष्टेवाक्रंददुच्चकैः ॥ ३०१ ॥ श्रुत्वा तत्क्रंदितं माता—पितरौ ते मुमूर्च्छतुः । प्राप्य चैतन्यमाक्रंदैः, शब्दाद्वैतं च तेनतुः ॥ ३०२ ॥ ततो मां भूभृदप्राक्षीद्, भीमस्तेऽतिप्रियः सुहृद् । किं केनापि हृतः ? किं वा, स्वयं क्वापि गतो वद ? ॥३०३॥ यावत् किंचिदहं वच्मि, तावत् ते कुलदेवता । वृद्धस्त्रियामवातारीत्, स्वयमेव प्रभावभूः ॥ ३०४ ॥ अवादीच्च नरेंद्र ! त्वं, पुत्रार्थं मा स्म खिद्यथाः । पाखंडिना हृतः सोऽभूत्, कालिकापूजनेच्छया ॥ ३०५ ॥ तं विधूयाधुना पुत्र—स्तवास्ते यक्षिणीगृहे । कियद्दिनावसाने च, समेष्यति महर्द्धिभाक् ॥ ३०६ ॥ आर्त्तो नृपस्तया देवी—भारत्या निर्ववौ मनाक् । यथा प्रथमया वृष्ट्या, दवदग्धो महीरुहः ॥३०७॥

१ किं मारयसि ?. २ अमावास्यारात्रिम्. ३ तिरस्कृत्य–पराभूय. ४ वाण्या.

गते देव्यवतारेऽथ, सत्यैषा वाक् किमन्यथा। इत्युपश्रुतिमानेतुं, त्वत्तातः प्रजिघाय माम् ॥ ३०८ ॥ तां निशम्य निवर्तेऽहं, यावत् तावत् कुतोऽप्यभूत्। वात्यावर्त्तो रजःपूरैः, पूरयन्निव रोदसीम् ॥ ३०९ ॥ निशीथे(थ)रेणुपूराभ्यां, तथा संतमसं कृतम्। यथाऽहं दिव्यनेत्रोऽपि, जनुपांध इवाभवम् ॥ ३१० ॥ तदंतरे समभ्येत्य, कपाल्येप पिशाचवत्। स्तनंधयमिवोत्पाट्य, मां व्योम्नेह समानयत् ॥ ३११ ॥ अत्र दुर्वृत्तमेतस्य, प्रेक्ष्य प्रक्षुभिताऽन्तरः। पुराऽपि त्वद्वियोगार्त्तो, मृतदेश्य इवाभवम् ॥ ३१२ ॥ यावच्चिकर्त्तिषामास, मच्छिरोऽसौ दुराशयः। तावन्मद्गोत्रदेव्येव, समाकृष्टस्त्वमागसः ॥ ३१३ ॥ अहितोऽपि हितः सोऽय—मावयोर्योजनादभूत्। जातुचिद् दैवयोगेन, विषमप्यमृतायते ॥ ३१४ ॥ मित्रवृत्तमिति श्रुत्वा, पित्रोरार्धिं विमृश्य च। दुःखदावानलप्लुष्टो, भीमस्तरुरिवाभवत् ॥ ३१५ ॥ हृणीयमानो हृदये, तेन स्वेन कुकर्मणा। अथ कापालिकोऽभ्येत्य, नेमिवान् नृपनंदनम् ॥ ३१६ ॥ ऊचिवांश्च त्वयैकेन, रत्नगर्भाऽस्ति भूरियम्। यस्येदृग् दीप्यते लोको—त्तरं सत्त्वमयं महः ॥ ३१७ ॥ पुरा परैरभग्नोऽपि, भग्नोऽहं भवताऽधुना। वार्धिः परैरपीतोऽपि, किं न पीतो ह्यगस्तिना? ॥ ३१८ ॥ त्वया दामोदरेणेव, करुणारससिंधुना। निमज्जन् पंकमध्येऽहं, गोमंडलवदुद्धृतः ॥ ३१९ ॥ उपकृत्युपकर्तारः, सन्तः सन्ति परःशताः। अपकृत्युपकर्त्ता तु, त्वमेकोऽसि महाशयः ॥ ३२० ॥ प्राणदानादभूस्त्वं मे, नाथः कापथपातिनः। तथ्यपथ्योपदेशेन, गुरुरप्यधुना भव? ॥ ३२१ ॥ भीमस्तमूचिवान् स्वसे, प्रियाकर्त्तुं यदीच्छसि। तदाऽऽत्मघातवच्छश्वत्, परघातं परित्यज ॥ ३२२ ॥ वधोऽयं देवतार्थोऽपि, विहितो न हितावहः। मन्त्रपूतो पि हि

१ वाचिकं-संदेशम्. २ वातसमूहस्य चक्राकारेण भ्रमणम्. ३ तस्मिन्नवसरे. ४ कर्तितुमियेष. ५ लज्जमानः.

क्ष्वेडोऽ-वश्यं प्राणप्रणाशकः ॥ ३२३ ॥ जन्तूज्जासनतः[1] प्रपद्य नरकं भुङ्क्ते चिरं तद्व्यथा—मेकाक्षेष्वखिलेषु[2] पुद्गलपरावर्त्तान् घनांस्तिष्ठति । प्राप्तोऽपि त्रसतामहिप्रभृतिषु क्रूरेषु बम्भ्रम्यते, जातो मर्त्त्यभवेऽपि नैव लभते जीवः कुलाद्यं शुभम् ॥ ३२४ ॥ (शार्दूलविक्रीडितम्)अनुशिष्येति तं शिष्य—मिव भीमो महाशयः । सार्वजन्ये[3] दयाजन्ये[4], जैनधर्म्मे न्यवेशयत् ॥३२५॥ तदा निशां कृशां प्रेक्ष्य, 'स्वकीयां जननीमिव' । तज्जातमुचितं जातं, भृशं संतमसं कृशम् ॥३२६॥ दध्रिरे स्फूर्तिमन्तोऽपि, संहृता अपि तारकाः । तदानीं विरलीभावं, दरिद्रत्वे गुणा इव ॥ ३२७ ॥ परेषां तर्जयंस्तेजः, प्रोल्लसत्कमलाकरः । भानुर्भानुदयाञ्चक्रे, प्रातर्नवजिगीषुवत् ॥ ३२८ ॥ अथ भीमः समित्रोऽपि, मुखप्रक्षालनेच्छया । मठान्निर्गत्य कासारं, सारं सारसवद् ययौ ॥ ३२९ ॥ तावत् तत्र करी कश्चिद्, विन्ध्याद्रिरिव जंगमः । उन्मदिष्णुतयाऽधावद्, भीमं प्रति भयानकः ॥३३०॥ तं विरुद्धाशयं बुद्ध्वा, बद्ध्वा परिकरं दृढम् । स सान्त्वयितुमारेभे, धीराऽऽधोरणवच्छनैः ॥ ३३१ ॥ तावत् स देवहस्तीव, समित्रं नृपनन्दनम् । अध्यारोप्य निजं पृष्ठ—मुत्पपात नभःस्थलम् ॥ ३३२ ॥ हस्तिमल्लेन[5] वज्रीव[6], भीमस्तेन नभो व्रजन् । किमेतदिति पृष्ठस्थं, पृष्टवान् मित्रमात्मनः ॥ ३३३ ॥ विमृश्य सुहृदाह स, नायं नागो नभोगतेः । अभ्रमू(मु)वल्लभो[7] नापि, कज्जलश्यामलत्वतः ॥ ३३४ ॥ सुरः कोऽप्यसुरो वाऽपि, द्विपरूपस्ततोऽस्त्यऽयम् । हरते हेतुना केन, परं तत्रैव वेद्म्यहम् ॥ ३३५ ॥ तयोर्निगदतोरेवं, स करी तीव्ररंहसा[8] । दूरं गत्वा

१ उज्जासनं-मारणम्. २ एकेन्द्रियेषु-पृथिवीकायादिषु. ३ सर्वे एव सार्वः स चासौ जनश्च तस्मै हितस्तस्मिन्. ४ दयोत्पादके. ५ ऐरावणेन. ६ इंद्र इव. ७ अभ्रमू(मुः)-ऐरावणस्य स्त्री, तस्या वल्लभः-ऐरावणः स न श्वेत०. ८ तीव्रवेगेन.

क्वचिच्छून्य—पुरोपान्ते मुमोच तौ ॥ ३३६ ॥ द्विपे भूत इवादृश्यी—भूते तस्मिन्नृपोद्वहः । मित्रं विमुच्य तत्रैव, स्वयं शून्यपुरेऽविशत् ॥ ३३७ ॥ अपीक्षितद्युलक्ष्मीणां, सुराणां चित्तमोह(हि)नीम् । पश्यन्नागरिकीं लक्ष्मी—मपूर्वामिव सर्वतः ॥ ३३८ ॥ भीमो वरेण्यपण्यौघ-पूर्णायां विपणौ क्वचित् । व्यात्तवक्त्रगृहीतैक-नरं हर्यक्षमैक्षत ॥ ३३९ ॥ युग्मम् ॥ अवगत्य स्वमत्या तद्, दुष्टदैवतचेष्टितम् । नरं मोचयितुं सिंहा—भ्यर्णं भूपभवोऽभ्यगात् ॥ ३४० ॥ स मर्त्योऽपि भयभ्रान्तो, भीमं वक्तुमसासहिः । हन्यमानच्छगलवत्, कातराक्षं न्यभालयत् ॥ ३४१ ॥ नृसिंहः स जगौ सिंहं, न त्वं सिंहोऽसि वस्तुतः । केनाऽपि हेतुना कोऽपि, सुपर्वेहशरूपभाक् ॥ ३४२ ॥ तदयं दयया देव !, मर्त्यस्तूर्णं विमुच्यताम् । प्राणिनां प्राणदानं हि, परं दानं निगद्यते ॥३४३॥ राज्यादिकं तथा नेष्टं, यथेष्टं जीवितं नृणाम् । ददता तद् दयाढ्येन, तेषां किं नाम नो ददे ?॥३४४॥ मुखाद् विमुच्य तं मर्त्यं, क्षिप्त्वा चाग्रपदान्तरे । मानव्या भाषया भीमं, बभाषे कीरवद्धरिः ॥ ३४५ ॥ उपकारपरत्वेन, त्वं साधो ! सत्यमभ्यधाः । क्षुधितेन परं प्राप्तो, मयाऽयं मुच्यते कथम् ? ॥ ३४६ ॥ यथा कृपालुता तेऽस्मिं—स्तथा मयि कुतो न हि ? । यदेनमीहसे त्रातुं, क्षुधा मां च जिघांससि ॥ ३४७ ॥ किञ्च धर्मोऽपि ते कीदृग्, यदेकं परिरक्षसि । परं च हंसि सन्तो हि, मध्यस्था 'नायका इव' ॥ ३४८ ॥ अहं च सिंह एवास्मि, न देवो मानुषीं गिरम् । वेद्मि प्राग्भवसंस्कारा—न्मुञ्चे तन्नाशनं निजम् ॥ ३४९ ॥ विस्मेरः स्माह भीमस्तं, यद्यप्येवं तथापि भोः । त्यजाऽमुं निजमांसेन, भुक्तिं मांसलयामि ते ॥ ३५० ॥ सिंहोऽवोचदयं पूर्व—भवे मामदुनोत् तथा ।

१ नृपपुत्र.. २ सिंहम् ३ भूपपुत्र . ४ मासला करोमि.

यथाऽमुं मक्षतो भूरि—भवानपि न मे शमः ॥३५१॥ भीमो भूयोऽभ्यधात् तेऽस्मिन्, रिपावप्युचिता न रुट् । स्वकर्मणैव यत् सर्वं, हेतुमात्रं परः पुनः ॥३५२॥ अजातो म्रियते नैवाऽ—दत्तं नैवोपतिष्ठते । अकृतं भुज्यते नैव, ध्रुवमेतद् विदां-कुरु ॥३५३॥ तस्मात् कोपं विमुच्यास्मि—न्नऽयमप्याशु मुच्यताम् । प्रीण्यतां च मदंगेन, निजाङ्गं हरिणाधिप ! ॥३५४॥ इत्युक्तोऽपि नरं कोपात्, स नात्याक्षीद् यदा तदा । तस्माद् वस्त्रंवदाकृष्य, भीमस्तं* जगृहे बलात् ॥ ३५५ ॥ तं नरं जग्धुमागच्छन्, स धृत्वा पशुवत् पदे । अश्मन्यास्फालितस्तेन×, तिरोधात् सुरवद् द्रुतम् ॥ ३५६ ॥ आश्वास्य मृत्युभीतं तं, तेनैव सहितस्ततः । भ्राम्यन्नितस्ततो राज—सुतो राजाऽऽलयं ययौ ॥ ३५७ ॥ पश्यन् प्रतिक्षणं तस्मिन्, श्रियं वैमानिकीमिव । सप्तमं क्षणमारुक्षत्, स कुतूहलमोहितः ॥३५८॥ सजीवा इव माणिक्य—मूर्त्तयः शालभञ्जिकाः । उत्तीर्य तत्र स्तंभेभ्य—स्तस्मै स्वागतमूचिरे ॥ ३५९ ॥ आसयित्वाऽऽसनेऽनर्घ्ये, तं कुमारं नभःस्थलात् । स्नानीयं सर्वमानीय, स्नानार्थं प्रार्थयन्ति[2] च ॥ ३६० ॥ ताभिरेव समानाय्य, बहिस्थं मतिसागरम् । भीमस्तेन समं सस्नौ, चित्राञ्चितरदन्तरः ॥ ३६१ ॥ क्षीवरे चीवरे दिव्ये, दिव्यान्याभरणानि च । निवस्य[3] ससुहृत् सोऽश्नात्, तदानीं सुधाशनम् ॥३६२॥ कुमारशासनात् सोऽपि, पुमान् रक्षितजीवितः । भुक्त्वा सेवकवन्नम्र—स्तत्रेदिष्टं निविष्टवान् ॥ ३६३ ॥ घनसारखण्ड[4]-सारं, ताम्बूलं कुसुमादि च । वितीर्य पुत्रिकाः सर्वाः, यथास्वस्तम्भमासत[5] ॥ ३६४ ॥ किमेतदिति भीमेऽथ, नरं पृच्छति विस्मिते । रुचिस्फुरत्तरः कोऽपि, प्रादुरासीत् सुरः पुरः ॥ ३६५ ॥ ऊचे च तव सत्त्वेन, शिष्ट ! तुष्टोऽस्मि सो[6]ऽप्यवक् ।

१ वस्त्रमिव, प्र. * नरम्. × भीमेन. २ प्रार्थयन्त, प्र. ३ निवेश्य, प्र. ४ कर्पूरखंडश्रेष्ठम्. ५ मासदन्, प्र. ६ भीमोऽपि.

एवं चेद् वद कोऽसि त्वं ?, कोऽयं ? शून्यं च किं पुरम् ? ॥३६६॥ उज्जगार सुरोऽस्तीदं, पुरं हेमपुराह्वयम् । अयं हेम-
रथोऽत्रत्यो, महीपः श्रीपतिप्रभुः ॥३६७॥ पुराऽत्रासीत् पुरोधाश्च, द्विजश्चण्ड इति श्रुतः । दौर्जन्यप्रमुखैर्दोषैः, कृतद्वेषः
पुरेऽखिले ॥३६८॥ दौर्जन्यमेकमप्युच्चै-र्दुष्टं क्रोधादिभृत् किमु ? । एवमेवाशुभं मद्यं, किं वाच्यं मृगयादियुक् ? ॥३६९॥
द्विष्टः पौरजनोऽन्येद्यु—स्तस्य चण्डस्य भूभुजे । मातङ्ग्या रंरमीत्येष, इत्यलीकमचीकथत् ॥ ३७० ॥ नृपोऽपि कर्ण-
दौर्बल्या—दविमृश्यैव तद्वचः । तैलाभ्यक्तरुतेनांगं, वेष्टयित्वा सभान्तरे ॥ ३७१ ॥ शपंतमपि कोपेन, तं पुरोधसम-
ग्निना । द्रुमवज्ज्वालयामास, द्वेषस्याहो दुरन्तता ॥ ३७२ ॥ युग्मम् ॥ एकस्यापि विरोधः स्या—दवश्यं विपदास्पदम् ।
सर्वलोकविरोधस्तु, जीवितस्यापि नाशकः ॥३७३॥ स विपद्याऽशुभध्यानाद्, रक्षः सर्वगिलोऽभवत् । अन्ते यादृग् मतिस्ता-
दृग्, गतिरित्युचितैव गीः ॥ ३७४ ॥ अवधिज्ञानतो ज्ञात्वा, स स्वीयं मृत्युकारणम् । कृतान्त इव दुष्प्रेक्षो, रोषादत्र
समापतत् ॥ ३७५ ॥ तर्जयित्वाऽतिपरुषं, नभस्वानिव वारिदान् । हत्वा जनान् नभ इव, पुरमेतदशूनयत् ॥ ३७६ ॥
सिंहीभूय स्वयं चैनं, नृपं हेमरथं रुषा । लग्नवान् कणशः कर्तु—महो वैरं हि दुर्द्धरम् ॥ ३७७ ॥ पूर्वजेनेव तावत् त्व—
मस्याकृष्टः प्रकृष्टधीः । ततो मोचितवानेन—मस्तिवीरा हि मेदिनी ॥ ३७८ ॥ अत्र पाञ्चालिकाद्वारा, स्वागतादिक्रियां
तव । स एवाचीकरत् सर्वां, गुणैर्हि किमु दुर्लभम् ? ॥३७९॥ सोऽहं क्रव्यात् पुरस्तात् ते, सोऽयं हेमरथो नृपः । पुरं च
तदिदं शून्य—मेतत् तत्त्वं विबुध्यताम् ॥ ३८० ॥ किञ्च त्वदनुवृत्त्यैव, चक्रे व्यक्तो जनोऽखिलः । मयेन्द्रजालिकेनेव,

१ गृ शब्दे. २ वासुदेववत् समर्थः. * कर्पासेन. ३ विभंगेन ४ वायु . ५ पाञ्चालिकीद्वारा, प्र.

विलोकय पुरं पुरः ? ॥ ३८१ ॥ विस्मयोत्फुल्लदृग् भीम—स्तदा विष्वग् व्यलोकयत् । पुरन्दरपुरश्रीकैः, पौरैस्तत्पूरितं पुरम् ॥३८२॥ ऊचे च देव! स्तुत्यस्त्वं, यस्येदृक् सदयं मनः। अपहृत्याखिलान् पौरान्, यद् द्रागन्वग्रहीः पुनः ॥३८३॥ मन्ये महान्त एव स्यु-र्निग्रहानुग्रहक्षमाः । महीमुत्ताप्य नीरैर्हि, निर्वापयति भानुमान् ॥ ३८४ ॥ देवत्वाय जनो युक्तं, दुस्तपं तप्यते तपः । यदल्पस्यापि देवस्य, वैभवं भवतीदृशम् ॥ ३८५ ॥ रक्षः प्रति वदत्येवं, भीमेऽथ वनपालकः । नत्वाऽवदद् वनं प्राप्तो, देव ! चारणसाधुराट् ॥३८६॥ यत्यागमेऽतिहृष्टात्मा, केकीव जलदागमे । मित्ररक्षोनृपान्वितो, भीमस्तं वन्दितुं ययौ ॥३८७॥ पञ्चाङ्गप्रणिपातेन, सानन्दमभिवन्द्य सः । पुरो गुरोरुपाविक्ष-च्छैक्षवद् योजिताञ्जलिः ॥३८८॥ भक्तिगौरेषु पौरेषु, निविष्टेष्वपरेष्वपि । क्रोधोद्देशेन स गुरु—रुदगारीदिमां गिरम् ॥ ३८९ ॥ चतुर्ष्वपि कषायेषु, महत्त्वादिव यो धुरि । संसृतिर्व्रततेर्मूलं, हेयः क्रोधः स धीधनैः ॥३९०॥ क्रोधाविष्टोऽतिदुष्टानि, कुर्वन् कर्माणि लोकतः । कर्मचंडाल इत्याख्यां, लभते हि महानपि ॥ ३९१ ॥ इहैव तनुते कोपो, वैरं युद्धं विषादिताम् । परत्र तु व्यथास्तीव्रा—स्तैरश्चीर्नारकीरपि ॥ ३९२ ॥ न स्वोत्पत्तिपदं हन्ति, सर्पादिप्रभवं विषम् । अयं तदपि हन्त्येव, ततः क्रोधोऽद्भुतं विषम् ॥ ३९३ ॥ यद्वा स्वपरदाहित्वाद्, वह्निः क्रोधसमो मतः । परं पूर्वः क्षणं दाही, यावज्जीवं परः पुनः ॥ ३९४ ॥ कोपं कृत्वाऽपि यः प्रान्ते, क्षमते स सुरैरपि । नमस्यते यथापूर्व—मचंकारितभट्टिका ॥ ३९५ ॥

तथाह्यत्रैव भरत-क्षेत्रे मालवमंडनम् । स्वर्गश्रियामुज्जयिनी, श्रियाऽस्त्युज्जयिनी पुरी ॥ ३९६ ॥ धार्मिकोऽपि जनो

---

१ संसारवल्लिमूलम् २ धः प्र. ३ स्वर्गश्रीणाम् उत्-मत्सन्तं जयिनी-जयनशीला.

यत्र, गुणच्छेदं तनोति न । न चापविद्यामाधत्ते, मार्गणानपि नास्यति ॥३९७॥ तत्राभूद् भूपतिश्चन्द्र-श्चन्द्रवत् सौम्यदर्शनः। भृशं कुवलयोल्लास—लालसोऽस्ततमस्ततिः ॥ ३९८ ॥ कुमुदममदमैन्द्रः सिन्धुरो नोऽनुरोजाः, स्फटिकगिरिरगौरः शंकरः प्रासशंकः । विधुरतिविधुरश्रीः स्वस्तटिन्यस्तवेगा, विलसति सति विष्वग्द्रीचि यत्कीर्तिपूरे ॥ ३९९ ॥ (मालिनी) तत्प्रियाऽऽसीत् कुमुदिनी, कौमुदीव प्रमोदिनी । निजोदयेन या चक्रे, कमलोल्लासमद्भुतम् ॥ ४०० ॥ तस्य भूपस्य सचिवः, शुचिवंशविभूषणम् । उशनेव महीमासः, सुबुद्धिरिति विश्रुतः ॥४०१॥ नाम्नाऽर्थेनापि तत्रैव, 'धनप्रवर' इत्यभूत् । श्रेष्ठी बहुगुणश्रेष्ठः, कमलश्रीश्च तत्प्रिया ॥ ४०२ ॥ तयोः प्राणप्रिया पुत्री, सञ्जाताऽष्टसुतानन्‌ । भट्टिकेत्याख्ययाऽऽहूता, सा पितृभ्यां महामहात् ॥ ४०३ ॥ सा गुणैकप्रियेतीव, विचार्य निजचेतसि । दूषणैर्दूरतोऽत्याजि, भजते को ह्यरिप्रियम् ? ॥ ४०४ ॥ सर्वसौन्दर्यमुच्चित्य, स्रष्टा तां सृष्टवान् ध्रुवम्, भूर्भुवःस्वस्त्रयीस्त्रीषु, सा भव्याऽभूत् कुतोऽन्यथा ॥ ४०५ ॥ तत्प्रीत्याऽन्येद्युरित्यूचे, पितृभ्यां स्वजनोऽखिलः । न चंकारयितव्येयं, नन्दनी क्वापि केनचित् ॥ ४०६ ॥ चंकारशब्दो न्यक्कारे, श्रुतो देशीयभाषया । ततः सा पप्रथे लोके—ऽप्यचंकारितभट्टिका ॥ ४०७ ॥ तेन पैतृकमानेन, स्वच्छंदाऽऽसीत् सुरीव सा । अगर्हः परिवेर्होऽपि, तस्यां दास इवाभूतत् ॥ ४०८ ॥ स्वान्तदर्पणसंक्रान्त—कलावैभवभासुरा । संजीवनौषधं यूनां, सा यौवनमभूषयत् ॥ ४०९ ॥ ततो देवीव निःशंका, नानाभरणधारिणी । आरामेषु यथाकामं, रेमे सा स्वसखीयुता ॥ ४१० ॥ तत्राम्रमञ्जरिमिव, प्रेक्ष्य तां भूरिविभ्रमाम् । पिका इव

1 शुक्रानार्थः—शुक्रः. २ नृपगोत्रहरत्राभरथाविनरिच्छदः. ३ बहुविलासनशीलाम्.

पतन्ति स्म, तरुणाः स्मरविह्वलाः ॥ ४११ ॥ प्रार्थयन्त च तत्तातं, तां सोऽपि प्रत्युवाच तान्। तस्मै ददे सुतामेनां, योऽस्या वाक्यं न लंघते ॥ ४१२ ॥ स्त्रीपारवश्यं नो शस्यं, कुलीनानां महीयसाम्। ध्यात्वेति तेऽभवन्नैव, तदर्थं पुनरर्थिनः ॥ ४१३ ॥ तां किलन्तीं वने प्रेक्ष्य, सुबुद्धिः सचिवोऽन्यदा। प्रार्थयामास कामार्त्त—स्तत्तातं तां स्वबंन्धुभिः ॥ ४१४ ॥ श्रित्वा तद्वाक्यकर्तृत्वं, धनप्रवरवक्रतः। महेन पर्यणैषीत् तां, कमलश्रीसुतामसौ ॥ ४१५ ॥ तस्या देव्या इवादेशं, मौलौ मुकुटयन् सदा। प्रीत्या तां रमयामास, स शिवः पार्वतीमिव ॥ ४१६ ॥ साऽन्यदा स्वप्रियं प्रोचे, स्वामिन्नस्तमिते रवौ। त्वया सवेलमागम्यं, गेहे स्थेयं बहिर्नहि ॥ ४१७ ॥ स तदप्युररीचक्रे, तस्याः प्रीतिप्रवृत्तये। कामिन्याः किं न कुर्वन्ति, यद्वा कामान्धला जनाः ? ॥४१८॥ ततः सुबुद्धिराधाय, राजकार्याण्यतिद्रुतम्। सायं सदाऽगमद् गेहं, स्त्रीवाक्यं कोहि लंघते ? ॥ ४१९ ॥ कदाचिन्नृपतिश्चन्द्रः, पृष्टवान् पारिपार्श्विकान्। कुतः संप्रत्यमात्योऽयं, सवेलं चलते गृहे(हम्) ॥ ४२० ॥ पत्नीव्यतिकरे तेन, विज्ञप्ते कौतुकी नृपः। कार्यव्याजादमात्यं त—मानिशीथमतिष्ठिपत् ॥ ४२१ ॥ अर्द्धरात्रे ततः प्राप्तः, सुबुद्धिर्निजमन्दिरम्। उद्घाट्यतां प्रिये! द्वार—मिति तारस्वरोऽवदत् ॥ ४२२ ॥ द्वारेऽनुद्घाटिते रोषात्, स प्रोचे पत्नि! मा कुपः। यत् स्वार्थं पार्थिवेनाद्य, स्थापितोऽहमियच्चिरम् ॥ ४२३ ॥ यस्यात्मा स्ववशे नास्ति, विक्रीतो धनकाम्यया। स स्वेच्छया कथं कर्तुं, यातायातं प्रगल्भते ? ॥४२४॥ विक्रीणीते धनलवकृते जीवितं सौख्यहेतोः, स्वातंत्र्यञ्च त्यजति भजति द्वास्थतां मानलब्ध्यै। कीर्त्तिस्फूर्त्यै घटयति चटून्याऽऽनमत्यु-

१ तत्तातो गौणं कर्म ततो द्वितीया. २ प्रवृद्धये. प्र. ३ अर्द्धरात्र यावत्.

च्छतायै, माहात्म्यार्थं तुदति जनतां सेवकस्याऽद्भुता धीः ! ॥ ४२५ ॥ ( मंदाक्रान्ता ) तद् भूपसेवकत्वेन, तस्थिवानद्य
यद्यहम् । मम किं ? दूषणं तर्हि, विचारय रुषं त्यज ॥४२६॥ वदत्यपीति प्राणेशे, तत्प्रिया रोषपोषतः । प्रोचे प्रतिवचो
नैव, द्वारं नाप्युदजीघटत् ॥ ४२७ ॥ ततः खिन्नः प्रियः प्रोचे, धिग्मे कामान्धतामिमाम् । ययेदृग्लोलदृक्पाशे,
मयाऽऽत्माऽक्षेपि पक्षिवत् ॥ ४२८ ॥ गन्धमूषीव सर्प्पेण, किमियं स्वीकृता मया । नादर्तुं न मोक्तुं च, शक्यते या
कथञ्चन ॥ ४२९ ॥ ईदृगश्रुतपूर्वं तद्, वाक्यं श्रुत्वा प्रियोदितम् । सुबुद्धिपत्नी क्रुद्धोच्चै—र्द्वारमुद्घाट्य निर्ययौ ॥४३०॥
अशोकवनिकां श्रित्वा, वंचयित्वा च वल्लभम् । लग्ना पितृगृहं गन्तुं, स्त्रीणां रोषे हि तत्पदम् ॥ ४३१ ॥ अन्तः
क्रोधाग्निधूमेन, बहिः सन्तमसेन च । रुद्धाक्षी सा विदामास, नाध्वानं पितृसद्मनः ॥ ४३२ ॥ यूथभ्रष्टा कुरंगीव,
भ्रमन्ती च यतस्ततः । दध्रे मलिम्लुचैर्लक्ष्मी—र्भ्रान्त्या रूपविभूषणैः ॥ ४३३ ॥ विलपन्त्या मुखे तस्या, न्यस्य पी(पि)
ण्डितमम्बरम्[2] । ते ललुर्भूषणश्रेणीं[3], तेषां कर्म्मेदमाविमम् ॥ ४३४ ॥ ततः पुष्पोल्लसद्धाल्लिं, पल्लीं सिंहगुहाह्वयाम् । नीत्वा
तां ते ददुः पॅत्ये, विजयायोपदामिव ॥ ४३५ ॥ क्रूरस्वरं कुरूपं च, कौकोलमिव वीक्ष्य तम् । सा हंसीव व्यरंसीद् द्राक्,
तद्दर्शनपथादपि ॥४३६॥ तां सुबुद्धिप्रियां मात्रे,दत्त्वा पल्लीश्वरोऽवदत् । प्रबोध्येयं तथा मात—र्यथा स्याद् रमणी मम ॥४३७॥
विजने सा जनन्योचे, वत्से ! त्वत्पुण्यमुल्बणम् । मत्पुत्रो यत् त्वयि स्निग्धो, रुक्मिण्यामिव केशवः ॥ ४३८ ॥ एकैकेन
गुणेनाढ्याः, सन्त्येवात्र जना घनाः । सर्वोत्तमगुणग्राम—ग्रामणीर्मत्सुतः पुनः ॥ ४३९ ॥ स्वानुरूपं पतिं कृष्णं, यथा,

1 छुछुन्दरी. 2 पिण्डाकारकृतं वस्त्रम्. 3 तैर्लेके भूषणश्रेणी, प्र. ४ पत्यु , प्र. ५ द्रोणकाकमिव, शूकरमिव, वा.

श्रीराश्रयत् पुरा । तथा मत्तनयं मंत्त—नयं त्वमपि संश्रय ॥४४०॥ इत्थं कुबुद्धि जननीं, प्रोचे तज्जननीं प्रति । विद्धसम्मैव तद्वाक्यै—रचंकारितभक्तिका ॥४४१॥ कामान्धत्वेन चेन्मात—स्त्वद्भूरित्यभ्यदीधपत् । त्वमभ्यधाः कथं ज्ञात—सैत्याचारा जरत्यपि ? ॥ ४४२ ॥ यः कोऽपि हरतां नाम, विभवं भूषणान्यपि । सतीनां शीलरत्नं तु, हर्तुं दैवोऽपि न क्षमः ॥ ४४३ ॥ शेषाहीशशिरोरत्नं, केसरिस्कन्धकेसरान् । पतिव्रताव्रतं चापि, बलवानपि को हरेत् ? ॥४४४॥ मुक्त्वाऽहं स्वप्रियं नान्य—मनंगमपि संश्रये । अंगी तु किं पुनर्वाच्यः, प्रतीहीत्युत्तरं मम ॥४४५॥ मातुर्मुखाद् विदित्वा तत्, पल्लीशस्तां दुराशयः । दासीमिव रुषाऽऽक्षिप्य, कसाद्यैर्जघ्निवान् मुहुः ॥ ४४६ ॥ तेनेति दूयमानाऽपि, सा शीलान्नास्खलत् सती । पक्षिणा कंप्यमानाऽपि, किं शाखा पादपात् पतेत् ? ॥४४७॥ ततोऽतिरुष्टः पल्लीराट्, सार्थवाहस्य कस्यचित् । विक्रीणीते स्म मन्त्रिस्त्रीं, किमकृत्यं दुरात्मनाम् ? ॥ ४४८ ॥ तेनापि प्रार्थिताऽत्यर्थं, स्त्रीत्वार्थं तदनिच्छती । बहुधा सापराधेव, निष्पत्राक्रियते[3] स्म सा ॥४४९॥ सार्थवाहेन खिन्नेन, पारसकूलमण्डले । स्वर्णैः कम्बलवाणिज्य—कर्तुर्विश्राण्यते स्म सा ॥ ४५० ॥ कदर्थ्यमाना तेनापि, भोगार्थं सचिवप्रिया । निर्वेदाच्चिन्तयामास, रूपवत्ता विडंबिता ॥ ४५१ ॥ वरं विरूपता स्त्रीणा—मस्खलच्छीलपालिनी । न रूपवत्ताऽनुपदं, शीललीलाविलोपिनी ॥ ४५२ ॥ हन्त सत्योऽपि सीताद्या, यद् दुःखं प्रतिपेदिरे । ता अप्येतेन रूपेण, धिगिदं क्लेशनीरधिम् ॥ ४५३ ॥ सत्यस्ता एव कुर्वन्तु, सहाय्यमधुना मम । याभिः प्राणप्रयाणेऽपि, ब्रह्म जिह्मं न निर्ममे ॥ ४५४ ॥

---

१ प्रचंडन्यायम्. २ सन्या० प्र. ३ 'सपत्रनिष्पत्रादतिव्यथने' पा० ५।४।६१। इति डाच्, सपुंखस्य शरस्यापरपार्श्वेन विर्गमनान् निष्पत्रं करोति, अतिव्यथायुक्ताक्रियत इत्यर्थः. ४ मलिनं.

ध्यात्वेति सा निरासे तं, यदा कम्बलवाणिजम् । तदा प्राग्भववैरीव, तस्यां द्विष्टोऽजनिष्ट सः ॥४५५॥ ततः स शोणितं कृष्ट्वा, तदीयाद् वपुषोऽखिलात् । कम्बलान् रञ्जयामास, कीनाश इव निष्कृपः ॥ ४५६ ॥ पुष्ट्या शोणितकृष्ट्या च, सा बभूव शनैः शनैः । कर्पासपूणिकेवोच्चै—र्निःसारा पाण्डुरा कृशा ॥ ४५७ ॥ तथापि शीलं शीलन्ती, निंदन्ती च स्वकोपिताम् । सा तत्रास्थात् कुलस्त्रीणां, व्यसने हि परीक्षणम् ॥ ४५८ ॥

इतश्चोज्जयिनीशस्य, दूतस्तत्रान्यदाऽऽगमत् । कृपालुर्धनपालाख्यो, ज्यायांस्तस्याः सहोदरः ॥ ४५९ ॥ तेन व्यालोक्य भग्नीति, विभाव्य च कथंचन । दत्त्वा यथेप्सितं द्युम्नं, साऽमोचि वणिजस्ततः ॥ ४६० ॥ तत्रार्यकार्यमाचर्य, स्वसारं सारवच्च ताम् । गृहीत्वा स समागच्छ—दुज्जयिन्यां निजालयम् ॥ ४६१ ॥ वत्से ! केयमवस्था ते, निन्द्या वंद्या इवोच्चकैः । इति पृष्टा सुता माता—पित्राद्यैर्वाष्पवर्षिभिः ॥ ४६२ ॥ रोदयन्ती कठोरान—प्यात्मकोपप्रकोपजाम् । अवस्थामवदत् तेषा—मग्रे सा रुदती भृशम् ॥ ४६३ ॥ कथञ्चिदपि संस्थाप्य, रोदनान्निजनन्दनीम् । एवं संबोधयांचक्रे, बन्धुभिः प्रेमसिन्धुभिः ॥ ४६४ ॥ ईदृक् कोपस्त्वया चक्रे, वत्से ! निष्कारणः किमु ? । लोष्टवद् येन दुःखाब्धौ, त्वदात्माऽयं निवेशितः ॥४६५॥ क्व सा लक्ष्मीः क्व सा लीला, क्व तद् रूपं क्व तत् सुखम् । वनं वह्निरिवाधाक्षीत्, कोप एवाखिलं तव ॥ ४६६ ॥ निमित्तेऽपि न कुप्यन्ति, केचित् सन्तः सहिष्णवः । अकुपस्तद् विनाऽपि त्वं, केयं तव विवेकिता ? ॥४६७॥ विद्वन्मन्यास्त एव स्यु—स्ते सदा शान्तिवल्लभाः । न जाज्वलीति कोपाग्नि—र्येषां चेतसि कर्हिचित् ॥ ४६८ ॥



१ तिरश्चके. २ पूर्णिका, प्र. ३ स्वकोपताम्, प्र. ४ शीलरक्षणात्.

ततस्त्वं कोपसंताप—शान्त्यै पीत्वा शमामृतम् । निर्मान्ती धर्मकर्माणि, स्वगृहे तिष्ठ नन्दिनि ! ॥ ४६९ ॥ ततः प्रभृति साध्वीव, निमग्ना शमवारिधौ । जग्राहाभिग्रहमिमं, सुबुद्धिसचिवप्रिया ॥ ४७० ॥ अहं सर्वस्वनाशेऽपि, शिरश्छेदेप्यतः परम् । यावज्जीवं करिष्यामि, न रोषं निजशोपवत् ॥ ४७१ ॥ तत्पित्राऽथ तदीयांग—व्रणरोहणहेतवे । लक्षपाकस्य तैलस्य, व्यधाप्यन्त घटास्त्रयः ॥ ४७२ ॥ तस्या वेश्मनि तत् तैलं, लातुं जातुरुजातुरौ । कौचिन्मुनी समायातां, धर्मांशाविव देहिनौ ॥४७३॥ तदा चावधिना पश्यन्, भरतक्षेत्रमञ्जसा । सुरेन्द्रः पर्षदन्तःस्थोऽ–वदद् वृन्दारकानिति ॥४७४॥ पराजिग्ये तथा कोप—मचंकारितभट्टिका । यथा कोपयितुं नैतां, प्रगल्भन्ते सुरा अपि ॥ ४७५ ॥ अश्रद्धालुस्तदिन्द्रोक्तं, तां परीक्षितुमुत्सुकः । देवस्तत्सद्म कोऽप्यागात्, कौतुकी नालसो यतः ॥ ४७६ ॥ तदैव याचिते तैले, मुनिभ्यां सा महाशया । स्वदास्याऽऽनाययामास, तैलकुंभं गृहान्तरात् ॥ ४७७ ॥ तत्कोपाय सुरो दास्या, तं कुम्भं पथ्यभंजयत् । तद्भंगे सा पुनर्द्वैती—यीकमानाययत् तया ॥ ४७८ ॥ तत्रापि भग्ने देवेन, शान्ताऽमात्यप्रिया स्वयम् । तृतीयं घट-मानीय, व्रतिनोस्तैलमार्प्पयत् ॥ ४७९ ॥ तदाऽवादि व्रतिभ्यां साऽ–स्मदर्थं महती तव । तैलहानिरभूद् दास्यै, न क्रोद्धव्यं ततस्त्वया ॥ ४८० ॥ स्मित्वा साऽभिदधे साधू !, प्राप्ता कोपतरोः फलम् । तथाऽहं न यथा मूर्द्ध–च्छेदेऽपि विदधामि तम् ॥ ४८१ ॥ कथमित्युदिते ताभ्यां, मन्त्रिपत्नी स्वकोपतः । यथाऽनुभूतं तद् दुःखं, सर्वमप्यादितोऽवदत् ॥ ४८२ ॥ तादृक्षां तत्क्षमां वीक्ष्य, विस्मेरः स सुरः पुरः । भूत्वा नत्वा भणित्वा च, स्ववृत्तमिदमूचिवान् ॥ ४८३ ॥

१ निजक्षयवत्. २ जातुचिदातुरौ, प्र.

जीवितव्यं तवैवाहं, धन्यं मन्ये पतिव्रते ! । यस्या वास्तोष्पतिः स्तौति, क्षान्तिं प्रर्षदि हर्षुलः ॥४८४॥ क्षमायां मुनिरेवासी—दुपमानमियच्चिरम् । इदानीं वर्तसे त्वं तु, भाग्यं लोकोत्तरं तव ॥ ४८५ ॥ इति स्तुत्वा च वृष्ट्वा च, कोटीर्द्वादश काञ्चनीः । देवो ययौ निजं स्थानं, तत्कीर्तिमुखराननः ॥ ४८६ ॥ श्रुत्वा कथामिमां भव्याः !, कोपेऽपि प्रशमेऽपि च । त्यक्त्वाऽनर्थमयं कोपं, श्रेयः श्रेयस्करः शमः ॥४८७॥ देशनाऽन्ते प्रबुद्धाऽऽत्मा, रक्षः सर्वगिलोऽवदत् । मया हेमरथेऽमोचि, कोपस्त्वद्वचनात् प्रभो ! ॥ ४८८ ॥ तदा तत्रोर्जितं गर्जन्, कोऽपि पर्जन्यवद् गजः । धारालमदनीरोघै—रुक्षितक्षितिरापतत् ॥ ४८९ ॥ तद्दर्शनात् सभाक्षोभं, प्रेक्ष्य भीमोऽतिनिर्भयः । गजशिक्षाऽतिदक्षत्वात्, सांत्वयामास तं गजम् ॥ ४९० ॥ विस्मापयन् सभास्तारान्, देहदीप्त्याऽंशुमानिव । स यक्षीभूय मातङ्ग—स्तुंगरंगोऽनमन्मुनिम् ॥४९१॥ ज्ञानात् तं मुनिराह स्म, पौत्रं हेमरथं नृपम् । व्यसने पतितं मत्वा, त्रातुं त्वं भीममानय(ः) ? ॥४९२॥ अधुना त्वं पुनर्भीमं, तातोपान्तं निनीषसे ? । एवमेवैतदित्युक्त्वा, चख्यौ यक्षो मुनिं प्रति ॥ ४९३ ॥ प्राच्यजन्मनि नेताऽयं, मम हेमरथो मुने ! । अरक्षि राक्षसादस्माद्, भीममानीय तन्मया ॥४९४॥ किञ्च सम्यक्त्वतत्त्वस्य, प्राक् किंचिदतिचारतः । नाकनाथर्द्धियोग्योऽपि, जज्ञेऽहं व्यन्तरो ह हा ॥४९५॥ तत् प्रसद्य पुनर्देहि, विधेहि करुणां मयि । इति प्रीतेन यक्षेण, चारणर्षिरयाच्यत ॥४९६॥ तस्य हेमरथस्यापि, सर्वस्वमिव निर्वृतेः । स सम्यक्त्वं समारोप्य, तन्माहात्म्यमिदं जगौ ॥४९७॥

१ इन्द्रः. २ सिंचितक्षिति. ३ अर्थिप्रत्यर्थिनौ सभ्यान्, लेखकप्रेक्षकाश्च यः । धर्मवाक्यै रञ्जयति, स सभास्तारतामियात् ॥ १ ॥ मुख्यसभासद्. ४ सूर्य. ५ पौत्रः, ६ सम्यक्त्वम्. ७ यक्षस्य

तिर्यग्नारकभावदावदहनो मर्त्यद्युलोकोद्भव—द्वारोद्घाटनकुञ्चिका पृथुभवाकूपारयानं महत् । पुण्यांभोरुहभास्करस्त्रिभुवनश्रीलब्धिदिव्यौषधं । मुक्त्याऽऽकृष्टिनवांकुटी विजयते सम्यक्त्वमेकं नृणाम् ॥ ४९८ ॥ ( शार्दूलविक्रीडितम् ) कापालिकादिसंसर्गात्, सम्यक्त्वं दूषितं मनाक् । मत्वा भीमोऽपि जग्राह, मुनेरालोचनां तदा ॥४९९॥ ततः सर्वेऽपि ते धन्यं—मन्या नत्वा मुनीश्वरम् । पुनर्हेमरथक्षोणी–नाथावेसथमाययुः ॥ ५०० ॥ अथो हेमरथो नत्वा, भीमं प्रत्याह साहसिन् ! । तातस्येव प्रसादात् ते, मयाऽलम्भि पुनर्जनिः ॥ ५०१ ॥ तस्या जनेर्यत् सुभगं—करणं दुर्लभं भृशम् । त्वत्प्रसंगात् तदप्यापि, सम्यक्त्वं तात्त्विकं मया ॥५०२॥ निष्कारणोपकारेण, भानुनेव त्वयाऽधुना । ध्वांन्तादिव जनोऽत्युग्राद्, रक्षितो राक्षसादहम् ॥५०३॥ सतां स्वभाव एवायं, या परोपकृतेः कृतिः । तृष्णा हि केन तन्वन्ति, जगदुज्जीवनं घनाः ॥ ५०४ ॥ प्राणदातुर्न संपश्यन्, काञ्चन प्रत्युपक्रियाम् । ततोऽहं त्वद्गुणक्रीतोऽ–मुदाऽऽसे दासवत् तव ॥५०५॥ भीमस्तमूचे तुष्टोऽस्मि, विनयेनैव तेऽमुना । तत् त्वं प्रत्युपकारस्य, संकोचं मा कृथाः कृतिन् ! ॥५०६॥ किंच चेन्मत्कृतं किंचित्, तव चित्ते तदा त्वया । जैने धर्मेऽनिशे थत्यं, नात्मनीनोऽस्त्यतः परः ॥ ५०७ ॥ ऊचे हेमरथो देव !, यद्येवं तर्हि मां नवम् । श्राद्धं धर्मे स्थिरीकर्तुं, प्रतीक्षस्व कियच्चिरम् ॥ ५०८ ॥ तयोरालपतोरित्थं, घनैर्डमरुकस्वनैः । उत्कर्णितजनैर्द्यावा—पृथिव्यौ पूरयन्त्यलम् ॥५०९॥ विविधायुधपत्राढ्यै—र्विशाला स्वैर्महाभुजैः । स्फुटयन्ती विटपितां, विहायोधरणीरुहः ॥ ५१० ॥ सिद्धविद्यतया चंडं—रोचिषेवोरुरोचिषा । कापालिकेन सध्रीची, तत्रा-

---

१ उद्भवः–जन्म ( गतिः ). २अवसथं–गृहम्. ३क्रिया–प्रयत्नः. ४तत्र चित्ते सदा त्वया; प्र. * श्राद्धे, प्र. ५आकाशरूपवृक्षस्य वृक्षता प्रकटयन्ती. ६ सूर्येण. ७सहिता.

गात् कालिकासुरी ॥५११॥ त्रिभिर्विशेषकम् ॥ भीमं नत्वेत्यवादीच्च, स्वस्थाशय! निजेच्छया । भ्रमन्ती व्योम निःसीमं, त्वत्पुरस्योपरिस्थिता ॥ ५१२ ॥ तत्र त्वदभिधागर्भा—स्त्वन्मातापितृगौरजान् । श्रुत्वा प्रलापानुत्तीर्य, व्योम्नस्तान् समबोधयम् ॥ ५१३ ॥ क्षणेन ते महीनाथ!, पुत्रमत्र समानये । प्रतिश्रुत्येति च क्षिप्रं, प्राप्ताऽसि भवदन्तिकम् ॥ ११४ ॥ तदुत्तिष्ठ महिष्ठ! त्वं, स्वविलोकनवारिभिः । समुज्जीवय पित्रादीन्, वियोगाग्निकलङ्कितान् ॥५१५॥ श्रुत्वेति हर्षितो यावत्, कुमारः स प्रतिष्ठते । तावद् व्योम्नि विमानाली—प्रादुरासीदसीमरुक् ॥ ५१६ ॥ नर्तयन्ती स्फुरच्छाय—स्वनैर्वनशिखण्डिनः । सा चकार सभास्तारान्, व्योमाभिसृमरेक्षणान् ॥ ५१७ ॥ तन्मध्ये कान्तिपूरेण, द्यां लिम्पामिव तन्वती । क्षेपयन्ती स्वरूपेण, निःसीमेन रमामपि ॥ ५१८ ॥ दर्शयन्तीव वक्त्रेण, दिवाऽप्युद्भिन्नचन्द्रताम् । पर्यङ्कहृक्पथपान्थत्वं, देवी काचिदपप्रथत् ॥ ५१९ ॥ युग्मम् ॥ केयमित्याकुले सभ्य—लोके तत्पारिपार्श्विकाः । सुरा विमानतोऽभेत्य, भीमं नत्वा व्यजिज्ञपन् ॥ ५२० ॥ देवाऽसत्स्वामिनी नाना—विमानस्थपरिच्छदा । यक्षिणी कमलाख्या त्वां, नंतुमेत्यवधारय ॥ ५२१ ॥ तेषु विज्ञपयत्स्वेव, द्रागुत्तीर्य विमानतः । यक्षिणी प्राणमद् भीमं, विस्मापितसदाःश्रिया ॥५२२॥ निविष्टाऽऽचष्ट च ज्येष्टे, पृष्टवत्यस्मि तान् मुनीन् । क कुमारोऽधुनाऽस्तीति, परं ते नोत्तरं ददुः ॥५२३॥ ततस्त्वामिह विज्ञाय, ज्ञानेन प्रस्थिता द्रुतम् । मार्गे कियान् विलंबोऽभूत्, संप्रत्यस्मि समेयुषी ॥ ५२४ ॥ अथ हेमरथं कृच्छ्रा—दनुज्ञाप्य नृपांगजः । समित्रोऽपि समारोहद्, विमाने यक्षनिर्मिते ॥ ५२५ ॥ विमानस्थैः समस्तैस्ते—र्यक्षाद्यैः

१ विसापितसभा, प्र. २ प्रभावे.

सहितस्ततः । व्योम्ना प्रस्थितवान् भीम—स्त्रिदिवादिव देवराट् ॥ ५२६ ॥ संचरद्भिर्विमानैस्तै—र्ज्योतिर्मण्डलमंडितैः । तदा लोको व्यलोकिष्ट, शतसूर्यमिवांबरम् ॥५२७॥ गगने व्रजतस्तस्य, भीमस्य पुरतोऽद्भुतम् । व्यदीधपत् स्वदेवीभि—र्यक्षिणी प्रेक्षणक्षणम् ॥ ५२८ ॥ तेन नाट्यविनोदेन, विहायःसंचरिष्णवः । उत्ताला अपि सिद्धाद्याः, स्थिरतामभजन् क्षणम् ॥ ५२९ ॥ एवं व्योम समुलंघ्य, हरिवाहनभूपभूः । अध्यष्ठात् स्वपुरासन्नो—द्यानप्रासादसन्निधिम् ॥ ५३० ॥ तत्रार्चित्वा जिनेंद्रार्चां, स यक्षिण्याऽतिहृष्टया । कारयामासिवान् स्फीतं, संगीतं सुरनाथवत् ॥ ५३१ ॥ संगीतध्वनिमाकर्ण्य, पृष्टवान् हरिवाहनः । मंत्रिन् ! कौतस्कुतोऽयं मे, कर्णजाहं विगाहते ॥ ५३२ ॥ तदैवारामिको नत्वाऽ—वदद् देव ! सुतस्तव । विमानमंडितक्षोणिः, संप्रत्युद्यानमासदत् ॥ ५३३ ॥ तच्चैत्ये कार्यमाणस्य, तेन नाट्यस्य सर्वतः । ध्वानोऽयं प्रसरीसर्ति, त्वां सुतं ज्ञापयन्निव ॥ ५३४ ॥ तं सत्कृत्य प्रमोदेन, सोऽन्तरङ्गममानिव । सांतःपुरः सपौरश्च, निर्गतः सुतसन्मुखम् ॥ ५३५ ॥ निशम्य तातमायांतं, यक्षेण द्राग् व्यचीकरत् । भीमस्तुरंगमातंग—रथपत्त्याकुलं बलम् ॥५३६॥ दृष्ट्वा च तातं तत्पाद—पद्मन्यस्तशिरोऽम्बुजः । श्रियं पद्मोर्ध्वपद्मस्थां, तन्वन् पुत्रः प्रणेमिवान् ॥५३७॥ पिताऽपि तं समुत्थाप्य, क्षिपन्निव हृदंतरे । परिरभ्य भृशं मूर्ध्नि, चुंबति स मुहुर्मुहुः ॥५३८॥ पुत्रालोकोच्छलत्स्तन्य—च्छलात् प्रीतिरसं हृदि । दर्शयंतीमिव निजां, भीमो मातरमानमत् ॥५३९॥ स्वेशभीमपितृत्वेन, यक्षाद्यास्तन्निवेदिताः ।

---

१ नाटकोत्सवम्. २ विहायः—आकाशम्. ३ त्वरायुक्ताः. ४ अर्चा—मूर्तिम्. ५ कर्णमूलम्. ६ आसज्जते—प्रविशतीत्यर्थः. ७ अत्यन्तं प्रसरति. ८ शोभां पक्षे लक्ष्मीम्. ९ आलिंग्य.

प्रणेमिवांसस्तं भूपं, संतो ह्यौचित्यवेदिनः ॥ ५४० ॥ उपायनपरान् पौरान्, वियोगग्रीष्मतापितान् । प्रियालापसुधा-सारैः, स स्वयं सिक्तवान् मुहुः ॥ ५४१ ॥ ततो व्योम विमानौघैः, सैन्यैर्भूमिं च भूषयन् । प्रौढं करींद्रमारूढः, श्रिया शक्र इवापरः ॥ ५४२ ॥ स्फूर्जत्तूर्यरवाहूत—पौरपौरीशतस्तुतः । विश्राण्यमानस्वर्णाश्च(र्णश्च), श्रीपतीकृतमार्गणः ॥ ५४३ ॥ विलोकयन् पताकाभि–र्निपीतार्ककरं पुरम् । जनकेन समं भीमो, निजावासं समासदत् ॥ ५४४ ॥ त्रिभि-र्विशेषकम् ॥ श्रुत्वा यक्षादितश्चित्रं, चरित्रं पुत्रकर्तृकम् । तदैव मुदितो भूप—स्तं स्वराज्ये न्यवीविशत् ॥ ५४५ ॥ स्वयं च संयमोद्दाम—सैन्येन स्ववशीकृतम् । मुक्तिराज्यमलंचक्रे, शाश्वतश्रीविभूषितम् ॥ ५४६ ॥ मतिसागरमाधाय, मंत्रिणं मतिवाक्पतिम् । तान् विसृज्य च यक्षादीन्, भीमो राज्यमपालयत् ॥ ५४७ ॥ सांयुगीनं धनुर्बिभ्र—ल्लीलयैव स भूपतिः । संपराये पराजिग्ये, परान् दैत्यानिवाच्युतः ॥ ५४८ ॥ चतुरंगाऽपि सेनाऽऽसीत्, तस्याडंबरहेतवे । भूचक्रं तु वशीचक्रे, स स्वस्थाम्नैव केवलम् ॥ ५४९ ॥ तद्राज्ये नैव दुर्भिक्षं, नेतयो नाप्यनीतयः । न चौर्यं न परद्रोहो, नासूया जातु जज्ञिरे ॥ ५५० ॥ प्राच्यपुण्यफलं राज्यं, मत्वा तत्त्वाद्दतस्थितिः । तदेवाराधयद् धात्री–धवः सत्कृत्यसेवनात् ॥ ५५१ ॥ धारयन् हृदि सम्यक्त्वं, चारयन् सुकृते प्रजाः । प्रभावयन् मतं जैनं, चिरं भीमोऽन्वशान्महीम् ॥ ५५२ ॥

१ उपहारतत्परान्. २ वि–प्र. ३ वाद्यमान०. ४ दीयमानकनक०. ५ अश्रीपतयः ( निर्धना ) श्रीपतयः कृता –श्रीपतीकृताः श्रीपतीकृताः मार्गणा –याचका येन सः. ६ संग्रामकुशलम्. ७ युद्धे, ८ विष्णुः. ९ अतिवृष्टिरनावृष्टिः, शलभा मूषिका खगाः । प्रत्यासन्नाश्च राजानः, षडेता ईतयः स्मृताः ॥ ( स्वचक्रं परचक्रं च, सप्तैता ईतयः स्मृता , प्र. ) इत्युक्ताः कृषेरुपद्रवाः । १० अन्यायाः. ११ गुणेषु दोषारोपणम्. १२ पुण्यमेव.

वृद्धत्वे विनिशम्य सद्गुरुगिरं निर्वेदमेदस्करीं, राज्ये स्वं विनिवेश्य पुत्रमुदयाञ्चित्रं चरित्रैः परैः । प्रव्रज्यां प्रतिपद्य दुस्तपतपस्तापास्तपंकोत्करः, श्रित्वा केवलमुज्ज्वलं स भगवान् भीमोऽभ्यगान्निर्वृतिम् ॥ ५५३ ॥ ( शार्दूलविक्रीडितम् )

एवं धर्मामृतं वृष्ट्वा, गुरौ घन इव स्थिते । हृष्टः केकीव चौलुक्य—भूधवो मधुरं जगौ ॥ ५५४ ॥ प्रभो ! मिथ्यात्व-धत्तूरा—स्वादभ्रांततया मया । लेष्टुहेमेव बुद्धं प्रा—गतत्त्वमपि तत्त्ववत् ॥ ५५५ ॥ अधुना तु भवद्वाणी—सुधापान-गतभ्रमः । धर्मादितत्त्वं निःशेषं, जानानोऽस्मि यथास्थितम् ॥ ५५६ ॥ अज्ञानपटलं दूरी—कृत्य बोधशलाकया । मम ज्ञानमयं नेत्रं, त्वयैव प्रकटीकृतम् ॥ ५५७ ॥ तर्जितानल्पकल्पद्रु—चिंतारत्नादिवैभवम् । प्रसद्य भगवन् ! श्राद्ध—धर्मं मयि निवेशय ॥ ५५८ ॥ ततः स्फुरति सल्लग्ने, स्वच्छंदे च महोत्सवे । संघं चतुर्विधं साक्षी—कृत्य सत्कृत्यराशिवत् ॥ ५५९ ॥ विश्वैश्वर्यमिव श्राद्ध—धर्मं सम्यक्त्वभूषितम् । न्यास्थाचौलुक्यभूपाले, विधिना हेमसूरिराट् ॥ ५६० ॥ ॥ युग्मम् ॥ धर्मलक्ष्मीं पुरस्कृत्य, वधूं वर इवारुचत् । भ्राम्यन् समवसरणं, पावकं परितो नृपः ॥ ५६१ ॥ चौलुक्ये साधुनिक्षिप्तैः, क्षोदैः श्रीखंडजैस्ततैः । अकालेऽपि तदा लेभे, क्रीडा वासंतिकी जनैः ॥ ५६२ ॥ अक्षता रेजिरे शुद्धाः, संघक्षिप्ता नृपं प्रति । रक्तपुण्यरमामुक्ताः, कटाक्षा इव लक्षशः ॥ ५६३ ॥ नृपः प्राप्याहतं धर्म—मत्रापि परमां मुदम् । पुरोभाविमहानंद—वर्णिकामिव लब्धवान् ॥ ५६४ ॥ तदा दयोन्ममादेव, ववल्गेव विवेकिता । दानशीलतपोभावा,

१ स्वच्छं देवमहोत्सवे, प्र. * अशुभत् २ पवित्रकारकम्, पक्षे वह्निम्, ३ रक्ता-आसक्ता. ४ मोक्षवर्णिका ( मोक्षनीवानकी ) ५ मद्-हर्षे.

विलेसुरिव सर्वतः ॥ ५६५ ॥ वर्णयन् भाग्यदाक्ष्यादीन्, गुणान् गूर्जरभूभुजः । तदीयस्तुतिवाचालो, महानपि न कोऽजनि ? ॥ ५६६ ॥ आरोपितस्य धर्मस्य, रक्षणे यामिकीमिव । अनुशिष्टिमिमामूचे, हेमाचार्यो नृपं प्रति ॥ ५६७ ॥

कोशाद् विश्वपतेर्विकृष्य गुरुणा प्राणावनादिव्रत—स्फूर्जन्मौक्तिकदाम विस्तृतगुणं सम्यक्त्वसन्नायकम् । तुभ्यं दत्तमिदं महीधव ! वहन् हृद्यन्वहं जीववत्, त्वं सौभाग्यभरेण मुक्तियुवतेर्भावी प्रियंभावुकः ॥ ५६८ ॥ ( शार्दूल० ) तदा संघात् स 'धर्मात्मा,' 'राजर्षि'रिति चापरम् । नामद्वयं सुदुष्प्रापं, प्रसादमिव लब्धवान् ॥ ५६९ ॥ ततोऽन्या देवतास्त्यक्त्वा, हृदये सदनेऽपि च । आर्हतीः प्रतिमा न्यास्थ—न्नृपः सगुरुपादुकाः ॥ ५७० ॥ त्रिकालमर्चयित्वा ताः, कर्पूरकुसुमादिभिः । स स्वं सुरभयामास, सुकृतामोदसंपदा ॥ ५७१ ॥ नृपोऽष्टम्यादिघस्त्रेषु, पूजयाऽष्टप्रकारया । पूजयित्वा जिनानष्ट—कर्मीं निर्मितवाञ् श्लथाम् ॥ ५७२ ॥ द्वादशव्रतसम्यक्त्व—ज्ञानादीनां नरेश्वरः । ज्ञात्वाऽभिधद्विक्षमा(१२४)माना—नतीचारान्व्यवर्जयत् ॥ ५७३ ॥ किंचिद् गुरुमुखांभोजात्, किंचिद् वाग्भटमंत्रिणः । शृण्वानो ज्ञातवान् सर्वं, श्राद्धाचारं स चारुधीः ॥ ५७४ ॥ एवं सम्यक्परिज्ञात—धर्मश्चौलुक्यभूधवः । दयां तत्साधनीं विष्वक्, प्रवर्तयितुमैहत ॥ ५७५ ॥ ततश्चतुर्षु वर्णेषु, स्वस्य चान्यस्य हेतवे । हंता यः कोऽपि पापीयाञ्, जीवांश्छागमृगादिकान् ॥ ५७६ ॥ स राजद्रोहीत्यमुद्घोष्य, पटहं पत्तने नृपः । अमारिं कारयामास, जीवातुमिव देहिनाम् ॥५७७॥

१ सर्वदा, प्र. २ तीर्थंकरस्य. ३ दवरकम्, पक्षे गुणव्रतसमूहं शिक्षाव्रतसहितम्. ४ मध्यमणियुक्त, पक्षे, मूलयुक्तं. ५ दाम. ६ गुणेन, प्र. ७ अप्रिय. प्रियो भवतीति, ८ असु-क्षेपणे लुङिरूपम्. ९ धर्मसाधनीम्. १० ऐहित, प्र.

युग्मम् ॥ व्याधशौनिककैवर्त—कल्पपालादिपट्टकान् । पाटयित्वा स तेभ्योऽपि, करुणां प्रत्यपालयत् ॥ ५७८ ॥ यथाऽऽक्षिकेषु सत्या वाग्, यथा दुष्टेषु शिष्टता । तथाऽऽसीच्छौनिकाद्येषु, विस्मयाय दया तदा ॥५७९॥ वात्सकाऽऽजकगव्याद्य—मपि नागलितं जलम् । पाययामासिवान् कोऽपि, चौलुक्यनृपशासनात् ॥५८०॥ ततः स्वदेशे स्ववश—महीशविषयेष्वपि । प्रजिघाय निजानाप्तान्, मारिं वारयितुं नृपः ॥ ५८१ ॥ सुराष्ट्रपाटरीस्तंभ—तीर्थवार्धितटादिषु । लाटमालवकाभीर—मेदपाटमरुष्वपि ॥ ५८२ ॥ सपादलक्षदेशेऽपि, शक्तिभक्तिधनादिभिः । ते मारिं वारयामासुः, पापव्याधिमिवाभितः ॥ ५८३ ॥ युग्मम् ॥

द्यूतादीन्यपि हिंसायाः, कारणानीति भूपतिः । पटहोद्घोषणापूर्वं, निषिध्य निखिले जने ॥ ५८४ ॥ मृन्मयानि नृरूपाणि, मषीश्यामुखानि च । आरोप्य तानि सप्तापि, व्यसनान्यधिरासभम् ॥ ५८५ ॥ भ्रमयित्वा प्रतिपथं, हन्यमानानि यष्टिभिः । पत्तनान्निजदेशाच्च, सर्वथा निरवासयत् ॥ ५८६ ॥ त्रिभिर्विशेषकम् ॥ ततश्चौलुक्यभूमीभुग्, विष्वक् प्रैषीन्निजांश्चरान् । जंतून् हिनस्ति किं कोऽपि, न वेत्थमवलोकितुम् ॥ ५८७ ॥ बंभ्रम्यमाणास्तेऽजस्रं, प्रेक्षमाणाश्च हिंसकान् । सपादलक्षदेशीयं, कंचिद् ग्राममुपागमन् ॥५८८॥ माहेश्वरो वणिक् तत्र, वेणीविवरणे तदा । तच्छीर्षात् प्रियया दत्तां, यूकामेकां न्यपातयत् ॥ ५८९ ॥ लक्षयित्वाऽतिदाक्ष्येण, दूरस्थैरपि तच्चरैः । दध्रे स चौरवत् सार्धं, तया व्यापन्न-

१ व्याधो–वने मृगहिंसकः शौनिको–मांसविक्रेता(कसाइ) कैवर्तो–धीवर ( माछी ) कल्पपालो–मदिराविक्रेता (कलाल), २ द्यूतकर्तृषु ३ वत्सानां ( वाछरडांनो ) समूहः वात्सकम् एवम् आजकं गव्यं च. ४ व्याधि०, प्र. ५ द्यूतादीनपि, प्र, ६ प्रेष्य०, प्र० ७ तन्नामा महेश्वरभक्तो वा, ८ व्य०, प्र,

यूकया ॥ ५९० ॥ ततः स पत्तनं नीत—स्तथैव पृथिवीभुजा । ज्ञाततद्दुष्टचेष्टेन, बभाषे परुषाक्षरम् ॥ ५९१ ॥ विज्ञापि मया विष्वग्, निषिद्धं प्राणिनां वधम् । रेरे निःशूक! यूकेयं, हन्यते स्म त्वया कुतः? ॥५९२॥ सोऽवदत् स्वामिवन्मूर्ध-मध्ये मार्गं विधाय मे । कौणपीव पिबत्येषा, रक्तं व्यापादिता ततः ॥५९३॥ जगौ स्वामीयमेवास्याः,स्थितिस्तां तन्वती यदि । घात्येयं तर्हि सर्वेऽपि, घात्याः स्वस्वस्थितिस्थिताः ॥५९४॥ पशुप्रायश्च कस्त्वं रे, नृपचक्रधरेष्वपि । एवं दुष्टेष्टते यूका, स्ववृत्तिः खलु दुस्त्यजा ॥ ५९५ ॥ पीडामात्रं वितन्वाना, त्वयेयं निहता यदि । प्राणानपि हरन्नस्याः, कथं त्वं नैव हन्यसे ? ॥ ५९६ ॥ जानन् स्वस्येव सर्वस्य, सुखदुःखं, हिताहितम् । प्राणप्रमापणाद् दुःखं, परस्य कुरुषे कथम् ? ॥५९७॥ कल्मषाद् यदि नाभैषी—र्यूकां मथ्नन् विनिर्घृण ! । मत्तस्त्वं किं न मत्तोऽपि, हिंसकैकविनाशकात् ? ॥ ५९८ ॥ राज्ञामाज्ञाविलोपो हि, विना शस्त्रं वधः स्मृतः । तत्कुर्वाणोऽधुनाऽभूस्त्वं, हंत हंतव्यमध्यगः ॥ ५९९ ॥ परं यूकाकृतेऽप्येवं, कुर्वंस्त्वां घातये कथम् ? । तेन सर्वस्वदंडेन, त्वां निगृह्णामि दुष्टवत् ॥ ६०० ॥ ततस्त्वं गृहसर्वस्वं, व्ययीकृत्यात्र पत्तने । कारयस्व रयात् तस्याः, श्रेयसे चैत्यमुत्तमम् ॥६०१॥ यथैतद्वृत्तमाकर्ण्य, यूकाचैत्यं विलोक्य च । निर्दयोऽपि न कोऽप्यन्यो, हन्यात् स्वद्रुद् वपुष्मतः ॥ ६०२ ॥ इत्यादिष्टो नरेंद्रेण, स व्ययित्वा घनं धनम् । पत्तनेऽकारयद् यूका—विहारं हारवद् भुवः ॥ ६०३ ॥ एवं चरत्सु चौलुक्य—चरेषु क्वाऽपि जंतवः । न निश्यपि न गेहेऽपि, न केनापि निपातिताः ॥ ६०४ ॥ ततो यथा जिनेंद्रस्य, तीर्थे ववृधिरे नराः । तथा चौलुक्यराज्येऽपि, जलस्थलखचारिणः ॥ ६०५ ॥

१ राक्षसीव, २ सुखं दुःखं, प्र, ३ प्राणनाशनात्, ४ पापात्. ५ महोन्मत्तः ६ गरुरकाघात् ७ देहिनो-शीघ्रामिलाषी:, ८ दिनरोऽपि यद्दिरपि.

व्याधान् वीक्ष्य विहारिणः शिशुमृगाः स्वोक्त्या पितॄनूचिरे, यामः सांद्रलतांतरेष्विह न चेदेते हनिष्यंति नः। ते तान् प्रत्यवदन् बिभीत किमितो ? वत्साः! सुखं तिष्ठत, श्रीचौलुक्यभियो निरीक्षितुमपि प्रौढा न युष्मानमी ॥६०६॥ (शार्दूल०) अमारिकरणं तस्य, वर्ण्यते किमतः परम्। द्यूतेऽपि कोऽपि यन्नोचे, मारिरित्यक्षरद्वयम्॥६०७॥ नवरात्रेष्वथाऽऽसेषु, निस्त्रिंशा देवताऽर्चकाः। गुरोः पुरस्थं चौलुक्य—भूपमेवं व्यजिज्ञपन् ॥ ६०८ ॥ संति कंटेश्वरीमुख्या, देवतास्तव गोत्रजाः। तासां पूजाकृते राजन् [1], सप्तम्यादिदिनत्रये ॥ ६०९ ॥ अजाः शतानि सप्ताष्ट, नव सैरभेका[2] अपि। सप्ताष्टनवसंख्याका, वितीर्यन्तेऽनुवत्सरम् ॥६१०॥ युग्मम् ॥ वितीर्यन्ताममी सर्वे, पूज्यंते देवता यथा। नो चेत् क्रोत्स्यंति[3] ता विघ्नं, करिष्यंति च तत्क्षणम् ॥ ६११ ॥ महीपतिस्तदाकर्ण्य, कर्णाभ्यर्णमुपेत्य च। अधुना किं करोमीति ?, पृष्टवान् गुरुकुंजरम् ॥ ६१२ ॥ किंचिद् ध्यात्वाऽवदत् सूरि—र्न जंतून् घ्नंति देवताः। न मांसमपि चाश्नंति, जिनवाणीप्रमाणतः ॥६१३॥ किंतु केलिकिलत्वेन[4], मार्यमाणान् पशून् पुरः। दृष्ट्वा काश्चन तुष्यंति, शाकिन्य इव निष्कृपाः ॥ ६१४ ॥ एते देव्यर्चका एव, देवीपूजनकैतवात्। हत्वा जंतून् स्वदंते हा, स्वार्थायेयं तदर्थना ॥ ६१५ ॥ ततः ससैरभांश्छागान्, देयान् क्षिप्त्वा सुरीमठे। तालयित्वा च तद्द्वारं, रक्षयेथाः स्वमानुषैः ॥ ६१६ ॥ जीवंत एव स्थास्यंति, निशि ते पशवोऽखिलाः। प्रातस्तद्विक्रयाद् भोगं, देवतानां विधापयेः ॥ ६१७ ॥ 'जननीमिव जीवानां,' श्रुत्वा तां गौरवीं गिरम्। सर्वं पूर्वोक्तयुक्त्या त—न्नरेंद्रो निरवीवृतत्[5] ॥ ६१८ ॥ श्रांतानिव[6] प्रभातेऽति—कूर्दमानान् विलोक्य तान्। देवीशुश्रूषकानेवं, राजर्षिर्निजगाद

1 भयात्, प्र. 2 महिषाः, 3 क्रुध् क्रोधे लृट्. 4 केलिना—क्रीडया किलति—क्रीडतीति केलिकिलः—परिहासकारकस्तस्य भावस्तेन. 5 अचीकरत्. 6 श्रुतानेव, प्र.

गाः ॥ ६१९ ॥ रेरे दुष्टा ! मया ज्ञातं, यूयमेव पलेप्सया । शौनिका इव निस्त्रिंशा, घातयध्वे पशूनिमान् ॥ ६२० ॥ यदि मांसेन देवीनां, संपद्येत प्रयोजनम् । तदा हन्युः स्वयं नैताः, कथमेतान् बलीकृतान् ? ॥ ६२१ ॥ स्वयं नष्टाः परान् केऽपि, नाशयंतीति लोकवाक् । भवद्भिरेव पापिष्ठैः, सार्थकीक्रियते ननु ॥ ६२२ ॥ वंचयित्वा पुरा रे मां, तत्त्वज्ञमधुना कथम् ?। वंचयध्वेऽपनिद्रं हि, न मुष्णंति मलिम्लुचाः ॥ ६२३ ॥ ततः पशून् स विक्राप्य, तत्कालं सकलानपि । तद्द्रव्यैः कुलदेवीनां, भोगाभोगं व्यदीधपत् ॥ ६२४ ॥ कृतोपवासः स्वावासे, दशमीनिशि भूपतिः । जिनेश्वरं स्मरंश्चित्ते, ध्यानं दध्रे मुनींद्रवत् ॥ ६२५ ॥

तदा विदधती दीप्त्या, सदीपमिव मंदिरम् । त्रिशूलव्यग्रहस्ताग्रा, देवी काचिद् दिवागमत् ॥ ६२६ ॥ ऊचे च भूपतिं पश्य, समुन्मील्य विलोचने । अहं कंटेश्वरीत्यस्मि, प्राप्ता त्वत्कुलदेवता ॥ ६२७ ॥ राजज्ञाजन्म यन् मह्यं, ददे पूर्वैस्त्वयाऽपि च । तद् देयमिव पश्वाद्यं, कथं नाद्य प्रदीयते ?॥ ६२८ ॥ लुप्त्वा कुलक्रमं गोत्र—देवतां योऽवमन्यते । प्रलीयते स तत्कोपाद्, ब्रह्मशापादिवाचिरम् ॥ ६२९ ॥ यदि कामयसे श्रेय—स्तर्हि स्राग् मां प्रसादय ?। नो चेत् त्वां भस्मयिष्यामि, तृणवत् कोपवह्निना ॥ ६३० ॥ तन्निशम्यातिनिःक्षोभो, भूपतिर्भाषते स ताम् । नाहं सद्धर्ममर्मज्ञ—स्त्वत्कृते हन्मि देहिनः ॥ ६३१ ॥ धर्मं सार्वज्ञमज्ञात्वा, यश्चक्रे प्राग् वधो मया । ज्वलनज्वालवत् सोऽपि, संतापयति मन्मनः ॥६३२॥ एकस्यापि वधे जन्तो—रनन्तं पातकं विदन् ।ताननेकान् कथंकार—मंतयामि कृतान्तवत् ॥६३३॥ तवापि प्राणिनो

१ च, प्र. २ ज्ञाता, प्र ३ नवमीरात्रौ इति प्रबंधे. ४ आकाशमार्गेण. ५ लब्ध्वा, प्र. ६ यो न मन्यते, प्र.

नामी, न्याय्या घातयितुं किल । देवता हि दयागृह्यां लोके शास्त्रे च विश्रुताः ॥ ६३४ ॥ ये स्वयं घातकास्तेऽपि,
योग्या वारयितुं तव । ये तु त्यक्तवधास्तैस्तं, न कारयितुमर्हसि ॥ ६३५ ॥ दयाजीवातवः संतः, कुर्युर्जीववधं यदि ।
तदा प्रकाशकाः पूष्णः, पुष्णीयुस्तिमिरं कराः ॥ ६३६ ॥ कर्प्पूरादिमयो भोग-स्तव चक्रे मयोचितः । जीवान्तेऽपि न
जीवान्त-स्तन्यते देवि ! निश्चिंनु ॥ ६३७ ॥ वदन्तमिति भूकान्तं, कुपिता कुलदेवता । मूर्ध्नि हत्वा त्रिशूलेन, दुर्दशेव
तिरोऽभवत् ॥ ६३८ तेन त्रिशूलघातेन, तत्क्षणं क्षितिपोऽजनि । सर्वाङ्गीणस्फुरत्कुष्ठो दैव्यो हि विषमा रुषः ॥ ६३९ ॥
नासाऽऽसीच्चिपटेवाऽऽस्तां,कर्णौ विगलिताविव । गलन्ति स्मेव चाङ्गुल्यः, करजा अपि भूपतेः ॥ ६४० ॥ स्फुटितस्फोटवत्
पूयं, तस्य गात्रमसुस्रुवत् । जम्बालजालवत् कालो, वर्णोऽस्यैर्णोबभूव च ॥६४१॥दृष्ट्वा तत् तादृशं कुष्ठं, भूभुग् वैराग्यमागमत् ।
संसारे स्वशरीरे च, नार्हद्धर्मे मनागपि ॥६४२॥ स्वकर्मनिर्मितं सर्वं, भवतीति विचिंतयन् । कुलदेव्यामपि द्वेषं, न पुपोष
महामतिः ॥ ६४३ ॥ अथोदयनमाकार्य, मंत्रिणं मेदिनीपतिः । देवीव्यतिकरं सर्व-मुक्त्वा स्वाङ्गमदीदृशत् ॥ ६४४ ॥
मंत्री तद् दर्शनादेव, दूयते स्मतमां हृदि । महतां व्यसनं कस्य, न स्याद् दुःखाकरं खलु ॥६४५॥ भूपस्तमूचिवान् कुष्ठं,
न मां दंदह्यते तथा । यथा मत्कारणं जैन-धर्मेऽस्मिंल्लाञ्छनं नवम् ॥ ६४६ ॥ विज्ञायैतद् वदिष्यन्ति, यदमी पार-
तीर्थिकाः । अहो राज्ञः फलं कुष्ठं, जज्ञेऽर्हद्धर्मसेवनात् ॥ ६४७ ॥ यः शैवं धर्ममुत्सृज्य, जैनं धर्मं प्रपद्यते । कुमार-
नृपवत् कष्ट-पात्रं सोऽत्रापि जायते ॥ ६४८ ॥ अस्मद्दैवतसूर्यादि—स्तुत्या कुष्ठादयो रुजः । प्रलीयंतेतमामर्ह—त्सेवया

१ दयापक्षाश्रिता , २ निश्चयं कुरु !-निर्धारय !, ३देव्या इमाः दैव्यः, ४प्रकटीबभूव, ५ च, प्र, ६ स शब्दाद् 'अतिशायिने० इति तमप् ततः 'किमेत्तिङव्यय० इति आमुः

तूल्लसंति ताः॥६४९॥त्रिभिर्विशेषकम्॥ ततो यावदिदं कर्ण–जाहं नो याति विद्विषाम्। तावद् गत्वा वहिर्वह्नौ, तृणयिष्यामि जीवितम् ॥६५०॥ जगादोदयनः स्वामिन्!, केयं मृत्युकथा वृथा?। देवी प्रसाद्यतां सद्यः, सर्वं दत्त्वा तदीप्सितम् ॥६५१॥ उडूनां व्योमवत् स्थानं, प्राणानां वपुरुच्यते। तस्मिन्नश्यति दक्षोऽपि, नियमं कोऽभिकांक्षति ? ॥ ६५२ ॥ सर्वत्र संयमं रक्षेत्, तस्मादात्मानमेव च। सति स्वास्थ्ये पुनर्विद्वान्, प्रायश्चित्तं समाचरेत् ॥ ६५३ ॥ इति सर्वज्ञवाक्येन, संप्राप्ते प्राणसंकटे। चारित्रिणोऽपि चारित्रं, हित्वाऽऽत्मानमवंति हि ॥ ६५४ ॥ नियमोऽपि तवास्त्येष, षंडाकारविवर्जितः। स हिंसयाऽपि नो याति, देवतादेशक्षतया ॥६५५॥ त्वयि जीवति धात्रीयं, चिरं राजन्वती भवेत्। नन्देयुश्च जनास्तस्माद्, रक्षात्मानं यथातथा ॥ ६५६ ॥ राजर्षिस्तं पुनः प्रोचे, किमेतत् सचिवोच्यते ?। कुर्वे जीववधं नाहं, कल्पांतेऽपि कथंचन ॥६५७॥ भवे भवे भवेद् देहो, भविनां भवकारणम्। न पुनः सर्ववित्प्रोक्तं, मुक्तिकारि कृपाव्रतम् ॥६५८॥ यदीदृशेन देहेन, पुण्यमूर्जितमर्ज्यते। दृषत्खंडेन तद् भूरि, कांचनं परिगृह्यते ॥ ६५९॥ सर्वतश्चपलो वायु—र्जीवितव्यं तदात्मकम्। तत्कृतेऽहं कथं मुंचे ?, स्थिरां श्रेयस्करीं कृपाम् ॥ ६६० ॥ किंच त्रसति पापीयान्, कालधर्मान्न पुण्यवान्। संचितोल्वणपुण्यस्य, कीदृशं मम तद्भयम् ? ॥६६१॥ आराधितो जिनो देवो, हेमसूरिर्गुरुर्नतः। निर्मितश्च दयाधर्मो, न्यूनमद्याऽपि किं मम ?॥६६२॥ तत् त्वरस्व कुरुष्व त्वं, चितां दारुभराऽऽचिताम्। विभास्यति न चेद् रात्रि—र्गुप्तकर्मैककामधुक्॥६६३॥

१ कर्णमूलम्, २ सातिचारं कृत्वाऽपि. ३ शरीरम्, ४ रायाभियोगेणं ( १ ) गणाभियोगेण ( २ ) वलाभियोगेणं ( ३ ) देवयाभियोगेण ( ४ ) महत्तरागुरुनिग्गहेणं ( ५ ) वित्तिकंतारेणं ( ६ ) इति, ५ प्रशस्तो राजाऽस्त्यस्या सा. ६ श्वासः, ७ वायुस्वरूपम्, ८ जीवितव्यकृते, ९ किंचित्, प्र.

जगौ ॥ ६६४ ॥ विद्यानिधिः प्रभुः
तं निश्चयं परिज्ञाय, राज्ञः प्राज्ञः स मंत्रिराट् । आसाद्य वसतिं सद्य—स्तत्सर्वं गुरवे
प्रोचे, पर्यासं मृत्युवार्तया । समानय पयः कोष्णं, परिजप्य ददे यथा ॥ ६६५ ॥ तत्संस्पर्शनमात्रेण, कुष्ठव्याधिर्नृपांगतः ।
रविप्रकाशलेशेन, विष्टपाद् ध्वांतवद् गमी ॥६६६॥ श्रुत्वा तत् तेन हृष्टेन, तत्क्षणादाहृतं पयः । सूरिः श्रीसूरिमंत्रेणाऽ—
भिमंत्र्य स्वयमार्पयत् ॥ ६६७ ॥ पीयूषस्येव दायादं, तदादाय स यत्नतः । प्रभुप्रेषितमस्त्येत—दित्युवाच नृपाग्रतः
॥ ६६८ ॥ तेन सिद्धरसेनेव, देहमभ्यज्य चाभितः । निनाय लोहवत् तस्य, वर्णनीयां सुवर्णताम् ॥ ६६९ ॥ पूर्वतोऽप्य-
धिकं प्रेक्ष्य, वपुस्तज्जलयोगतः । हर्षाश्चर्यादिभावानां, पदमासादयन्नृपः ॥ ६७० ॥ अमात्यमिदमूचे च, कैंटरि प्राभवं
प्रभोः । ईदृक्षमपि यः कष्टं, धन्वंतरिरिवाहरत् ॥ ६७१ ॥ देवीनामपि कोपाग्नि-स्तावदेव ज्वलत्यलम् । गुरुर्न वीक्ष्य-
(क्ष)ते यावद्, दृष्ट्या मेघायमानया ॥ ६७२ ॥ अहो लोकोत्तरा काचित्, प्रभोर्मयि कृपालुता । ययाऽहं मृत्युतस्त्रातो,
व्याघ्राद् वृकं इवानिशम् ॥ ६७३ ॥ एवमुर्वीपतौ गुर्वीं, कुर्वाणे गौरवीं स्तुतिम् । दुःक्षपाऽपि क्षपां प्राप, पापश्रेणिरिव
क्षयम् ॥ ६७४ ॥ प्राभातिकीं क्रियां कृत्वा, नृपो मंत्र्यादिभिर्वृतः । वंदित्वा चरणद्वंद्वं, निर्द्वन्द्वं गुरुमूचिवान् ॥ ६७५ ॥
त्वत्प्रभावं कियत् स्तौमि, भगवन् ! जिह्वयैकया । योऽगस्त्य इव कष्टाब्धिं, मम पेपीयते मुहुः ॥ ६७६ ॥ त्वत्प्राच्योप-

१ किंचिदुष्णम्. २ जपित्वा-ऽऽमंत्र्य. ३ अधिकतेजस्वि. ४ आश्चर्यकारि. ५ सामर्थ्यं. ६ शृगालः. ७ महतीं-गौरववतीम्. ८ गुरोरियं गौरवी ताम्
९ दुःखेन क्षेपणीया. १० रात्रि. ११ निर्गतो द्वन्द्वेभ्यः-शीतोष्णादिविरुद्धधर्मयुगलेभ्यः-निर्द्वन्द्वः रागद्वेषशीतोष्णलाभालाभादिद्वन्द्वरहितस्त्वम्. १२ अतिशयेन पिबति.

क्रियाणाम[1]—प्यासीत् कोऽपि न निष्कयः[2] । अद्यतन्याः पुनस्तस्याः[3], कतमोऽस्तु स[4] वस्तुतः[5] ॥ ६७७ ॥ सीमा सर्वोपकारेषु, यत् प्राणपरिरक्षणम् । चूलेव[6] तस्योपर्येषा[7], यन्मे सद्धर्मबोधनम् ॥ ६७८ ॥ प्रक्षाल्याक्षतशीतरश्मिसुधया गोशीर्षगाढद्रवै[8]—र्लिप्त्वाऽभ्यर्च्य च सारसौरभसुरस्वर्णप्रसूनैः[9] सदा । त्वत्पादौ यदि वांवहीमि[10] शिरसा त्वत्कर्तृकोपक्रिया—प्राग्भारात् तदपि श्रयामि भगवन्नार्णता[11] कर्हिचित् ॥ ६७९ ॥ ( शार्दूलविक्रीडितम् ) तत्कृतज्ञतया प्रीत—स्तं प्रति प्रभुरभ्यधात् । का नामोपक्रिया चक्रे, मया यत् त्वं वदस्यदः ॥६८०॥ अत्येपि[12] व्यसनं यत् त्वं, तत् त्वत्पुण्यस्य वैभवम् । ध्वांतं निहंति यद् दीप—स्तद्धाम्नस्तद्धि वल्गितम् ॥६८१॥ पुण्यप्रद्योतनो[13] यस्य, पार्श्वे प्रद्योतते[14]ऽनिशम् । नेदीयसी[15] हि किं तस्य, स्फुरत्यापत्तमस्विनी[16] ? ॥६८२॥ अमारिमसद्वाक्येन, सर्वतः कुर्वता त्वया । आस्माको[17]पक्रियाणां हि, चक्रे को नैव निष्क्रयः ? ॥ ६८३ ॥ दक्षा नयज्ञाः सधनाः, शूराश्च कति नासते । आर्त्ताः परार्त्तिभिर्ये तु, द्वित्राः कुत्राऽपि ते नराः ॥ ६८४ ॥ अस्मिन् शुभंगिले[18] काले, व्यसनेऽपि यथा कृपाम् । अत्रायथास्तथा कोऽन्य—स्त्रायते साधुरप्यहो ॥ ६८५ ॥ विश्राणनं[19]स्य दारिद्र्यं, विक्रमं[20]स्य महाऽऽहवः । व्रतस्य प्राणसंदेहः, परीक्षाकषपट्टकः ॥ ६८६ ॥ त्वमीदृशाऽपि कष्टेन, भ्रष्टोऽर्हच्छासनान्न चेत् । तवास्तां तर्हि परमा—र्हतेति विरुदं नृप ! ॥ ६८७ ॥ ततस्तद्विरुदं प्राप्य, दुष्प्रापं त्रिदशैरपि ।



---

१ उपकाराणाम्. २ प्रत्युपकार. ३ उपक्रियायाः. ४ निष्क्रय. ५ तत्त्वत. ६ शिरा. ७ सर्वोपकारसीमारूपस्य. ८ रसैः. ९ देवलोकजातस्वर्णपुष्पैः. १० अतिशयेन वहामि ११ ऋणरहिततताम्. १२ अतिक्रामसि—उल्लंघसे. १३ सूर्य. १४ प्रकाशते. १५ अतिशयनिकटा. १६ रात्रिः. १७ अस्माकमिमा—आस्माकाः. १८ शुभं गिलतीति शुभंगिल—शुभभक्षक. १९ दानस्य. २० पराक्रमस्य.

कृतार्थं मन्यमानः स्वं, धर्मात्मा सौधमासदत् ॥ ६८८ ॥ तदा च काशिविषये, वाराणस्यां महीश्वरः[1] । जयंतचंद्रना-माऽऽस्ते, श्रीमद्गोविन्दचंद्रतुक्[2] ॥ ६८९ ॥ यत्प्रतापतपनातितापितः, शंकरः सुरधुनीं शिरस्यधात् । नीरधौ निविशते स्म केशवः, पंकजासनमशिश्रियद् विधिः ॥ ६९० ॥ ( रथोद्धता ) स सप्तयोजनशत—प्रमितक्षितिनाथताम् । वहन्न-न्यान् महीनाथान्, मेने स्वान् किंकरानिव ॥ ६९१ ॥ अनेकद्विपसहस्त्र्यश्व—रथपत्तिमयं बलम् । तस्य प्रेक्ष्य जनो बभ्रे[3], चक्रभृत्कटकभ्रमम्[4] ॥६९२॥ विना गंगायमी यष्ट्यौ, सोऽसंख्यानीकभावतः । न गंतु शक्तवांस्तेन, पंगूराजेति विश्रुतः ॥ ६९३ ॥ मीनाशनतया तस्य, स्थाने[5] हिंसां महीयसीम् । श्रुत्वा तद्वारणाहेतो, राजर्षिर्ध्यातवान्[6] धियम्[7] ॥ ६९४ ॥ ततः स चित्रयित्वोच्चै—श्चारुभिः कारुभिः[8] पटे । मूर्तिं श्रीहेमसूरीयां, तत्पुरस्थां निजामपि ॥ ६९५ ॥ तं पटं हेमकोट्यौ द्वे, द्वौ सहस्रौ हयोरसान्[9] । ददित्वा शिक्षयित्वा च, काशीं प्रैपीत् स्वमंत्रिणः ॥ ६९६ ॥ युग्मम् ॥ तां समासाद्य ते दध्यु—रियं मुक्तिपुरी श्रुता । एतदीया जनास्त्वेते, सर्वेऽपि पललाशनाः ॥ ६९७ ॥ समुद्रस्य श्रवंत्याश्च, तटाधिष्ठायके पुरे[10] । प्रायो मत्स्याशनत्वेन, लोको भवति निष्कृपः ॥ ६९८ ॥ पुरेऽत्राबालगोपालं, करुणाप्रतिपालनम् । दुष्करं भाति दुर्वाते, दीपोद्दीपनवद् ध्रुवम् ॥६९९॥ तत् प्राक् प्रकृतयो माहा—राजिकाः सकला अपि । यथाकामिकहेमादि—दानैः प्रीण्याः प्रयत्नतः ॥ ७०० ॥ यथा विज्ञप्तिमासार्कीं, ते न घ्नंति नृपाग्रतः । बुद्ध्वेति सचिवाश्चक्रु—स्तथैव निजकौशलात् ॥ ७०१ ॥ जयंतचंद्रं दृष्ट्वा च, तत्पुरस्तान्यवीविशन् । हेमादिप्राभृतं सर्वं, पश्चाच्चित्रपटं च तम् ॥७०२॥

---

१ राजा. २ तुक्-तुज्-पुत्र . ३ दध्रे. ४ भ्रान्तिम्. ५ नगरे ( देशे ). ६ व्यापारयत्. ७ धियाम्, प्र. ८ शिल्पिभिः. ९ साहस्रौ हयोरसौ, प्र. १० नगरे.

पृष्ट्वा चौलुक्यभूपस्य, काशीशः कुशलादिकम्। कृत्वा च तं पटं हस्ते, किमेतदिति पृष्टवान् ॥ ७०३ ॥ अवोचन् सचिवाः स्वामि—न्नस्ति राजगुरोरियम्। मूर्तिः श्रीहेमसूरींदो—रियं चासन्महीशितुः ॥ ७०४ ॥ अतिभक्त्योपदीकृत्य, स्वं[1] स्वतोऽप्यधिकामिमाम्। गुरुमूर्तिं च चौलुक्य—नृपो विज्ञपयत्यदः ॥ ७०५ ॥ हेमाचार्यो गुरुर्मेऽस्ति, सर्वविद्याब्धिपारगः। ज्ञानवानिव[2] यस्तत्त्वं, परं बोधयते जनम् ॥ ७०६ ॥ आकलय्य गुरोस्तस्मा—न्मया धर्मं कृपामयम्। स्वदेशे परदेशे च, हिंसाऽवार्यत तद्रिपुः ॥ ७०७ ॥ भवत्पुरे श्रुता सोच्चै—र्मार्गदेष्ट्रीव दुर्गतेः। ततोऽमी प्रहिताः संति, तन्निषेधाय धीसखाः ॥ ७०८ ॥ अंतर्दध्या विमृश्योच्चैः, कारुण्यं पुण्यकारणम्। सर्वथा स्वास्पदे हिंसां, दुर्नीतिमिव दूरय ॥ ७०९ ॥ इति मंत्रिगिरा चित्र—कारिचित्रेक्षयाऽपि च। तुष्टो जयंतचंद्रो राट्, सदः प्रत्यक्षमाख्यत ॥ ७१० ॥ युक्तं गूर्जरदेशोऽयं, विवेकेन बृहस्पतिः। कथ्यते सकलैर्यस्मि—न्नीदृग् भूपः कृपामयः ॥७११॥ कियानुपायः क्लृप्तोऽस्ति, जीवरक्षाप्रवर्तने। तमेव धन्यं मन्येऽहं, पुण्ये यस्योल्वणं मनः ॥ ७१२ ॥ स स्वयं कारयन्नस्ति, कृपां तत्प्रेरितोऽप्यहम्। न कारयेयं यद्येनां, मतिर्मे तर्हि कीदृशी ॥ ७१३ ॥ चतुर्भिः कलापकम् ॥ ततः स नृपतिर्देशात्, पुराच्चानाय्य सर्वतः। जालकान्येकलक्षस्पृक्[3]—सहस्राशीतिसंख्यया ॥ ७१४ ॥ अन्यान्यपि च हिंस्रोप—करणानि सहस्रशः। चौलुक्यसचिवाध्यक्षं, वह्निदानादजिज्वलत् ॥ ७१५ ॥ युग्मम् ॥ हिंसा दग्धेति पटहै—रुद्घोष्य परितः पुरे। आदिक्षज्जालिकादीनां, जालादेरपुनःकृतिम् ॥ ७१६ ॥ चौलुक्यदत्ताद् द्विगुणं, दत्त्वा प्राभृतमद्भुतम्। काशीशेन विसृष्टास्तेऽ—मात्याः

१ स्वं–आत्मानम्–स्वकीयं वा प्रतिबिम्बम्. २ सर्वज्ञ इव. ३ एकलक्षयुक्ताशीतिसहस्रमितजालानि.

स्वपुरमासदन् ॥ ७१७ ॥ नत्वा च हेमाचार्याग्र—स्थितं चौलुक्यनायकम् । उपदादानपूर्वं त-त्सर्वं वृत्तं न्यवेदयन् ॥ ७१८ ॥ तेनाद्भुतेन कृत्येन, नृपतेर्हर्षितो गुरुः । उपश्लोकयति स्मैवं, धर्मोत्साहविधित्सया ॥ ७१९ ॥ भूयांसो भरतादयः क्षितिधवास्ते धार्मिका जज्ञिरे, नाऽभून्नो भविता भवत्यपि न वा चौलुक्य ! तुल्यस्तव । भक्त्या[1] क्वापि धिया क्वचिद् घनधनस्वर्णादिदत्त्या[2] क्वचिद्, देशे स्वस्य परस्य च व्यरचयज्जीवावनं यद् भवान् ॥७२०॥ ( शार्दूलविक्रीडितम् ) ततश्चौलुक्यमालोक्य, करुणारसलालसम् । असूयामासुपी[3] हिंसा, सपत्नीव स्वचेतसि ॥ ७२१ ॥ नृपस्य हृदये गेहे, पुरे जनपदे भुवि । क्वाप्यनाप्नुवती वासं, तातमोहांतिकं ययौ ॥ ७२२ ॥ तदा राभास्थितो मोह—महींद्रः स्वसुतेति ताम् । अलक्षयन् विलक्षत्व—योगादित्यनुयुक्तवान्[4]॥७२३॥ का त्वं ? सुंदरि ! मारिरस्मि[5] तनया ते तात ! मोह ! प्रिया, किं दीनेव ? पराभवेन स* कुतः ? किं[6] कथ्यताम् कथ्यताम् । हेमाचार्यगिरा परार्ध्यगुणवान् हृद्वक्त्रहस्तोदरा—न्मामुत्तार्य कुमारपालनृपतिः पृथ्वीतलादाक्षिपत् ॥ ७२४ ॥ ( शार्दूलविक्रीडितम् ) तन्निशम्य ज्वलत्कोप—ज्वालाजिह्वः स तामवक् । वत्से ! मा मा स्म रोदीस्त्वं, रोदयिष्यामि ते द्विषः ॥ ७२५ ॥ संप्रत्यसौ नृपो वाक्यै—र्विप्रतारकलिंगिनाम् । विरक्तस्त्वय्यभूद् भूमे—स्तेन त्वां निरवासयत् ॥७२६॥ ओजायते च नितमां, हेमाचार्यप्रभावतः । ततःस्वशक्त्या संदेहे[7], पातयिष्ये शनैरमुम् ॥ ७२७ ॥ अतः परं करिष्यामि, तं कंचन वरं तव । यस्त्वदेकातपत्रत्वं, पूर्ववत् सूत्रयिष्यति ॥ ७२८ ॥ इत्यादि-

१ बहुमानेन. २ दानेन. ३ असूया-गुणेषु दोषारोपणं कृतवती. ४ पृष्टवान्. ५ हिंसा. * स-पराभव, कुतः-कस्मात् पुरुषात्. ६ किमर्थम्. ७ धर्म उत्शये.

वचमाऽऽश्वास्य, कथंचिन्निजनंदिनीम् । हिंसामस्थापयत् स्वीय—पार्श्वे मोहमहीपतिः ॥ ७२९ ॥ इत्युद्दामदयासुधारसभरैर्जीवान् समुज्जीवयं—स्तज्जाशीर्वचनैरिव प्रतिदिनं सर्वर्द्धिभिर्वर्धयन् । हेमाचार्यशुभोपदेशविलसत्तत्त्वप्रकाशोदयः, प्राणित्राणपरायणैकमुकुटश्चौलुक्यचंद्रोऽजनि ॥ ७३० ॥ ( शार्दूलविक्रीडितवृत्तम् )

इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरित्रे महाकाव्ये श्राद्धधर्मस्थापनो नाम सप्तमः सर्गः ॥ सप्तानां सर्गाणां मीलने ग्रन्थाग्रम् ४४७३ ॥

१ वृद्धिं प्रापयन् (.आत्मानं ) २ श्रीसम्यक्त्वमूलद्वादशव्रतधर्मोपदेशवर्णनो नाम सप्तमः सर्गः, प्र.

# अथाष्टमः सर्गः ॥

चौलुक्यभूधवोऽन्येद्यु—र्हेमसूरिमठाग्रतः । किलंतीं कांचनोत्कृष्टां, कनीं दृष्ट्वा विमृष्टवान् ॥ १ ॥ मदिमनिचितमूर्तिः स्फूर्तिमुच्चैर्वहंती, जगदपि मंदयंती, स्नेहसांद्रस्वभावैः । गुणगरिमनिधानं दूषणानामभूमिः, स्फुरति रतिकरी मे देवकन्येव केयम् ? ॥ २ ॥ ( मालिनी ) तत्पुण्यमपि मन्येऽहं, नृणामत्यंतदुर्लभम् । येनैषा दृश्यते दृग्भ्यां, स्वच्छंदाऽऽनंदकंदली ॥ ३ ॥ ततः पप्रच्छ पृथ्वींद्रः, सूरींद्रं प्रणिंगद्यताम् । द्वारि केयं कनी ? कस्मात्, प्रीणाति च मदाशयम् ? ॥ ४ ॥ रागातिशयमालोक्य, चौलुक्यस्य कनीं प्रति । हेमाचार्यस्तदुत्पत्तिं, मूलाद् वक्तुं प्रचक्रमे ॥ ५ ॥ आस्ते विमलचित्ताख्यं, पुरं सद्गुणमंदिरम् । यत्रोच्चैर्विनयः शालो, मर्यादा परिखाऽपि च ॥ ६ ॥ तत्रार्हद्धर्मनामाऽस्ति, महीशो यस्य शासनम् । सुरासुरनरेंद्राणां, मौलौ माल्यमिव स्थितम् ॥ ७ ॥ स्वसेवारसिकं लोको—त्तरं वैभवमानयन् । सुस्वामीति प्रसिद्धिं यो, लोकेषु कलयत्यलम् ॥ ८ ॥ तस्यास्ति विरतिः पत्नी, निर्दोषत्वैकमंदिरम् । ख्याताः सौम्यतया विश्वे, शमाद्याश्च तनूरुहाः ॥ ९ ॥ मंत्री धर्मनरेंद्रस्य, सिद्धांतः शुद्धबुद्धिदः । कदाऽपि नैव भेत्तुं यः, शक्यते दुर्नयैः परैः ॥१०॥ शुभध्यानं च सेनानी—र्विपक्षक्षोददीक्षितः । सम्यक्त्वप्रमुखाः सैन्याः, सद्यः सिद्धिविधायिनः ॥११॥ विश्वं निवेश्य स्वाज्ञायां, सुखं धर्मस्य तिष्ठतः । विरत्यां तनया प्रौढि—कारणं करुणाऽभवत् ॥ १२ ॥ तौ पुत्रीजन्मना वीक्ष्य,

---

१ हर्षयंती. २ स्वाधीनसुखस्याकुर॰. ३ सूरीन्द्र । प्र. ४ भवद्भिरितिशेष॰. ५ प्राकारः. ६ विभवं-प्र. ७ गन्यायिभि॰. ८ शत्रुभिः. ९ प्रतिज्ञावान्. १० महत्त्वकारणम्.

पितरौ खेदमेदुरौ । सुतापितामहोऽवादीद्, विश्ववेदी जिनेश्वरः ॥ १३ ॥ सुता जातेति किं खेदं, वहेथे हृदये युवाम् ! । इयं पुत्रादपि स्तुत्या, भवित्री विश्वजीवनात् ॥ १४ ॥ पुत्रार्थं खिद्यते लोको, वृथा यत् तपनाऽनलौ[1] । स्वपुत्रमंदधूमाभ्यां[2], तापं नाद्याऽपि मुंचतः ॥ १५ ॥ यथा ब्राह्मी[3] निजं तातं[4], लोकंप्रीणादिभिर्गुणैः । ख्यातिं नीतवती नेत्री[5], तथैवेयं युवामपि ॥ १६ ॥ भविष्यति च यत्पाणि[6]—गृहीतीयं तमप्यलम् । प्रतिष्ठां नेष्यति श्रेष्ठां, कमलेव[7] मुरद्विषम्[8] ॥ १७ ॥ निशम्य तादृशीं स्फूर्तिं[9], पितृभ्यां वर्धिता कृपा । कला चांद्रीव तच्चित्त—प्रमोदाब्धिमवीवृधत् ॥ १८ ॥

इतः समलचित्ताख्यं, पुरमस्ति यदंतिके । दुर्नयो वरणो[10] दुष्ट—सेवा च परिखाऽऽयता ॥ १९ ॥ तस्मिन् मोहो महींद्रोऽस्ति, दुराशयशिरोमणिः । यमस्येव भयाद् यस्य, कंपते सकलं जगत् ॥ २० ॥ तस्याविरतिलोलाक्षी—कुक्षिजा विश्वदुर्जयाः । नंदनाः संति कोपाद्या, हिंसानाम्नी च कन्यका ॥ २१ ॥ तस्य मिथ्याश्रुतं मंत्री, दुर्ध्यानं दंडनायकः । मिथ्यात्वाद्याश्च दुर्वार—वीर्याः स्फूर्जंति[11] सैनिकाः ॥ २२ ॥ मत्तेन मोहभूपेन, वर्षीयस्त्वात्[12] स धर्मराट् । विजित्य सकुटुंबोऽपि, स्वस्थानान्निरकाश्यत[13] ॥ २३ ॥ भ्राम्यन्नितस्ततो धर्मः, सोऽत्र दृष्ट्वा तवोदयम् । असत्दाश्रममाश्रित्य, सुखं वसति संप्रति ॥ २४ ॥ सा कृपा नंदिनी चास्य, योग्यपत्यनवाप्तितः । अनूढैव स्थिता देव !, दृष्टा द्वारि त्वयाऽधुना ॥ २५ ॥ अस्याः सौंदर्यसंपत्तिः, स्तूयते किमतः परम् । यया मोहनवल्ल्येव, महात्मानोऽपि मोहिताः ॥ २६ ॥ लभते भाग्यवानेव,

---

१ सूर्यवह्नी. २ शनिधूमाभ्याम्. ३ भरतभगिनी, सरस्वती वा. ४ ऋषभदेवं, ब्रह्माणं वा. ५ (ख्यातिं) प्रापिका. ६ यस्य व्यूढाङ्गी. ७ रुक्मिणीव. ८ वासुदेवम्. ९ प्रभावम् १० प्राकार ११ गर्जना कुर्वन्ति १२ वृद्धत्वात् १३ काश्ट-दीप्तौ भ्वा० आ० सक० सेट् निर्=काश नि सारणे.

प्रियां कर्तुमिमां कृपाम्[1] । स्वसात्करोति सामान्यः, कल्पवल्लीं कदापि किम् ? ॥ २७ ॥ एवं निशम्य निःसीमां, तस्याः प्रौढिं[2] गुरोर्मुखात् । अन्वरज्यत्तमां राजा, कः सद्वस्तुनि निःस्पृहः ? ॥ २८ ॥ सोऽथ तद्विरहव्याप्ति—व्याकुलः करुणां प्रति । प्राहिणोत् सुमतिं[3] नाम, दूतीं तत्प्रार्थनाकृते ॥ २९ ॥ तस्याः समीपमागत्य, दूती विरचितांजलिः । सप्रगल्भमिदं[4] प्रोचे, शर्करासेकिमं[5] वचः ॥ ३० ॥ चुलुक्यकुलपाथोधि—कौस्तुभो[6]ऽस्त्यत्र पत्तने । श्रीमान् कुमारपालाख्यो, गूर्जरक्षिति-वल्लभः ॥ ३१ ॥ एकोऽपि यः क्षितिं भ्रांत्वा, कलावत्परिचर्यया[7] । कलाकलापमासाद्य, पूर्णेंदुरिव दीप्यते ॥ ३२ ॥ इयं गूर्जरराज्यश्री—र्वशीभूतेव सद्गुणैः । स्वयमेव समागत्य, भाग्यभाजं बभाज यम् ॥ ३३ ॥ येन दिग्विजये रेमे, दोर्ष्म-दूष्मविभेदिना[8] । उत्खातारोपितैर्भूपैः । शारैरिव[9] दुरोदरे[10] ॥ ३४ ॥ सम्यक्त्वं हृदये बिभ्रद्, यः कारुण्यैकनीरधिः । जेगीयतेऽत्र[11] परमा—र्हत इत्यनिशं बुधैः ॥ ३५ ॥ परोरजोभि[12]र्विद्याद्यै—र्गुणैर्वरशिरोमणिः । पाणिग्रहार्थमत्यर्थं, त्वां नृपोऽर्थयतेऽद्य सः ॥ ३६ ॥ तद्भद्रे ! परिणीयामुं, राजानं विश्वरंजनम् । रमस्वाव्याहतस्वेच्छं, कौमुदीव त्वमुन्मदा[13] ॥ ३७ ॥ नक्रस्य वक्रीकरणात्, स्वीयारोचकतामथ । प्रकाशयंती चौलुक्ये, करुणाऽऽह स्म तां प्रति ॥ ३८ ॥ स्तुत्वा नृपमिमं त्वं मां, विप्रलंभयसे किमु ? । न हि स्त्रीणां महीशेन, विवाहः स्यात् सुखावहः ॥३९॥ परिणीय बहुस्त्रीषु, रतः प्रायेण कामिनीम् । न पश्यति पुनः पूर्व—भववैरीव भूपतिः ॥ ४० ॥ कुमार्येव वरं नारी, वरं श्रामण्यशालिनी । न पुन-

---

१ स्वस्तां स्वाधीनां करोति २ महत्ताम्. ३ स्वमतिम्, प्र. ४ सोत्साहम्. ५ शर्करासिक्तम्. ६ मणि. ७ सेवया ८ पराक्रम्यभिमानभेदकेन. ९ पाशकै.—अक्षगुटिकाभिर्वा. १० द्यूते ११ पुन पुनरतिशयेन वा गीयते. १२ रजसः पर —ये ते परोरजसः—दोषरहिता. तै.. १३ सहर्षा.

वीरहुसापद्वय—दुःखिता नृपतेः प्रिया ॥४१॥ महीपमेव चेत् कामं, कामयेय तदा कुतः । मुंचेय दशवक्त्रादीं—स्त्रैलोक्य-
प्रकटश्रियः ॥ ४२ ॥ तन्मे पतिः स एव स्याद्, यः सत्यादिगुणाकरः । निर्वीराद्रविणं हिंसां, व्यसनानि च वर्जयेत्
॥ ४३ ॥ ततः पल्लवितप्रायां, नृपाशां विदुषी हृदि । अभ्यधत्त पुनर्दूती, तां प्रति प्रीतिभारिणी ॥ ४४ ॥ भद्रे ! सिद्ध-
मिदं कार्यं, यदसौ नरनायकः । तवैवास्त्युचितः प्रेयां—स्त्वदुक्तगुणयोगतः ॥ ४५ ॥ किंचाभक्ष्यमयं त्यक्त्वा, त्वत्प्री-
त्यर्थमिव ध्रुवम् । स्वदेशे परदेशे च, हिंसादिकमवारयत् ॥ ४६ ॥ तं मत्वा स्वोचितं ह्रीणा, हृष्टा च करुणाऽवदत् ।
एतत्किंचिन्न जानेऽहं, तातो जानाति मेऽखिलम् ॥ ४७ ॥

ततो निवृत्य दूत्याऽस्मिन्, वृत्तांते गदिते सति । प्राप्तस्वर्गं इवोदग्रां, गूर्जरेंद्रो मुदं दधौ ॥४८॥ तेनाथ ज्ञापितस्तस्या—
स्तद्वृत्तं हेमसूरिराट् । प्रबोध्य धर्मधात्रींद्रात्, कृपां तस्मै व्यतीतरत् ॥ ४९ ॥ अथ लग्ने शुभे भाव—वारिणा
विहिताप्लवः । अभिग्रहकृतानल्पा—कल्पः सत्कीर्तिचंदनः ॥ ५० ॥ सदाचारमयच्छत्रो, हृदि सम्यक्त्वरत्नभृत् । दान-
कंकणरोचिष्णुः, संवेगगजमाश्रितः ॥ ५१ ॥ व्रतभंगकभूयिष्ठ—जन्यलोकपुरस्कृतः । भावनाऽद्भुतनारीभिः, कृतोरुध-
वलध्वनिः ॥ ५२ ॥ क्षमाभगिन्या प्रारब्ध—लवणोत्तारणक्रियः । निर्गत्य भूपतिर्गेहात्, पौषधागारमागमत् ॥ ५३ ॥
चतुर्भिः कलापकम् ॥ आगत्य विरतिश्वश्र्वा, कृतमांगलिकस्थितिः । शमाद्यैः शालकैः प्रोक्त—सरणिर्मध्यमाविशत् ॥५४॥

१ निर्गतो वीरः-पति. पुत्रो वा यस्या सा-पतिपुत्ररहिता स्त्री. २ नृपेच्छा. ३ जानाना. ४ लज्जिता. ५ कृतस्नान . ६ आकल्प -वेश. ७ द्वादशव्रतभंगकरूपव-
हुजन्यलोकै ( जानैय्या पुरुषै ) अग्रत कृत . ८ कृतपोंखणाचारमर्याद .

स्नातां मार्दवनीरेण, शीलश्रीवरचीवराम् । सत्यकूर्पासकधरां, ध्यानद्वितयकुंडलाम् ॥ ५५ ॥ स्फुरन्नवपदीहारां, तपोभेदोरुमुद्रिकाम् । आनाययत् स्वतनयां, तत्र श्रीधर्मभूपतिः ॥५६॥ युग्मम् ॥ ततोऽर्हद्देवताऽध्यक्षं, करुणापाणिपंकजम् । ललौ चौलुक्यभूपालो, निर्मर्यादमुदम्बुधिः ॥५७॥ कृपया पाणिपद्मेन, स्पृश्यमानं निजं करम् । दृष्ट्वा तं मानयन् धन्य—मेवमूचे नृपो हृदा ॥ ५८ ॥ पाणे ! त्यक्ताऽन्यकृत्येन, यदपूजि जिनस्त्वया । तत्प्रभावाद् बभूवास्याः । कराश्लेपस्तव ध्रुवम् ॥ ५९ ॥ अनीपैलंभमन्येन, धर्मपुत्रीकरांबुजम् । आसाद्य दक्षिणत्वं स्वं, त्वया द्वेधाऽपि दर्शितम् ॥ ६० ॥ श्रुतोदितश्राद्धगुण—प्रशस्यकलशावलिम् । कृत्वा श्रद्धामयीं वेदीं, विचारोच्छ्रिततोरणाम् ॥ ६१ ॥ उद्दीप्य च प्रबोधाऽग्निं, तर्पितं तत्त्वसर्पिषा । तं प्रदक्षिणयामास, सवधूकं नृपं गुरुः ॥ ६२ ॥ युग्मम् ॥ जामात्रे ददिवान् धर्मः, पाणिमोचनपर्वणि । सौभाग्यारोग्यबह्वायु—र्बलसौख्यान्यनेकधा ॥ ६३ ॥ एवं महेन संवृत्ते, पाणिग्रहणमंगले । प्रणेमिवांसं राजर्षिं, सूरिराजोऽन्वशादिति ॥ ६४ ॥ या प्रापे न पुरा निरीक्षितुमपि श्रीश्रेणिकाद्यैर्नृपैः, कन्यां तां परिणायितोऽसि नृपते ! त्वं धर्मभूमीशितुः । अस्यां प्रेम महद् विधेयमनिशं खंड्यं च नैतद्वचो, यस्मादेतदुरुप्रसंगवशतो भावी भृशं निर्वृतः ॥ ६५ ॥ ( शार्दूलविक्रीडितम् ) ततः स्वसदनं प्राप्य, तदैव धरणीधवः । विधिना करुणादेव्याः, पट्टबंधविधिं व्यधात् ॥ ६६ ॥ सर्वोत्कृष्टैर्गुणैर्दृष्ट्वा, तां चेतःप्रीतिकारिणीम् । निजप्रकृतिवद् भूपः, कदाचन मुमोच न ॥६७॥ अतिप्रीतं

१ कृपाहस्तद्वारा. २ निजहस्तम्. ३ दुष्प्रापं. ४ चतुरत्वं वामेतरत्वं च. ५ स्वकीयं. ६ सौभाग्यं–सर्वजीवप्रियत्वम्. ७ दीर्घम्. ८ सम्पूर्णे सति. ९ शिक्षयामास. १० सुधी. ११ पट्टराज्ञीपदविधिम्. १२ निजस्वभाववत्.

प्रियं मत्वाऽ—भिदधे धर्मनंदिनी । मोहं जित्वा पुनः स्थाने, स्थाप्यतां जनको मम ॥ ६८ ॥ विमृश्य धर्मभूपेन, समं तत्क्षणमेव सः । सद्ध्यानसेनानाथेन, तत्सैन्यान् समनीनहत्[1] ॥ ६९ ॥ भगिनीपतिसाहाय्या—च्छमाद्या धर्मनंदनाः । प्रगल्भांश्चक्रिरे[2] 'ग्रीष्म—योगादर्ककरा इव' ॥ ७० ॥ औचित्यच्छत्रभृच्याय—सदाचारोरुचामरः । सत्यसन्नाह-भाग् ज्ञान—तपःप्रभृतिकायुधः ॥ ७१ ॥ विपक्षक्षेप[3]सापेक्ष—शमाद्युरुपरिच्छदः । अध्यासामासिवान्[4] धर्म—भूभृदास्तिक्यसिंधुरम् ॥ ७२ ॥ युग्मम् ॥

अथ योगेन[5] गुप्तांगो, जिनाज्ञाकृतशीर्षकः[6] । सत्त्वकौक्षेयकः[7] शुद्ध—ब्रह्मास्त्रविलसद्द्युतिः ॥ ७३ ॥ विवेकोदंडकोदंडो, मूलोत्तरगुणाशुगः । भावनाद्भुतशस्त्रीको[8], माध्यस्थ्यशितकुंतभृत्[9] ॥ ७४ ॥ गुरुक्लृप्तशिखाबंधो[10], दत्ताशीः सर्वसाधुभिः । वैराग्यगजमारुह्य—नृपो 'देहीव विक्रमः' ॥ ७५ ॥ त्रिभिर्विशेषकम् ॥ सहिने धर्मनाथेन, ससैन्येन समन्वितः । मोहराजं पराजेतुं, प्रतस्थे मनसा[11]ऽथ सः ॥ ७६ ॥ मार्दवार्जवसौम्यत्व—विनयाभिग्रहादयः । चिभरांचक्रिरे तस्य, तदा [12]नासीरवीरताम् ॥ ७७ ॥ स्थित्वा मोहपुरासन्ने, क्वापि तं प्रति भूपतिः । ज्ञानादर्श[13]ह्वयं दूतं, निसृष्टार्थं[14] विसृष्टवान् ॥ ७८ ॥ स राजद्वारमापन्नो, दुर्ज्ञानाख्येन वेत्रिणा । पुरस्कृत्य स्वयं नीतो, मोहपृथ्वींद्रपर्षदम् ॥ ७९ ॥

---

१ समसज्जयत्. २ कूर्दयामासु. ३ शत्रुविनाशाभिलाषुक०. ४ उपविष्टः. ५ योगेन—मनोयोगादिना. ६ शिरस्त्राणम्. ७ खड्ग. ८ छुरिकायुक्त. ९ तीक्ष्ण०. १० हेमाचार्यरचितरक्षाविधि. ११ मनोद्वारा. १२ अग्रेसरसुभटता. १३ ज्ञानदर्पणनामानम्. १४ उभयोर्भावमुन्नीय, स्वय वदति चोत्तरम् । सदिष्ट. कुरुते कर्म, निसृष्टार्थस्तु स स्मृतः ॥ १ ॥.

तत्रोद्यद्धामदुर्धर्षं, प्रकर्षप्राप्तवैभवम् । दूरतोऽपि दुरालोकं, दुष्टदृग्विषसर्पवत् ॥८०॥ जगज्जनजयोत्सिक्तैः, क्रोधाद्यैस्तनुजैर्वृतम् । कुंठैर्वैठैरिवोल्लंठै-र्मिथ्यात्वाद्यैर्भटैर्युतम् ॥८१॥ मनसाऽप्यपराजय्यं, 'परित्रासमिवांगिनम्' । मोहराजं महाराजं, ज्ञानादर्शो ददर्श सः ॥८२॥ त्रिभिर्विशेषकम् ॥ तं तादृक्षं निरीक्ष्यापि, न भयभ्रांतमानसः । दूतो दौत्योचितं वाक्यं, जगादैवं तदग्रतः ॥८३॥ रे मोह ! त्वं ससैन्योऽपि, पुरा येन व्यजीयेथाः । तस्य श्रीहेमसूरींदोः, पादपद्मैकषट्पदः ॥८४॥ पराजिगीषमाणस्त्वां, संप्राप्तस्त्वत्पुरांतिकम् । क्ष्मापः कुमारपालोऽयं, प्रहिणोति स्म मामिह ॥८५॥ युग्मम् ॥ विश्वमाक्रममाणेन, भवताऽभ्युन्मदिष्णुना । च्याव्यते स्म निजस्थानाद्, धर्मनामा महीपतिः ॥८६॥ आश्रमं हेमसूरीयं, संश्रितस्तद्गिरा सुताम् । निजां कृपाख्यां चौलुक्य—भूभृता पर्यणाययत् ॥८७॥ अभिषेक्तुं पुना राज्ये, श्वशुरं स कृतज्ञधीः । व्यवस्यति सतामेवं, रीतिर्हि प्रीतिवृद्धये ॥८८॥ ससैन्यो धर्मनाथोऽपि, तत्पार्श्वे वर्तते जयी । तदागत्य तदाज्ञां त्वं, शीर्षे शेषात्वमापय ! ॥ ८९ ॥ अन्यथा खलु चौलुक्य-स्त्वां ससैन्यमपि क्षणात् । ध्वंसिष्यते यथा हस्ती, समूलमपि पादपम् ॥ ९० ॥ श्रुत्वा तत् सा सभा भेजे, मथ्यमानाब्धिलोलताम् । अंधंभविष्णवः स्फूर्त्या, कोपाद्याश्चैवमूचिरे ॥ ९१ ॥ रे रे कोकूयते कोऽयं, खरवन्मुखरः पुरः ?। हन्यतां दासवद् गाढं, गले धृत्वा च कृष्यताम् ॥ ९२ ॥ हंतुमुत्तिष्ठमानेषु, मिथ्यात्वादिभटेष्वथ । निवार्य तानवार्यश्री—र्मोहस्तं दूतमूचिवान् ॥ ९३ ॥ रे रे मयि जगज्जैत्रे, वज्रिणीवात्र दीव्यति । हेमाचार्येण को मोहः,

१ उदयं गच्छत्तेजोभिरपराभवनीयम्. २ उद्धतैः. ३ दूतस्य कर्म दौत्यं. ४ हेमचंद्रेण. ५ जितः. ६ पराजेतुम् इच्छन्. ७ अभ्युन्मवति इत्येवं शीलस्तेन. ८ वि-अव-षोऽन्तकर्मणि, धातुनामनेकार्थत्वात्-प्रयत्नं करोतीत्यर्थः. ९ जयतीत्येवंशीलः. १० गर्वेण चेष्टया वा. ११ अतिशयेन कवते इति कोकूयते.

पराजिग्ये निगद्यताम् ? ॥ ९४ ॥ सिसंग्रामयिषुः सोऽयं, चौलुक्यो युक्तमागमत् । न वेत्ति यदयं मूढो, महोर्बलमन-र्गलम् ॥ ९५ ॥ असौ धर्मः परं केन, मुखेन प्राप्तवानिह । यो मया क्लीववच्चक्रे, स्थानभ्रष्टो निजौजसा ॥ ९६ ॥ वर्षीय-स्त्वात् पुरा जीवन्, मुक्तोऽयं सांप्रतं मया । करिष्यते रणमखे, निश्चितं प्रथमाऽऽहुतिः ॥९७॥ युक्तं धर्मोऽतिवृद्धत्वा—ज्ज्ञे मरणसंमुखः । परं परार्थं त्वद्भूपः, किं मुमूर्षति मूर्खवत् ? ॥ ९८ ॥ हुं ज्ञातं धर्मनंदिन्या, प्रेरितस्तातसंपदे । म्रियतेऽयं हहा योषि—द्वश्यानां कियती हि धीः ॥ ९९ ॥ मर्तव्यं मत्करेणैव—ममीभिरिति वैधसीम् । लिपिं स्वां सूनृतीकर्तुं, युक्तमत्रापतन्नमी ॥ १०० ॥ अहमायात एवायं, त्वत्पृष्ठे रे युयुत्सया । तमपि त्वं रणोत्संगे, दर्शयेः स्वामिनं निजम् ॥ १०१ ॥ ततस्तस्मिन् गते दूते, मोहो भ्रूकुटिभीषणः । सैन्यं दुर्ध्यानसेनान्या, तत्क्षणं समवर्मयत् ॥ १०२ ॥ धारयन् कवचं काये, स्फूर्जन्मात्सर्यनिर्मितम् । परस्त्रीरूपदुष्कृत्य—प्रमादाद्यस्त्रभासुरः ॥ १०३ ॥ नास्तिक्यद्विपमा-स्थाय, मोहभूपो रिपून् प्रति । चचालान्यायवाचाल—कुशास्त्रसचिवादियुक् ॥१०४॥ युग्मम् ॥ स्तब्धत्वानार्जवक्रौर्य—विगानव्यसनादयः । बहुधा वल्गु वल्गंतो, बभूवुस्तत्पुरस्सराः ॥ १०५ ॥ अन्वक् प्रतस्थिरे तस्य, क्रोधाद्यास्तनया घनाः । मिथ्यात्वाद्याश्च योद्धारो, वैरिग्रासैकलालसाः ॥ १०६ ॥ अर्वाक् चौलुक्यसेनाया, निवेश्य स्ववरूथिनीम् । आहूयामात्यपुत्रादीन्, व्याजहारेति मोहराट् ॥ १०७ ॥ अहो चित्रमहो चित्रं, जीवद्भिः किं न वीक्ष्यते ?, पुंस्पर्शुः कोऽपि चौलुक्यो, यन्मामपि जिगीषति ॥ १०८ ॥ शक्रादयोऽपि यद्दासाः, सह तेन हहाऽधुना । उत्तिष्ठते युधे (धि)

१ युद्धयज्ञे. २ संग्राममध्ये. ३ कुत्सितबहुभाषी. ४ निंदा. ५ अयत चेष्टमाना. ६ पृष्ठे. ७ सेनाम्. ८ पुमान् पशुरिव. ९ ममापि, प्र.

मर्त्यः, कृत्यं दैवस्य पश्यत ? ॥ १०९ ॥ ममेयमेव चिंतोच्चै—र्यदिमौ मद्भुजौ कथम् । त्रैलोक्यबलुलुंटाकौ, नृकीटं निहनिष्यतः ? ॥ ११० ॥ इत्यवज्ञापरं वीक्ष्य, चौलुक्ये स्वं महीश्वरम् । मंत्री मिथ्याश्रुतं नाम, तमूचे समयोचितम् ॥१११॥ नृकीट इति देव ! त्वं, राजर्षिं माऽवजीगणः । लोकान्मया श्रुतं कोऽपि, परात्मांश इवास्त्ययम् ॥ ११२ ॥ विदन्नपि तव प्रौढिं, यः सह त्वदरातिना । अभिषेणयति स्म त्वां, स सामान्यो भवेत् किमु ? ॥ ११३ ॥ निर्वासिताऽमुना हिंसा, सुता स्वामिंस्त्वयेक्षिता । तव द्यूतादिमित्राणां, यच्चक्रे तत् किमुच्यते ? ॥ ११४ ॥ गुरौ चैतस्य पृष्ठस्थे, प्रतिदैवे[3] इव स्वयम् । अलंभूष्णुर्न[4] देवोऽपि, किं वक्तव्यः परः पुनः ? ॥ ११५ ॥ बलेनास्यैव धर्मोऽपि, वैरप्रतिचिकीर्षया । प्राप्तोऽस्ति 'समये कार्यं, न साधयति कः सुधीः ?' ॥ ११६ ॥ तदयं समरारंभः, स्वामिंश्छिल्योऽस्ति वस्तुतः । अमात्ये निगदत्येवं, चुकुपुर्मोहनंदनाः ॥ ११७ ॥ ततः क्रोधोऽभ्यधात् केयं, भीतिः ? कथय मे यथा । वडवाग्निरिवाशेषं, शोषये द्विड्बलोदधिम् ॥११८॥ ऊचे मानोऽभिमानोग्रो, लुब्धाऽऽचारवी(वि)लोचनम् । विश्वमप्यंधयाम्येतत्, कोऽस्त्ययं हैतको नरः ? ॥ ११९ ॥ दंभोऽवदत् ससंरंभो, देवानामपि वंचके । मयि तिष्ठति सैन्येऽत्र, जयः सांशयिकः किमु ? ॥१२०॥ निःक्षोभः प्रोचिवाल्ँ लोभ—स्तृष्णापूरे निमज्जयन् । जगत् पयोधिवत् सर्वं, निरुध्ये विधिनाऽपि न ॥ १२१ ॥ तावत् कामभटो बभाण कटकाटोपो वृथाऽयं भटा, भाष्य(पं)ते किमिहोद्भटा ? मम विभो ! क्षिप्रं समादिश्यताम् ? । एकोऽपि प्रधनं विनैव चलद्द-

१ ऽमुम्, प्र. मोहमहीपम्. २ अवज्ञा मा कुरु. ३ दैवस्य सदृशं प्रतिदैवं तस्मिन्. ४ अलं ( समर्थ. ) भवतीत्येवशील.. ५ नष्टप्रायः. ६ सोत्साह . ७ निर्भयः. ८ दैवेन. ९ सेनाडंबरः. १० युद्धम्.

कंचत्कटाक्षच्छटा-पाशैर्वैरिकुलं नियम्य सकलं, मुंचे यथा ते पुरः ॥ १२२ ॥ (शार्दूलविक्रीडितम्) सुभटानां निभाल्योच्चै-रित्याधारंभटीं पटुम्। जितकाशीव मोहेंद्रः, प्रधनावनिमानशे ॥ १२३ ॥ तावद् दूतोऽपि सज्ज्ञाना-दर्शोऽभ्येत्य निजं प्रभुम्। द्विषामामूलचूलं तं, वृत्तांतं सर्वमूचिवान् ॥ १२४ ॥ तन्निशम्यानिशं शांता, अपि ते प्रशमादयः। वैरप्रबोधदुर्धर्ष-प्रकर्षाः प्रभुमूचिरे ॥१२५॥ अहो दृष्ट्वाऽतिशांतान् नैः, परेऽमी प्रजगल्भिरे। दीपे मंदायमाने हि, स्फुरंति तिमिरोर्मयः ॥ १२६ ॥ कोऽस्ति मोहो वराकोऽयं?, तस्य पुत्रा भटाश्च के?। दलयामोऽधुनैवैतान्, कणवत् स्वामिशासनात् ॥ १२७ ॥ अस्माकं क्रामतां शत्रून्, समुद्राणां वलोर्मिभिः। वेलायते तवाज्ञैव, दैवेनापि दुराक्रमा ॥ १२८ ॥ भवतु ज्ञास्यते सर्वं, रणसीम्नीत्युदीरयन्। धर्मेंद्रो गूर्जरेंद्रश्च, द्वंद्वार्थमुदतिष्ठताम् ॥ १२९ ॥ विधाय धर्मनाथं तं, ससैन्यं पृष्ठरक्षिणम्। अलंचकार चौलुक्यः, क्षेत्रं द्विषदधिष्ठितम् ॥१३०॥ दृष्ट्वा च मोहं दर्पिष्ठं, नृपोऽवोचत् समेहि भोः। आवामेव रणक्रीडां, तन्वहे संतु सैनिकाः ॥ १३१ ॥ 'वपुष्मदिव सत्त्वं' तं, दृष्ट्वा चौलुक्यमग्रतः। धूमायमान-क्रोधाग्निः, स्माह मोहमहीपतिः ॥ १३२ ॥ रे पुंस्कीट! समंततस्त्रिभुवनीमाक्रम्य तैर्विक्रमैः, शक्राद्या अपि चक्रिरे किल मया येन स्वदासा इव। प्रत्यग्रस्फुरदुग्रविग्रहधिया मोहस्य तस्याग्रत-स्तिष्ठन् धार्ष्ट्यवशेन सांप्रतमसि त्वं कोऽपि

---

१ मार्येद्रजालसंग्राम-क्रोधोद्भ्रान्तादिचेष्टितैः (उद्भ्रान्तं-बाहुम् उद्यम्य खड्गभ्रामणम्)। संयुक्ता पणवंधाद्यै-रुद्धटाऽऽरभटी मता ॥ १ ॥ (उद्धटा-प्रवर इत्यर्थः) इति एवंरूपा रचनाम्. २ जितेन-जयेन काशते इति जितकाशी. ३ प्राप. ४ वैरजामज्ञा पराभवितुमशक्य प्रकर्ष-उत्कर्षो येषां ते ५ अस्मान्. ६ शत्रव, ७ महत्ता प्रकटयति-धृष्टता कुर्वन्ति. ८ अतिगच्छताम्. ९ तीरायते-तीर इव आचरति. १० नू १न०. ११ निर्लज्जतावशेन.

वीरांकुरः[1] ॥ १३३ ॥ ( शार्दूलविक्रीडितम् ) चौलुक्योऽपि तमूचिवान् वदसि रे यत् त्वं निजं विक्रमं, त्रैलोक्याक्रमणादिकं तदभवज्जीर्णं परं संप्रति । स्थित्वोर्ध्वं समरे यदि क्षणमरे ! कंडूलमहोर्वेल[2]—क्रीडां सोढुमधीशिषे[3] ननु तदा जाने तव स्फूर्जितम्[4] ॥१३४॥ ( शार्दूलविक्रीडितम् ) शृणु किंच प्रतिज्ञां मे, जित्वा त्वां प्रधनेऽधुना । धर्मं चेत् स्थापये राज्ये, तदाऽहं वीरकुंजरः ॥ १३५ ॥ तन्निशम्य भृशं क्रुद्धो, मोहो वीरधुरन्धरः । अस्त्राणि वर्षितुं लग्नो, जलानीव पयोधरः ॥ १३६ ॥ अशोषयन्नृपस्तानि, प्रत्यस्त्रैरतिदारुणैः । सरांसि किरणैस्तीव्र-र्निदाघद्युतिमानिव ॥ १३७ ॥ यद्यदस्त्रं स चिक्षेप, परस्त्रीव्यसनादिकम् । योगगुप्ते नृपांगेऽधात्, तत्तद् ग्राव्णीव कुंठताम् ॥ १३८ ॥ ततः क्षीणसमस्तास्त्रो, भ्रष्टबुद्धिरिवोच्चकैः । किं किरोमि ? क्व यामीति ?, व्यामोहं मोहराड् दधौ ॥१३९॥ तावद् राजर्षिणा मोहो, ब्रह्मास्त्रेण तथाऽऽहतः । यथा क्लीब इवाऽनेशद्, रणाद् विश्वेऽपि पश्यति ॥१४०॥ जितं जितमिति प्रोच्य, तदा चौलुक्यमूर्द्धनि । घनालीव व्यधात् पुष्प-वृष्टिं शासनदेवता ॥ १४१ ॥ अभिषिच्य ततो राज्ये, धर्मभूपं स भूपतिः । नमस्यितुं समायातो, गुरुणेति न्यगद्यत ॥ १४२ ॥ सत्पात्रं परिचिंत्य धर्मनृपतिस्तुभ्यं स्वपुत्रीं ददौ, तद्योगात् त्वमजायथास्त्रिभुवने श्लाघ्यप्रियासंगमः । स्मृत्वाऽस्योपकृतिं निहत्य च रिपुं मोहाख्यमत्युत्कटं, राज्येऽप्येनमधाः कृतज्ञ ! सुचिरं चौलुक्य ! नंद्यास्ततः ॥ १४३ ॥ ( शार्दूलविक्रीडितम् ) राजर्षिरथ हर्षेण, विवेक इव देहवान् । हेमाचार्यं प्रति प्रोचे, विचाररुचिरं वचः ॥ १४४ ॥ प्रभो ! त्वदुपदेशेन, निवेशेनेव[5] सद्धियाम् । ज्ञातं धर्मस्वरूपं त-च्चातुर्विध्यं प्रबोध्यताम् ॥ १४५ ॥ ततो विज्ञा-

१ वीरपुत्र. २ कंडूतियुक्तमहाहुबलक्रीडाम् ३ समर्थो भवसि. ४ गर्जितम्. ५ प्रवेशेन, आश्रयेण-गृहेणेत्यर्थो वा.

तसिद्धान्त-सारः सूरिमचर्चिका। चक्तुं प्रचक्रमे स्फार-सुधोद्गारिमया गिरा ॥१४६॥ चतुर्गतिभवोद्दाम-वनभञ्जनकुञ्जरैः। दानशीलतपोभावैः, स धर्म्मः स्याच्चतुर्विधः ॥ १४७ ॥ तत्र त्रिधा भवेद् दानं, निदानं स्वःशिवश्रियाम् । अभयज्ञान-धर्म्मोप-ष्टंभरूपप्रभेदतः ॥ १४८ ॥ प्राणिनां मृत्युभीताना-मभयार्पणमञ्जसा । पुण्यश्रीकोशसर्वस्वं, तदाद्यं प्रणिगद्यते ॥ १४९ ॥ सुमेरोर्न परं स्थेष्ठं, गगनान्न परं पृथु । वार्द्धेर्न परमस्ताघ-मभयान्न परं हितम् ॥१५०॥ साधूनामागम-ग्रन्थ-सूत्रार्थाध्यापनादिभिः । प्रबोधवर्द्धनं यत् तत्, ज्ञानदानं विदुर्बुधाः ॥ १५१ ॥ येन प्रोल्लासितं ज्ञान-मज्ञानध्वान्त-भास्करम् ( रः ) । तृतीयं लोचनं तेन, दत्तं विश्वार्थगोचरम् ॥ १५२ ॥ यदर्पणेन श्रामण्यं, निर्वहत्यनगारिणाम् । धर्मोपष्टंभनात् तत् स्यात्, तृतीयं दानमुत्तमम् ॥१५३॥ निराशंसः प्रसन्नास्य—श्चंचद्रोमाञ्चभाक् सुधीः। पात्राय शुद्धमन्नाद्यं, दद्यात् पुण्याभिवृद्धये ॥१५४॥ ज्ञानं क्रियाऽन्वितं यस्मिन्, माणिक्योद्भासिहेमवत्। दौर्गत्यपातपातृत्वात्, तत् पात्रं विदुरा विदुः ॥ १५५ ॥ दयादानं पुनर्देयं, पात्रापात्राविवेचनात् । दुःस्थोपकारकत्वेन, तदप्युद्दामपुण्यदम् ॥ १५६ ॥ तस्य दानस्य माहात्म्यं, केऽभिष्टोतुमधीश्वताम्(श्वराः)?। पाणिं प्रसारयत्युच्चै-र्जगदीशोऽपि यत्कृते ॥१५७॥ वपुरनुपमरूपं भाग्यसौभाग्ययोगः, समभिलपितसिद्धिर्वैभवं विश्वभोग्यम् । सुखमनिशमुदारं स्वर्गनिःश्रेयसाप्तिः, फलमविकलमेतद्, दानकल्पद्रुमस्य ॥ १५८ ॥ ( मालिनी ) सर्वतो देशतो वाऽपि, यद् ब्रह्मव्रतसेवनम् । तच्छीलं कीर्त्यते कीर्त्तैः, स्थूलं

१ सूरिश्रेष्ठ.-प्रशस्तसूरिः. 'मतल्लिकादयो नियतलिंगा नतु विशिष्यविघ्ना.' इति सिद्धान्तकौमुद्याम् 'प्रशंसावचनैश्च' इति सूत्रे. २ सुधाया उद्गारोऽस्यामस्ति सा सुधोद्गारिमा तया. ३ पाता-रक्षक . ४ पात्रापात्राविचारात्. ५ उत्तमोत्तमयोगः.

करणमग्रिमम् ॥१५९॥ कथं शीलं तुलयितुं, कल्पद्रुः किल कल्पेताम्[1]। अकल्पितं फलं दत्ते, यत् कलावपि सेवितम् ॥१६०॥ चित्तस्य करणानाञ्च[3], विविधेष्विष्टवस्तुषु । यदिच्छाऽनुत्थनं तत् स्यात्, तपः पापाब्धिकुंभभूः ॥१६१॥ दौर्भागिनेयानिव यान्, मुक्तिस्त्री नाभिलष्यति । तपस्तेषां स्फुरत्येव, सुभगंकरणं परम् ॥ १६२ ॥ दानादिधर्म्मकृत्येषु, प्रीतिरात्यन्तिकी हृदः । भावो भवेद् भवाम्भोद-प्रेरणैकसमीरणः ॥ १६३ ॥ निःशेषमपि दानाद्यं, भावेनैकेन वर्जितम् । न स्यात् स्वादुतमं भोज्यं, विना कालवणं[4] यथा ॥ १६४ ॥ इत्थं चतुर्विधं धर्म्मं, त्रिशुध्याऽऽराधयन् सुधीः । भुक्त्वा राज्यश्रियं याति, मुक्तिं विक्रमराजवत् ॥ १६५ ॥

तथाहि धातकीखंड—भरते भारिते श्रिया[5] । पुरं शिवपुरेत्याख्य-मभूद् भूमिविभूषकम्[6] ॥ १६६ ॥ यत्र लोकोऽपशोकोऽस्त—विपदः संपदः सदा । सुखं न दुःखसंपृक्तं, भोगो रोगोद्भवोज्झितः ॥ १६७ ॥ नृपस्तत्र हरिश्चन्द्र—श्चन्द्रोज्वलयशा बभौ । चन्द्रतुल्यद्युतिश्चन्द्र, इवाऽऽसेचनकः सताम् ॥ १६८ ॥ विपक्षक्षितिनाथानां, यशांसि विशदान्यपि । अश्नन् कौक्षेयको यस्य, काल एवाऽऽस्त कौतुकम् ॥ १६९ ॥ तत्प्रिया रोहिणीत्यासी—च्छीलरत्नाधिरोहिणी[7] । रोहिणीं या पराजिग्ये, सौभाग्याद्भुतवैभवैः ॥ १७० ॥ त्रिविक्रम इवासीम—विक्रमस्तत्र विक्रमः । राजपुत्रोऽभवद्[8] रौद्र—दारिद्र्योपद्रुतः परम् ॥ १७१ ॥ स नानोपायनिष्णोऽपि, निर्भाग्यग्रामणीरिव । अनाप्नुवन् धनं क्वाऽपि, दध्यौ निर्वेद-

---

१ (कीर्त्ति.) स्थूला क्रियतेऽनेन (शीलेन) तत्. २ समर्थो भवेत्. ३ इन्द्रियाणाम्. ४ किंचिदूलवणं कालवणम्. ५ शुभैः, प्र. ६ भूमिविभूषणम्, प्र. ७ शीलरत्नमधिरोहतीत्येवशीला. ८ 'रजपूत' इति भाषायाम्.

मेदुरः ॥ १७२ ॥ हहाऽर्थेन विना तेऽमी, मम शौर्यादयो गुणाः । वृथाऽजनिषताऽङ्केनं, विमुक्ता बिन्दवो यथा ॥१७३॥ मन्येऽहं धनमेवैकं, विश्वसंजीवनौषधम् । यद्दर्शनेऽपि जीवन्ति, जनाश्चित्रमिदं पुनः ॥ १७४ ॥ दौःस्थ्यं नापरं नैस्व्यात्, सौष्ठवं नापरं धनात् । बुद्धेति धीधनैर्धन्यं, धनमेवार्ज्यमूर्जितम् ॥ १७५ ॥ ततो धनाप्तये देशा-न्तरे प्रास्थित विक्रमः । उद्योगो हि धुरीणत्वं, धत्ते श्रीप्राप्तिहेतुषु ॥ १७६ ॥ स भ्रमन् कानने क्वाऽपि, 'स्वभाग्यमिव देहभृत्' । दृष्टवान् धर्म-निस्तन्द्रं, मुनिचन्द्राभिधं गुरुम् ॥ १७७ ॥ तं ज्ञानिनमिवामृश्य, नमस्कृत्य च विक्रमः । पृष्टवान् भगवन्! कस्मा-न्मम नास्ति घनं धनम्? ॥१७८॥ गुरुरूचे त्वया यत् प्राग्, दानधर्म्मो न निर्ममे । यतेरिव ततो जात-माकिंचन्यमिदं तव ॥ १७९ ॥ जल्पन्तो देहि देहीति, दारिद्र्याग्रेसरा इव । भिक्षन्तेऽनुगृहं केचिद्, यत् तत् कार्पण्यनैपुणम् ॥ १८० ॥ एकमेव हि देहीति, वाक्यं जिह्वांचलस्थितम् । दातुर्गौरवमाधत्ते, याचकस्य तु लाघवम् ॥ १८१ ॥ संग्रहे साग्रहाः सन्ति, कीटाद्या अपि कोटिशः । दानेऽतिविदुराः प्रायो, देवा अपि न केचन ॥ १८२ ॥ क्षिप्त्वा गर्ते निरुच्छ्वासा-मिव ये कुर्वते श्रियम् । दुष्टाशयेव दृष्टाऽपि, सा न पश्यति तान् पुनः ॥ १८३ ॥ तदेकाग्रमना दानं, सेवस्व स्वानुमानतः । यथाऽनेन घनेनेव, दौस्थ्यदाहः प्रयाति ते ॥ १८४ ॥ किञ्चैवं मा स्म शंकिष्ठा, ददाम्यल्पधनः किमु । दारिद्र्ये दानम-ल्पिष्ठ-मपि पुण्यर्द्धिपुष्टये ॥१८५॥ न पात्रसात् कृतं क्वापि, याति पश्य पयोनिधेः । घनार्पितं पयः सिन्धू-भूय भूयोऽप्युपैति हि ॥१८६॥ स्वीकृत्य तद् गुरोर्वाक्यं, विक्रमः प्रस्थितस्ततः । यत् तत् प्रतिदिनं यच्छन्, गुर्वीमुर्वी विचेरिवान् ॥१८७॥

१ एककायंक विना विंदव ( एकहानिनानामीडा ). २ धर्मे आलस्यरहितम्. ३ एकमेवं, प्र. ४ तु, प्र. ५ द्वि० प्र. ६ भ्यु, प्र.

सोऽन्यदा विपिने क्वाऽपि, दध्यौ चूततलस्थितः । कथं लक्ष्मीं समानेष्ये, करिष्येऽपि च पात्रसात् ॥१८८॥ तावत् तत्रान्तिकबिले, स्वर्णदीनारमेककम् । दृष्ट्वा निधिरिहास्तीति, खनितुं स विलग्नवान् ॥ १८९ ॥ खाते कियत्यपि क्षोणि—तले प्रादुरभून्निधिः । उदरे स्वर्णदीनार—शतपंचकसंकुलः ॥१९० ॥ परकीयमिमं गृह्णे, नवेति विमृशन् मुहुः । विक्रमो जगदे देव्या, पुरोभूय कयाचन ॥ १९१ ॥ तव दानमयीं बुद्धिं, ज्ञात्वा दातुं निधिं तव । आम्रस्थया मया चक्रे, दीनारः प्रकटो बिलात् ॥ १९२ ॥ गृह्णीष्व तदिमं स्वेच्छं, भुंक्ष्व च स्वीयवित्तवत् । देव्यामुक्त्वेत्यदृश्यायां, विस्मेरो विममर्श सः ॥ १९३ ॥ दानस्याहो महः किंचिद्, यस्य वासनयाऽपि च । दीयते स्म निधिर्दैव, इव देव्या ममाऽनया ॥ १९४ ॥ विक्रमस्तं समादाय, स्वीयं वेश्म समाश्रितः । सामान्यगृहमेधीव, जज्ञे तेन मनाक् सुखी ॥ १९५ ॥ निदानं सम्पदां दानं, स मत्वा तद्दिनान्मुदा । असेविष्ट विशेषेण, कः स्याद् दृष्टफलेऽलसः? ॥१९६॥ पुण्यारुणोदयात् तस्य, नेष्टे नैस्व्यतमोभरे । प्रकाश इव सोल्लासो, बभूवान् विभवः शनैः ॥ १९७ ॥ अन्यदा भोक्तुमासीनो, विक्रमः शुभयोगतः । पारणार्थं गृहप्राप्तं, जिनराजं निरैक्षत ॥ १९८ ॥ स प्रीत्यंचितरोमांचो, भावनाभरभासुरः । प्रणिपत्य विशुद्धान्नै—र्जिनेश्वरमपारयत् ॥ १९९ ॥ तदा दुंदुभयो नेदुः, दिवि मेदुरनिःस्वनैः । विश्वत्रयेऽपि तद्दान—माचक्षाणा इवोच्चकैः ॥२००॥ तद्दानाद्भुतदर्शिन्या, दिवो हर्षाश्रुवृष्टिवत् । गन्धोदकैश्छटाः पेतु—स्तदा विक्रमवेश्मनि ॥ २०१ ॥ विस्मेरकुसुमैः[4]स्तोम—वृष्टिस्तत्सदनेऽलसत् । वृन्दारकैर्विरचिता, तं वदान्य[3]मिवार्चितुम् ॥ २०२॥ तदा द्युपतिताऽप्रत्न—रत्नहेमोत्करच्छलात् ।

---

१ उदार० प्र. २ नेष्टे, प्र. ३ दातारम् , ४ नवीन०—अपूर्व०.

विक्रमस्यालये[1] श्रीः स्वां, राजधानीमिव व्यधात् ॥ २०३ ॥ तेन दानेन तद्वेश्म, विशतः पुण्यभूपतेः । न्यायमेतदितीवोच्चै–श्चेलान्युच्चिक्षिपुः[2] सुराः ॥ २०४ ॥ तत् तादृग् महिम प्रेक्ष्य, हरिश्चन्द्रनृपः स्वयम् । सपौरोऽप्येत्य तुष्टाव, वन्दिवद् विक्रमं तदा ॥ २०५ ॥ जिनेन्द्रे विहृतेऽन्यत्र, पात्रदानमहोदयम् । दृष्ट्वा स्वं मानयन् धन्यं, बुभुजे स महाभुजः ॥ २०६ ॥ ततः कैलाससंकाशं, विरचय्य स्वमन्दिरम् । कलयन् मान्मथीं[2] लीलां, विक्रमः सुखमन्वभूत् ॥ २०७ ॥ रचितोदारश्रृङ्गारो, नरेश्वर इव श्रिया । विक्रमो जग्मिवान् रन्तुं, हृद्यमुद्यानमन्यदा ॥ २०८ ॥ कुसुमस्तबकस्तन्यः[3], स्फुरत्पल्लवपाणयः । लताऽङ्गना हरंति स्म, तन्मनस्तत्र विभ्रमैः[4] ॥ २०९ ॥ तस्मिन्नन्दनवच्चित्ता–नन्दने सुमनोभरैः । स चिरं रंरमीति स्म, मूर्धन्य इव भोगिनाम् ॥ २१० ॥ पश्यन् वनश्रियं सोऽथाऽ–पश्यत् क्वापि नरं वरम् । उत्पतन्तं पतन्तं च, छिन्नपक्षपतत्रिवत् ॥ २११ ॥ अप्राक्षीच्च सखे ! कस्मात्, त्वमुत्पत्य पतस्यधः । इत्युक्तः स तमाह स्म, पुमाननुपमानवाक् ॥ २१२ ॥ ( तथाहि– )

अस्ति विस्तीर्णभावाढ्यो, वैताढ्योऽत्र धराधरः । तस्मिन् पुरं परार्ध्यश्री–मन्दिरं मणिमन्दिरम् ॥२१३॥ नृपः पवनवेगाख्य–स्तत्र सुत्रामविक्रमः[5] । तज्जाया[6] विपुलच्छाया, पौलोमीव जयाऽऽह्वया ॥ २१४ ॥ तत्पुत्रो नीलकंठोऽह–मकुंठोत्कंठयान्वितः । सिद्धविद्यतया व्योम्ना, नंतुं तीर्थानि चेलिवान् ॥ २१५ ॥ प्रणम्य तान् गणतिर्थान्[8], व्यावृत्तः



१ आलयमाश्रित्य, २ कामदेवसंबंधिनीम् ३ पुष्पगुच्छरूकुचाः ४ श्रृंगारिकचेष्टाभि ५ इंद्रसमपराक्रम . ६ तत्पत्नी. ७ कान्तिः. ८ गणतीर्थान्, प्र.–संपूर्णसमूहान् तीर्थान्.

स्वपुरं प्रति । दृष्ट्वाऽऽराममिमं रम्यं, रन्तुमस्मिन्नवातरम् ॥ २१६ ॥ क्रीडित्वाऽत्र पुरं यातुं, ध्यायन् विद्यां खगामिनीम् । प्रमादवानिवाकस्माद्, व्यस्मार्षं पदमेककम् ॥२१७॥ ईदृक् कष्टास्पदं तेन, सखे ! संपन्नवानहम् । पक्षिणां पक्षवद् विद्या—भृतां विद्या हि साधनम् ॥२१८॥ व्यथाऽऽर्त्त इव तच्छ्रुत्वा, विक्रमस्तमवोचत । मदग्रे यदि पाठार्हा, तर्हि विद्यां निजां पठ ॥ २१९ ॥ अश्राव्यं किमपाठ्यं ते, प्रोच्येति स पपाठ ताम् । पदानुसारिधीरूचे, विक्रमो विस्मृतं पदम् ॥ २२० ॥ विद्याधरोऽथ सम्पूर्णं विद्यस्तं हृद्यमूचिवान् । अहो प्रज्ञा नवेयं तेऽ–नधीतमपि याऽस्मरत् ॥ २२१ ॥ यद्विवा विद्यते सीमा, व्योमाऽऽकाशदिशामपि । विश्वविश्वैकदृश्वर्याः, सत्प्रज्ञायाः पुनर्नहि ॥ २२२ ॥ तवोपचक्रुपः[3] प्राग् मे, न समा प्रत्युपक्रिया । कृतज्ञतोचितं किंचित्, कुर्वे तदपि ते हितम् ॥ २२३ ॥ ततः स व्योमविद्यां तां, वितीर्यैकां तथोर्मिकाम्[4] । इयं सर्वविपघ्नेति, तत्प्रभावमची(च)कथत् ॥ २२४ ॥ संगंस्ये पुनरेत्याह–मित्युक्त्वा तत्र जग्मुषि । विद्योर्मिकाऽऽप्ति-सन्तुष्टो, विक्रमः प्राप्तवान् गृहम् ॥२२५॥ हरिश्चन्द्रनृपस्याथ, प्रतिरूपमिव श्रियः । नन्दनी कम्रकीराऽऽम्र–मञ्जरी[5] रत्नमञ्जरी ॥ २२६ ॥ आक्रीडक्रोडमध्यास्य[6], वयस्याभिः समं चिरम् । क्लिन्ती दंदशूकेन, निःशूकेन व्यदश्यत ॥ २२७ ॥ युग्मम् ॥ आपादमस्तकं विष्व–द्रीचीभिस्तद्विषोर्म्मिभिः । मूर्च्छिता च्छिन्नवल्लीव, भूमिपीठे लुलोठ सा ॥ २२८ ॥ तज्ज्ञात्वाऽन्तिकमागत्य, मातापित्रादयोऽखिलाः । विषापहैर्ग(गा)रुडवद्–वैद्यैस्तामचिकित्सयन् ॥२२९॥ उपदेशा इवा-

---

१ नूतना–अपूर्वा. २ जलाकाशदिशाम्. ३ चक्रुपः, प्र, चकृवसुशब्दोऽत्र. ४ ऊर्मिका–अगुल्याभरणं ताम् ( वींटी ). ५ कम्र. कीरो यस्या तादृशी आम्रमञ्जरीव स्थिता इति शेषः, ६ उद्यानमध्यम्.

भव्ये, स्त्रीकटाक्षा इवार्भके । उपायास्तत्कृताः सर्वे, वृथात्वं तत्र तेनिरे ॥ २३० ॥ प्रमीतामिव तां मत्वा, पितरौ तच्छुजातुरौ । क्षणं विघ्नितदुःखां, मूर्च्छामानच्छतुस्तराम् ॥ २३१ ॥ हरिश्चन्द्रः सचैतन्यो, मंत्रिमंत्रेण तत्क्षणं, मध्ये शिवपुरं विष्वक्, पटहानित्यजूघुपत् ॥ २३२ ॥ सज्जयिष्यति पुत्रीं य-स्तस्मै दापिष्यते मया । राज्यार्द्धेन समं सेयं, कुललक्ष्मीरिवांगिनी ॥ २३३ ॥ तादृगाघोषणं श्रुत्वा, विक्रमः श्रितसत्क्रमः । निजोर्म्मिकापरीक्षार्थं, ययौ राजसुताऽन्तिकम् ॥ २३४ ॥ नृपस्तद्दर्शनादेव, स्वसुतां जीवितां विदन् । अभ्युत्थानादिना मित्र-मिव तं समतूतुपत् ॥ २३५ ॥ दृष्ट्वा तां विक्रमस्तस्य-द्विपोर्मिस्वोर्मिकाजलैः । आच्छोटयन् मुखे साऽपि, सुप्तेव द्रागजागरीत् ॥ २३६ ॥ विकसन्नेत्रपद्मा सा, पद्मिनीव नृपात्मजा । तं भास्वन्तं पुरः प्रेक्ष्य, युक्तमेवान्वरज्यत ॥२३७॥ सज्जितां स्वसुतां दृष्ट्वा, कृतहर्षाश्रुपल्वलः । भूपालः स्तुतिवाचाल-स्तं विक्रममदोऽवदत् ॥ २३८ ॥ हृदयालुर्दयालुश्च, त्वमेकोऽस्यधुना ध्रुवम् । परार्त्तिहरणे यस्य, निकामरसिकं[3] मनः ॥ २३९ ॥ आस्तामजननिस्तस्य, जननीयौवनच्छिदः । आर्त्तं नोपचरीकर्त्ति, सामर्थ्ये सति यः कुधीः ॥ २४० ॥ यद्वा तवोत्तमत्वस्य, वास्तवोऽयं स्तवः कियान् । जिनोप्यकृत यत्पाणौ, पारणं पुण्यकारणम् ॥ २४१ ॥ हरिश्चंद्रस्ततस्तेन, परिणाय्य निजांगजाम् । तदैवाऽदित राज्यार्द्धं, सत्यसन्धा हि साधवः ॥ २४२ ॥ ततो द्विपवरारूढो, रत्नमंजरीसंयुतः । अभ्रमूर्द्धस्थितश्चन्द्र, इवैकाश्रिततारकः ॥ २४३ ॥ विक्रमोऽयं स्मरो नूनं, नानामुनिकदर्थनात् । दुःस्थो

१ घोषणाम्, प्र. २ मनस्वी-विचारशील. ३ अत्यंतम्. ४ अनुरक्तिः, अथवा धिक्कारः. ५ पुनः पुनरतिशयेन वोपकरोतीति उपचरीकर्ति उपपूर्वाद् यङ्लुगन्तात् करोतेर्लट् ६ लुङ्

भूत्वा पुनः पीन-पुण्यैरीदृक् शुभोऽभवत् ॥ २४४॥ हरिश्चन्द्रसुताऽप्येषाऽ-वश्यमासीत् पुरा रतिः । स्मरं विक्रमदंभेन, बभाज कथमन्यथा ? ॥ २४५ ॥ शृण्वन्नित्यादिकाः पौरीः, कथाः श्रितरसप्रथाः । उत्सवेन निजं वेश्म, विशति स स विक्रमः ॥ २४६ ॥ चतुर्भिः कलापकम् ॥ तां स्त्रैणगुणपाथोधि-पारीणां रत्नमञ्जरीम् । रमयन् विक्रमः कामं, कामं निन्ये कृतार्थताम् ॥ २४७ ॥ प्रवृद्धे विभवे तस्य, दानमप्यवृधत्तमाम् । दिनाधिक्ये न किं धाम-धाम्नो धाम प्रगल्भते? ॥ २४८ ॥ तदुद्दामगुणोद्भूत-सद्यशःपटहस्वनः । प्रसरन्नर्थिनो नूनं, निद्रितानजजागरत् ॥ २४९ ॥ असामान्यं वदान्यं तं, दवीयांसोपि ते यतः । प्रपद्यन्ते स्म दानार्थं, षट्पदा इव पंकजम् ॥२५०॥ वृद्धोऽथ स हरिश्चन्द्र-महीन्द्रोऽप्रसुतत्वतः । राज्ये तं विक्रमं न्यस्य, परलोकं व्यलोकत ॥ २५१ ॥ ओजायामासिवान् कामं, तेन राज्येन विक्रमः । पुष्पकालविलासेन, यथा कुसुमशायकः ॥ २५२ ॥ प्रणुन्ना इव तत्पुण्यै-र्महान्तोऽपि महीभृतः । निभृताः प्राभृतैर्दिव्यै-र्नृपं तमुपतस्थिरे ॥ २५३ ॥ घनेऽपि स्त्रीजने राज्ञी-पदं श्रीविक्रमो ददौ । प्रेयस्यै रत्नमंजर्यै, प्रौढप्रीतेरिदं कियत् ? ॥२५४॥ तस्मिन् घनोदये न्याय-नीरेणाभ्युक्षति क्षितिम् । खला जवासकंतिस्सै, नीपंतिस्सै च साधवः ॥ २५५ ॥ जितोच्चैःश्रवसो वाहा, दूरितेन्द्रद्विपा द्विपाः । अतिवाक्पतयोऽमात्या-स्तस्य राज्ये विरेजिरे ॥२५६॥ चतुरंगबलं तस्य, तादृगासीन्महाबलम् । यस्मिन् वल्गति शंकेऽहं, शशंके चक्रवर्त्यपि ॥२५७॥ अहो दानस्य महिमा, न हि माति जगत्रये । येन तादृग्

---

१ पुष्पदानै . २ भेजे. ३ श्रिता रसेन प्रथा-ख्यातिर्यासां ता.. ४ अत्यन्तम्. ५ कामं-तृतीयपुरुषार्थम्. ६ दान०. ७ अर्थिनः. ८ व्यलोकयत्, प्र. ९ वसंत०. १० कामः. ११ विनयवतः-नम्राः संतः, १२ सिंचति सति. १३ जवासकंते स, प्र. १४ कदम्बवृक्ष (पुष्प) इवाचरन्ति स्म.

दरिद्रोऽपि, जज्ञेऽयं विक्रमो नृपः ॥२५८॥ विमृश्य स्वमनस्येवं, पौराः सर्वेऽपि सर्वदा । सार्वजन्यं ददुर्दानं, लोकाः स्वाम्यनु-
गामिनः ॥ २५९ ॥ आस्थानीमास्थितोऽन्येद्युः, पश्यति स्म स विक्रमः । विमानं धामधामैक—मागच्छद् गगनाध्वना
॥ २६० ॥ क्वैतदेतीति पार्षद्यैः, सह ध्यायति भूधवे । तत्संसन्मध्यमध्यागाद्, रविबिंबमिव स्फुरत् ॥ २६१ ॥ तस्मा-
न्निरीय सोत्कंठो, नीलकंठः स खेचरः । नमन्नालिंग्य भूपेन, न्यवेश्यत निजासने ॥२६२॥ मिथः क्षेमादिपृच्छायां, जातायां
खेचरोऽवदत् । देव ! स्वागमनेनाद्य, विभूषय मदालयम् ॥ २६३ ॥ अन्योऽन्यालापपीयूषैः, संसिक्ता प्रीतिवल्लरी । सौम,
नस्यं समुल्लास्य, प्रसूते हि सुखं फलम् ॥ २६४ ॥ अत्यर्थमर्थितस्तेन, पार्थिवः सचिवे निजे । राज्यं न्यस्य विमानेन-
तेन व्योमाध्वनाऽचलत् ॥ २६५ ॥ दृशोः प्राघुर्णकीकुर्व—न्नवनीमवनीश्वरः । क्षणेन प्राप वैताढ्ये, तत्पुरं मणिमन्दि-
रम् ॥ २६६ ॥ नीलकंठः स्वमावासं, तं नीत्वा विनयावनिः । पृथ्वीभिरातिथेयीभिः, सच्चक्रे ज्येष्ठबन्धुवत् ॥ २६७ ॥
रूपेण त्रिदिवस्त्रीणां, दौर्भाग्यपटहं नवम् । भगिनीं मदनवेगाख्यां, मदनावेगशालिनीम् ॥ २६८ ॥ तेन विक्रमभूपेन,
परिणाय्य स खेचरः । श्रीदकोशमिवोत्कृष्ट—वस्तुस्तोममदान्मुदा ॥२६९॥ युग्मम् ॥ वन्दारुर्नित्यचैत्यानि, प्रतस्थे विक्रम-
स्ततः । स्थगयन् व्योम विद्याभृ—द्विमानैर्वारिदैरिव ॥ २७० ॥ धातकीखंडभूखंडे, यानि मेर्वादिभूमिषु । आस्थानमं-
डपानीव, धर्मत्रिभुवनप्रभोः ॥२७१॥ तानि तीर्थानि नत्वा च, नुत्वा च रुचिरैः स्तवैः । फलान्यासेदिवानेष, निजलोचन-
जन्मनः ॥२७२॥ युग्मम्॥ भूत्वा तथैव व्यावृत्य, प्राप्तो निजपुरं नृपः। सत्कृत्य नीलकंठादीन्, खेचरांस्तान् विसृष्टवान् ॥२७३॥

१ सर्वजनहितं-सर्वजनप्रसिद्धं वा. २ प्रशस्तचित्तत्वम्, पक्षे-पुष्पत्वम्. ३ अतिथीकुर्वन्. ४ शाश्वत०.

॥ १६९ ॥

अथ ज्ञात्वा तमेवासं, मुनिचन्द्रं गुरूत्तमम् । श्रीविक्रमनृपो गत्वा, नत्वा चैवमवोचत ॥ २७४ ॥ प्रभो ! त्वदुपदिष्टस्य, दानस्य स्वस्तरोरिव । अनुभावाद् बभूवाह—मीदृगैश्वर्यभाजनम् ॥ २७५ ॥ अद्यापि सेवमानोऽस्मि, स्वार्थवत् तदनारतम् । प्रसद्यादिश्यतां किंचिन्, मम भद्रंकरं पुनः ॥ २७६ ॥ दन्तकान्तिच्छलाच्छुद्ध–धर्म्मध्यानच्छटामिव । दर्शयन् सूरिराचष्ट, मधुरध्वनिबन्धुरम् ॥ २७७ ॥ नृपते ! दानवच्छील—मपि धर्मस्य जीवितम् । विना येन क्रियाकांडं, प्रचंडमपि भंडनम् ॥ २७८ ॥ अजिह्मितनवब्रह्म—गुप्तिदीप्तिमयो मुनिः । गृही स्वदारतुष्टश्च, भवेतां शीलशालिनौ ॥ २७९ ॥ कस्यापि चेतः कासारे, स्फारमाहात्म्यसौरभम् । सुकृतश्रीनिवासाय, शीलं तामरसायते ॥ २८० ॥ क्रियावानतिनिष्णातो, ध्यानवान् मौनवानपि । लूननक्र इवाशीलः, क्वाऽपि सौभाग्यमेति न ॥ २८१ ॥ सतीमतल्लिकानां यत्, त्रिदिवादेत्य देवताः । साहाय्यं तन्वते सा हि, शीलातिशयवर्णिका ॥ २८२ ॥ प्रत्यूहद्विरदव्यूहा–स्तावदेवोन्मदिष्णवः । यावन्न शीलगन्धेन, गन्धवायुर्विजृंभते ॥ २८३ ॥ श्रुत्वा तद् विक्रमक्ष्मापो, दौर्गत्यद्रुमवीजवत् । यावज्जीवं परस्त्रीणां, सेवनं प्रतिषिद्धवान् ॥ २८४ ॥ नियम्य च चतुष्पर्व्यां, स्वकीया अपि नायिकाः । अनुज्ञाप्य गुरुं गौर—गुणः स गृहमागमत् ॥ २८५ ॥ परस्त्रीसोदरत्वेन, ख्यातिस्फातिं श्रितस्ततः । भूपालः पालयामास, नियमं तं स्वदेहवत् ॥ २८६ ॥ सभाविभूषणीभूतं, कदाचिदपि विक्रमम् । उपतस्थे वणिक् कोऽपि, समादाय हयोत्तमम् ॥ २८७ ॥ प्रणम्य चावदद् वाजी,

१ निःसारम् २ निष्कपट०. ३ कमलायते. ४ सतीश्रेष्ठाना–प्रशस्तसतीना–महासतीनाम् "मतल्लिका-मचर्चिका, प्रकाण्ड–मुद्ध–तल्लजो । प्रशस्तवाचकान्यमूनि" इत्यमरः ५ वानकी इति लोके. ६ प्रसिद्धिवृद्धिम्. ७ प्रधानाश्वम्.

देव ! देवासनोचितः । विद्यतेऽवद्य[1]मुक्त्वाद्, यदीच्छा तर्हि गृह्यताम् ॥ २८८ ॥ प्राज्ञा राज्ञाऽभ्यनुज्ञाता, हयलक्षण-वेदिनः । दृष्ट्वा तुरंग[2]सर्वांगं, रंगेणेति व्यजिज्ञपन् ॥२८९॥ निर्मांसवदनस्तुच्छ—कर्णः प्रोन्नतकन्धरः । पृथुपृष्ठस्ततो[3]रस्कः, पीनपश्चि[4]मपार्श्वभृत् ॥ २९० ॥ क्षाममध्यः स्निग्धरोम—स्तोमः सोमसमानरुक् । स्थानवर्त्तिशुभाऽऽवर्तः, पुरुषोन्नत-विग्रहः ॥ २९१ ॥ प्रत्यक्ष[5]स्तपनस्येव, सोऽयं देव ! तुरंगमः । राज्याधिदैवतमिव, विना भाग्यैर्नलभ्यते ॥ २९२ ॥ त्रिभिर्विशेषकम् ॥ श्रुत्वा तन्मुदितो भूपो, वाणिजाय यथोचितम् । मूल्यं वितार्य वाहं तं, मन्दुरायामबन्धयत् ॥२९३॥ प्रातस्तमश्वमारुह्य, वाह्यालीदेशमाश्रितः । धारा[6]दिगतिवीक्षार्थं, प्रेरयामास विक्रमः ॥ २९४ ॥ अश्वः प्रेरितमात्रोऽपि, रुध्यमानोऽपि भूभुजा । समुत्पत्य नभोऽयासीद्, रजः स्पर्शभयादिव ॥ २९५ ॥ हा नाथ ! तव किं जातं, कुतस्त्वां हरते हयः । किं कुर्महे वयं भूमा—वयं तूष्णीनवान्नभः ॥ २९६ ॥ इत्यादिवादिनां भूप—सादिनां पश्यतामपि । उल्लंघ्य लोचनपथं, स मायी[7]व ययौ जवात् ॥ २९७ ॥ युग्मम् ॥ हाहा किमिदमाश्चर्यं, यद्व्योम्नोत्प्लवते हयः । यद्वा नायं हयः किन्तु, छद्मसद्माऽस्ति कश्चन ॥ २९८ ॥ क्व मां निनीर्[8]षते व्योम्ना, ध्यायतीति धराधवे । दूरं गत्वा वनान्ते तं, मुक्त्वा सोऽन्तर्दधे क्वचित् ॥ २९९ ॥ युग्मम् ॥ नभोभ्रष्ट इव क्ष्मापो, दिक्षु चक्षुः प्रतिक्षिपन् । ऐक्षिष्ट रमणीयांगं, रमणी-द्वितयं पुरः ॥३००॥ गलन्निमेषदृक्त्वेन, लावण्यातिशयेन च । देव्याविमे न मानव्या—विति निश्चिनुते स्म सः ॥३०१॥

१ दोषरहितत्वात्. २ तुरगं, प्र. ३ विस्तृतहृदय. ४ पुष्टपश्चाद्भाग. ५ प्रत्यक्ष इव रेवंत. ( सूर्यपुत्र ) प्र. ६ अश्वानां तु गतिर्धारा, विभिन्ना सा च पंचधा ७ कपटीव. ८ नेतुं इच्छति.



॥ १७० ॥

पूर्वदृष्टे इव स्निग्धे, ते स्त्रियौ तमवोचताम् । स्वामिंश्चिरायितं कस्मात्, पश्यन्त्यौ स्वस्त्वदागमम् ॥ ३०२ ॥ ततो नृपति-मुत्पाट्य, मुमुचाते क्षणेन ते । पञ्चवर्णमणिनद्धे, सद्मनः सप्तमे क्षणे ॥३०३॥ तारुण्यपुण्यलावण्य—रसप्रसरसेकतः । स्मरं पल्लवयन्तीव, हरदृग्वह्निभस्मितम् ॥ ३०४ ॥ शृंगारस्येव सर्वस्वं, मदनस्येव जीवितम् । तत्र पर्यंकिकारूढा, देवी तेनैक्षि काचन ॥३०५॥ युग्मम् ॥ ततोऽवतीर्य विनयं, निर्व्याजमधिरुह्य च । सौवांगतिकतां तेने, सा प्रीता नृपतिं प्रति ॥३०६॥ संस्नाप्य निजदेवीभि-र्दिव्यां रसवतीं स्वयम् । भोजयित्वा च सच्चक्रे, विक्रमं साऽम्बरादिभिः ॥३०७॥ निविश्य पुरतस्तस्य, कृत्रिमस्नेहमोहनी । उद्दामकाम मत्तेव, देवी निगदति स्म तम् ॥ ३०८ ॥ मत्पुण्यैरेव कृष्टस्त्वं, देव ! मत्सौधमागमः । चिन्तामणिः किमभ्येति, विना भाग्यैः करोदरम् ॥ ३०९ ॥ ईशानवासिनी देवी, विपिनेऽस्मिन् रिरंशया । निजशक्त्या विकृत्यैन—मावासं निवसाम्यहम् ॥ ३१० ॥ तृषातुरे इव चिरं, ममैते नयने यथा । मनोहृत्य भवद्रूपाऽ—मृतमापीय निर्वृते[3] ॥ ३११ ॥ तथैव मन्मथोन्माथ—व्यथयाऽतिकदर्थितम् । त्वत्संगमागदंकारा—न्ममांगमपि सज्जताम् ॥ ३१२ ॥ स्वशीलप्रतिकूलं तन्, मत्वा तद्गदितं नृपः । तां बोधयितुमारेभे, गुरुवद् धर्मदेशनात् ॥ ३१३ ॥ भुक्तवृन्दारका देवि !, नरं मां किमभीप्ससि ? । न हि पीतामृतः कश्चित्, क्षारं वारि पिपासति ॥ ३१४ ॥ वरं विषभृतां सेवा, विषयाणां न सर्वथा । हरन्ति यत् सकृत् पूर्वे, प्राणानन्त्याः पुनर्मुहुः ॥ ३१५ ॥ चक्रे विषेण नीलत्व—मात्रं कंठे महेशितुः । विषयैस्तु तदंगार्द्धं, हृतमेषामहो महः ॥ ३१६ ॥ भवे चतुर्विधेऽप्यस्मिन्, यद् दुःखं दुःसहं नृणाम् । सकलं

१ पलग, इति लोके. २ स्वागतताम्. ३ तृप्तिं प्राप्ते. ४ सर्पादीनाम्.

तत् फलं विद्धि, विषयाख्यमहीरुहः ॥ ३१७ ॥ विषवद् विषयांस्तस्मात्, त्यक्त्वा नरकलम्भकान् । पेपीयस्व परब्रह्मामृतं निर्वृतिमन्दिरम् ॥ ३१८ ॥ विलक्षाऽथावदद् देवी, धिक् त्वां क्लीबशिरोमणिम् । निराकरोषि यत् त्वं मा—मीदृशीं स्नेहलाशयाम् ॥ ३१९॥ स्वप्नेऽपि खलु या मर्त्यै—रनीपलभदर्शना । साऽर्थये स्वयमेव त्वां, किमद्यापि समीहसे? ॥३२०॥ पुनस्तां विक्रमः प्रोचे, भद्रे! त्वं भद्रमभ्यधाः । परमस्ति परस्त्रीणा—माजीवं मम वर्जनम् ॥ ३२१ ॥ वर्जयित्वा निजान् दारान्, परनारीः सुरीरपि । प्राणनाशेऽपि नाऽऽसेवे, स्वव्रतभ्रंशभीलुकः ॥ ३२२ ॥ किञ्च कः काचखंडाय, माणिक्यं परिचूर्णयेत्? । धत्तूरतरवे को वा, कल्पपादपमुत्खनेत् ? ॥३२३॥ लोहकीलासये देव—मन्दिरं को विदारयेत्? । क्षणसौख्याय को मुंचे—च्छीलं संसारतारणम्? ॥३२४॥ युग्मम् ॥ रेरे मूढ! वृषस्यंतीं, त्वं मां कामयसे न चेत् । तर्हि तेऽहं लुनाम्यद्य, शीर्षं खड्गेन नालवत् ॥ ३२५ ॥ सा ब्रुवाणेति गीर्वाणी, राक्षसीव भयंकरा । खड्गमुद्गूर्य भूजानि—शिरश्छेत्तुमधावत ॥ ३२६ ॥ प्राणव्ययेन स्वं शीलं, पाल्यमित्यात्तनिश्चयः । नमस्कारान् स्मरन् भूप—श्छित्त्यै शीर्षमनीनमत् ॥ ३२७ ॥ सोऽधःकृतशिराः सत्त्वो—द्रेककंटकितांगकः । यावन्निशाततद्घात—पातं काक्षेण वीक्षते ॥ ३२८ ॥ अहो शीलमहोशील—मित्युच्चैः स्तुवतीं मुदा । तावत् तां दृष्टवान् देवीं, वर्षंतीं कुसुमोत्करम् ॥३२९॥ युग्मम् ॥ क्व सोऽस्याघातसंरंभः, पुष्पवृष्टिरियं क्व च । चित्रीयमाणमित्यन्तः, सा विक्रममवोचत ॥ ३३० ॥ अथेशानसुरेशानः, समासीनः

१ पुनः पुनः पिब. २ 'अश्वक्षीरे'त्यादि सूत्रे "अश्ववृषयोर्मैथुनेच्छायाम्" इति वार्तिकेन क्यचि असुगागमे च मैथुनार्थं वृष(बलीवर्द)मिच्छति–वृषस्यति गौः. अत्र तु अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छैवार्थो ग्राह्य', शतृप्रत्यये, 'वृषस्यंती तु कामुकी' इतिकोशप्रमाणात्. ३ उत्पाट्य. ४ रोमाञ्चितशरीरः. ५ तीक्ष्ण०.

स्वसंसदि। ज्ञानाद् विज्ञाय शीले त्वां, स्थिरं देवानिदं जगौ ॥३३१॥ भो देवा! *भरतक्षेत्रेऽ-धुना शिवपुरेश्वरः। श्रीविक्रमो यथा स्थेयान्, शीले नास्ति तथा परः ॥ ३३२ ॥ चारित्रवानपि प्रायः, शीलाच्चाल्येत कर्हिचित्। न पुनर्विक्रमः क्ष्माभृ-द्प्सरोभिरपि स्वयम् ॥ ३३३ ॥ तद्देवी रत्नचूलाऽहं, चूला लवणिमस्पृशाम्। त्वत्प्रशंसामिमं श्रुत्वा, चिन्तयांचक्रुषी चिरम् ॥ ३३४ ॥ अहो ईशानशक्रस्य, केयं वाक् चातुरी नवा। यदचाल्योऽस्ति पुंस्कीटः, सुरीभिरपि शीलतः ॥ ३३५ ॥ स्वप्नेऽपि कामिनीं वीक्ष्य, द्रुतं द्रवति मानवः। किं पुनः सुरलोलाक्षीः, साक्षान्मोहनवल्लरीः ॥ ३३६ ॥ ततस्तव परीक्षार्थं, स्वर्गादेत्य मया रयात्। अयं हयापहारादिः, प्रपंचो रचितोऽखिलः ॥ ३३७ ॥ त्वमेव धर्मवीरोऽसि, कोटीर[1]ः शीलशालिनाम्। आदृत्यापि शिरच्छेद-मस्खलं[2]न्नियमान्न यः ॥ ३३८ ॥ के शीलं परिशीलयंति न जनाः स्वास्थ्ये व्रतस्थास्तु ते, ये नैव व्यसनेऽपि जीवितमिवोन्मुंचंति तत् कर्हिचित्। ग्रीष्मे शैवलिनीं तरंति न कति स्युस्तारकास्ते परं, श्रोतःप्रोततटावनिं, घनऋतौ, ये तां तरीतुं क्षमाः ॥ ३३९ ॥ (शार्दुल०) अजिह्मब्रह्मणा देव!, शुभेयं भवतैव भूः। शशिनैव ह्यखंडेन, ज्यौत्स्नी[10] रात्रिरुदीर्यते[11] ॥ ३४० ॥ ईशानेशेन यादृक्त्व-मशंसिष्ठाः स्वसंसदि। तादृगेवान्वभाविष्ठा, मृषोद्या[12] न सतां हि गीः ॥ ३४१ ॥ तद् ब्रूहि किं प्रियाकृत्य, प्रीणये त्वां कदार्थितम्?। तपनोऽपि[13] समुत्तप्य, तरुं वृष्ट्याऽभिषिंचति ॥३४२॥ उवाच विक्रमोऽत्यंतं, प्रियं मे शीलपालनम्। तत् त्वं कृतवती देवि!, चिकीर्षसि

*धातकीखण्डभरते. १ मुकुट.- २ अस्खालीत् प्र, लुङ्. ३ पा-प्र. ४ कदाचित्-कस्मिंश्चित् काले. ५ नदीम्. ६ तरन्तीति तारका.. ७ स्रोतोभि: प्रोता-व्याप्ता तटावनिर्यस्यास्तां. ८ वर्षाऋतौ. ९ निष्कपटशुद्धब्रह्मचारिणा. १० कौमुदीमती. ११ कथ्यते. १२ मृषा उद्यं-कथनीयं यत्र. १३ सूर्य.. १४ दृष्ट्वा, प्र.

परं किमु ? ॥ ३४३ ॥ इत्युक्तिभाजं भूजानिं, नीत्वा शिवपुरं मुरी । सिंहासने च विन्यस्या—भूपयद् दिव्यभूपणैः ॥ ३४४ ॥ पौरेभ्यः प्रीतिगौरेभ्यः, क्ष्मापवृत्तं विवृत्य तत् । कादंविनीव वृष्ट्वा च, स्वर्णौघं सा दिवं ययौ ॥ ३४५ ॥ श्रुत्वा तच्चरितं चित्रं, नागरा हर्षसागराः । निकामं धन्यमात्मानं, तेन नाथेन मेनिरे ॥ ३४६ ॥ नृपस्य शीलमाहात्म्यं, तद् भ्राम्यद् भूतलेऽखिले । भवति स्म कुशीलाना—मपि शीलनिवेशकृत् ॥ ३४७ ॥

अथ विक्रमभूपस्य, फलं गार्हस्थ्यशाखिनः । तनूजो रत्नमंजर्यां, रत्नसाराख्योऽभवत् ॥३४८॥ स वाङ्मयांबुधेः पारं—गमी भूयाभ्यजीवयत् । वैदुष्यं विनयेनैव, यौवनं निजवर्ष्मणा ॥३४९॥ पुत्रं वैमंहरं राजा, यौवराज्ये नियुज्य तम् । दानशीलमयं धर्मं, निर्ममे निर्मलाशयः ॥ ३५० ॥ आरामिकात् परिज्ञाय, तमायातं पुनर्गुरुम् । भूपः सपरिग्रहोऽपि, गत्वा तीर्थमिवाऽनमत् ॥३५१॥ भवदावाग्निसंतप्तान्, जनानुज्जीवयन्निव । रसाढ्याभिः स्ववाणीभि—रभ्यधान्मुनिपुंगवः ॥३५२॥ धर्मसैन्ये चतुरंगे, वलिष्ठं दानशीलतः । तपस्तृतीयमंगं स्याद्, दुष्कर्मद्वेषिपेषकम् ॥ ३५३ ॥ चित्तालवाले शमनीरसिक्तो, निर्वेदमूलः शुचिशीलशाखः । प्रभावपुष्पः शुभसत्फलौघ—स्तपस्तरुः कस्य भवेन्न सेव्यः ॥ ३५४ ॥ ( उपजातिः ) पाप्मनां विविधारंभ—संरंभप्राप्तजन्मनाम् । क्षयाय तप एव स्या—दुर्वुध इवैधसाम् ॥ ३५५ ॥ लब्धयोऽवधिमुख्यास्ताः,

१ प्रेमविशुद्धेभ्यः. २ निवेद्य, प्र. ३ मेघमाला. ४ अत्यन्तम्. ५ तरुणीलग्नं. ६ [illegible] सहित. ७ [illegible]. ८ [illegible].
९ अवधिज्ञानादयः.

सिद्धयश्चाणिमादयः । विलसंति यदादेशात्, तन्नव्यं तत् तपोऽनिशम् ॥ ३५६ ॥ बाह्याभ्यंतरभेदेन, तत् प्रोक्तं द्वादशात्मकम् । द्वादशारं चक्रमिव, जेतुं कर्मरिपुं मुनेः ॥ ३५७ ॥ अ[1]भुक्तिरूनो[2]दरता, वृ[3]त्तिसंक्षिप्तताऽपि च । रसत्या[4]गो वपुः[5]क्लेशो, लीन[6]त्वं स्याद् बहिस्तपः ॥ ३५८ ॥ प्राय[1]श्चित्तं वैया[2]वृत्त्यं, स्वाध्या[3]यविन[4]यावपि । उत्सर्ग[5]श्च शुभ[6]ध्यान—मंतरंगं तपो भवेत् ॥ ३५९ ॥ यतेरेवास्तसंगस्य, स्यादिदं सकलं तपः । न तु तत्तन्महारंभ—जृंभिणो गृहमेधिनः ॥ ३६० ॥ संयमश्रीस्तपःश्रीश्च, नूनं प्रीते परस्परम् । यत् पूर्वस्याः समुल्लासे, पराऽप्युल्लासलालसा ॥ ३६१ ॥ इत्थं गुरुगिरा भानु—भासेवोद्बुद्धबोधहृत् । वितीर्य सूनवे राज्यं । व्रतमादत्त विक्रमः ॥ ३६२ ॥ सामाचारीं दशतयी—मभ्यस्यन् गुरुसन्निधौ । स मासक्षपणाद्युग्रं, दुस्तपं तप्तवांस्तपः ॥ ३६३ ॥ तत्तपस्यतिवृद्धत्वं, स्वीकुर्वाणेऽतिकौतुकम् । बलीयांस्तत्प्रभावोऽभूद्, गीर्वाणाकर्षणक्षमः ॥३६४॥ स कृती विकृतीर्हेतुं, विकृतीनां विदन् हृदि । तपःकृशोऽप्यसेविष्ट, पारणेऽपि न जातु ताः ॥३६५॥ अन्यदा विक्रममुनि—स्तपोराशिरिवांगवान् । अविक्षलक्षणावत्यां, पुरि पारणहेतवे ॥३६६॥ तत्र लक्ष्मणभूपस्य,

---

१ अणिमा. ( १ ) लघिमा ( २ ) प्राप्तिः, ( ३ ) प्राकाम्यं ( ४ ) महिमा ( ५ ) तथा । ईशित्वं च ( ६ ) वशित्वं ( ७ ) च, तथा कामावसायिता ॥ १ ॥ तत्र अणिमा–अणुभावो यतः शिलामपि प्रविशति (१) लघिमा–लघुभावो यतः सूर्यमरीचिकामालंब्य सूर्यलोकं याति (२) महिमा–महतो भावः यतो महान् संभवति ( ३ ) प्राप्तिः–अङ्गुल्यग्रेण संस्पृशति चंद्रं ( ४ ) प्राकाम्यं–इच्छाऽनभिघातो यतो भूमौ उन्मज्जति निमज्जति यथोदके ( ५ ) वशित्वं–भूतभौतिकं वशीभवत्यस्यावश्यम् ( ६ ) ईशित्वं–भूतभौतिकाना प्रभवस्थितिमीष्टे ( ७ ) यत्र कामावसायित्वं–सत्यसंकल्पता यथाऽस्य, संकल्पो भवति भूतेषु तथैव भूतानि भवन्ति ( ८ ) इत्यादिविस्तरोऽन्यत्र. २ सर्वद्रव्यविषयक इच्छासंक्षेपः. ३ "सङ्ख्याया अवयवे तयप्"–दशावयववतीम्.

चंडसेनाह्वयः सुतः । पापः पापर्द्धये गच्छन्, पुरस्तं मुनिमैक्षत ॥ ३६७ ॥ स दुःशकुनबुद्ध्या तं, हंतुं धावञ् शितासिना । मयूरबंधबद्धः[1] स—न्निश्चेष्टो भूतलेऽपतत् ॥ ३६८ ॥ हहा महाशयस्यास्य, जातं किमिति चिंतयन् । उत्कल्लोलकृपा-वार्धि[2]—स्तत्पार्श्वे तस्थिवान् मुनिः ॥ ३६९ ॥ हाहारवपरैः पौरैः, शोकसज्जैश्च तज्जनैः । चैतन्यं लभ्यमानोऽपि, स ग्रावेव न लब्धवान् ॥ ३७० ॥ श्रुत्वा तत् तत्पिता दुःख—ज्वलितात्मैव तत्क्षणम् । धावित्वा सपरीवारः, सुतोपांतमुपागमत् ॥ ३७१ ॥ यतिं जिघांसतः सूनो—रीदृग्व्यसनमापतत् । मत्वेति निपतन् पाद—पद्मेऽवादीन्मुनिं नृपः ॥ ३७२ ॥ यौव-नाद्यतिमत्तेन[3], मत्तनूजेन यन्मुने ! । विराद्धं तत् क्षमस्वोच्चैः, साधवो हि सहिष्णवः ॥ ३७३ ॥ तारुण्यं विभवः शौर्यं, वैभवं[4] विटसंगतिः । अविचारज्ञता[5] चेति, विना मद्यं मदोदयः ॥ ३७४ ॥ किंचाज्ञानांधता यस्य, विश्वांधंकरणी हृदि । अमार्गगमने तस्या—पराधः कस्तपोनिधे ! ॥ ३७५ ॥ ततः प्रसद्य सद्यो मे, दययोज्जीवयात्मजम् । वज्रं[6] विसृज्य मेघो-ऽपि, न प्रीणात्यमृतेन[7] किम् ? ॥ ३७६ ॥ जगाद विक्रममुनि—श्चक्रेऽहं नास्य किंचन । किंतु हंतुमयं धावन्, स्वयमेवाप-तत् क्षितौ ॥ ३७७ ॥ प्राणांतेऽपि न कीटेभ्यो—ऽप्यहो द्रुह्यंति जातु ये । ते कथं कष्टमीदृक्षं, सुते तव वितन्वते ? ॥ ३७८ ॥ श्रुत्वा तदतिदीनस्त—मूचे लक्ष्मणराट् पुनः । भवतैवं कृतं नो चे—ज्जज्ञे तर्ह्यस्य किं ननु ? ॥ ३७९ ॥ यतिर्जगौ ममापि तत्, स्फूर्जत्याश्चर्यमूर्जितम् । नृपस्ततः सबर्हो[8]ऽपि, जज्ञे मूढ इवोच्चकैः ॥ ३८० ॥

---

१ मयूरबंधेन बद्ध इति मयूरबंधबद्ध. २ कल्लोलान् उत्क्रान्ता ( अतिक्रान्ता ) उत्कल्लोला सा चासौ कृपा च तस्या. वार्धि. ३ आदिशब्देन राज्यादेर्ग्रहः. ४ ऐश्वर्यम्. ५ सारासारयोर्विचारं–विवेकं न जानातीत्यविचारज्ञस्तस्य भावस्तत्ता. ६ तीव्रतापम्, विद्युतं वा. ७ जलेन. ८ बर्हः–परिवारः.

अथादित्यमपि स्वांग—दीप्त्या निस्तेजयन्निव । प्रादुर्भूय पुरः कोऽपि, वदति स्म सुरोत्तमः ॥ ३८१ ॥ नृपाधुना सुध-
र्मेंद्रो, नत्वा नंदीश्वरार्हतः । त्वत्पुरोर्ध्वमनेनैव, गच्छन् गगनवर्त्मना ॥ ३८२ ॥ धावंतं यतिघाताय, त्वत्सुतं वीक्ष्य
रोषणः । प्रहिणोति[1] स्म मां देवं, जिनशासनलालसम्[2] ॥ ३८३ ॥ युग्मम् ॥ तनयो दुर्नयोऽयं ते, मयेदृग् विदधे क्रुधा ।
सम्यग्दृशः सहंते हि, मुनीनां नापमाननाम्[3] ॥ ३८४ ॥ तदयं यदि सूनुस्ते, मुनीन् संमानयिष्यति । भविष्यति तदा
सज्जो, नान्यथा त्रिदशैरपि ॥ ३८५ ॥ तदंगीकृत्य भूपेन, तस्य देवस्य शासनात् । मुनिक्रमांभसा सिक्तः, सद्यः सज्जः
सुतोऽजनि ॥ ३८६ ॥ चंडसेनं ततः प्रोचे, देवो रे दुष्ट ! यद्ययम् । मुनिस्तवापशकुनो, वद कः शकुनस्तदा ? ॥ ३८७ ॥
अथवा वर्द्धिपापर्द्धि[*]—पापव्यापपरस्य ते । सुखाय संमुखीनाः स्युः, पापा एव न धार्मिकाः ॥ ३८८ ॥ तीर्थोपास्त्या[5] तपस्या[6]
वा, व्यपास्यति चिरेण याम् । तामहो दुरितश्रेणीं, मुनिर्दर्शनमात्रतः ॥ ३८९ ॥ तपस्तांडवमेतस्य[7], त्वयाऽदर्शि न वा
स्वयम् । यन्महिम्ना महेंद्रोऽपि, दासस्त्वं चाऽसि जीवितः ॥ ॥ ३९० ॥ एवमुक्त्वा मुनिं नत्वा, देवे त्रिदिवमीयुषि[8] । चंड-
सेनो नृपसुतः, क्षमयामास तं भृशम् ॥ ३९१ ॥ ततो लक्ष्मणभूपेन, सतनुजेन साग्रहम् । पृष्टो धर्मस्वरूपार्थ—मूचिवान्[9]
मुनिविक्रमः ॥ ३९२ ॥ वात्यूर्ध्वं पवनो न यद् यदनलस्तिर्यग् न जाज्वल्यते, वर्षत्यंबु यदंबुदो यदवनी तिष्ठत्यनालंबना ।
सूर्याचंद्रमसौ ध्रुवं यदुदितः श्रीर्यज्जडानां गृहे, दिव्याच्छुध्यति[10] यज्जनस्तदखिलं त्वं विद्धि धर्मोर्जितम्[11] ॥ ३९३ ॥

---

१ प्राहिणोत् इत्यर्थः. २ जिनशासनस्य लालसा—इच्छा यस्य तम्. ३ नम्, प्र. ४ नं, प्र. * पापर्द्धिः—मृगया. ५ सेवा. ६ तपस्या—दीक्षा. ७ नृत्यं—चेष्टा.
८ गते. ९ उद् इत. १० गंगाजलादिस्पर्शपूर्वकशपथात्. ११ विलासः.

( शार्दूल० ) धर्मो विश्वंजनीनोऽयं, जिनेंद्रैर्गदितः स्वयम् । निर्भाग्यैरतिदुर्लभः, कामकुंभ इव ध्रुवम् ॥ ३९४ ॥ आहते नृपपुत्राभ्यां, तस्मिन् धर्मे मुनिस्ततः । पारयित्वा विहृतवान्, स्थितिर्नैकत्र तादृशाम् ॥ ३९५ ॥ रत्नावल्यादिभिस्तैस्तैस्तपोभिरतिदुश्चरैः । चेक्लिश्यमानं तं दृष्ट्वा, मुनिचंद्रप्रभुर्जगौ ॥ ३९६ ॥ त्वद्वपुस्तपसाऽनेन, ग्रीष्मार्केण तटाकवत् । शोषितं तदिदं त्यक्त्वा, मुने ! भावय भावनाम् ॥३९७॥ अनया वात्ययेवोच्चैः,कर्मरेणुभरे हृते । भजते विरजीभाव-मात्मा स्फटिकशैलवत् ॥ ३९८ ॥ भावनारसयोगेन, यावन्न क्षाल्यतेतमाम् । पंकिलस्तावदात्माऽयं, कथं नैर्मल्यमश्नुते ? ॥३९९॥ ततो भावनयाऽऽत्मानं, भावयन् स महामनाः । मुक्तिसद्मैकनिःश्रेणीं, क्षपकश्रेणिमाश्रयत् ॥ ४०० ॥ निर्मूल्य सर्वकर्माणि, कलयन् केवलश्रियम् । स विक्रममुनिः प्राप, महानंदमयं पदम् ॥ ४०१ ॥

कथामिमां विक्रमभूमिभर्तु—र्दानादिकृत्येषु समाकलय्य । कुमारपालक्षितिपाल ! तानि, सेवस्व शश्वत् त्वमपि त्रिशुद्ध्या ॥ ४०२ ॥ ( उपजातिः ) ततः सत्पात्रदानादौ, प्रावर्तिष्ट स शिष्टधीः । वृथोपदेशश्रवणं, यदि नाचर्यते हि तत् ॥४०३॥ संघे चतुर्विधे जैने, चैत्ये विंबे च पुस्तके । सप्तक्षेत्र्यां निजं वित्तं, वीजवद् वपति स्म सः ४०४ ॥

अध्यूषिवांसमास्थानी—मथ चौलुक्यभूधवम् । किंचिन्म्लानमुखोऽभ्येत्य, नमश्चक्रे महाजनः ॥ ४०५ ॥ तं वैलक्ष्यपदं वीक्ष्य, पराभूतमिवोच्चकैः । चिंताचांततमस्वांतः, स जगाद भृशादरात् ॥ ४०६ ॥ कुतोऽप्युपद्रवः कश्चित् ?, किमथ न्यायविप्लवः ? । महाजनोऽतिविच्छायो, यत् सायंतनपद्मवत् ॥ ४०७ ॥ ततस्तादृक्कृतप्रश्न—प्रीतिपल्लविताशयाः । नृपं

१ विश्वजनेभ्य हितः २ अत्यंतं क्लिश्यमानम्. ३ खगुरुः. ४ श्रुत्वा. ५ स्वभाववैलक्षण्यास्पदम्. ६ व्याप्ततम०. ७ र. प्र.

विज्ञपयामासु—[1]महाजनपुरस्सराः ॥४०८॥ उपद्रवश्चेत् त्वद्राज्ये, रेणुरब्धौ तदा न किम्? । अन्यायस्तु भवेत् कीदृग्, न स्वप्नेऽप्यन्वभूयत ॥ ४०९ ॥ मंडले [2]तपनस्यापि, जातु संतमसं लसेत् । न तु त्वदुदये स्वामिन्!, किंचिदप्यसमंजसम् ॥४१०॥ किंतु श्रेष्ठी कुबेराख्यः, श्रिया हसितवासवः । आगच्छंस्तुच्छभाग्यत्वाद्, भग्ने पोते मृतोऽम्बुधौ ॥४११॥ तनोत्यमंदमाक्रंदं, निष्पुत्रस्तत्परिच्छदः । तद्धनं श्राह्यतां कुर्मो, यथा तस्योर्ध्वदेहिकम् ॥४१२॥ कियत् तदिति पृष्टास्ते, वदंति स्मातिपुष्कलम् । कौतुकेन ततो भूप–स्तैः समं तद्गृहं ययौ ॥४१३॥ वीक्ष्य तत्र कुबेरस्य, कुटुंबं शोकसंकुलम् । एवं संबोधयामास, [3]सूक्तैर्वैराग्यनिर्भरैः ॥ ४१४ ॥ जीवितव्यं नृणां श्वासो, [4]वायुप्रकृतितश्चलः । निर्गच्छन् प्रविशन्नेव, सोऽपि तिष्ठति संततम् ॥४१५॥ यदैव दैवयोगेन, निर्गत्य प्रविशेन्न सः । तदैव देहिनां मृत्युः, [5]स किं दूरेऽस्ति कुत्रचित्? ॥४१६॥ नवद्वारे शरीरेऽस्मिन्, श्वासवायुश्चलोऽप्यलम् । यत् तिष्ठति कियत्काल–मपि तत् किं न कौतुकम्? ॥४१७॥ विसूचिका विषं शूलं, शस्त्रानलजलादयः । हरंति जीवितं सद्यो, वाताः [6]पंक्तिमपत्रवत् ॥ ४१८ ॥ प्राणिनोऽन्यपथाध्वन्या, व्याघुटंति यदा तदा । कल्पांतेऽपि पुनर्नैव, कालधर्मपथं गताः ॥ ४१९ ॥ कोटिशोऽथ सुवर्णानि, [7]कलधौतानि लक्षशः । सहस्रशो मणीनुष्ट्र—गवाश्वादीनि [8]पूगशः ॥ ४२० ॥ हस्तिनः कतिचिद् दास—वणिक्पुत्राननेकशः । धान्यपूगांशुक[9]क्षौम—चंदनादीनि राशिशः ॥ ४२१ ॥ गेहहट्टप्रवहण—[10]शतांगादीनि भूरिशः । कुबेरस्य गृहे पश्यन्, विस्मेरः प्रोक्तवान् नृपः ॥ ४२२ ॥ त्रिभिर्विशेषकम् ॥ देवः कुबेर एवात्र, कुबेरोऽयमवातरत् । अन्यथा कथमेतस्य, लक्ष्मीरीदृक्

१ अस्माभिरितिशेषः. २ सूर्यस्य. ३ वैराग्यव्याप्तैः श्रेष्ठवचनैः. ४ वातस्वभावात्. ५ मृत्युः. ६ परिपक्व०. ७ रजतानि. ८ समूहशः. ९ वस्त्र०. १० रथादीनि.

समुल्लसेत् ॥४२३॥ ग्राह्यतां सर्वमप्येत—दित्युक्ते व्यवहारिभिः। किंचिन्म्लानमुखांभोजो, राजर्षिर्ध्यातवानिति ॥४२४॥
यमोऽपि हरति प्राणान्, न धनं तत्तदुज्झितम्। हरंतो भूभृतो नूनं, तस्मादप्यतिनिर्दयाः ॥ ४२५ ॥ नरकांतं भवेद्
राज्य—मित्यार्यैर्यदुदीर्यते। तन्नूनं रुदतीवित्त—समाकर्षणपाप्मना ॥ ४२६ ॥ अनाथेभ्यो धनं दातुं, राज्ञां प्रत्युत
युज्यते। प्रसह्य गृह्यते तेभ्य—स्तत् तैः सेयं नवा स्थितिः ॥४२७॥ तत् तृतीयव्रतभ्रंशि, धनं नैतन्ममोचितम्। निर्धार्येति
स धर्मात्मा, महाजनमवोचत ॥ ४२८ ॥ मृते प्राणप्रियेऽपि स्यात्, स्पष्टं कष्टं तथा न हि। निर्वीराणां यथा भूपै—
र्गृह्यमाणे बलाद् धने ॥ ४२९ ॥ द्रव्यं प्राप्नोति पुत्रश्चेद्, रुदतीनां नृपास्तदा। तद् गृह्णंतः कथं नाम, तत्पुत्रा न भवंति
हि ॥४३० ॥ मृतप्राया भवंत्येताः, प्रागपि स्वप्रियव्ययात्। यदाभ्यो द्रविणाऽऽदानं, तन्नूनं मृतमारणम् ॥ ४३१ ॥
विभवेन ततोऽनेन, कुबेरस्य परिच्छदः। सुखं जीव्यादुदीर्येति, नृपस्तस्मै तमार्पयत् ॥ ४३२ ॥ स विवेकलसच्चित्त-स्तत्रै-
वाकार्य सेवकैः। ऊचे पंचकुलं स्वीयं, पश्यत्येव महाजने ॥ ४३३ ॥ उत्पद्यते कियद् भूत, प्रत्यब्दं रुदतीधनम्। लक्ष-
द्वासप्ततिं तेऽपि, प्रोचिरे पत्रवाचनात् ॥ ४३४ ॥ तत्करात् पत्रमादाय, विपाट्य च चिरैलवत्। अतः परं धनं नैतद्,
ग्राह्यमित्यादिशन्नृपः ॥ ४३५ ॥ ततः स सकलैर्लोकै—र्निर्वीराभिश्च निर्भरम्। आशीःस्यमानो राजर्षि—र्गत्वा गुरुमवंदत
॥ ४३६ ॥ तत् कर्तव्यं नृपोपज्ञं, विज्ञाय जनताऽऽननात्। उच्चैश्चमत्कृतश्चित्ते, हेमाचार्यस्तमूचिवान् ॥ ४३७ ॥ लुभ्यंति

१ पतिपुत्ररहितानां स्त्रीणाम्. २ नाशात्. ३ कुबेरस्य परिच्छदाय. ४ स्फाटयित्वा. ५ जीर्णवत्. ६ अत्यन्तम्. ७ आशीर्वादं लभमानः. ८ कार्यम्. ९ कृतम्.

द्रविणं दृष्ट्वा, निर्लोभा अपि तत्क्षणम् । तदेवं तृणवद् देव !, त्वत्तस्त्यजति कः परः ? ॥४३८॥ द्रव्यं गृह्णन्नपुत्राणां, नृपः स्यात् तावतां सुतः । त्वं तु विश्राणयंस्तेषां, पिता भवसि निश्चितम् ॥ ४३९ ॥ गुरुणा गौरवेणेत्थं, समुपश्लोकितो नृपः । अमानिव प्रमोदेन, हृदि स्वास्पदमासदत्[3] ॥ ४४० ॥

अथ स्वपरयोः पुण्यं, चैत्यनिर्मापणाद् विदन् । निर्मापयितुमारेभे, तानि भूपतिरादरात् ॥ ४४१ ॥ पत्तने श्रीत्रिभुवन—पालाख्यं चैत्यमद्भुतम् । पंचविंशतिहस्तोच्चं, कारयित्वा विमानवत् ॥ ४४२ ॥ स्वपितृश्रेयसे तत्र, नेमिबिंबमतिष्ठिपत् । पादान्वितं शतं माना-दंगुलानि स पुण्यधीः ॥ ४४३ ॥ युग्मम् ॥ प्राक्क्षसपललास्वाद-द्वात्रिंशदंतशुद्धये । एकवेद्यां गतौवद्यान्, मंडपादिपरिस्कृतान् ॥ ४४४ ॥ नंदीश्वरस्फुरद्राज-धानीचैत्यानुजानिव । प्रासादान् कारयामास, तावत्संख्यान् क्षमाधवः ॥ ४४५ ॥ युग्मम् ॥ गुरोरादेशतस्तत्र, द्वौ सितौ द्वौ शितंद्युती । द्वौ रक्तौ द्वौ च नीलांगौ, षोडश स्वर्णरोचिषः ॥ ४४६ ॥ चतुर्विंशतिचैत्येषु, नाभेयप्रमुखाञ् जिनान् । चतुर्षु चतुरः सीमं-धरादीनुधृतेष्वथ ॥ ४४७ ॥ रोहिणीं[12] समवसृतिं, स्वगुरोः पादुकाद्वयीम् । अशोकद्रुं च विस्तीर्णं, स विधाप्य न्यवीविशत् ॥ ४४८ ॥ त्रिभिर्विशेषकम् ॥ दुःस्थत्वे भ्रमता पूर्वं, निर्धनेन महीभृता । हृतासु रूप्यमुद्रासु, यो मृतोऽभवदुंदुरः ॥ ४४९ ॥ तदुत्थाघनिदाघस्य, लाघवार्थमचीक्लृपत् । स धारा[13]यंत्रवच्चारु, चैत्यमुंदुरसंज्ञकम् ॥ ४५० ॥ अविदुष्याऽपि नामाद्यं,

१ यावतामपुत्राणाम्. २ ददत्. ३ स्वस्थानम्. ४ आपत्. ५ छात (परथार) इति ख्यातवद्भूमिभागात्. ६ पंचविंशत्यधिकं शतमंगुलानि. ७ निर्दोषान्. ८ अलंकृतान्. ९ द्वात्रिंशत्सख्याकान्. १० श्वेतौ. ११ कृष्णौ. १२ रोहिणीं-प्रथमां विद्यादेवीम्. १३ "फुंवारो" इति लोके.

यथा देवश्रिया पुरा । त्र्यहं[1] बुभुक्षितो मार्गे, करंभं भोजितो नृपः ॥ ४५१ ॥ कृतज्ञत्वेन तत्पुण्य—वृद्धये स्वार्थसिद्धये ।
स करंभवसत्याख्यं, विहारं निरमापयत्[2] ॥ ४५२ ॥ राजर्षिरन्यदा प्राप्त—श्चैत्यं वाग्भटकारितम् । जिनाधीशान् नम-
स्कर्तुं, तिरस्कर्तुं च किल्बिषम्[3] ॥ ४५३ ॥ तत्रायाति स नेपाल—नृपप्रहितमद्भुतम् । प्राक्तनैः[4] कथितं माना—दंगुला-
न्येकविंशतिम् ॥ ४५४ ॥ बिंबं श्रीपार्श्वनाथस्य, चंद्रकांतमणिमयम् । बाह्याभ्यंतरसंताप—नाशकं दर्शनादपि ॥ ४५५ ॥
युग्मम् ॥ तद्बिंबं चंद्रबिंबाभं, पश्यतो नृपतेर्मुहुः । अमोदिषातामुचितं, कुमुदे इव लोचने ॥ ४५६ ॥ तां मूर्तिं[5] स्वकरे
कृत्वा, भूपो वाग्भटमभ्यधात् ॥ देहि मह्यमिदं चैत्यं, यथैतां स्थापयाम्यहम् ॥ ४५७ ॥ हृष्टो व्यजिज्ञपत् सोऽपि, प्रसादो-
ऽयं महान् मयि । श्रीकुमारविहारोऽस्तु, चैत्यमेतदतःपरम् ॥ ४५८ ॥ उज्ज्वलीकार्य तद् बिंबं, पट्टुवैकटिकव्रजैः[6] ।
स्वचित्त इव तत्रैव, चैत्ये भूभृदतिष्ठिपत् ॥ ४५९ ॥ चैत्यस्य शुकनाशेव[7], कृते छिद्रेऽतिपुष्कले । तस्य बिंबस्य संपन्नः[8],
पूर्णेंदुकरसंगमः ॥ ४६० ॥ श्रवति स ततो बिंबा—च्चंद्रबिंबादिवोच्चकैः[9] । सुधारसः समस्ताधि—व्याधिध्वंसनिबंध-
नम् ॥ ४६१ ॥ तेन दिव्यौषधेनेव, दोषाः सर्वेऽपि चाक्षुषाः । तापाश्च विविधाः सद्यः, शांतिं यांति स्म देहिनाम् ॥४६२॥
चिकारयिषितं[10] पूर्वं—मर्णोराजपराजये । चतुर्विंशतिहस्तोच्चं, चैत्यं तारंगभूधरे ॥ ४६३ ॥ विधाप्याजितनाथस्य, बिंब-
मेकशतांगुलम् । नृपो निवेशयामास, मूर्तं धर्ममिवात्मनः ॥ ४६४ ॥ युग्मम् ॥ स्तंभतीर्थे प्रभोर्हैम—सूरेर्यत्राभवद्

१ दिनत्रयम्. २ अकारयत्. ३ पापम्. ४ पूर्वपुरुषैः. ५ मूर्तिम्. ६ झवेरी इति लोके. ७ चालनीव जालिका–शुकनाशा. ८ च-प्र. ९ चंद्रकिरणसंगमात्.
१० कारयितुम् इष्टं–वांच्छितम्.

व्रतम् । श्रीआलिंगाख्या वसतिः[1], साऽऽसीज्जीर्णतमा क्रमात् ॥ ४६५ ॥ गुरुस्नेहेन राजर्षि—स्तां नवीकार्य[2] मूलतः । अस्थापयद् रत्नमयं, बिंबमंत्यजिनेशितुः ॥ ४६६ ॥ एषु सर्वेषु चैत्येषु, महामहिमपूर्वकम् । हेमाचार्यः स्वहस्तेन, प्रतिष्ठां विधिवद् व्यधात् ॥ ४६७ ॥ अर्चार्थमेषां चैत्याना—मारामान् पुष्पसंकुलान् । आदायानपि[3] भोगाय, भूरिशो भूपतिर्ददौ ॥ ४६८ ॥ ततोऽस्मद्देयदंडेन, युष्माभिर्निजनीवृति[4] । विहारा बहवः कार्याः, शिवशैलाग्रजा[5] इव ॥ ४६९ ॥ इति प्रधानैरादेश्य, विषयेषु परेष्वपि । स तान् विधापयामास, नृपैराज्ञावशंवदैः[6] ॥ ४७० ॥ युग्मम् ॥

गूर्जरो[1] लाट[2]सौराष्ट्र[3]—भंभेरी[4]कच्छ[5]सिंधवः[6] । उच्चा[7] जालंधरः[8] काशी[9], सपादलक्ष[10] इत्यपि ॥४७१॥ अंतर्वेदि[11]र्मरु[12]र्मेद[13]—पाटो मालवक[14]स्तथा । आभीराख्यो[15] महाराष्ट्रः[16],कर्णाटः[17] कोंकणो[18]ऽपि च ॥४७२॥ देशेष्वष्टादशस्वेषु, चौलुक्यनृपकारिताः । विहारा रेजिरे मूर्ता, तत्कीर्तिप्रकरा इव ॥ ४७३ ॥ त्रिभिर्विशेषकम् ॥ समुत्तीर्णाः स्वर्गादिह किमु विमानाः स्वयममी, भुवं भित्त्वा प्रापन्नुत भवनपव्यंतरगृहाः । अथाभूवन् रूप्यस्फटिकहिमशैलागणंतिथाः[10], विहारा राजर्षेरिति कविभिरौह्यंत[11] जगति ॥ ४७४ ॥ ( शिखरिणी )

सुराष्ट्रास्वथ दर्पिष्ठो, राणः समरसाभिधः । अंकुशं मत्तहस्तीव, चौलुक्याज्ञाममंस्त न ॥ ४७५ ॥ तन्निग्रहार्थमत्युग्रै—र्मंडलाधीश्वरैः सह । प्रैषीदुदयनामात्यं, सेनानीकृत्य भूमिभुक् ॥ ४७६ ॥ वर्धमानपुरं प्राप्य, तत्र सैन्यं निवेश्य

---

१ जिनभवनम्. २ नवीम्, प्र. ३ घनानि. ४ स्वकीयदेशे. ५ कैलास०. ६ वशीभूतैः. ७ प्रथमाबहुवचनम्. ८ कीर इत्यन्यत्र. ९ दीप इत्यन्यत्र. १० गणानां पूरणाः, गण—असंख्यावचाकत्वेऽपि पूरणे डट् तिथुगागमश्च वाचस्पत्ये. ११ अतर्क्यन्त.

च । विमलाचलमारुक्ष—न्मंत्री देवनमश्चिकीः ॥ ४७७ ॥ तत्र नत्वाऽर्चयित्वा च, श्रीनाभेयं यथाविधि । स मुनींद्रवदारंध, विधातुं चैत्यवंदनाम् ॥ ४७८ ॥ तदा दीप्रां मुखे वर्त्ति, दीपादादाय मूषकः । काष्ठचैत्यबिले गच्छन्, कथंचिन्मोचितोऽर्चकैः ॥ ४७९ ॥ तद् दृष्ट्वा ध्यातवान् मंत्री, ज्वलद्वर्त्तिप्रसंगतः । काष्ठचैत्ये ज्वलत्यस्मिन्, ध्रुवं तीर्थक्षयो भवेत् ॥ ४८० ॥ धिगस्मान् क्षितिपापार—व्यापारैकपरायणान् । जीर्णचैत्यमिदं ये न, प्रोद्धरामः क्षमा अपि ॥ ४८१ ॥ विवृत्य सर्वतो रेणु—पूरं तन्मध्यतः शुभम् । रत्नाद्यमाददानास्ते, विदग्धा धूलिधावकाः ॥ ४८२ ॥ वयं पुनर्जडास्तत्तत्—प्रमादोरुरजोभरैः । गमयंतो निजं धर्म—रत्नं हस्तोदरस्थितम् ॥ ४८३ ॥ तया श्रिया च किं क्ष्माप—पापव्यापारजातया ? । कृतार्थ्यंते न तीर्थादौ, या निवेश्याधिकारिभिः ॥ ४८४ ॥ ईदृगुच्चैःपदं नीतः, श्रियाऽहमनया यदि । तदा ममा(या)पि युक्तेयं, तन्नेतुं तीर्थरोपणात् ॥४८५॥ यावत् कार्यं प्रभोः कृत्वा, चैत्यं नैवेदमुद्ध्रिये । ब्रह्मव्रतैकभक्ताद्या—स्तावन्मे संत्वभिग्रहाः ॥ ४८६ ॥ सप्तभिः कुलकम् ॥

उत्तीर्योदयनस्तस्मात्, ससैन्यः प्रास्थित द्रुतम् । मंदायंते न जात्या हि, भृत्याः स्वस्वामिशासने ॥ ४८७ ॥ प्राप्य चारिपुरोपांतं, तं दूतेनेत्यवीवदत् । मन्यस्वाज्ञां मदीशस्य, युध्यस्वाथ बली यदि ॥ ४८८ ॥ दूतवाचा तया क्रुद्धः, सुप्तोत्थापितसिंहवत् । वैरी समरसस्तस्य, बभूवाभिमुखो युधे(धि) ॥ ४८९ ॥ राजन्यैर्जन्यसंरब्धैः, स्फूर्त्तिमान् स रिपुर्बभौ । दर्पादिभिः सहचरै—र्वीरो रस इवांगवान् ॥ ४९० ॥ आद्यं वैरं विवृण्वंतो, वृण्वंतश्च यथोचितम् । सुभटाः

१ प्रारब्धवान्. २ नम्र, प्र०. ३ जीर्ण, प्र०. ४ विस्तार्य. ५ उच्चै पदम्. ६ राजवंशजैः—क्षत्रियैरित्यर्थः. ७ युद्धोत्साहिभिः. ८ प्रकटयंतः.

प्रकटोत्साहा, योद्धुमारेभिरे भृशम् ॥ ४९१ ॥ शस्त्रघाता लगंतोऽपि, नांगे [1]विविदिरे भटैः । निःशेषद्वेषिनिष्पेष—
ध्यानमग्नमनस्तया ॥ ४९२ ॥ कातरत्वेन ये योद्धुं, पुरा न प्रजगल्भिरे । हतान् स्वान् वीक्ष्य तेऽप्युच्चै-र्विक्रमं प्रतिपे-
दिरे ॥ ४९३ ॥ खड्गाखड्गि कुंताकुंति, बाणाबाणि गदागदि । केशाकेशि मुष्टामुष्टि, योधा युयुधिरे तदा ॥ ४९४ ॥
अथ भग्ने निजानीके, प्रत्यनीकैः सविक्रमैः । मंत्री योद्धुमढौकिष्ट, रुष्टः काल इव स्वयम् ॥ ४९५ ॥ प्रविष्टास्तद्धनुर्ध्वा[2]नाः
कर्णजा[3]हं विरोधिनाम् । नश्यतं द्राग् मृता नो चे-दिति वक्तुमिव ध्रुवम् ॥ ४९६ ॥ संधायामात्यवीरेण, बलाच्चिक्षिपिरे
शराः । प[4]रे पुनः पतंतिस्म, रणक्षेत्रेऽतिकौतुकम् ॥ ४९७ ॥ आहवे प्रहरत्यस्मिन्, सिंहवत् संहतौ[6]जसि । के न पंचत्वमा-
नंचु—वैं[5]रिणो हरिणा इव ? ॥ ४९८ ॥ तेनोदयनवीरेण, कृतांतेनेव सर्वतः । मार्यमाणं बलं वीक्ष्य, क्रुद्धः समरसो
भृशम् ॥ ४९९ ॥ ततः कटीस्फुरत्तूणः, पाणौ कार्मुकमावहन् । स्फारवीररसोत्सेका-दूर्ध्वीभूतकचोच्चयः ॥ ५०० ॥
सांयु[7]गीनहयारूढः, प्ररूढप्रौढविक्रमः । सचिवस्य पुरः सोऽभूद्, धनुर्वेद इवांगवान् ॥ ५०१ ॥ युग्मम् ॥ कृ[8]तार्थं मन्य-
मानौ स्वं, सदृक्सुभटसंगमात् । गजाविव च गर्जंतौ, युयुधाते क्रुधाऽ[9]थ तौ ॥ ५०२ ॥ तौ बाणं प्रतिमुंचंतौ, बाणं घ्नंतौ
च ते[10]नं तम् (तत्) । कृतप्रतिकृतौचित्यं, लुलुपाते न मित्रवत्[11] ॥ ५०३ ॥ प्रसरंतोऽतिवेगेन, स्खलंतोऽन्तर्न[12] सर्वथा ।
सम्यक् सत्यापयामासु-स्तद्बाणा बाजितां निजाम् ॥ ५०४ ॥ सचिवो वंचयित्वाऽथ, द्विपः कांडविखंडनम् । तद्धृ[13]दि

१ न ज्ञायंतेस्म. २ शब्दाः. ३ कर्णजाहं–कर्णमूलमित्यर्थः, ४ ताम्–प्र०. पलायध्वम्. ५ शत्रवः. ६ दृढपराक्रमे. ७ युद्धकुशल०. ८ कृतार्थं–प्र. कृतार्थे–प्र.
९ क्रुधोद्यतौ, प्र. १० स्वबाणमोचनेन परबाणप्रतिघातेन. ११ वयस्यवत्. १२ बाणतां–आशुगामित्वम्. १३ शत्रुहृदये.

न्यखनद् वाणं, स्वविक्रममिवोच्चकैः ॥ ५०५ ॥ तत्प्रहारक्षरद्रक्तः, सोऽपि राजानको रुषा । मंत्रिणं ताडयामास, भाले
तीक्ष्णेन पत्रिणा ॥ ५०६ ॥ रणे तौ रेजतुः शस्त्र-क्षतक्षरदसृग्भरौ । सगैरिकझरोद्गारौ, वर्षन्तौ पर्वताविव ॥ ५०७ ॥
द्वयोरंतर्जयः कस्ये-त्येवं चिंतापरे जने । शितेषु गार्द्धपंक्षेषु, निपतत्सु निरंतरम् ॥ ५०८ ॥ प्रहारजर्जरांगोऽपि,
मंत्रीशो हस्तलाघवात् । मर्मण्याहत्य वाणेन, द्विषं तमवधीद् युधि ॥ ५०९ ॥ युग्मम् ॥ बभूवोदयनानीके, जितं जितमिति
ध्वनिः । स्फुरन्नूपुरझंकार, इवायांत्या जयश्रियः ॥ ५१० ॥ कीर्त्त्या सह द्विपलक्ष्मीं, समादाय तदंगजम् । तत्पदे न्यस्य
मंत्रींदुः, स्कंधावारोन्मुखोऽभवत् ॥ ५११ ॥ अरुंतुदप्रहारोद्य-द्वेदनामीलितेक्षणः । अज्ञातुमिव तद्दुःखं, मूर्च्छामानर्च्छ[3]
सोऽध्वनि ॥५१२॥ पवनाद्युपचारेण, कृच्छ्रात् प्राप्य चेतनाम् । तमुत्पाट्य च तद्भृत्या, निन्यिरे शिविरांतरम्॥५१३॥
तत्र स्रस्तरविन्यस्त-देहः स्नेहपरैर्जनैः । सम्यक्शुश्रूष्यमाणोऽपि, चक्रंद सचिवो मुहुः ॥ ५१४ ॥ ततस्तं प्रश्नयामासु-
र्नेदिष्ठा मंडलाधिपाः । करुणं कारणात् कस्मा-दद्यैवं क्रंदते प्रभो ! ॥५१५॥ पुराऽपि चक्रिरेऽनेके, वैरिविद्रावणा रणाः ।
प्रहारा अपि लग्नास्ते, वीरश्रीमंडनोपमाः ॥ ५१६ ॥ परं नैवाधृतिर्दध्रे, महीभ्रस्थिर ! कर्हिचित् । तस्माच्छल्यं यदंतस्ते,
तत् प्रसद्य निगद्यताम् ! ॥ ५१७ ॥ अथोदयनमंत्री तान्, निजगाद सगद्गदम् । व्यथंते नैव मामेते, घाता दुर्विषहा
अपि ॥ ५१८ ॥ ये स्वामिशासनात् प्राणां-स्तृणयंति रणानले । तेषां वीरावतंसानां, प्रहाराः सुखभक्षिकाः ॥ ५१९ ॥
किंतु पूर्वं प्रतिज्ञाता, मया नियमपूर्वकम् । शत्रुंजयस्य शकुनी—चैत्यस्य च समुद्धृतिः ॥ ५२० ॥ अद्यैवं मरणे[6] प्राप्ते,



१ वाणेषु २ तद्भृ ख-प्र. ३ आप. ४ नाशकाः. ५ त्वया-इति शेषः. ६ मरण-प्र.

श्रेय[1]:श्रेणिरिवोच्चकैः । सा भज्यमाना हृदयं, सपत्राकुरुते[2] मम ॥५२१॥ ऋणमन्यदपि प्रायो, नृणां दुःखाय जायते । यद् देवस्य ऋणं तत् तु, महादुःखनिबंधनम् ॥५२२॥ एकं देवर्णमन्यन्मे, संगरो[3]ऽपि च भंगुरः । चिंतयन् द्वयमप्येतत्, क्रंदन्नस्थ्यद्य मंदवत् ॥ ५२३ ॥ श्रुत्वा तन् मंडलाधीशाः, प्रोचिरेऽतिचमु(म)त्कृताः । चितावत् तापिनीं चिंतां, स्वामिन् ! माऽत्र कृथा वृथा ॥५२४॥ ग्राहयित्वैकभक्तादीन्, निखिलांस्त्वदभिग्रहान् । वाग्भटाम्रभटाभ्यां त्व-त्पुत्राभ्यामचिरादपि ॥५२५॥ तीर्थावुद्धारयिष्यामो, द्वावपि त्वत्प्रतिश्रुतौ । लग्नका वयमेव स्मः, कर्मण्यस्मिंस्त्वदुक्तवत् ॥ ५२६ ॥ युग्मम् ॥ पितृभक्तिमुचौ तौ चे—च्चैत्ये नैवोद्धरिष्यतः । वयं तदोद्धरिष्यामः, श्रेयः कस्य न हि प्रियम् ? ॥५२७॥ तद्वाक्यामृतपानेन, सज्जितात्मेव धीसखः । जगादानीयतां साधुः, कोऽप्यंताराधनाकृते ॥ ५२८ ॥ अनासाद्य ततः क्वापि, मंडलेशा महाऋषिम् । समाधिभंगोऽमात्यस्य, माभूदिति मनीषया ॥५२९॥ [4]वंठं कमप्यनुलंठं, शिक्षयित्वा मुनिक्रियाम् । तद्वेषं कारयित्वा च, समानैषुस्तदन्तिकम् ॥५३०॥ युग्मम् ॥ तं गौतममिवानम्य, क्षमयित्वा तथांगिनः । निंदित्वा दुरितं पुण्य—मगण्यमनुमोद्य च ॥५३१॥ सम्यक्त्वं पुनरुज्ज्वाल्य[5], तद्दोषोन्मार्जनाजलैः । भावनाद्भुतसौरभ्यै—रात्मानमधिवास्य[6] च ॥५३२॥ सद्ध्यानरसवेधेन[7], कल्याणीकृत्य मानसम् । बभूवोदयनामात्यः, स्वर्गलक्ष्मीविशेषकः[8] ॥५३३॥ त्रिभिर्विशेषकम् ॥ तस्यांत्यं कृत्यमातत्य[9], शोकसंकुलमानसाः । ततश्चौलुक्यसामंताः, पत्तनं प्रत्यचालिषुः ॥ ५३४ ॥

स वंठोऽथ मुनिवेष—भृत्या नत्या च मंत्रिणः । वृष्टयेवांकुरितोद्दाम—विवेकद्रुरचिंतयत् ॥५३५॥ ईदृशं वंदयित्वैनं,

१ कल्याणपरंपरा. २ वाणविद्धं कुरुते. ३ प्रतिज्ञा. ४ अकृतोद्वाहम्. ५ उज्ज्वलं कृत्वा. ६ अधिवासितं कृत्वा. ७ रससंबंधेन. ८ तिलकः-शिरोधार्यः. ९ कृत्वा.

मंत्रिणं पुण्यवत्तमम् । यदि स्यां कर्मकृद् भूय—स्तदा मे का विदग्धता ? ॥५३६॥ एवमेव धृते यैत्रो—जागरं गुरुगौरवम् । साधुवेषे श्रिते तस्मिन्, भावतो भावि किं फलम् ? ॥ ५३७ ॥ तदनेनैव वेषेण, करोम्यामुष्मिकं हितम् । धर्मस्येव ममैतस्य, प्राप्तिः कौतस्कुती पुनः ॥ ५३८ ॥ ध्यात्वेति रैवताख्याद्रि—मधिष्ठाय तथैव सः । शुद्धानशननिःश्रेण्याऽ—ध्यारुरोह सुरालयम् ॥ ५३९ ॥

इतो मांडलिकास्तेऽपि, त्वरया प्राप्य पत्तनम् । प्राभृतीचक्रिरे वैरि—लक्ष्मीं चौलुक्यभूभृतः ॥ ५४० ॥ व्यजिज्ञपंश्च युगपत्, तस्योदयनमंत्रिणः । विक्रमं चावसानं च, चमु(म)त्कारैककारणम् ॥ ५४१ ॥ कर्णयोः क्रकचाभं त—न्निशम्य वचनं नृपः । आस्यान्निरस्य तांबूल—मन्वशेत स्ववंधुवत् ॥ ५४२ ॥ वाग्भटप्रमुखास्तेऽपि, मंत्रिपुत्राः पितुः कथाम् । मत्वा वज्रानलप्लुष्टा, इव विव्यथिरेतमाम् ॥ ५४३ ॥ भूधवः सौधमभ्येत्य, तत्परिच्छदमादरात् । संबोध्य च महामात्य—पदे न्यास्थत वाग्भटम् ॥ ५४४ ॥

अथैत्य मंडलाधीशा, वाग्भटाम्रभटौ प्रति । आवेद्य मंत्रिणस्तीर्थो—द्धारसंगरमूचिरे ॥५४५॥ युवां यदि पितुर्भक्तौ, धर्ममर्मविदावपि । उद्ध्रियेथां तदा [11]तीर्थौ, गृहीत्वा तदभिग्रहान् ॥५४६॥ स्तुत्याः सुतास्त एव स्युः, पितरं मोचयंति ये । ऋणाद् देवऋणात् तातं, मोचयेथां युवां ततः ॥५४७॥ सवितर्यस्तमापन्ने, मनागपि हि तत्पदम् । अनुद्धरंतस्तनया, निंद्यन्ते शनिवज्जनैः ॥५४८॥



१ भाव विना. २ साधुवेषे. ३ अतिमहत्ता. ४ पारलौकिकम्. ५ कुत कुतः कारणात् भवति. ६ त्यक्त्वा. ७ पश्चात्तापं करोतिस्म. ८ ज्ञात्वा. ९ दग्धा. १० व्यथतेस्म, विव्यथिरेतराम्, प्र. ११ शत्रुंजयशकुनीचैत्यरूपौ.

सुधावत् तद्गिरं पीत्वा, हृष्टावुदयनात्मजौ । एकैकं तीर्थमुद्धर्तुं, दधतुर्नियमान् पितुः ॥५४९॥ तदर्थमथ विज्ञप्तो, भूभृद् वाग्भटमूचिवान् । कार्ये विश्वजनीनेऽस्मिन्, किं प्रष्टव्योऽस्मि धीनिधे !॥ ५५० ॥ तीर्थः शत्रुंजयश्चैत्य—मुद्धृत्यं त्रिजगत्प्रभोः । भवानुद्धारकस्तत्तं किं, येनैतन्नानुमन्यते ॥५५१॥ ततोऽतिसत्कृतो राज्ञा, गुर्वाशीभिश्च वर्धितः । महर्द्ध्या वाग्भटस्तीर्थं, प्रति प्रास्थित भूपवत् ॥ ५५२॥ क्षिप्रं शत्रुंजयं गत्वा,नत्वा चादिजिनेश्वरम् । दत्त्वा गुरूदरावासान्, ससैन्योऽपि स तस्थिवान् ॥ ५५३ ॥ मेलयामास च छेकान्,सूत्रधाराननेकशः । विश्वकर्माऽपि विज्ञानं, यत्पार्श्वेऽधिजिगांसते ॥५५४॥ तत्र चैत्योद्धृतिं श्रुत्वा,प्रायः साधर्मिका घनाः । स्वश्रीव्ययेन पुण्यश्री—विभागमभिलिप्सवः ॥५५५॥ तद्देश्यश्च वणिक् कोऽपि, भीमः षड्द्रम्मनीविकः । वहन् स्वमूर्ध्नि कुतुपं, कटकेऽभ्येत्य मंत्रिणः ॥ ५५६ ॥ विक्रीय च घृतं सर्वं, व्यवहारविशुद्धितः । रूपकेणाधिकं द्रम्म—मेकं छेकतयाऽर्जयत् ॥५५७॥ युग्मम् ॥ द्रम्मान् सप्तापि नीव्यर्थं, ग्रंथौ बद्ध्वा स धार्मिकः । कुसुमै रूपकक्रीतैः, श्रीनाभेयं तदाऽर्चयत् ॥ ५५८ ॥ इतस्ततः परिभ्राम्यन्, कटकालोककौतुकात् । भीमो गुरूदरद्वार—मागाद् वाग्भटमंत्रिणः ॥५५९॥ दौवारिकैर्मुहुर्दूरी—क्रियमाणोऽपि रंकवत् । सोऽन्तर्मंत्रिणमद्राक्षीत्, सदस्थं दिव्यवैभवम् ॥ ५६० ॥ दध्यौ च पार्श्वलोकोऽस्य, शृंगारैर्दिविषद्गणः । मध्यस्थितः पुनरयं, लीलया नाकनायकः[13] ॥ ५६१ ॥ अहो मर्त्यतया तौल्य—मस्य मेऽपि गुणैः पुनः । द्वयोरप्यंतरं रत्नो—पलयोरिव हा कियत् ॥ ५६२॥ सेव्यतेऽयं गुणव्रातै—र्वशी-

१ उद्धारार्थम्. २ तीर्थे, प्र. ३ ये चै० प्र. ४ तत् एतत् किं कार्यं. ५ स्तुतोऽनुमोदित-उत्साहित इति यावत्. ६ देवानां शिल्पी. ७ अध्येतुमिच्छति, ८ ध्रुतं. प्र. ९ नीविः–मूलधनम्. १० घृताधारं चर्मपात्रं (कुडली). ११ सेवकैः. १२ ऽति, प्र. १३ स्वर्गनायकः.

भूतैरिवाऽनिशम् । स्थानाभावादिवान्यत्र, निपेव्येऽहं तु दूपणैः ॥ ५६३ ॥ श्रीयतेऽयं श्रियाऽश्रांतं, पुरुषोत्तमविभ्रमात् । तदीर्ष्ययेव श्रीयेऽह-मलक्ष्म्या पुरुषाधमः ॥ ५६४ ॥ स्वकीर्तिस्पर्धयेवायं, मंत्री विश्वोदरंभरी । अहं तु हंतको नास्मि, स्वनिर्वाहेऽपि शक्तिमान् ॥ ५६५ ॥ महांतोऽपि स्तुवंत्येनं, दानमानवशीकृताः । दारिद्र्योपद्रवोद्विग्ना, स्तौति मां मत्प्रियाऽपि न ॥ ५६६ ॥ एतादृक्षं महातीर्थ-मप्युद्धर्तुमयं क्षमः । न कायमानमप्यस्मि,नवीकर्तुमहं सहः ॥५६७॥ अयमेव ततो मंत्री, मन्ये पुण्ये निदर्शनम् । ईदृग्लीलायितं यस्य, चक्रवर्तिविजित्वरम् ॥ ५६८ ॥ इति ध्यानपरो भीमो, द्वाःस्थेन गलहस्तितः । कथंचिन्मंत्रिणा वीक्ष्य,समाकार्यत तत्क्षणम् ॥५६९॥ प्रणिपत्य पुरस्तिष्ठन् , स स्वात्मीय मि(इ)वादरात् । प्रश्नितस्तेन कोऽसीति, स्ववृत्तं प्राक्तनं जगौ ॥५७०॥ धन्यस्त्वं निर्धनोऽप्येवं, यो जिनेंद्रमपूजयत् । धर्मबंधुस्त्वमसि मे, ततः साधर्मिकत्वतः ॥ ५७१ ॥ सभाऽध्यक्षमिति स्तुत्वा, भीत्याऽनुपविशन्नपि । स स्वासने बलेनैव, वाग्भटेन न्यवेश्यत ॥५७२॥ स दिव्यवसनामात्य—संगतो मलिनांशुकः । दीप्रमाणिक्यनेदिष्ठ—श्यामाश्मसमतामधात् ॥ ५७३ ॥ भीमोऽध्यासीद् दरिद्रोऽपि, मानितोऽहमनेन यत् । तन्नूनं जिननाथार्चा—पुण्यतेजो विजृंभते ॥५७४॥ स्थूललक्षाः क्षणे तस्मि—न्नेत्य साधर्मिका मुदा । इति व्याजह्रिरे मंत्रि—राजं राजंतमंजसा ॥५७५॥ प्रभविष्णुस्त्वमेकोऽपि, तीर्थोद्धारेऽसि धीसख ! । बंधूनिव तथाऽप्यस्मान्, पुण्येऽस्मिन् योक्तुमर्हसि ॥ ५७६ ॥ पित्रादयोऽपि वंच्यंते, कदाचित् क्वापि धार्मिकैः । न तु साधर्मिका

१ भरि , प्र. २ नष्टप्रायः. ३ तीर्थमिति संबध्यते. ४ अपसारणार्थं गले-कंठे अर्पितः-न्यस्तः हस्त -गलहस्तः स संजातोऽस्य "तदस्य संजातं तारकादिभ्य इतच्" इति गलहस्तित–जातगलहस्त–इत्यर्थः. ५ घृतविक्रयलाभपूजादि, ६ शीघ्रं. ७ प्रभावशीलः–समर्थः.

धर्मे-स्नेहपाशनियंत्रणात् ॥५७७॥ ततो यत् किंचन द्रव्यं, वयं भावेन दद्महे। तीर्थे तदस्मिन् विन्यस्य, प्रार्थितं नः कृतार्थय ॥५७८॥ तेषामित्यतिनिर्बंधा-न्मंत्री दाक्षिण्यनीरधिः। तन्नामानि क्रमेणैव, पत्रे स्वयमलीलिखत् ॥५७९॥ आनीयमाने कनको-त्करे तैर्व्यवहारिभिः। सचिवार्धासनासीनो, भीमश्चित्ते व्यचीचरत् ॥५८०॥ अहो ममोपयुज्येरं-श्चैत्यकर्मणि चेदिह। द्रम्माः सप्तापि नीवीस्थाः, कृतार्थः स्यामहं तदा ॥५८१॥ मंदाक्षमंदस्तद्वक्तु-मक्षमः सोऽतिदाक्ष्यतः। विज्ञाय मंत्रिणाऽभाणि, ब्रूहि त्वं किं विवक्षसि ? ॥ ५८२ ॥ स प्राप्तैश्वर्यवत् प्रीतो, निःशंकं तमवोचत। गृह्यतां चैत्यकृत्येऽस्मिन्, ममापि द्रम्मसप्तकम् ॥५८३॥ चित्ते चमत्कृतो मंत्री, तमूचे देहि तद् द्रुतम्। पूर्णा चैत्योद्दिधीर्षा मे, स्वां नीवीं त्वमदा यदि ॥ ५८४ ॥ तेन रोमांचितांगेन, दत्ते तस्मिन् स्वकोशवत्। तन्नाम सर्वनामादौ, पत्रे श्रीवाग्भटोऽलिखत् ॥ ५८५ ॥ तद् दृष्ट्वांजनवत् कृष्ण-मुखाञ् श्राद्धान् महर्द्धिकान्। मंत्री स्माह कुतो यूय-मेवं विच्छायतामिताः ? ॥ ५८६ ॥ ददतोऽपि बहुद्रव्यं, समा नैवास्य सर्वथा। शतांशमपि नादिद्धं, यन्नीव्यास्तामदादयम् ॥५८७॥ अपत्रपिष्णवो वाचा, तया तेऽधो व्यलोकयन्। मन्यते स्माऽतिधन्यं स्वं, स भीमः सुस्तुतेस्ततः ॥ ५८८ ॥ अथ पंचशतीं द्रम्मान्, पट्टवस्त्रत्रयं नवम्। अमात्यो बहुमानेन, तस्मै दातुं प्रचक्रमे ॥ ५८९ ॥ भीमोऽभ्यधादहं पुण्यं, महन्नैतावता व्यये। कोटिं काणकपर्देन, कः पटुर्गमयत्यहो ? ॥ ५९० ॥ ततोऽनुज्ञाप्य मंत्रींद्रं, स ययौ मंदिरं निजम्। पिशाच्या इव पत्नीतो, बिभ्यत् सर्वधनार्पणात् ॥ ५९१ ॥ तदा स्त्रियाऽन्ययेवोच्चैः, स्निग्धैर्वाक्यैः स तोषितः। विमृष्टवानहो चित्रं, यदद्येयं प्रियंवदा ॥ ५९२ ॥

१ लज्जालु: २ वक्तुमिच्छा. ३ यूयमितिशेषः. ४ यस्मात्. ५ नीवीम्. ६ स्वभावतो लज्जाशीलाः-लज्जालवः.

यथा विषे न पीयूषं, यथा वह्नौ न नीरजम्। तथा लोकंपृणं वाक्यं, न जात्वस्या मुखेऽजनि ॥ ५९३ ॥ यद्येषा राक्षसी-वोग्रा, सौम्याऽऽसीत् प्रेयसी मम। ततोऽहं सकलं मन्ये, धन्यमद्यतनं दिनम् ॥ ५९४ ॥ भीमस्तामूचिवान् द्रव्य—व्ययाद्यं चरितं ततः। साऽपि हृष्टा तमाचष्ट, स्वामिन्! सम्यक् कृतं त्वया ॥५९५॥ द्रव्यं व्ययीभवत्येव, सर्वेषां गृहकर्मणि। प्रासादादौ तु कस्यापि, भविष्यद्भद्रसंन्ततेः ॥ ५९६ ॥ तच्चौचिति त्वया साधु, यन्नाऽऽत्तं मंत्रिणो धनम्। परकीयं धनं तीर्थे, स्वीकुर्यादेवमेव कः? ॥ ५९७ ॥

अथ बंधकृते धेनोः, स्थाणुन्यासाय भूतले। खन्यमाने निधिं लेभे, भीमो धर्ममिवोत्तमः ॥५९८॥ स सुवर्णमयांस्तत्र, चत्वारिंशच्छतीमितान्। दीनारान् प्राप्य हृष्टोऽभू-दपुत्रस्तनयान् यथा ॥५९९॥ अद्य यद्यन्ममे श्रेष्ठं, तत्तत् तत्पुण्यतोऽस्ति ततं। पुण्यात् प्राप्तो निधिरयं, पुण्यमेवोपतिष्ठताम् ॥६००॥ स ध्यात्वेत्थं निजामिच्छां, श्रावयित्वा च वल्लभाम्। तत्प्रेरितो निधिं लात्वा, तं वाग्भटमुपागमत् ॥ ६०१ ॥ युग्मम् ॥ उक्त्वा तत्प्राप्तिवृत्तांतं, यथास्थितमसौ सुधीः। तन्निधिं दत्तवांस्तस्मै, तीर्थोद्धारार्थमादृतः ॥६०२॥ मंत्री जगौ स्वगेहस्थं, निधिं त्वं व्ययसे कुतः? । स स्माहैष न मत्र्यस्तो, नाहं गृह्णे परस्य च ॥ ६०३ ॥ इत्युक्तेऽपि न गृह्णाति, मंत्री दत्ते बलाच्च सः। विवादे विस्फुरत्येवं, रात्र्यागात् कौतुकादिव ॥६०४॥ निशि तं भीममभ्येत्य, स्वपूर्वज इव स्वयम्। तीर्थाधिष्ठायको यक्षः, कपर्दी प्रोक्तवानिति ॥६०५॥ त्वयैकरूपकोपात्तैः, प्रसूनैः प्रथमो

१ कमलम्. २ लोकं पृणातीति लोकंपृणम. ३ कर्मणि छद्. ४ चत्वारिसहस्राणि. ४०००, ५ मयि, प्र. ६ चैत्योद्धारे सप्तद्रम्मदानादिपुण्यतः. ७ श्रेष्ठम्, ८ पुण्यार्थे० प्र. ९ सादरः—कृतादरः.

जिनः । यदपूज्यत भावेन, तेनाहं तुष्टवांस्तव ॥ ६०६ ॥ प्रियोक्तिस्ते[1] प्रिया[2] चक्रे, दत्तोऽयं च निधिर्मया । तदिमं निर्विशं[3]
स्वैर—मुक्त्वेति स तिरोदधे ॥ ६०७ ॥ भीमोऽपि प्रातरावेद्य, यक्षोक्तं सचिवाय तत् । स्वर्णरत्नमयैः पुष्पै—रानर्च[4] प्रथमं
जिनम् ॥ ६०८ ॥ ततः स निधिमादाय, गृहं प्राप्तो महेभ्यवत् । प्रतीतः[5] पुण्यमातेने, स्वहिते को हि नोद्यमी ? ॥६०९॥
इतः काष्ठमयं चैत्यं, दूरीकार्यं[6] शुभेऽहनि । अमात्यः कर्तुमारेभे तत्, प्रारंभददंभधीः ॥ ६१० ॥ अधस्ताद्[7] विधिना
न्यस्य, वास्तुमूर्त्तिं हिरण्मयीम् । दृढं कूर्मशिलान्यासं[8], सूत्रधारा वितेनिरे ॥ ६११ ॥ वास्तुविद्योक्तयुक्त्यैव, स्थापयं-
तेः[9] स्थिरान् सुरान् । उत्कृष्टोत्कृष्टमातेनु—स्ते कर्मस्थायमाहताः[11] ॥ ६१२ ॥ नित्यं नवनवाहारै—र्वस्त्राद्यैश्च प्रमोदिताः ।
आसीना इव पल्यंके, शिल्पिनो नैव शश्रमुः ॥ ६१३ ॥ नक्तं दिवाऽपि नास्वाप्सी—न्मंत्री तच्चैत्यचिंतया । आरभ्य
तादृशं श्रेयो, निद्रालुत्वं दधाति कः ? ॥ ६१४ ॥ यथा यथोर्द्ध्वमारोहत्, स प्रासादो दिने दिने । पुण्यराशिरतिस्थेयान्,
मंत्रिणोऽपि तथा तथा ॥ ६१५ ॥ वर्षद्वयेन तच्चैत्यं, दत्तशैत्यं जगद्दृशाम् । संपद्यते स्म संपूर्णं, कोटीरमिव तद्गिरेः
॥ ६१६ ॥ तत्संपूर्णतयाऽमात्यः, प्रमोदैरुदरंभरिः । कर्तुं प्रक्रमते यावत्, स्वयं लोकोत्तरं महम् ॥ ६१७ ॥ तावद् देवा-
र्चकोऽभ्येत्य, म्लानास्यश्रीस्तमूचिवान् । अस्फुटत्[12] सकलं चैत्यं, देव ! केनापि हेतुना ॥ ६१८ ॥ पीयूषे विषवद् दुग्ध—

1 प्रिया उक्तिर्यस्याः सा. 2 भार्या. 3 भुंक्ष्व. 4 पूजयामास. 5 हृष्टः. 6 दूरं कृत्वा. 7 सातस्थले. 8 यत्र स्थाने मूलनायकः स्थाप्यते ततोऽधस्तात् कूर्माकारयुक्ता शिला न्यस्यते. 9 तं, प्र. 10 रांस्त० प्र०. 11 कर्म—शिल्पादिक्रिया तिष्ठति यत्र स कर्मस्थाय.—प्रासादः तं, स्थाधातोरधिकरणे घञ् युगागमश्च. 12 अस्फटत्, प्र.

मध्ये कांजिकपातवत् । हर्षे विषादवद् वेदो—चारे दुःश्रवगालिवत् ॥६१९॥ तद् दुःखाकरमप्युच्चै—र्वाक्यमापीय वाग्भटः । भृशमुल्लासभागासीद्, भानुपाणिपयोजवत् ॥६२०॥ युग्मम् ॥ तदाकर्ण्य ततो दूना—स्तं तथा वीक्ष्य सेवकाः । पृच्छन्ति स कुतः स्वामिन्! विषादे प्रमदोदयः? ॥६२१॥ स तानुवाच यद् दीर्ण—मेतन्मयि विजित्वरे । कारयिष्येऽधुनैवाहं, पुनस्तदिति मे मुदः ॥६२२॥ अन्यथा मयि यातेऽस्तं, चेद् विशीर्येत दैवतः । तदाऽन्यः कारयेच्चैत्यं, मत्कीर्त्तनमपि व्रजेत् ॥६२३॥ अथ द्वेधाऽपि सकलान्, समाहूय स शिल्पिनः । पप्रच्छ हेतुना केन, प्रासादोऽयं व्यदीर्यत? ॥६२४॥ तेऽभ्यधुर्निर्भ्रमं चैत्यं, भवेदन्वयनाशकृत् । ध्यात्वेति वयमेतत् ते, निरमासिष्म सभ्रमम् ॥६२५॥ तदंतरा प्रविष्टः सन्, न निर्याति बहिर्मरुत् । तत्क्षोभात् स्फुटतिस्मैतत्, पक्ववालुंकवद् ध्रुवम् ॥६२६॥ श्रुत्वा तद् वाग्भटोऽध्यासी—दन्वयो यद्यपि प्रियः । तथापि सोऽयं संदिग्धः, को वेद भविता न वा ॥ ६२७ ॥ भूतोऽपि वा स्थिरः कस्य, सुमेरुरिव वा स्थिरः । कर्ता ममोपकारं किं, भवश्रेणिकृतभ्रमेः ॥ ६२८ ॥ नरकं प्रति पित्रादीन्, नीयमानान् कुकर्मभिः । संनिकृष्टोऽपि नेष्टेऽसौ, रंकवत् त्रातुमन्वयः ॥ ६२९ ॥ नैवेह न परत्रापि, विना पुण्येन केनचित् । उपकारक्रिया काऽपि, क्षेत्रज्ञस्य वितन्यते ॥ ६३० ॥ धर्मसंतान

१ विजयशीले—सर्वोत्कर्षवति. २ उत्कर्षाभावं प्राप्ते मरणं प्राप्ते वा. ३ सममान्, कलासहितान्, च. ४ प्रदक्षणादानमार्गरहितम्. * चैत्यं तव. ५ वयं कृतवन्तः. ६ प्रदक्षणादानमार्गसहितम्. ७ स्फ, प्र. ८ पक्वकर्कटीवत्. ९ निकटस्थः. १० जीवस्य, इदं शरीरं कौंतेय!, क्षेत्रमित्यभिधीयते । एतद् यो वेत्ति तं प्राहुः, क्षेत्रज्ञमिति तद्विदः ॥ १ ॥

एवास्तु, वास्तवं वस्तु तन्मम । अन्वग्भूय नयत्यात्म-तातं जीवं शिवं हि यः ॥ ६३१ ॥ किंच तीर्थसमुद्धार—कारिणां भववारिणाम्[1] । भरतादिमहीपानां, पंक्तौ नामास्त्वनेन मे ॥ ६३२ ॥ विमृश्येति स धर्मार्थी, सूत्रधारान् समादिशत् । निर्भ्रमं[2] क्रियतां चैत्यं, पुनरुत्कील्य मूलतः ॥ ६३३ ॥ सप्तभिः कुलकम् ॥

तेऽथ निर्भ्रमतां[3] कृत्वा, हित्वा च स्फुटिताः शिलाः । मूलात् पुनर्नवीचक्रु—स्तच्चैत्यं[4] वत्सरैस्त्रिभिः ॥ ६३४ ॥ त्रिलक्षै-रहितास्तिस्रः, कोट्यो द्रव्याणि मंत्रिणः । कर्मस्थायेऽस्य[5] लग्नानि, वदंत्येवं चिरंतनाः ॥ ६३५ ॥ तुंगं सुधाऽतिशुभ्रं च, प्रासादं प्रेक्ष्य तं जनः । कैलासालोकनोत्कंठां, कुंठयामास[6] मानसे ॥ ६३६ ॥ भ्राजंते मंडपास्तत्र, विस्तीर्णाः साधुचित्त-वत् । दानादिपुण्यलक्ष्मीणां, पृथक् क्रीडागृहा इव ॥ ६३७ ॥ प्रत्येकं तेषु सद्रूपाः[7], प्रेक्ष्यंते[8] शालभंजिकाः[9] । तत्तत्कुतूह-लालोक—निश्चला देवता इव ॥ ६३८ ॥ दृष्टं शिल्पमदृष्टं च, तत्र वीक्ष्य निरीक्षिणः । दधानाः सममानंदं, विदंति न भिदं हृदि ॥ ६३९ ॥ विहारः सोऽभितो भाति, क्षुद्रैर्देवकुलैर्वृतः[10] । पद्मैः पार्श्वस्थितैः पद्म—हृदांतर्गतपद्मवत् ॥ ६४० ॥

अथ तस्य प्रतिष्ठार्थं, विज्ञप्तिं प्रेष्य पत्तने । आजूहवत् संघयुतं, हेमाचार्यं स मंत्रिराट् ॥ ६४१ ॥ श्रीविक्रमाच्छिवा-क्षीर्दु[11]—वत्सरे सहसः[12] सिते[13] । सप्तमेऽह्नि शनौ वारे, निवेश्य प्रथमं जिनम् ॥ ६४२ ॥ श्रीहेमसूरिणा दंडं, ध्वजं कुंभं च कांचनम् । विधिवत् स प्रतिष्ठाप्य, चैत्यमूर्ध्नि न्यवेशयत् ॥ ६४३ ॥ युग्मम् ॥ प्रासादोऽनिललोलेन[14], ध्वजाग्रेण विरे-

---

१ भवनिवारणकर्तृणाम्. २ निभ्रमम्. प्र० ३ निभ्रमताम्. प्र०. ४ जीर्णोद्धारे. ५ लेपनद्रव्यम्. (कलिचुनो). ६ स्खलयामास. ७ श्रेष्ठस्वरूपाः. ८ लोकैरिति शेषः. ९ पुत्तलिकाः. १० लघुभिर्देवमंदिरैर्वेष्टितः. ११ विक्रमसंवत् १२११,१२१३ इति नवनवतिप्रकारायां पूजायाम्. १२ मार्गशीर्षमासस्य. १३ श्वेतपक्षे. १४ वायुचपलेन.

जिवान् । उत्तंभितेन हस्तेन, तर्जयन्निव दुष्कृतम् ॥ ६४४ ॥ अष्टाह्निकादिकृत्येषु, विहितेष्वतिशायिषु । प्रीणितस्तच्चरित्रेण, गुरुर्वाग्भटमूचिवान् ॥ ६४५ ॥ जगद्धर्माधारं[1] स गुरुतरतीर्थाधिकरण—स्तदप्यर्हन्मूलं स पुनरधुना तत्प्रतिनिधिः । तदावासश्चैत्यं सचिव ! भवतोद्धृत्य तदिदं, समं स्वेनो[2]द्दध्रे भुवनमपि मन्येऽहमखिलम् ॥ ६४६ ॥ (शिखरिणी वृत्तम्) भूत्वा मृद्घटिताद् घटाद् यदि पुरा वातापिवैरी[3] मुनिः, सप्ताप्यंबुनिधीन् किलैकचुलुना पोशा( यः पा ) नकर्मण्यपात् । मंत्रिंश्चैत्यमधि त्वया विनिहितात् कल्याणरूपात्[4] ततः[5], सूतः पुण्यसुतः कथं तव भवांभोधिं न पातैककम्[6] ? ॥ ६४७ ॥ ( शार्दूलविक्रीडितम् ) अवरुह्य ततस्तीर्थात्, तदीयतटभूतले । वाग्भटः स्थापयामास, निजनाम्ना नवं पुरम्[7] ॥ ६४८ ॥ कुमारपालराट्तात—संज्ञया[8] तत्र सत्तमम् । चैत्यं विधाप्य च श्रीम—त्पार्श्वबिंबमतिष्ठिपत् ॥ ६४९ ॥ चतुर्विंशतिमारामान्, निर्माप्य परितः पुरम् । देवार्चनाकृते दत्त्वा, ग्रामानपि च तावतः ॥ ६५० ॥ गुरुसंघान्वितस्तस्मात्, प्रस्थायोदयनात्मजः । स्वस्थानं पत्तनं प्राप, धुर्यत्वं च शुभात्मनाम् ॥ ६५१ ॥ युग्मम् ॥

अथ गूर्जरनाथस्य, मंत्रिणो वाग्भटस्य च । आज्ञयाऽऽम्रभटो गत्वा, भृगुकच्छपुरांतरम्[9] ॥ ६५२ ॥ निजतातप्रतिज्ञात—पूर्तये श्रेयसेऽपि च । मुनिसुव्रतनाथस्य, चैत्यमारंभयन्नवम् ॥ ६५३ ॥ युग्मम् ॥ खन्यमाने जनैस्तस्या—धस्तनक्षितिमंडले । मिलति स्म स्वयं गर्ता—मुखं दृक्पुटवत्[10] ततः[11] ॥ ६५४ ॥ राक्षस्येव तया ग्रस्तान्, गर्तया खनतो जनान् ।

१ धर्म आधारो यस्य तत्. २ आत्मना. ३ अगस्तिः. ४ सुवर्णस्वरूपात्. ५ घटात्–कलशात्. ६ कथं न पास्यति. ७ वाहडपुरम्. ८ त्रिभुवनपालविहार इति नाम्ना. ९ मध्यम्. १० नेत्रसंपुटवत्. ११ गर्तामुखमिलनात्.

आलोक्य तत्कुटुंबानि, गाढं परिदिदेविरे ॥ ६५५ ॥ तत्रोदयनिरायात—स्तद् दृष्ट्वाऽचिंतयच्चिरम् । अहो नामापि गर्तायां, नास्ति हाहा बभूव किम् ? ॥ ६५६ ॥ पुण्याय प्रकृते चैत्ये, प्रत्युताऽघं ममाऽभवत् । जीविताया ऽऽहृते पथ्ये, रोगिणो मरणं यथा ॥६५७॥ इयतां देहिनां भूत्वा, वृथा मृत्युनिबंधनम् । कथं दर्शयिता हाऽहं, कलंकीव जनान् मुखम् ? ॥६५८॥ गर्तामृतानामुष्णोष्णैः, स्त्रैणैः स्वासैः प्रसृत्वरैः । भस्मयिष्ये ध्रुवं जीवन्, प्रमीतोऽहं स्वयं वरम् ॥ ६५९ ॥ ततस्ताव-द्दूघोत्पन्नं, पंकं मार्ष्टुमना इव । झंपार्थं स समारोह—न्निकटं नर्मदातटम् ॥ ६६० ॥ पतिवर्त्मानुगा पत्नी, स्यादिति श्रुत-पूर्विणी । तेन पत्या निषिद्धाऽपि, पृष्ठे भर्तुं प्रिया स्थिता ॥ ६६१ ॥ मा मेति व्याहरत्स्वेव, सबाष्पेष्वनुजीविषु । ददावा-न्भटो झंपां, निर्विण्ण इव सप्रियः ॥ ६६२ ॥ अधस्तात् पतितोऽप्येष, सप्रियोऽप्यक्षतांगकः । अपश्यत् पुरतः कांचि—न्नारीं तेजोमयीमिव ॥ ६६३ ॥ अन्वयुंक्त च भद्रे ! त्वं, वद काऽसि विकाशिरुक् । इहादृष्टचरी कस्मा—दकस्मादाग-ताऽसि च ? ॥६६४॥ दृग्भ्यामनुग्रंपरयाभ्यां, पश्यंती सा तमूचुषी । प्रभाढ्या वत्स ! देव्यस्मि, क्षेत्रस्यैतस्य रक्षिणी ॥६६५॥ कर्मण्यस्मिंस्त्वयाऽऽरब्धे, पुण्योपस्कारकारणे । त्वत्सत्त्वस्य परीक्षार्थ—मेतच्चक्रे मयाऽखिलम् ॥६६६॥ स्तुत्यस्त्वं वीरकोटीर !, यस्येदृक् सत्त्वमुत्कटम् । नो चेज्जने घनेऽप्येवं, मृते त्वद्वन्म्रियेत कः ? ॥ ६६७ ॥ स्वेष्टसिद्धेः स एवेष्टे, यस्य सत्त्वं महत्तमम् । पृथिव्याः को हि नाथः स्या—न्निःसीमं विक्रमं विना ? ॥६६८॥ सत्त्वमेकमपि प्रौढं, कारुण्यानुगतं किमु ? । एवमेवार्कधामोग्रं, किं ग्रीष्मोत्तेजितं पुनः ? ॥ ६६९ ॥ प्रीताऽस्मि तव मच्छक्त्या, गर्त्ताद् गर्भगृहादिव । शुभंयवो जनाः सर्वे, निर्गताः संति

---

१ विलेपुः. २ प्रारब्धे. ३ अपृच्छत्. ४ अदृष्टा सती चरतीति अदृष्टचरी. ५ पुण्यस्य—धर्मस्य उपस्कारः—आभूषणं—संस्कारः, सघातो वा तस्य कारणे. ६ शुभान्विताः.

पश्य तान् ? ॥ ६७० ॥ उक्त्वेत्यस्यामदृश्यायां, निवृत्त्याम्रभटस्ततः । खनकान् खनतः क्षोणीं, पश्यति स्म तथैव तान् ॥ ६७१ ॥ काऽपि मायाऽद्भुता दैवी[1], विमृशन्निति स स्वयम् । सर्वासामपि देवीनां, भोगं भूयिष्ठमातनोत् ॥६७२॥ तत्प्रभावाग्निना दग्धे, प्रत्यूहगहने[2] सति । अष्टादशकरोत्तुंगं, तच्चैत्यं समपद्यत ॥ ६७३ ॥ श्रीमत्सुव्रतदेवस्य, राज्ञो राज्ञ्या[3] हयस्य च । व्याधक्षताया न्यग्रोध—च्युतायाः शकुनेरपि ॥ ६७४ ॥ नमस्कृतीर्ददानस्य, मुनेरपि च सत्तमाः । मूर्तीः सोऽचीकरल्लेप्य—मयीश्चित्रकरैः[4] परैः[5] ॥ ६७५ ॥ युग्मम् ॥ अथौदयनिविज्ञप्ताः, प्रतिष्ठोत्सवहेतवे । पत्तनात् तत्पुरं प्रापु—र्गुरुसंघमहीभुजः ॥ ६७६ ॥ विधाय शांतिकं मंत्रैः, प्रभावैरिव पिंडितैः । प्रत्यष्ठाद्धेमसूरींदु—र्जिनेंद्रं कूर्मलांछनम्[6] ॥ ६७७ ॥ मल्लिकार्जुनकोशीयं, श्रीचौलुक्यप्रसादितम् । कलशं विलसत्स्वर्ण—द्वात्रिंशद्घटिकामयम्[7] ॥६७८॥ दंडं च हैमं दीप्रांशु—पट्टांशुकमयं[8] ध्वजम् । यथाविधि प्रतिष्ठाप्य, गुरुश्रीहेमसूरिणा ॥ ६७९ ॥ स्वयमाम्रभटः संघ—भूपादिपरिवारितः । तानध्यारोपयच्चैत्ये[9], स्वं च पुण्यवतां हृदि ॥ ६८० ॥ त्रिभिर्विशेषकम् ॥ स्थित्वा च चैत्यमूर्ध्न्येव, गर्जत्यातोद्यवारिदे । नरिनर्ति स्म केकीव, प्रमोदग्रहिलाशयः[10] ॥ ६८१ ॥ तत्र स्थितोऽसौ वृष्ट्वोच्चैः, स्वर्णरत्नादि देववत् । रौद्रं[11] दारिद्र्यसंतापं, शमयामास कस्य न ? ॥ ६८२ ॥ निरीक्षिता पुराऽप्यासीद्, वृष्टिर्जलमयी जनैः । तदा तु ददृशे क्षौम—स्वर्णरत्नमयी पुनः ॥ ६८३ ॥ द्वेधाऽपि भूरिभारत्वाद्, दानमाम्रभटार्पितम् । वोढीकैर्यदि वेश्मानि, प्रापयामासु-



१ देवसंबंधिनी. २ वने. ३ राज्ञो-प्र. ४ सुधा (चूना) मयी. ५ उत्तमैः शिल्पज्ञैः. ६ लांछितम्, प्र०. ७ द्वात्रिंशल्लघुघटप्रमाणम्. ८ तेजोयुक्तकौशेयवस्त्रमयम्. ९ कलशदंडध्वजान्. १० अतिहर्षित इत्यर्थः. ११ द्र-प्र०. १२ भारवाहकैः.

रर्थिनः ॥ ६८४ ॥ दानाऽऽयुष्टोम-यज्वानं, तं तथा वीक्ष्य हर्षुलाः । इत्युपश्लोकयंति स्म, कविवृंदारकास्तदा ॥ ६८५ ॥ स्रष्टुर्विष्टपसृष्टिनैपुणमयात् पाणेरपि त्वत्करे, शक्तिः काऽप्यतिशायिनी विजयते यद् याचकानां जनौ । भाले तेन निवेशितामतिदृढां दारिद्र्यवर्णावलीं, दानिन्नाम्रभटैषे भूरिविभवैर्निर्मार्ष्टि मूलादपि ॥ ६८६ ॥ ( शार्दूलविक्रीडितम् ) ततोऽवतीर्य राजर्षि-प्रणुन्नो वाग्भटानुजः । आरात्रिकं समारेभे, कर्तुं त्रिभुवनप्रभोः ॥ ६८७ ॥ प्रथमं पृथिवीभर्त्रा, भ्रात्रा सामंतमंडलैः । संघाधिपैस्ततः श्राद्धै—र्मातृभग्नीसुतादिभिः ॥ ६८८ ॥ श्रीखंडमिश्रघुसृणै—र्नवांगार्चापुरस्सरम् । भालस्थले मुहुः क्लृप्त—भाग्यलभ्यविशेषकः ॥ ६८९ ॥ कंठे च रोपितानेक—स्मेरसूनचतुःसरः । निरीक्षितमुखांभोजो, निःस्पृहैरपि सस्पृहम् ॥६९०॥ तुरंगान् द्वारभट्टेभ्यः, शेषेभ्यः कनकोत्करान् । तदभावे परिष्कारा—नर्पयन् निजदेहतः ॥६९१॥ धृत्वा कराभ्यां भूपेन, वेलादपि विधापितम् । आरात्रिकविधिं चक्रे, स धार्मिकशिरोमणिः ॥६९२॥ पंचभिः कुलकम् ॥ पृच्छति स्म च भूपाल—मत्युत्तालतया कुतः । एतत्कृत्यं करे धृत्वा, देवेनाहमकारिपि ? ॥ ६९३ ॥ स्मेरः साह स तं यच्छं—स्त्वं देहाभरणान्यपि । तद्द्वारेण निषिद्धोऽसि, दद्यात् सर्वमसाविति ॥ ६९४ ॥ धारारूढरसत्वेन, विस्मृत्यैव निजं यतः । दाता च द्यूतकारश्च, मूर्धानमपि यच्छतः ॥६९५॥ कूर्मः क्षुद्रतमोऽपि लांछनमिषाद् यत्पादपद्मद्वयीं, सेवित्वेव बभूव भूमिवलयं पृष्ठे विवोढुं दृढः । अम्भोजीवनया धुरीणपदवीं[13] कारुण्यभाजां श्रितः, स श्रीमान् मुनिसुव्रतो जिनपतिर्देचां

१यज्ञ०. २कविमुख्याः, पक्षे देवाः. ३जन्मनि. ४सष्टु करेण. ५एष-तव करः. ६तिलकः. ७चतस्र. सराः येषा ते-हारास्ते० यस्य सः-मंत्री. ८भूषणानि. ९शीघ्रतया. १०उत्कटतया. ११आरूढ-प्राप्तः त्यागरसः द्यूतरसश्च यस्य स आरूढरसः धारायां-उत्कर्षे आरूढरसस्तस्य भावस्तत्त्वं तेन. १२उत्प्रेक्षायां इव. १३निर्धारणे षष्ठी. १४दीयताम्.

श्रियं श्रा(श्रे)यसीम् ॥ ६९६ ॥ ( शार्दूलविक्रीडितम् ) इत्यभिष्टुत्य तीर्थेशं, कृतसच्चैत्यवंदनः । बभाणाम्रभटं संघा— ध्यक्षं श्रीहेमसूरिराट् ॥६९७॥ युग्मम् ॥ किं कृतेन न यत्र त्वं ?, यत्र त्वं किमसौ कलिः ? । कलौ चेद् भवतो जन्म, कलिरस्तु कृतेन किम् ? ॥ ६९८ ॥ दानधर्मोऽतिवृद्धत्वात्, कृशिमानमधिश्रितः । तव हस्तावलंबेन, धीमन् ! विहरतां महीम् ॥ ६९९ ॥ गिराऽनया गुरुमुखो—द्गीर्णयाऽऽम्रभटं तदा । निरीक्षांचक्रिरे के न, महीयांसोऽपि विस्मिताः ? ॥ ७०० ॥ सत्कृतास्तेन ते सर्वे, गुरुभूपादयस्ततः । स्तुवंतस्तद्गुणग्रामं, स्वस्थानं पत्तनं ययुः ॥ ७०१ ॥

अथाकस्मिकदोषेण, भृगुकच्छपुरस्थितः । बभूवाम्रभटो मृत्यु—दशाऽऽपन्न इवोच्चकैः ॥ ७०२ ॥ तं तथा प्रेक्ष्य सर्वस्मिन्, विक्लवे तत्परिच्छदे । सद्यश्चिकित्सयामासु—र्विदग्धा[3] इत्यनेकधा ॥ ७०३ ॥ सन्निपातादिदोषघ्नान्, वैद्याः प्रददिरे[4] रसान् । मान्त्रिका मंत्रपूताभि—रद्भिराच्छोटयन् मुहुः ॥ ७०४ ॥ ज्योतिर्विदो विदधिरे, यथोक्तं ग्रहशांतिकम् । द्विजा निर्ममिरे होमं, पठंतो वैदिकीर्ऋचः ॥ ७०५ ॥ अवतारविदः[5] पात्रा[6]—वतारांस्तेनिरेतमाम् । उपश्रुतीर्जगृहिरे, बंधवः स्नेहसिंधवः ॥ ७०६ ॥ वृद्धाः स्वगोत्रदेवीना—मुपयाचितमादधुः । योगिनीनां चतुःषष्टे—श्चक्रिरे बलिमर्चकाः

---

१ स्तुत्वा. २ कृतयुगेन. ३ विशारदाः वैद्यादयः, ४ ददतिस्म. ५ अवतरणज्ञाः. ६ पात्रावतरणानि कुर्वन्ति. ७ तीर्थादौ गमनाय प्रतिज्ञाः अकुर्वन्. ८ चतुःषष्टियोगिनीनामानीमानि— १ ब्रह्माणी २ कौमारी ३ वाराही ४ शंकरी ५ इन्द्राणी ६ कंकाली ७ कराली ८ काली ९ महाकाली १० चामुंडा ११ ज्वालामुखी १२ कामाक्षी १३ कपालिणी १४ भद्रकाली १५ दुर्गा १६ अंबिका १७ ललिता १८ गौरी १९ सुमंगला २० रोहिणी २१ कापिला २२ शूलकरा २३ कुंडलिनी २४ त्रिपुरा २५ कुरुकुला २६ भैरवी २७ भद्रा २८ चंद्रावती २९ नारसिंही ३० निरंजना ३१ हेमकांती ३२ प्रेतासनी ३३ ईश्वरी ३४ माहेश्वरी ३५ वैष्णवी ३६ वैनायकी ३७ यमघंटा

॥ ७०७ ॥ परमेतैः प्रतीकारै—र्गुणस्तस्य न कोऽप्यभूत् । यथा निर्दग्धबीजस्य, धाराधरपयोभरैः ॥ ७०८ ॥ ततो नैराश्यमापन्ना, तस्य पद्मावती प्रसूः । सम्यगाराधयाञ्चक्रे, देवीं पद्मावतीं निशि ॥ ७०९ ॥ प्रत्यक्षीभूय साऽऽचख्यौ, पुत्रस्ते चैत्यमूर्धनि । नृत्यन् सल्लक्षणत्वेन, जग्रसे योगिनीगणैः ॥ ७१० ॥ द्वात्रिंशल्लक्षणं पुण्य—परं चेमा दुराशयाः । सांपत्नेयं सपत्नीव—न्न सहंते कदाचन ॥ ७११ ॥ एतास्छन्नाः स्थिता आसन्, हेमाचार्येऽत्र तस्थुषि । तस्मिन् गते पुनर्व्यक्ती—भूता नैःस्व्ये यथाऽऽपदः ॥ ७१२ ॥ एतद्दोषं च निष्पेष्टुं, स शक्नोति गुरुः स्वयम् । खंडीकर्तुं तमस्कांडं, चंडो मार्तंड एव हि ॥ ७१३ ॥ आदिश्येति प्रयातायां, देव्यां तत्क्षणमेव सा । पद्मावती जनं प्रैषीत्, पत्तनं गुरुहेतवे॥७१४॥ सायं प्राप्ताज्जनात् तस्मात्, सर्वं ज्ञात्वा स सूरिराट् । सहादाय महादक्षं, यशश्चंद्राभिधं गणिम् ॥ ७१५ ॥ विद्याधर इव व्योम्ना, तूर्णं भृगुपुरं गतः । विलोक्याम्रभटं तस्य, ज्ञातवान् देव्युपद्रवम् ॥ ७१६ ॥ युग्मम् ॥ गणिस्तज्जननीं प्रोचे,

---

३८ हरसिंही ३९ सरस्वती ४० तोतला ४१ चंडी ४२ शंखिनी ४३ पद्मिनी ४४ चित्रिणी ४५ शाकिनी ४६ नारायणी ४७ पलादिनी ४८ यमभगिनी ४९ सूर्यपुत्री ५० शीतला ५१ कृष्णपासा ५२ रक्ताक्षी ५३ कालरात्री ५४ आकाशी ५५ सृष्टिनी ५६ जया ५७ विजया ५८ धूम्रवर्णा ५९ वेगेश्वरी ६० कात्यायनी ६१ अग्निहोत्री ६२ चक्रेश्वरी ६३ महांबिका ६४ ईश्वरा इति

प्रसंगाद् द्वापंचाशद्वीराणां नामानि—

१ क्षेत्रपाल २ कपिल ३ बटुक ४ नारसिंह ५ गोपाल ६ भैरव ७ गरुड ८ रक्तसुवर्ण ९ देवसेन १० रुद्र ११ वरुण १२ भद्र १३ वज्र १४ वज्रजंघ १५ स्कंद १६ कुरु १७ प्रियंकर १८ प्रियमित्र १९ वह्नि २० कंदर्प २१ हंस २२ एकजंघ २३ घंटापथ २४ खंजक २५ काल २६ महाकाल २७ मेघनाद २८ सीम २९ महासीम ३० तुंगभद्र ३१ विद्याधर ३२ वसुमित्र ३३ विश्वसेन ३४ नाग ३५ नागहस्त ३६ प्रद्युम्न ३७ कंपिल ३८ नकुल ३९ आह्लादन ४० त्रिमुख ४१ पिशाच ४२ भूतभैरव ४३ महापिशाच ४४ कालमुख ४५ शुनक ४६ अस्थिमुख ४७ रेतोवेध ४८ स्मशानचर ४९ केलिकल (किल) ५० भृंग ५१ कंटक ५२ विभीषणा इति. * सपत्नीपुत्रम्

बलिपुष्पादिसंयुतम् । उपास[1]त् प्रेषयेर्मध्य-रात्रे कंचिन्निजं नरम् ॥ ७१७ ॥ वाक्ये तयाऽऽहते तस्मिन्, सूरिः स्वाश्रयमाश्रयत् । निशीथे प्राहिणोत् सापि, प्रोक्तवस्तुयुतं जनम् ॥ ७१८ ॥ तेन सार्धं गणियुत-श्चचाल स्वालयात् प्रभुः । स्वामिन्याः सर्वदेवीनां, सैंधव्याः सदनं प्रति ॥७१९॥ दुर्गतो[2] निर्गतो बाह्ये, सोऽपश्यच्चटकव्रजम् । भापयंतमपि[4] क्रूरै-श्चगच्चगिति शब्दितैः ॥७२०॥ ज्ञात्वा तद्योगिनीदौष्ठ्यं, तन्मुखे गणिना बलिम् । प्रभुर्न्यवेशयत् सोऽन्त-र्दध्रे चेटकवत्[5] ततः ॥ ७२१ ॥ तदग्रेऽथ व्रजन् सूरिः, कृशानुकपिशाननम् । कपिमंडलमैक्षिष्ट, भक्षणाय प्रसृत्वरम् ॥ ७२२ ॥ कृत्रिमं तदपि ज्ञात्वा, मूर्तैर्मंत्राक्षरैरिव । अक्षतैस्ताडयामास, स तच्च क्वचिदद्रवत् ॥७२३॥ ततोऽपि परतो गच्छन्, स सैंधव्या गृहांतिके । मार्जारवृंदमद्राक्षीत्, क्रूरं कीनाशदासवत् ॥ ७२४ ॥ शोणप्रसूननिक्षेपाद्, विद्राव्य तदपि प्रभुः । तस्थिवांस्तोरणे देव्या, विद्यानिधिरिव स्वयम् ॥ ७२५ ॥ सूरिमंत्रं हृदि ध्यात्वा, समादिष्टोऽथ सूरिणा । यशश्चंद्रगणिः प्रोचे, सैंधवीं देवतां प्रति ॥ ७२६ ॥ जालंधरप्रभृतिभिः, [10]पीठैरभ्यर्चितक्रमः । स्वयं पद्भ्यां समायातो, हेमाचार्यस्त्वदंतिकम् ॥ ७२७ ॥ आगत्य संमुखं तस्य, भक्त्वातिथ्यमाचर? । ईदग्लोकोत्तरं पात्रं, पुण्यैरेवातिथीभवेत् ॥७२८॥ तन्निशम्य स्मितभर-प्रह्वा जिह्वांचलं मुखात् । आकृष्य वालवद् देवी, संमुखं दुरचेष्टत ॥७२९॥ स तथा तां विकुर्वाणा-मूचे रेरे दुराशये! । गुरुमप्य[12]वजानासि, न जानासि च मद्बलम् ॥७३०॥ यदि कारुण्ययोगेन, साम[13] त्वां काममभ्यधाम् । तदा मामपि दुष्टाद्रि-कुलिशं

१ अस्माकम् समीपमित्युपास्मात् अव्ययम्. २ प्राकारात्. ३ गुरुः. ४ अपिः पूर्णार्थः. ५ चेटकवत्, प्र ६ अग्निवत् पित्तरक्तमुखम्. ७ यमदासवत्. ८ रक्तपुष्प०. ९ दूरं कारयित्वा. १० असुरविशेषैः. ११ ईषदहास्यसमूहतत्परा. १२ अवज्ञां करोषि. १३ सांत्वनं-प्रियवाक्यादिना क्रोधाद्युपशमनं शत्रुवशीकरणोपायभेदश्च.

भायय[1]स्वरे ॥७३१॥ निर्भर्त्स्यैवं गणिः क्रुद्धो, हुंकारांस्त्रीनमुंचत । अकांडे[2]भग्नब्रह्मांड—स्फारखाट्कारदारुणान् ॥७३२॥ तेनादिमेन सैंधव्याः, प्रासादः समकंपत । आमूलचूलमुत्ताल—वात्याऽऽन्दोलितशाल[3]वत् ॥७३३॥ द्वितीयेन च सर्वोऽपि, तदंतःस्थः सुरीगणः । भीत्याऽघटिष्ट निश्चेष्ट—श्चित्रन्यस्त इवोच्चकैः ॥ ७३४ ॥ तृतीयेन पुनर्देवी, सैंधवी भीज्वरादिव । कंप्रोत्पत्य निजस्थाना—न्नमश्चक्रे प्रभुक्रमौ ॥७३५॥ किं करोमीति जल्पंतीं, गणिस्तां स्माह मद्गुरोः । भक्तिं कुरु सुरीवर्गाद्, विमोच्याम्रभटं द्रुतम् ॥७३६॥ सा जगौ योगिनीवर्गः, क्षुधार्त्तस्तं सहस्रधा । विभज्य खंडशश्चक्रे, द्रुमं तीक्ष्णकुठारवत् ॥ ७३७॥ मोचये तं कथं तस्मा—न्मोचितोऽपि न जीविता[4] । कृष्टोऽपि सिंहदंष्ट्रायाः, सारंगः क्षेमवान् किमु ? ॥७३८॥ अभाषिष्ट गणिर्भूयो, भवत्वेवं पुनर्यदि । अस्मात् स्थानान्निजं स्थानं, प्रयातुं त्वं प्रगल्भसे[5] ? ॥७३९॥ तेन वाक्येन सा त्रस्ता, निर्घोषमतिभीषणम् । विहस्ता[6] सिंहनादेन, हस्तिनीव वितेनुषी ॥७४०॥ चकंपे काश्यपी तेन, शैलशृंगाणि तुत्रुटुः । चिक्रीडुश्च नभःक्रोडे, सलिलानि सरस्वताम्[8] ॥७४१॥ अपनिद्रश्च सर्वोऽपि, भृगुद्रंगगतो जनः । हृदि कल्पांतविभ्रांत—पाथोधिभ्रमसा[9]नंशे ॥७४२॥ भीरवस्तेन शब्देन, योगिन्योऽपि विमुच्य तम्[11] । तत्रेयुः स्वामिनीपार्श्वे, रक्ष रक्षेति जल्पिकाः ॥ ७४३ ॥ स्तंभित्वा मंत्रशक्त्योच्चै—स्ताः समस्ता जगौ गणिः । मुंचताम्रभटं पापाः !, नो चेत् प्राणान् विमोक्ष्यथ ॥ ७४४ ॥ शरीरे कीलकेनेव, तेन स्तंभेन पीडिताः । मुखे क्षिप्त्वाऽङ्गुलीः प्रोचु—स्तं मान्त्रिकमणिं गणिम् ॥ ७४५ ॥ अस्माकाभिर्भवद्याज्यैः[12], सर्व-

1 त्रासय० प्र, भापय० प्र. २ अनवसर०, ३ वृक्षवत्. ४ जीविष्यति. ५ समर्थो भवसि. ६ क्षुब्धा, प्र. ७ व्याकुला. ८ समुद्राणाम्. ९ क्षुब्ध०. १० प्राप. ११ आम्रभटम्. १२ भवद्भिः हेतुभूतैः यष्टुम् ( प्रतिष्ठा कर्तुं कारयितुं ) अर्हंतीति भवयाज्यः—भवद्यजमान.,

थाऽप्येष तत्यजे । अत्रार्थे दक्षिणः पाणिः, प्रतिभूरिव गृह्यताम् ॥ ७४६ ॥ महात्मनोऽस्य नामापि, कदाप्याद्महे यदि । चंडेन प्राणदंडेन, त्वया दंड्यास्तदा वयम् ॥ ७४७ ॥ तनुस्तंभेन नः प्राणाः, प्रयाणायोद्यता इव । तत् प्रसद्य गतावद्य !, सद्योऽस्मान् मोचयामुतः ॥७४८॥ रेरे हताशाश्चेत् स्तंभ—मात्रेणेदृग् व्यथाऽस्ति वः। तदा प्राणप्रहाणे सा, परेषां कीदृशी भवेत् ? ॥ ७४९ ॥ प्राणत्राणं महत्पुण्यं, महत्पापं च तद्वधः । इति श्रुतोदितं तत्त्वं, विज्ञायातःपरं हृदि ॥७५०॥ अन्येऽपि जंतवो [3]हंत, हंतव्या न कदाचन । विशिष्याहंतधर्मस्थाः, सर्वलोकहितावहाः ॥ ७५१ ॥ शिक्षयित्वेति गणिना, मोचिताः स्तंभतस्ततः । नत्वा प्रभुपदद्वंद्वं, देव्यः स्वस्थानमासदन् ॥ ७५२ ॥ चतुर्भिः कलापकम् । तदैवाम्रभटः सोऽभूत्, सर्वक्लेशविवर्जितः । तादृशोऽस्ति गुरुर्यस्य, तस्य तत् किं नु कौतुकम् ? ॥७५३॥ हेमाचार्योऽपि स प्रात—स्तस्मादुदयनात्मजात् । विधाप्य सर्वदेवीनां, भोगं सौहस्रिकं शुभम् ॥ ७५४ ॥ नत्वा च नूत्नचैत्यस्थं, जिनेशं मुनिसुव्रतम् । पद्भ्यां विहरमाणस्तत्, पुनः पत्तनमागमत् ॥७५५॥ अकस्माद् विहृतं कुत्रे—त्यनुयोगपरं नृपम् । उक्त्वाऽऽम्रभटवृत्तांतं, भृशं व्यस्मा[6]ययत् प्रभुः ॥७५६॥ दानादिकृत्यसुरभीकृतचित्तवृत्ति—र्निर्मापयन् स्वयमनेकविधान् विहारान् । तत्कारिणां प्रवणयंश्च सहायभावं, चौलुक्यभूभृदिति संचिनुते स पुण्यम् ॥७५७॥ ( वसंततिलकावृत्तम् ) इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरित्रे कृपासुंदरीपरिणयदानाद्युपदेशचैत्यनिर्माणादिवर्णनो नामाऽष्टमः सर्गः ॥अष्टानां मिलने५२३०

१ तनुस्तंभात्. २ नाशे. ३ अनुकपायाम्. ४ सहस्रव्ययसाध्यम्. ५ प्रश्नतत्परम्. ६ व्यस्मेरयत्, प्र. ७ वासित०. ८ कुर्वन्, कारयन्, वा. ९ महाकाव्ये मोहराजपराजयश्रीधर्मराजसाम्राज्यकरणवर्णनो नामाऽष्टमसर्गः, प्र.

## अथ नवमः सर्गः ॥

व्याख्यायमाने श्रीवीर—चरित्रेऽथ नृपं प्रति । देवाधिदेवप्रतिमा—वृत्तमित्यूचिवान् प्रभुः ॥ १ ॥ विहरन् भगवान् वीरः, पुरे राजगृहे पुरा । हर्षकृत् समवासार्षीत्, स तीर्थ इव जंगमः ॥२॥ तत्राभयो महामात्यः[1], पुत्रः श्रेणिकभूपतेः । तं नत्वाऽप्रश्नयद् भावी, राजर्षिः कोऽन्तिमः प्रभो ! ॥ ३ ॥ उदायननृपे प्रोक्तेऽ—हंता भूयः स पृष्टवान् । कोऽसौ ? तस्मै ततः स्वामी, तच्चरित्रमिदं जगौ ॥ ४ ॥ सिंधुसौवीरमध्येऽस्ति, शस्तं वीतभयं पुरम् । यस्याकुतोभयत्वेन, सान्वयं नाम शोभते ॥ ५ ॥ रात्रौ यत्र जिनेंद्रमंदिरशिरःकल्याणकुंभावली, दिक्शाखाविततस्य नीलिमगुणाऽऽविर्भूतपत्रस्थितेः । हर्प[2]स्फारकतारकव्यतिकरप्रोद्यत्प्रसूनद्युते—र्व्योमद्रोः परिपाकपिंगलै[3]फलप्रागल्भ्यमभ्यस्यति ॥ ६ ॥ (शार्दूल०) आसीदुदायनक्ष्माप—स्तस्मिन्नुदयनात् किल । आकारेणैव नवरं, तेजसाऽपि चं योऽतिगः ॥ ७ ॥ सिंधुसौवीरमुख्येद्ध[6]—देशषोडशकाधिपः । त्रिषष्टित्रिशती (३६३) वीत—भयादिपुरपालकः ॥ ८ ॥ किरीटिभिर्दशनृपै—र्महासेनमुखैः श्रितः । सेनानीरिव दिक्पालै—रजय्योऽजनि यो द्विषाम् ॥ ९ ॥ युग्मम् ॥ सुता चेटकभूपस्य, सम्यक्त्वामोदमेदुरा । अभूत् तद्वल्लभा नाम्ना, देहेनापि प्रभावती ॥ १० ॥ अभिचिस्तत्सुतो जज्ञे, यौवराज्यविराजितः । भ्राजिष्णुर्भानुवद् धाम्ना, केशी च भगिनीसुतः ॥ ११ ॥

---

१ महामात्य –अभयकुमार'. २ हर्षवर्धकतारकसमूहरूपप्रोद्यत्पुष्पकान्ते . ३ परिपाकेन पीतफलप्रौढताम्. ४ वीतभयपुरे. ५ यशोऽधिकः, प्र, च योऽधिक', प्र. ६ इद्ध०–दीप्त०, ७ कार्तिकेयः.

इतश्चंपापुरीत्यस्ति, तत्र स्त्रीकेलिलोलहृत् । आसीत् कुमारनंदीति, स्वर्णकृद् विभवोद्भटः ॥ १२ ॥ असौ पंचशतीं हेम्नो, दायं दायं सुलोचनाः । पणीकृत्य च तत्पंच—शतानि सममेलयत् ॥ १३ ॥ ताभिरुद्दामकामाभि—र्वामाभिः सह सोऽन्वहम् । विललासानुरक्ताभिः, करिणीभिर्द्विपेंद्रवत् ॥ १४ ॥ अन्यदा पंचशैलाख्य—द्वीपतः शक्रशासनात् । श्रीनंदीश्वरयात्रार्थं, चेलतुर्व्यंतरस्त्रियौ ॥१५॥ विद्युन्माली तदा पंच—शैलेशस्तत्पतिश्च्युतः । अद्य नौ कः ? पतिर्भावी—त्येवं ते अपि दध्यतुः ॥ १६ ॥ ततो व्योम्ना व्रजंतीभ्यां, ताभ्यां चंपापुरीस्थितः । पंचपल्लीशतैः क्रीडन्, हेमकृत् स व्यलोक्यत ॥ १७ ॥ चिंतितं च वृथा लोके, कामोऽनंग इति श्रुतः । यतोऽयमेव प्रत्यक्षः, स वपुष्मान् विराजते ॥ १८ ॥ स्वरूपदर्शनेनायं, व्युद्ग्राह्यः प्रियवांछया । ध्यात्वेत्थमवतीर्णे ते, तूर्णं व्योम्नस्तदंतिके ॥ १९ ॥ अनयोः कोऽपि लावण्य—रसः स्फुरति वर्ष्मणि । लिह्यते नयनाभ्यां यः, क्षीयते न च सर्वथा ॥२०॥ ध्यात्वेति स्वर्णकारेण, ते पृष्टे के युवामिह? । आवां हासाप्रहासाख्ये, देव्यावित्थमवोचताम् ॥ २१ ॥ युग्मम् ॥ भोगार्थं प्रार्थिते तेन, ते पुनस्तं जजल्पतुः । पंचशैलाभिधं द्वीप—मागच्छेरस्मदिच्छया ॥ २२ ॥ उक्त्वेति गतयोर्देव्योः, स्मरस्मेरोऽथ हेमकृत् । तत्प्राप्त्युपायमध्यासीद्, धनं निर्धनवच्चिरम् ॥ २३ ॥ स्वर्णौघमुपदीकृत्य, स्वाभिप्रायं प्रकाश्य च । चंपानाथाय तेनेत्थं, पटहः समघोष्यत ॥२४॥ नयेद् यः पंचशैलं मां, स्वर्णकोटिं लभेत सः । श्रुत्वा तच्च जरन् कोऽपि, पटहं लोलुपोऽस्पृशत् ॥ २५ ॥ तावत् स्वर्णं

१ भव', प्र. २ कामः. ३ अङ्गवान्. ४ स्वीकरणीयः. ५ पतीच्छया. ६ मुक्ताफलेषु छायाया ( कान्त्या )- स्तरलत्वमिवान्तरा । प्रतिभाति यदंगेषु, तल्लावण्यमिहोच्यते ॥ लावण्यमेव रस', ७ संभोगार्थमित्यर्थं ,-दर्शनस्पर्शनादीनि, निषेवेते विलासिनौ । यत्रानुरक्तावन्योन्यं, संभोगः स उदाहृतः ॥

ततो लात्वा, स्वसुतेभ्यः समर्प्य च । श्रुतपूर्वी स तन्मार्गं, यानपात्रमसज्जयत् ॥ २६ ॥ वार्यमाणोऽपि पल्याद्यै—र्वृद्धेन सह हेमकृत् । यानपात्रमधिष्ठाय, प्रतस्थेऽम्बुधिवर्त्मना ॥ २७॥ आनेत्रप्रसरं विष्वग्, जलमेव विलोकयन् । तदा विवेद निःशेषं, विश्वं तन्मयमेव सः ॥ २८ ॥ कियद्दूरं गते वृद्ध—स्तमूचे जलधेस्तटे । अद्रिपादसमुत्पन्नं, वटं स्थूलं विलोकय ! ॥ २९ ॥ अस्याधस्ताद् व्रजत्यस्मिन्, वोहित्थे त्वं करद्वयम् । विस्तार्य कपिवत् सद्यो, विलगेरत्र पादपे ॥ ३० ॥ अत्रायास्यंति भारंडा—स्त्रिपदाः पंचशैलतः । सुप्तेषु तेषु कस्यापि, चरणे मध्यवर्तिनि ॥ ३१ ॥ विलग्य दृढमुष्टया त्वं, तिष्ठेर्निश्चेष्टवन्निशि । नेष्यंति पंचशैलं त्वा—मुड्डीनाः प्रातरेव ते ॥ ३२ ॥ युग्मम् ॥ करिष्यसे न चेदेवं, तर्हि मंक्षु विनंक्ष्यसि । महावर्त्तांतरे यानं, यत्पतिष्यत्यतः परम् ॥ ३३ ॥ चक्रे कुमारनंदी तत्, ते च भारंडपक्षिणः । निन्यिरे पंचशैलं द्रा—गहो बुद्धिविजृंभितम् ॥ ३४ ॥ तत्र हासाप्रहासे ते, दृष्ट्वा दिव्यं च वैभवम् । प्रमोदग्रहिलः सोऽभूत्, स्वः प्रागुत्पन्नदेववत् ॥ ३५ ॥ तत्साहसेन विस्मेरे, प्रीत्या देव्यौ तमूचतुः । भद्रानेन तवांगेन, नाऽऽवां भोग्ये घटावहे ॥ ३६ ॥ चिकामयिषसे नौ चेत्, तदा वह्न्यादिमृत्युना । पंचशैलाधिपो भूत्वा, समागच्छ त्वमुत्सुकः ॥ ३७ ॥ श्रुत्वा तत् स्वर्णकृत् प्रोचे, जज्ञेऽहं युवयोः कृते । जडात्मेवोभयभ्रष्टो, दैवस्याहो विचलितम् ॥ ३८ ॥ ततो हासाप्रहासाभ्यां, निमज्ज्य करुणार्णवे । उत्पाट्य बालवच्चंपा—वनेऽमुच्यत हेमकृत् ॥ ३९ ॥ क गतोऽसीति पृष्टः स—न्नुक्त्वा स्वं चरितं

१ प्रवहणे. २ भारुंडाः-प्र. ३ भारुंड०, प्र, एकोदरा. पृथग्ग्रीवा, अन्योन्यफलभक्षिण. । असहता ( अमिलिता मनसा ) विनश्यन्ति, भारडा इव पक्षिण. ॥ १ ॥ पचतंत्रम्. ४ हर्षोन्मत्तः (हर्षघेलो). ५ स्वर्गे. ६ कामयितुमिच्छसि. ७ आवाम्.

जने । स कामार्त्तः समारेभे, मर्तुं देव्यर्थमग्निना ॥ ४० ॥ तज् ज्ञात्वा नागिलो मित्र—मूचे तं किं तनोष्यदः ? । अज्ञानमरणं नैव—मुचितं सुधियस्तव ॥४१॥ भोगमात्रकृते कस्मात्, त्वं हारयसि मर्त्यताम् ?। भवे भवेऽपि यद् भोगा, मर्त्यं भूयं क्वचित् पुनः ॥ ४२ ॥ भोगार्थमपि निर्माहि, धर्मं स्वर्मणिवैभवम् । अर्थकामौ यथाकामं, दत्त्वा दत्तेऽपि यः शिवम् ॥ ४३ ॥ किंच स्त्रियां यथा रागः, स्याच्चेत् पुण्यश्रियां तथा । तदा तव भवेदेव, सा मुक्तिरपि कामुकी ॥ ४४ ॥ एक एव ध्रुवं रागः, शुभाशुभतयाऽऽश्रितः । सद्यः संपद्यते हेतुः, शिवस्य च भवस्य च ॥४५॥ सुहृदा बोधितोऽप्येवं, हेमकृत् स निदानतः । इंगिनीमरणं कृत्वा, पंचशैलाधिपोऽजनि ॥ ४६ ॥ विद्युन्मालीति सोऽप्याख्यां, वहंस्ताभ्यां सहानिशम् । रेमे हासाप्रहासाभ्यां, कृतकृत्य इवोच्चकैः ॥ ४७ ॥ मित्रस्य तादृग्मरणा—न्नागिलोऽपि विरक्तधीः । श्रित्वाऽऽर्हतं व्रतं कल्पे, द्वादशे त्रिदशोऽभवत् ॥ ४८ ॥

अथ नंदीश्वरे यात्रां, कर्तुं देवाः प्रतस्थिरे । हासाप्रहासे चाभूतां, गातुं तच्छासनात् पुरः ॥ ४९ ॥ विद्युन्माली पतिस्ताभ्यां, प्रेरितः पटहग्रहे । रुषा ममापि किं ? कश्चि—दाज्ञादायीत्यवोचत ॥५०॥ ततः स रोषहुंकार—भारिणोऽस्यालगद् गले । आभियोगाख्यदुष्कर्मो—दयेन पटहः स्वयम् ॥ ५१ ॥ घरट्टमिव तं लग्नं, दूरीकर्तुं निजाद् गलात् । स ह्रीणोऽप्यशकन्नैव, धिग् धिग् दुष्कर्मचेष्टितम् ॥ ५२ ॥ कर्मेदमत्र जाताना—मेवं पटहवादने । त्रपां लुंटवा तदीशैनं, वादयन्

१ मनुष्यत्वम्. २ धर्मलक्ष्म्याम्. ३ निदानयुक्तम् अग्न्यादिसाधनेन मरणम्. ४ पटहादाने ५ क्रोधेन ६ हुंकार'–हुमित्यव्यक्तस्य प्रतिषेधसूचकशब्दस्योच्चारणं रोपात् तं बिभर्ति इत्येवं शीलस्तस्य. ७ देवः. ८ लज्जितः. ९ कार्यम्. १० त्यक्त्वा.

कर्मणां दुर्विपाको हि, दुर्निवारोऽब्धिपूरवत्॥५४॥
पुरतो भव ? ॥ ५३ ॥ इत्थं प्रबोधितः स्त्रीभ्यां, स सुरश्चकृवांस्तथा । दृष्ट्वा तमानकधरं, मित्रं ज्ञानेन बुद्धवान् ॥ ५५ ॥ वक्तुं
युग्मम् ॥ स नागिलात्मा देवोऽपि, व्रजन् देवैः सहाध्वनि । विद्युन्माली पलायत ॥ ५६ ॥ मायामयमिवात्मीयं,
पार्श्वस्थिते तस्मिं—स्तत्तेजो भानुबिंबवत् । अक्षमो वीक्षितुं दृग्भ्यां, स तं विस्पष्टमाचष्ट, शक्रसामानिको
मंहो हृत्वा स निर्जरः । पंचशैलाधिपं प्रोचे, पश्य कोऽहं पुरस्तव ? ॥ ५७ ॥ स स्वं नागिलरूपं तद्, विधायोवाच पश्य भोः ! । अहं
महान् । कश्चित् त्वं वर्तसे देवः, परं नामादि वेद्मि न ॥ ५८ ॥ मया त्वं वारितोऽप्यग्नि—मरणेन निदानतः । ईदृग्विडंबनापात्रं,
ते प्राक्तनं मित्रं, किं मां परिचिनोषि न ? ॥ ५९ ॥ विपद्य त्रिदशोऽभूव—मीदृग्विभवभासुरः ॥६१॥ वरं
पंचशैलाधिपोऽभवः ॥ ६० ॥ अहं त्वर्हद्धर्मज्ञ—स्तदुँपज्ञव्रतं श्रितः । सरोऽपस्मार एवाय—
कृष्णाहिना दष्टो, न तु कामाहिना जनः । पूर्वो हि कर्हिचित् साध्यो, भवेन्नैवापरः पुनः ॥६२॥ श्रुत्वा तदनुशय्योच्चै—र्विद्युन्माली
मसाध्यो भिषजामपि । यो वैकल्यं विधायान्ते, नृणां हरति जीवितम् ॥ ६३ ॥ स स्माह श्रीमहावीरो, गृहिवेषो गृहेऽधुना । भूत्वा
तमालपत् । सखे ! प्रसद्य मां शाधि, विदधाम्यधुना किमु ? ॥ ६४ ॥ दिव्यां तन्मूर्तिमाधाय, श्रद्धालोः कस्यचित् करे । अर्चार्थमर्पयेस्तेन, यथा
यतीव भावेन, कायोत्सर्गेण तिष्ठति ॥ ६५ ॥
ते स्यात् पुरः शुभम् ॥ ६६ ॥ ( यतः )—

१ पटहधरम् २ परा आयत अय् गतौ. ३ तेजः. ४ अर्हत्कथितव्रतम्. ५ रोगविशेष.. ६ पश्चात्ताप कृत्वा. ७ तनवान्यधुना किमु ?, प्र. ८ गृहीत्वा (कृत्वा).

रत्नाष्टापदरूप्यविद्रुमशिलाश्रीखंडरीर्यादिभि—र्मूर्तिं स्फूर्तिमयीं विधापयति यः श्रद्धाभरादर्हताम् । तस्मान्नश्यति भीरुकेव कुगतिः स्निग्धेव संसेवते, शक्रश्रीर्वशितेव मुक्तिरमणी तत्संगमं वांछति ॥ ६७ ॥ ( शार्दूलविक्रीडितं वृत्तम् ) विद्युन्माली तदुक्तं तत्, स्वीकृत्य शुभमार्गवत् । यात्रायां परिपूर्णायां, चलितः स्वगृहं प्रति ॥ ६८ ॥ निरीक्ष्य क्षत्रियकुंड—ग्रामेऽस्मान् प्रतिमांजुषः । लात्वा च हिमवच्छैल—तटाद् गोशीर्षचंदनम् ॥ ६९ ॥ अस्मन्मूर्तिं यथादृष्टां, कृत्वाऽत्यद्भुतभूषणाम् । चिक्षेप संपुटे शेष—श्रीखंडपरिनिर्मिते ॥ ७० ॥ त्रिभिर्विशेषकम् ॥ लात्वा संमुत् समुद्गं तं, व्योम्ना गच्छन् ददर्श सः । अब्धौ भ्रमंतं षण्मासीं, पोतमुत्पातवायुना ॥ ७१ ॥ इंद्रजालवदुत्पातं, तं संहृत्य स निर्जरः । सांयात्रिककरे दत्त्वा, समुद्गमिदमूचिवान् ॥७२॥ अत्रास्ति प्रतिमा दिव्या, गृहीत्वैनां स्वकोशवत् । सिंधुसौवीरदेशस्थं, गच्छेर्वीतभयं पुरम् ॥ ७३ ॥ स्थित्वा त्वं श्रीपथे तत्र, कुर्वीथाश्चेति घोषणाम् । गृह्यतां गृह्यतां देवा—धिदेवप्रतिमां जनाः ! ॥७४॥ ततस्तस्मिन् गते देवे, स वणिक् तत्प्रभावतः । सुखं तत्पुरमासाद्य, तथैव विदधेऽखिलम् ॥७५॥ तत्र तां घोषणां श्रुत्वा, नृपः स्वयमुदायनः । तपस्विभक्तः संप्राप्तो, विप्राद्या अपि भूरिशः ॥ ७६ ॥ स्मारं स्मारं स्वदेवि—पद्मयोनिजनार्दनान् । तीव्रधारैः कुठारैस्ते, विभिदुस्तं समुद्गकम् ॥ ७७ ॥ कठोरा अप्यभज्यंत, स्राक् तस्मिन्नश्मनीव ते[12] । न चासौ विभिदे किंचित्, क्वचिद् वज्रमिव स्वयम् ॥ ७८ ॥ गर्जंतस्तत्र ये प्राप्ताः, सप्रभावा द्विजादयः । प्रदोषा[13] इव तेऽ-

---

१ सुवर्ण०. २ पाषाण० ३ रियां० प्र, रिरी–धातुविशेषः ( पीत्तल या कलाई ). ४ दीप्तिमयीम्. ५ पुरुषात्. ६ चलितः, प्र. ७ कायोत्सर्गभाजः. ८ पेटायाम्. ९ सहर्षः ❀ पोतेन वाणिज्यकारक –सायात्रिक इत्यमर. १० तापसभक्तः. ११ शंकरब्रह्मविष्णून्. १२ कुठाराः. १३ दुष्टा इव–प्रकृष्टदोषयुक्ता इव.

भूवन्, गर्वलश्यामलानना: ॥ ७९ ॥ नृपे तथैव तत्रस्थे, जाते च दिनयौवने । दिदृक्षुरिव तच्चित्रं, व्योममध्यं श्रितो रविः ॥ ८० ॥ राज्ञो विज्ञाय वेलाऽति—क्रमं भुक्तौ प्रभावती । तदाऽऽह्वानाय दासीं स्वा—मादिदेश प्रियंवदाम् ॥८१॥ तत्कौतुकनिरीक्षार्थं, राज्ञाऽऽज्ञप्ता तया द्रुतम् । प्रभावत्यपि तत्रागात्, सर्वमूचे प्रियश्च तत् ॥ ८२ ॥ तच्छ्रुत्वा साऽवदद् देवा—धिदेवा नेश्वरादयः । किंत्वर्हन् देवदेवेंद्र—वृंदवंद्यपदत्वतः ॥८३॥ तदवश्यं भवित्रीह, प्रतिमाऽर्हौचिताऽऽर्हती । अत एव व्यनक्त्येषा, न स्वमीशादिसंस्मृतेः ॥ ८४ ॥ तदहं व्यंजयिष्यामि, मूर्तिं जैनीमिमामिति । उक्त्वाऽर्चयत् समुद्रं सा, चंदनप्रसवादिभिः ॥ ८५ ॥ उच्चैरूचे च देवेषु, त्वं मुख्योऽसि जगत्पते ! । ग्रहेषु पद्मिनीनाथा—दपरः प्रवरः किमु ? ॥ ८६ ॥ यद्यहं तव धर्मेऽस्मि, सुलसेवानुरागिणी । तदा प्रसद्य मे देहि, निधिवन्निजदर्शनम् ॥ ८७ ॥ एवं तद्भ-दितैर्वाक्यै—र्मानवीयैः करैरिव । भवति स्म समुद्रोऽसौ, व्याकोशः पद्मकोशवत् ॥८८॥ अम्लानमाल्ययुग् दीप्रा—लंकारा तत्र साऽऽर्हती । प्रतिमा प्रकटा जज्ञे, लक्ष्मीः क्षीरोदधौ यथा ॥८९॥ तदाऽऽर्हतमतस्यासीत्, प्रभावत्या प्रभावना । यथा कुमुदखंडस्य, कौमुद्याऽतिप्रफुल्लता ॥ ९० ॥ तादृक्प्रभावसौरभ्यं, दृष्ट्वा जैनमतांबुजे । उदायनः क्षितिपति—रन्वरज्यद् द्विरेफवत् ॥ ९१ ॥ तं पोतवणिजं सम्यक्, सत्कृत्यात्मीयबंधुवत् । उत्सवेन गृहेऽनैषीत्, प्रतिमां तां प्रभावती ॥ ९२ ॥

---

१ महिष०. २ दास्या, तदा, प्र. ३ देवाना देवेन्द्राणा च वृन्दैर्वंद्यौ पदौ यस्य स तस्य भावस्तस्मात्. ∴ पूजोचिता–पूजनीया इत्यर्थ ४ आत्मानम्. ५ प्रसव.–पुष्पम्. ६ व्यागत· कोशात्–प्रफुल्ल.–विकस्वर–उद्घटित इत्यर्थः. ७ उन्नतिः.

मन्वाना हृदि तां साक्षात्, परमात्ममयीमिव । अंतरंतःपुरं न्यस्य, पूजयामास चाऽऽदरात् ॥ ९३ ॥ तस्याः पुरः *स्वर-ग्राम—मूर्च्छनाद्यतिबंधुरम् । [1]उपवीणयति प्रीत्या, स्वयं पत्यावुदायने ॥ ९४ ॥ शीर्षादि[2]भावेसुभगं, सचतुःषष्टिहस्तकम् । [3]द्वात्रिंशदंगहारं च, शताष्टकरणांचितम् ॥ ९५ ॥ [4]रेसाद्यनुगुणं लास्य—तांडवाभ्यां द्विधा कृतम् । देवीव विदधे नृत्य—मद्य(माढ्य)भक्तिः प्रभावती ॥ ९६ ॥ त्रिभिर्विशेषकम् ॥ एवं तत्प्रतिमापूजा—ध्याननाट्यादिकर्मभिः । पुण्यं कोशे [5]न्यधाद् राज्ञी, विवेकस्य फलं ह्यदः ॥ ९७ ॥ कदाचन प्रभावत्यां, नृत्यंत्यां प्रतिमाग्रतः । गायन्नुदायनो मूढ, इव चस्खाल तालतः ॥ ९८ ॥ ततो जाते रसच्छेदे, प्रिया प्रेयांसमूचुषी । निद्रालोरिव केयं ते, स्वामिन्ननवधानता ? ॥९९॥ स प्रोचेऽनवधानत्वं, न मे किंतु प्रिये ! तव । नृत्यंत्या वर्ष्म निःशीर्षं, वीक्ष्य शून्य इवाभवम् ॥ १०० ॥ अतिस्पष्टमरिष्टं त—न्मत्वा राज्ञी विशेषतः । धर्मध्यानं व्यधात् तद्धि, शोकापनुदमादिमम् ॥१०१॥ पूजाक्षणेऽन्यदा दास्याऽऽ—नीतं धौतांशुकद्वयम् । दृष्टिभ्रान्त्याऽरुणं दृष्ट्वा, रुष्टा साऽऽचष्ट तामिति ॥ १०२ ॥ रेरे दासि ! त्वमानैषा, मांजिष्टे वसने किमु ? । साऽवोचद् देवि ! पश्यैते, हिमांशुद्युतिनिर्मले ॥ १०३ ॥ ततस्ते विशदे वीक्ष्य, पूर्वोत्पन्नेन तेन च । दुर्निमित्तेन सा राज्ञी, मेनेऽल्पायुष्कमात्मनः ॥ १०४ ॥ विपाकेभ्य इवात्युग्रे—र्विषयेभ्यो विरज्य च । पार्थिवं प्रार्थयांचक्रे, चारित्रार्थं

* स्वरादीनां लक्षणानि पंचत्रिंशत्तमे पत्रे विलोकनीयानि. 1 वीणया उपगायति इति उपवीणयति, उपवीणयतीति उपवीणयन्, तस्मिन् सति. 2 क्रिया-चेष्टा. 3 अंगविक्षेपम्, अंगुल्यादिविन्यासभेदेन नृत्यम्. 4 नृत्यवादित्रगीतानां, प्रयोगनशभेदिनाम् । संस्थानं ताडनं रोधः, करणानि प्रचक्षते, 1 ॥ राजकं:स्थैर्यकतालय्याग-स्थापकताडनाविशेषाः करणानि. 5 भक्तिरसभेदानुसारि. 6 न्य-अ. 7 कूर्पासोऽपिवक्षितः, 8 राज्ञा निःशीर्षनर्मदर्शनेन. 9 धौतांशुकयोः रक्तत्वदर्शनेन.

पुनः पुनः ॥ १०५ ॥ आगत्य समये स्वर्गाद्, धर्मं मां प्रतिबोधयेः । इति वाग्बंध[1]मातत्य, सोऽनुमेने व्रताय ताम् ॥ १०६ ॥
ततः प्रभावती श्रित्वा, श्रामण्यं गुरुसन्निधौ । तपोधनेन सौधर्मे, देवभूय[2]मुपार्जयत् ॥ १०७ ॥ प्रतिमां तां च शुद्धांतः-
स्थायिनीं राड्निदेशतः । कुब्जिका देवदत्ताख्या, दासी नित्यमपूपुजत् ॥ १०८ ॥ अथ प्रभावतीदेवो, विज्ञातप्राग्भवो
दिवः[3] । एत्य क्लेशेन सम्यक्त्वेऽ—स्थापयत् तमुदायनम् ॥ १०९ ॥ आरभ्य तद्दिनं विश्व—जनीने जिनशासने । मज्जा-
(महा)जैन इवोद्दाम—भावनोऽजनि भूमिभुक् ॥ ११० ॥

इतश्च कश्चिद् गान्धार—नामा गान्धारदेशभूः । श्राद्धः शाश्वतचैत्यानि, नंतुं वैताढ्यमभ्यगात् ॥ १११ ॥ तन्मूले
स स्थितो गंतु—मुपरिष्टादशक्नुवन् । आरराधोपवासैस्तां, घनैः शासनदेवताम् ॥ ११२ ॥ पूरयित्वेप्सितं तस्य, दत्त्वा
चाष्टोत्तरं शतम् । गुलिकाः कामदा देवी, तं तत्रैवामुचत् पुनः ॥ ११३ ॥ देवाधिदेवमूर्तिं तां, नंतुं वीतभयस्थिताम् ।
ध्यात्वा तां गुलिकां न्यास्थद्, गान्धारः स्वमुखांबुजे ॥ ११४ ॥ तदैव तत्प्रभावेण, स वीतभयमभ्यगात् । कुब्जाद्वारेण
तां मूर्तिं, नमश्चक्रे च भक्तितः ॥ ११५ ॥ अन्येद्युः कष्टितो[4] गात्रे, गान्धारस्तं च कुब्जिका । साधर्मिकातिवात्सल्या—
दचिकित्सत् स्वयामिवत्[5] ॥ ११६ ॥ स ज्ञात्वा मृत्युमासन्नं, प्रभावोक्तिपुरस्सरम् । वितीर्य गुलिकाः कुब्जा—करे व्रतमा-
शिश्रियत् ॥ ११७ ॥ कुब्जिकाऽथ कुरूपा सा, ध्यात्वा स्वस्य सुरूपताम् । वक्त्रैकगुलिकाक्षेपाद्, देवीवाऽजनि दिव्यरुक्
॥ ११८ ॥ तया गुलिकया काये, सुवर्णाभा बभूव यत् । सुवर्णगुलिकेत्युक्ता, ततः सा सकलैर्जनैः ॥ ११९ ॥ योग्यप्रिय-

१ वाचा बंधनं कृत्वा. २ देवत्वम्. ३ दितः, प्र. ४ कष्टं सजातं यस्य स कष्टित.-गात्रे कष्टित. सजात.. ५ स्वभगिनीवत्.

तमाभावाद्, रूपं मम वृथेति सा। अपरां गुलिकां न्यस्य, मुखे चिंतितवत्यदः ॥ १२० ॥ अयं नृपः पितृप्रायः, परे त्वस्य पदातयः। तद् भूयान्मे प्रियश्चंड—प्रद्योतो मालवेश्वरः ॥ १२१ ॥ इदं तच्चिंतितं कर्तुं, तदा शासनदेवता। पुरस्तान्मालवेशस्य, तद्रूपं सुष्ठु तुष्टुवे ॥ १२२ ॥ तदर्थनार्थं सद्योऽपि, प्रद्योतो दूतमादिशत्। साऽपि प्रार्थयमानं तं, समानमिदमब्रवीत् ॥ १२३ ॥ अदृष्टपूर्वं तं नैव, वृणोमीत्यानयात्र तम्। तत् तदुक्तं स्वनाथाय, दूतोऽपि प्रत्यपीपदत् ॥ १२४ ॥ नाम्ना गत्याऽपि चारुह्याऽ–निलवेगं मतंगजम्। प्रद्योतस्तत्र निश्यागा—दहो मदनशासनम् ॥ १२५ ॥ द्वयोरपि मिथः प्रेम्णि, प्रवृत्ते रूपवीक्षणात्। स तामूचे चकोराक्षि !, समेहि नगरं मम ॥ १२६ ॥ साऽब्रवीत् प्रतिमा जैनी, जीवातुर्मम विद्यते। तां विनाऽहं न जीवामि, क्षणं यामि च न क्वचित् ॥ १२७ ॥ तदेतस्याः प्रतिच्छंदं, त्वं विधाप्य समानय। यथा तामत्र विन्यस्य, लात्वा चैनामुपैम्यहम् ॥ १२८ ॥ दृष्ट्वा तत्प्रतिमारूपं, स्थित्वा तां रजनीं च सः। प्रातर्ययावुज्जयिनीं, सिद्धवन्मालवाधिपः ॥ १२९ ॥ सच्चंदनेन निर्माप्य, प्रतिमां तादृशीं नवाम्। स प्रतिष्ठापयामास, कपिलेन महर्षिणा ॥ १३० ॥ अलंकृतार्चितां कृत्वा, करे तां प्रतिमां नृपः। आरुह्यानिलवेगेभं, पुनर्वीतभयं ययौ ॥ १३१ ॥ व्यश्राणयच्च दास्यै तां, साऽप्यादाय पुरातनीम्। प्रतिमां तत्र मुक्त्वा च, नवां प्राप नृपांतिकम् ॥ १३२ ॥ ततस्तत्सहितां कुब्जा—मारोप्य नृपतिर्द्विपे। स्पंदेनातिसमीरेण, प्रपेदे निजमास्पदम् ॥ १३३ ॥

अथ तौ विषयासक्तौ, तामर्चार्थं वितेरतुः। भायलस्वामिवणिजे, विदिशानगरीजुषे ॥ १३४ ॥ वणिजस्तस्य सदन—

१ मानेन सहितं, सत्कारपूर्वम्. २ लुङ्, प्रत्यपादयत्, लङ्. ३ मतंगजं–हस्तिनम् ४ प्रतिबिंबम्. ५ अदात् ६ स्पदेन–गमनेन.

स्थायिनी प्रतिमा च सा । भूरिकालात्यये मिथ्या—दृग्भिर्गुप्ताऽर्चयिष्यते ॥ १३५ ॥ वहिः प्रतिकृतिस्तस्याः, स्थापयित्वा च तैर्जडैः । भायलस्वामिसंज्ञोऽय—मादित्य इति वक्ष्यते ॥ १३६ ॥ लोकोऽप्यहो तदुक्तं तत्, सत्यमित्यवधारयन् । तामर्चिष्यति कस्को हि, धूर्तदंभो न जृंभते ? ॥ १३७ ॥

अथ वीतभयस्वामी, कृतस्नानादिकक्रियः । देवताऽऽयतनं प्रात—र्ययौ पूजाचिकीः स्वयम् ॥१३८॥ दृष्ट्वाऽग्रे प्रतिमां म्लान—माल्यां स ध्यातवान् हृदि । नेयं देवमयी सैव, काऽप्यपूर्वेति मे मतिः ॥ १३९ ॥ प्रतिक्षणं नवानीव, यत् तत्पुष्पाणि कर्हिचित् । न म्लायंति स्म दासी च, साऽत्र नास्ति तदर्चिका ॥ १४० ॥ श्रुतं चाद्य निषादिभ्यो, निर्मदा दंतिनोऽभवन् । आगादनिलवेगोऽत्र, तन्नूनं गंधसिंधुरः ॥ १४१ ॥ जानेऽत्रानिलवेगस्थो, मालवेन्द्रोऽभ्युपेत्य सः । गृहादप्यहरद् रात्रौ, प्रतिमां कुब्जिकामपि ॥ १४२ ॥ ततः स कोपदुष्प्रेक्षो, द्वादशाक्ष इव स्वयम् । प्रतस्थे सह सैन्येन, प्रद्योतविजिघृक्षया ॥ १४३ ॥ किरीटिनो नृपाः सेना—युतास्ते दश तं श्रिताः । यथा ग्रावापगापूर्णा, गंगावाहाः पयोनिधिम् ॥ १४४ ॥ अथ तत्सैनिकाः प्राप्य, निर्जलां *जंगलावनिम् । मृगा इवापतन् वारि—भ्रांत्या मरुमरीचिकाः ॥ १४५ ॥ इतस्ततो भ्रमंतस्ते, तृट्शुष्यद्गलतालवः । एकं विमुच्य नेत्रांभो, नान्यदंभो न्यभालयन् ॥ १४६ ॥ तदोदायनभूपेन, प्रभावत्यमरः स्मृतः । त्रिपुष्कराणि पानीयै—रेत्य स्वर्गादपूपुरत् ॥१४७॥ पायं पायं पयःपूरं, पीयूषमिव सैनिकाः । उज्जीवंति

1 मिथ्यादृग्भिरुक्तम्. २ देवस्वरूपा–देवप्रतिमा. ३ कार्तिकेय०. ४ विग्रहीतुमिच्छया. ५ पर्वतनदीपूर्णा गंगाप्रवाहा०. * विशिष्टवाचकपदानां विशेषणवाचकपदपृथगुपादाने सति विशेष्यमात्रपरत्वम्. ६ जांगलावनिम्, प्र. ७ द्वितीयाबहुवचनम्. ८ त्रितटाकाः. ९ पीत्वा पीत्वा जलसमूहम्.

स तत्कालं, कालेना[1]ऽऽकलिता अपि ॥ १४८ ॥ जीविता* जलपानेन, जीवनीयं तथाऽमृतम् । नामद्वयं तदा तस्य, सार्थकं मेनिरे जनाः ॥ १४९ ॥ अनीके सुस्थिते जाते, ततः प्रस्थाय पार्थिवः । प्रयाणैस्त्वरया क्लृप्तै—र्जगामोज्जयिनीं पुरीम् ॥ १५० ॥ तत्र वीतभयेशस्य, प्रद्योतस्य च दूततः । रथमारुह्य योधव्य-मित्यजायत संगरः[2] ॥ १५१ ॥ सांग्रामिकं रथं श्रित्वाऽ—भिमान इव मूर्तिमान् । उदायनः कराऽऽकृष्ट-चापस्तस्थौ रणस्थले ॥ १५२ ॥ रथाजय्यमथाऽऽध्याय, तं त्यक्तरथसंगरः । गंधस्तंबेर[3]मारूढः, प्रद्योतोऽप्याययौ युधम् ॥ १५३ ॥ वीक्ष्य वीतभयस्वामी, तं तथा कुपितोऽवदत् । रेरे त्वमीदृक्प्रौढोऽपि, किमभूर्भ्रष्टसंगरः ॥ १५४॥ रथमारुह्य योत्स्येऽह-मित्युदीर्य स्वयं पुरा । इदानीमन्यथाऽऽगच्छन्, स्वजनेऽपि न लज्जसे ? ॥१५५॥ यद्वाऽन्यगृहमाविश्य, मूर्तिं दासीं च चौरवत् । हरन्नालज्जथास्त्वं चेद्, वाग्लोपाल्लज्जसे कथम् ? ॥ १५६ ॥ जीवितार्थी ह्रिया सार्धं, संधां यद्यप्यमुंचथाः । तथापि मत्करोन्मुक्तै-र्न जीविष्यसि मार्गणैः ॥ १५७ ॥ ततोऽतिभ्रमयन् वेगात्, कुंभकृच्चक्रवद् रथम् । उदायनोऽभ्यधाविष्ट, वधाय स्वविरोधिनः ॥ १५८॥ यौगपद्येन हंतुं तं, सरथ्यरथसारथिम् । प्रद्योतोऽपि निजं गंध-सिंधुरं क्रुधमैरिरत्[4] ॥१५९॥ रथस्य भ्रमतस्तस्य, ग्रहणार्थं यथा यथा । बंभ्रमीति स पृष्ठस्थः, सरोषो वैरिवारणः[5] ॥ १६० ॥ तथा तथा तीक्ष्णमुखैः, गार्द्धपक्षै[6]रुदायनः । तस्य पादतलान्युच्चै-र्विव्याध व्याधवन्मुहुः ॥ १६१ ॥ तच्छायक[7]क्षतैः पादै-श्चतुर्भिरपि स द्विपः । ऊर्ध्वं स्थातुमनीशः स-न्नपतत् पंगुवद् रणे ॥ १६२ ॥ पातयित्वा ततः कुंभि-कुंभाद् वीतभयप्रभुः । प्रद्योतं जगृहे बद्ध्वा, मूर्तं जयमिवा-

॥ १९३ ॥

१ मृत्युना. * जलपानेन-जीविताः जनाः. २ प्रतिज्ञा. ३ गंधहस्तिनम्. ४ प्रैरयत्. ५ वैरिहस्ती. ६ शरैः. ७ तत्सायक० प्र.

त्मनः ॥ १६३ ॥ दासीपतिरिति व्यक्तै—र्वर्णैस्तस्यालिकस्थले[1] । अंकं[2] च रचयामास, स्वीयकीर्तिप्रशस्तिवत् ॥ १६४ ॥
प्रद्योतोक्त्या परिज्ञाय, प्रतिमां विदिशास्थिताम्[3] । तां पुरीं जग्मिवान् भूभृ—न्मालवेंद्रसमन्वितः ॥ १६५ ॥ तेन तत्रा-
र्चयित्वोच्चैः, प्रतिमा चालिताऽपि सा । न चचाल निजस्थाना—दचलेवाचलस्थितिः[4] ॥ १६६ ॥ विशेषात् पुनरभ्यर्च्य,
जगादैवमुदायनः । प्रभो ! किं मेऽभवद् भाग्यं, भंगुरं नैषि यद् गृहम् ? ॥१६७॥ जगौ तन्मूर्त्त्यधिष्ठाता, मा शोचीस्त्वं
पुरं तव । भविष्यति स्थलं धूली—वृष्ट्या नैष्याम्यहं ततः ॥ १६८ ॥ तदादेशेन तेनासौ, नृपतिः स्वपुरं प्रति । न्यवर्तिष्ट
करभ्रष्ट—चिंतामणिरिव व्यथी ॥१६९॥ अमुष्य गच्छतो मार्गे, पुस्फोर[5] जलदागमः । उज्जीवयन् जगल्लोकं, स्वोदयेन महानिव[6]
॥ १७० ॥ एते घटीप्रहरऋक्षरवींदुचारैः, सर्वेऽपि यद्यपि समा ऋतवः[7] स्फुरंति । भूयांस्तथापि महिमाऽस्य घनागमस्य, येनोच्छ्वसं-
त्यखिलविष्टपजीवितानि[8] ॥ १७१ ॥ ( वसंततिलका ) सौदामिनीं मुहुर्दीप्रां, स्फारयन्[9] शुशुभे घनः[10] । हंतुं स्ववैरिणं ग्रीष्मं,
कृपाणीं[11] नर्त्तयन्निव ॥ १७२ ॥ स्पर्धयेव तदा मेघ—माला निष्पतिका[12] अपि । नीरैरस्रैश्च[13] सिषिचुः, क्षोणीपीठमुरोऽपि च
॥ १७३ ॥ ततो विश्वक्समालोक्य, पयःपूरमयीं महीम् । स्कंधावारं निवेश्याऽस्था—न्नृपस्तत्रैव कुत्रचित् ॥ १७४ ॥ जलात्
त्रातुं रजोवप्रान्, कृत्वा दश नृपाः स्थिताः । पुरं दशपुरं[14] नाम्नाऽ—भवत् तच्छिबिरं ततः ॥ १७५ ॥ प्रद्योतं भोजना-
र्थमस्तं, नृपः सम्यगमोदयत् । अहितेऽपि हि नौचित्यं, संतो मुंचंति जातुचित् ॥ १७६ ॥ प्रभावतीदिविषदा, ज्ञापितः

१भालस्थले. २चिह्नम्. ३विदिशानगरीस्थिताम्. ४पृथ्वीव. ५(प्रादुर्बभूव चिचेष्टे वा). पुस्फेरे. प्र. ६महापुरुष इव. ७शरद्धेमन्तशिशिरवसन्तग्रीष्मवर्षाः आश्विनादिमा-सक्रमेण द्विद्विमासप्रमाणाः. ८जीवनानि. ९विस्तारयन् १०मेघः. ११लघुखड्गम्. १२पतिरहिता स्त्री—विरहिणी. १३अश्रुभिः. १४'मंदसोर' इतिनामनगर मालवदेशस्थम्.

पर्व वार्षिकम् । उदायनोऽतिश्रद्धालु—रुपवासं वितेनिवान् ॥१७७॥ तदा प्रद्योतमप्राक्षीत्, सूपकृद् भोक्ष्यसेऽद्य किम्? ।
तन्निशम्य भयाऽऽक्रांत—स्वांतः सोऽपि विमृष्टवान् ॥ १७८ ॥ अपृष्टपूर्वी यदयं, मामेतत् परिपृच्छति । गिराऽनयोप-
हासिन्या, तन्नूनं नाऽद्य मे शिवम् ॥१७९॥ को हेतुरद्य प्रश्नेऽस्मिन् ?, पृष्टस्तेनाथ सूपकृत् । ऊचे पर्यूषणापर्व—ण्यस्मि-
न्नाथोऽस्त्युपोषितः ॥१८०॥ नृपयोग्यां रसवतीं, त्वत्कृते करवाणि काम् । इति त्वां पृष्टवानेत—च्छ्रुत्वा सोऽपि शठोऽव-
दत् ॥ १८१ त्वयाऽहं साधु पर्वेदं, ज्ञापितः पितरौ यतः । श्राद्धौ ममाऽपि तेनाऽऽस्ता—मुपवासोऽद्य पुण्यकृत् ॥१८२॥
भक्तकृत् तदभाषिष्ट, निजनाथाय तत्क्षणम् । सोऽप्याख्यद् धूर्तराजोऽयं, सम्यग् जानाति मायिताम् ॥ १८३ ॥ मायी
वाऽस्त्वपमायो वा, नास्मिन् वंदिस्थिते मम । पर्वेदं जायते धर्म्य—मिति तं मुक्तवान्नृपः ॥ १८४ ॥ क्षमयित्वा च तं
सम्यक्, तस्य भालांकगुप्तये । पट्टबंधनमाधत्त, विवेकः कोऽप्यहो सताम् ॥ १८५ ॥ तत्प्रभृत्यभवत् पट्ट—बंधो मौलौ
महीभृताम् । तत्पूर्वं ते दधुस्तत्र, मंडनं मुकुटं पुनः ॥ १८६ ॥ याते घनऋतौ तस्मि—न्नैश्वर्यार्पणपूर्वकम् । प्रेष्य प्रद्यो-
तमात्मीयं, स्थानमापदुदायनः ॥ १८७ ॥ पुरं दशपुरं तच्च, लोकैराढ्यं भविष्णुभिः । तथैव पप्रथे पृथ्व्यां, स्थानं हि स्या-
न्महत्कृतम् ॥ १८८ ॥

अथोदायनभूजानि—र्महद् दुःखं दधौ हृदि । देवाधिदेवप्रतिमां, विना लक्ष्मीमिवाधनः ॥ १८९ ॥ दध्यौ
च हा ममाभाग्य—मुदजृंभत कीदृशम् । येन वेश्मांतरस्थाऽपि, गतेयं कामधेनुवत् ॥ १९० ॥ तं तथा दुःखिनं



१ सूपकृत्. २ धूर्तशिरोमणिः. ३ कारास्थिते. ४ धर्मयुक्तं धर्मप्राप्यं वा. ५ गोपनाय. ६ अकरोत्. ७ मस्तके. ८ प्रसिद्धिं प्राप. ९ अचेष्टत.

स्वस्थयासासिवानेवं, प्रभावत्यमरस्तदा ॥ १९१ ॥ नृप ! चेत्क्लिश्यसे[1] कस्मा—दित्थं तत्प्रति-
प्रेक्ष्य, स्नेहादेत्य त्रिविष्टपात् । स्वस्थयासासिवानेवं, प्रभावत्यमरस्तदा ॥ १९२ ॥ जीवंतस्वामिनो याऽस्ति, प्रतिमा त्वद्[2]गृहे नवा ।
माकृते ? । कल्पवल्लीव नाल्पिष्ठै—र्भाग्यैः सा लभ्यते यतः ॥ १९२ ॥ यत्[3] प्रतिष्ठाविशेषेण, प्रतिमा स्यात् प्रभावभूः । प्रत्यष्ठाच्च
साऽपि निस्सीममाहात्म्यात्, तीर्थप्रायैव बुध्यताम् ॥ १९३ ॥ तद्व[4]देवेयमप्यर्च्या, प्रतिमा भवताऽनिशम् । चारित्रमपि च ग्राह्य—मात्मः
स्वयमिमां, केवली कपिलो मुनिः ॥ १९४ ॥ उदीर्येति गते तस्मिन्, देवे वीतभयप्रभुः । तामप्याराधयामास, वासनावासिताशय-
नीनं यथा[5]क्षणम् ॥ १९५ ॥ उदीर्येति गते तस्मिन्, श्रीवीरस्तिष्ठति स्वयम् ॥ १९७ ॥ विवि-
॥ १९६ ॥ पुण्यलक्ष्मीलताकंदं, सद्[6]ध्यानमिदमादधे । स्तुत्यास्ते विषया[7] यस्मिन्, ये श्रयंति व्रतश्रियम् ॥ १९८ ॥ पृथिवीं पावयन्
क्तास्ते नमस्यंति, ये तं तीर्थमिवान्वहम् । कृतार्थास्ते नृपास्तस्माद्, ये श्रयंति व्रतश्रियम् ॥ १९९ ॥ इमं तदाशयं मत्वा, तत्प्रव्राजन-
पादै—र्भगवान् भानुमानिव । यद्यत्रैति तदा ध्वस्त—तमाः साधुपथं श्रये ॥ १९९ ॥ इमं तदाशयं मत्वा, तत्प्रव्राजन-
पादै—र्भगवान् भानुमानिव । यद्यत्रैति तदा ध्वस्त—तमाः साधुपथं श्रये ॥ १९९ ॥ उदायनो मुदा भृंगी—भूयाऽस्मत्पदपंकजे । कर्णेहत्य
काम्यया । चंपानगर्याः प्रस्थाय, वयमायाम तत्पुरम् ॥ २०० ॥ उदायनो मुदा भृंगी—भूयाऽस्मत्पदपंकजे । कर्णेहत्य
पपावेव—मुपदेशमयं रसम् ॥ २०१ ॥ यया[10]ऽयं क्षेत्रज्ञः[11] परिहृतपथं वाङ्मनसयो[12]—श्चिदानंदं विंदत्यनुपमसुखाऽऽश्लेष-
सुभगम् । विरक्ते रक्तां तामभिलषसि चेन्मुक्तिरमणीं[9], तदा त्वं तद्दूतीमिव कुरु करे सर्वविरतिम् ॥ २०२ ॥
( शिखरिणी ) संति दानादयो धर्माः, परं भोगा[13]दिहेतवः । मुक्तिदाने त्वलंभूष्णु—र्व्रतश्रीरेव केवलम् ॥ २०३ ॥ ततः स

१ अतिशयेन खिद्यसे. २ त्वया-इतिशेषः. ३ यस्मात्. ४ पूर्वप्रतिमामिव. ५ यथावसरं-योग्यावसरे इत्यर्थः. ६ संध्यान० प्र. ७ देशा.. ८ निवेकिनः.
९ श्रद्धाप्रतिघातं कृत्वा-तृप्तिं यावदित्यर्थः. १० मुक्त्या. ११ जीवः. १२ निपातनाद् वाङ्मनसशब्दोऽकारान्तो द्विवचनान्तः. १३ आदिना स्वर्गादिग्रहः.

श्रुतचारित्र—कल्पद्रुमफलो नृपः । तस्मिन्नत्युत्सुको जज्ञे, बुभुक्षुरिव भोजने ॥ २०४ ॥ दातुं न युक्तं पुत्रस्य, राज्यं तत्पापभारतः । यदयं भवपाथोधौ, पोतवन्मंक्षु मंक्ष्यति ॥ २०५ ॥ राज्यं दत्त्वा मयाऽयं चेत्, क्षिप्यते नरकावनौ । तदा मद्रंकरत्वं मे, पितुः स्यात्, कीदृशं सुते ॥ २०६ ॥ इति ध्यात्वा निजे राज्ये, यामेयं न्यस्य केशिनम् । दत्त्वा च शासनेऽनल्पान्, ग्रामांस्तत्प्रतिमाऽर्चने ॥ २०७ ॥ उदायनः सपुत्रोऽपि, नृपकेशिकृतोत्सवः । असत्तो व्रतमादद्रे, बीजं मोक्षतरोरिव ॥ २०८ ॥ चतुर्भिः कलापकम् ॥ षष्ठमुख्यैस्तपःकष्टै—र्व्रताहादपि स व्रती । लग्नः शोषयितुं कर्म—पंकं रविरिवांशुभिः ॥ २०९ ॥ सोऽयमीदृक्चरित्रश्री—लीलापात्रमुदायनः । राजर्षिश्चरमोऽस्माभिः, श्रीश्रेणिकसुतोच्यत ॥ २१० ॥ श्रुत्वेति हृष्टः पप्रच्छ, पुनः श्रेणिकनंदनः । राजर्षेरस्य किं भावि ?, पुरस्ताद् भगवन् ! वद ॥ २११ ॥ जिनेंद्रस्तं जगौ तस्य, मुनेः पालयतो व्रतम् । भविता व्याधितस्येव, व्याधिः कदशनैर्महान् ॥ २१२ ॥ स्वदेहेऽपि निरीहत्वा—च्चिकित्सितमनिच्छतः । तस्याग्रे वक्ष्यते वैद्यै—र्दधि भुंक्ष्व गदापहम् ॥ २१३ ॥ अतिव्याधिक्षतं वीक्ष्य, निजकायमुदायनः । गंता गोष्ठास्पदं कांक्षन्, दधि प्रासुकमात्मनः ॥ २१४ ॥ ततोऽपि विहरन् याता, स वीतभयपत्तनम् । ज्ञात्वा तदागमं केशी, वक्ष्यते च कुमंत्रिभिः ॥ २१५ ॥ एष त्वन्मातुलोऽत्रागा—न्नूनं राज्यजिघृक्षया । दुश्चरेण व्रतेनाति—निर्विण्णो यदसौ हृदि ॥ २१६ ॥ पुराऽयं व्रतमादत्त, वैराग्याद् दृढचित्तवत् । ततोऽधुना परिभ्रष्टः, क्लीबवत् सुखमिच्छति ॥ २१७ ॥ वदिष्यति ततः केशी, संप्रत्येवैष किं न हि । राज्यं न्यासवदादत्ते ?, को लोभो मेऽन्यवस्तुनि ।

१ कृतश्रवण०. २ चारित्रे. ३ मद्रं-मंगलम्. ४ भागिनेयम्. ५ आज्ञापत्रे. ६ महीतुमिच्छया. ७ व्रततः. ८ कातरवत्.

॥ २१८ ॥ मंत्रिणस्ते भणिष्यंति, परवस्त्विति माऽभ्यधाः । राज्यमेतत् तवैवेश!, दत्तं त्वद्भाग्यसंपदा ॥ २१९ ॥ क्रियंते यत्कृते भूपै—रक्षत्राणि धनान्यपि । तद्राज्यं निजहस्तस्थं, कः कर्करमिवोज्झति ? ॥ २२० ॥ विदन् सत्यं तदुक्तं तत्, केशी प्रक्ष्यति तर्ह्यहम् । किं तन्वे ? तेऽपि वक्ष्यंति, विषमस्मै वितारय ॥ २२१ ॥ युक्तं दंदश्यते लोका—नकर्णः पन्नगः खलु । कुतूहलं सकर्णोऽपि, खलः साधून् दुनोत्यलम् ॥ २२२ ॥ खलात् किं कालकूटोऽभूत्, कालकूटात् खलोऽथवा ? । परप्राणप्रहाणार्थं, यदिमौ समविक्रमौ ॥ २२३ ॥ कथं खलः खलसमो ?, निःस्नेहो मलिनोऽपि च । स हितो हि पशूनाम—प्ययं न विदुषामपि ॥ २२४ ॥ कयाचित् पशुपाल्याऽथ, विषसंपार्कितं दधि । वितारयिष्यते तस्मै, राज्यलुब्धेन केशिना ॥ २२५ ॥ प्रभावतीसुरो हृत्वा, तद्विषं वक्ष्यते मुनिम् । सविषं दधि लब्ध्वा त्वं, मा प्सासीस्तदतः परम् ॥ २२६ ॥ दध्नि त्यक्ते ततस्तस्य, व्याधिना व्याप्स्यते वपुः । छलं लब्ध्वा प्रकुप्यंति, यद् भूतगदविद्विषः ॥ २२७ ॥ केशिना दापितं भूयो, विषं सा देवताऽपि न । हर्त्री प्रमादतः सोऽथ, भोक्ष्यते सविषं दधि ॥२२८॥ ततो विषोर्मिभिर्विष्वक्—सर्पद्भिर्व्याप्तविग्रहः । प्रायोपवेशनं ज्ञात—प्रांतः स स्वीकरिष्यति ॥ २२९ ॥ पालितानशनो मासं, शमांबुस्नाननीरजाः । लब्ध्वाऽन्ते केवलं मोक्ष—लक्ष्मीमाप्स्यत्युदायनः ॥२३०॥ ज्ञात्वा प्रभावतीदेव—स्तद्वृत्तं कोपविह्वलः । स्थगयिष्यति धूलीभिः, सर्वं वीतभयं पुरम् ॥ २३१ ॥ प्रतिमा साऽपि जीवंत—स्वामिनो धूलिमंडलैः ।

१ अस्मै–मुनये विषं वितारय–विषदानं कारय. *भृशं पुनः पुन. वा दशति. २ कर्णहीनः–चक्षुःश्रवा.–अज्ञानी. ३ आश्चर्यम्. ४ नाशाय. ५ लोडर्थे लुङ् मा भक्षेत्यर्थः. ६ राजर्षिः. ७ अनशनम्. ८ निष्कर्मा. ९ कोपि० प्र.

स्थगिता स्थास्यति क्षोणी—मध्ये निधिगतार्द्धवत् ॥ २३२ ॥ एकं शय्यातरं कुंभ—कारं तस्य मुनेः सुरः । नीत्वा वीतभयस्थानात्, सिणपल्लीं महापुरीम् ॥ २३३ ॥ तन्नाम्ना नगरं नव्यं, कुंभकारेतिसंज्ञितम् । करिष्यत्यहह स्नेहो, निस्सीमो द्युसदामपि ॥ २३४ ॥ युग्मम् ॥ पुनरप्यभयामात्यः, पृष्टवान् परमेश्वरम् । प्रतिमा साऽऽर्हती कर्हि, भाविनी प्रकटाऽऽदिश ? ॥ २३५ ॥ वाण्या योजनसर्पिण्या, प्रोचे द्वैमातुरो जिनः । अस्मन्निर्वाणतो वर्षे, द्विमुनि-द्वींदुसंमिते ॥ २३६ ॥ लाटगूर्जरसौराष्ट्र—सीमनि स्वर्गखंडवत् । भविष्यति पुरं नव्यं, नाम्नाऽणहिल्लवाट-कम् ॥ २३७ ॥ युग्मम् ॥ आसतामपरे लोकाः, पंजरस्थाः शुकादयः । नमस्कारं पठिष्यंति, तस्मिन्नार्हतवेश्मसु ॥ २३८ ॥ पूरयिष्यंति तत्रार्ह—त्प्रतिमा रत्ननिर्मिताः । शाश्वतप्रतिमाऽऽलोक—प्रीतिं धार्मिकचेतसि ॥ २३९ ॥ आढ्या विदग्धा धर्मज्ञाः, पुरुषायुषजीविताः । लोकास्तत्र निवत्स्यंति, सुषमाकालजा इव ॥ २४० ॥ प्रतिवेश्म सपत्नीं स्वां, वीक्ष्य लक्ष्मीं विजृंभिणीम् । असूययेव लोकेभ्य—स्तेभ्यो यास्यति निःस्वता ॥ २४१ ॥ ततोऽस्मन्मुक्तितो वर्षे, नवषड्रसभूमिते । चौलुक्यवंशसद्रत्न—मूलराजनृपान्वयी ॥ २४२ ॥ दयादाक्षिण्यनैपुण्य—शौंडीर्यादिगुणैकभूः । श्रीमान् कुमारपालाख्यो, भविता तत्र भूपतिः ॥ २४३ ॥ युग्मम् ॥ स दानधर्मयुद्धैक—वीरभावविभावनैः । कर्णधर्मसुतश्वेत—हयाननुकरिष्यति ॥ २४४ ॥ आस्वर्धुनीविंध्यशैल—पयोधिशकमंडलम् । पूर्वाद्यासु चतुर्दिक्षु, क्रमात् क्षोणीं स जेष्यति ॥ २४५ ॥ त्रयाणां

१ द्वयोः-मात्रोरपत्यं पुमान् द्वैमातुरः. २ वीरसं० १२७२,-विक्रमसं० ८०२. ३ अणहिलपत्तने. ४ दीर्घायुष्मंतः. ५ चतुर्थारकजा इव. ६ प्रतिगृहम्. ७ वीरसं० १६६९-विक्रमसं० ११९९. ८ रत्नं, प्र. ९ अनुकूलता-दाक्षिण्यम्. १० कर्णयुधिष्ठिरार्जुनान् अनुसरिष्यति. ११ तुरस्क ( तुर्कस्तान ) पर्यन्तम्.

पुरुषार्थानां, साधकत्वात् स भूपतिः । असुभ्योऽपि वसुभ्योऽपि, सुकृतं बहु मंस्यते ॥ २४६ ॥ सोऽन्यदा वज्रशाखायां,
चंचच्चंद्रकुलोद्भवम् । हेमचंद्राभिधं सूरिं, दृष्ट्वा प्रीतिमुपे(पै)ष्यति ॥ २४७ ॥ नमस्कृत्य च तं तस्य, वक्त्रवाग्देवतोदि-
तम् । संश्रोष्यत्यार्हतं धर्मं, केकीव घनगर्जितम् ॥ २४८ ॥ तत्त्वं ज्ञात्वा स चौलुक्यः, श्रि(श्रे)योराशिमिवात्मनः । सम्य-
क्त्वपूर्वकं श्राद्ध—धर्ममूरीकरिष्यति ॥ २४९ ॥ मद्यादिव्यसनध्वंसात्, स निवेश्य दयां भुवि । मुक्त्वा च रुदतीवित्तं,
विहारान् कारयिष्यति ॥ २५० ॥ एकदा वाच्यमानेऽस्म—च्चरित्रे स्वगुरोर्मुखात् । प्रतिमां धूलिगुप्तां तां, चौलुक्यो
निशमिष्यति ॥ २५१ ॥ ततः स खानयित्वाऽऽप्तैः, स्थलं वीतभयस्य तत् । आनाय्य च स्वसदने, चिरं तामर्चयिष्यति
॥ २५२ ॥ इति श्रीवीरचरिताद्, विनिशम्य गुरूत्तमात् । हर्षोदंचितरोमांच—श्चौलुक्यो हृद्यचिंतयत् ॥ २५३ ॥ अहमे-
वेह धन्योऽस्मि, श्लाघ्यजन्माऽहमेव च । अहमेवास्म्यगण्यानां, पुण्यानामेकमास्पदम् ॥ २५४ ॥ भविष्यतोऽपि मे यस्य,
वृत्तमित्यभयाग्रतः । सुरासुरनराध्यक्षं, श्रीवीरः स्वयमूचिवान् ॥ २५५ ॥ ततस्तत्प्रतिमाकृष्ट्यै, विज्ञप्तो भूभृता प्रभुः ।
ध्यात्वाऽवदत् कुरूद्योगं, तत्प्राप्तिस्ते भविष्यति ॥ २५६ ॥ अपि रत्नाकरः शुष्येत्, समीरोऽपि स्थिरो भवेत् । ज्वलेदं-
भोऽपि नाऽसत्या, विस्फुरेद् भगवद्गवी ॥ २५७ ॥ ईदृग्गुरुगिरा भव्यैः, शकुनैरपरैरपि । धर्मात्मा वर्धितोत्साहो, मेने
तां हस्तवर्तिनीम् ॥ २५८ ॥ दत्त्वा तत्प्रतिमाकल्पं, भूभृता प्रहिता जनाः । ज्ञात्वा वीतभयस्थानं, लग्नाः खनितुमादरात्

१ प्राणेभ्यः. २ धनेभ्यः. ३ धर्मं. * वक्त्रं-मुखं तदुत्पन्ना वाक्-वाणी सैव देवता तया उदितं-कथितम्. ४ संस्थाप्य. ५ श्रोष्यति. ६ मयूरव्यंसकादित्वात् परनिपातो विशेषणस्य. ७ आकर्णनाय. ८ गवी-वाणी. ९ कर्तव्यतायुक्तविधानम्. १० कुमारपालदेवेन.

॥ २५९ ॥ परमार्हतभावेन, राज्ञः शासनदेवता । विदधे तत्र सांनिध्यं, तस्यास्तदुचितं खलु ॥ २६० ॥ खन्यमाने स्थले तत्र, धात्रीसूत्रामपुण्यतः । प्रतिमा प्रकटा जज्ञे, स्थापितेव स्वयं पुरा ॥ २६१ ॥ उदायनेन यद् दत्तं, प्रतिमाऽर्चनहेतवे । ग्रामाणां शासनमयं, पत्रं तदपि निर्गतम् ॥ २६२ ॥ तद्दर्शनात् प्रमुदिता, नृपाऽऽयुक्ता यथाविधि । तामर्चित्वा रथोत्संग—मुत्सवेनाध्यरोपयन् ॥ २६३ ॥ उद्दामसहजामोद—वनाकृष्टशिलीमुखाम् । वीज्यमानां च पूर्णेंदु—सुंदरैश्चामरोत्करैः ॥ २६४ ॥ पूज्यमानां प्रतिग्रामं, भविकैः पुण्यलोलुपैः । प्रतिमां तां समानिन्यु—र्जनास्ते पत्तनांतिकम् ॥ २६५ ॥ युग्मम् ॥ ततो गुरुं पुरस्कृत्य, प्रमोदमिव देहिनम् । तत्संमुखं ययौ भूपः, सर्वसंघसमन्वितः ॥ २६६ ॥ प्रीतस्तद्वीक्षणात् साक्षात्, श्रीवीरप्रेक्षणादिव । अभ्यर्च्य कुसुमैर्हैमै—श्चैत्यवंदनमादधे ॥ २६७ ॥ रथात् तां स्वयमुत्तार्य, करींद्रमधिरोप्य च । पुण्यलक्ष्मीमिवात्मीयां, मध्येसौधं समानयत् ॥ २६८ ॥ अंतःक्रीडालयं चैत्यं, विधाप्य स्फाटिकं नवम् । तत्र तां पूजयामास, त्रिसंध्यं भूमिवासवः ॥ २६९ ॥ तत्प्रभावेण तस्यर्द्धि—रवर्धिष्ट दिने दिने । चंद्रोदयेन वेलाऽब्धे—र्वर्धते किं कुतूहलम् ॥ २७० ॥ प्रतिमां तां नमस्कर्तुं, पुंडरीकादितीर्थवत् । समापतन् परोलक्षा, दवीयांसोऽपि धार्मिकाः ॥२७१॥ तस्याः शासनपत्रं तद्, दृष्ट्वा गूर्जरनायकः । उदायनप्रदत्तांस्तान्, ग्रामान् भोगकृते ददौ ॥ २७२ ॥

हेमसूरिरुपादिक्षत्, तस्मै धर्मात्मनेऽन्यदा । शत्रुंजयादितीर्थानां, यात्राफलमिति स्फुटम् ॥ २७३ ॥ ध्याने पल्यसहस्रसंभवमघं प्रक्षीयतेऽभिग्रहे, तल्लक्षोत्थमनेकसागरकृतं मार्गे समुल्लंघिते । तीर्थस्याश्रयणेऽभ्युपैति सुगतिर्देवाऽऽनना-

१ शासनदेवतायाः. २ सान्निध्यकरणम्. ३ भूवासव० कुमारपाल०. ४ आम्रामयम्. ५ अध्यारुरुपत्, प्र. ६ शान्तिगृहमध्ये ७ पूजायै. ८ तीर्थस्य यात्राया ध्याने.

ऽऽलोकने, श्रीसौख्यादि तदर्चने सुरपदं तैत्तीव्रभावे शिवम् ॥ २७४ ॥ ( शार्दूलवि० ) अग्रणीः शुभकृत्यानां, तीर्थया-
त्रैव निश्चितम् । दानादिधर्मः सर्वोऽपि, यैस्मिन् सीमानमश्नुते ॥ २७५ ॥ किंच श्रेयस्करं द्रव्यं, भवेत् तीर्थनिवेशनात् ।
किं माधुर्यकरं नीरं, न हीक्षुक्षेत्रवर्षणात् ? ॥ २७६ ॥ एकाक्यपि नमंस्तीर्थं, श्रेयः संचिनुते सुधीः । यदि संघपतीभूय,
नमस्येत् तर्हि वच्मि किम् ? ॥२७७॥ अत एव चिरजास्ते, भरताद्या महीश्वराः । सप्ततीर्थी नमस्कृत्य, श्रीसंघपतयोऽभ-
वन् ॥ २७८ ॥ तवापि युज्यते राजन् !, पथा तेन प्रवर्तितुम् । गजेन्द्रक्षुण्णमध्वानं, कलभो ह्यधितिष्ठति ॥ २७९ ॥
ततस्तदैव निर्णाय्य, शुद्धं लग्नं महीधवः । देवालयस्य प्रस्थानं, महेन महता व्यधात् ॥ २८० ॥ अमारिपटहोद्घोषः,
कारागारविशोधनम् । साधर्मिकादिसत्कार—श्चैत्यस्नपननिर्मितिः ॥२८१॥ क्लेशेन कारयत्येत—दन्यः संघपतिः सकृत् ।
स तु धार्मिककोटीरः, प्रतिघस्रमचीकरत् ॥ २८२ ॥ युग्मम् ॥

श्रीहेमसूरिप्रमुखाः, सूरयः श्रुतभूरयः । मंत्रिणो वाग्भटप्रष्ठा, राणाः प्रह्लादनादयः ॥ २८३ ॥ नृपनागसुतः श्रेष्ठी
निबिडस्फूर्तिराभडः । वणिक् छाडाभिधो हेम—लक्षानवति(९०)नायकः ॥ २८४ ॥ एते परेऽपि पुण्यश्री—हारिणो
व्यवहारिणः । यात्रार्थमुद्यताः सत्यं, सतां श्रेयस्यतृप्तता ॥ २८५ ॥ त्रिभिर्विशेषकम् ॥ नृपाह्वानाच्चतुर्दिग्भ्य—स्तीर्थार्थं
प्रस्थितैर्जनैः । प्रथीयांसोऽपि पंथानो, जाताः पार्णिधमास्तदा ॥ २८६ ॥ सर्वस्मिन् मिलिते संघे, नृपो यावत् प्रतिष्ठते ।

---

१ देवार्चने. २ तीर्थस्यदेवार्चनविषयकतीव्रभावे. ३ तीर्थे. ४ आश्रयति. ५ नृपमान्यः नागश्रेष्ठिसुत आभडः. ६पाणयो ध्मायन्ते पथ्यति पार्णिधमा अध्वानः अन्धकाराधायकता इत्यर्थः तत्र हि सर्पाणयनोद्याय पाणयः ध्मायन्ते इति सिद्धान्तकौमुदी अतिसंकीर्णा इत्यर्थः.

तावत् कांतरितस्वांतैः[1]—श्चरैरेत्य न्यवेद्यत ॥ २८७ ॥ देव ! डाहलदेशेंद्रः, कर्णः प्रौढबलार्णवः । अत्रागमिष्यति द्वित्रै—र्दिनैर्विग्रहकाम्यया ॥ २८८ ॥ तदाकर्णनमात्रेण, भाले प्रस्वेदबिंदवः । चिंतांभोधेरिवोद्भूता, भूभुजः प्रोज्जजृंभिरे[2] ॥ २८९ ॥ वाग्भटेन समं गत्वा, तदैव गुरवे रहः । कर्णयोः क्रकचाभं तद्, विज्ञप्येति नृपोऽवदत् ॥ २९० ॥ यदि प्रस्थीयते तीर्थे, पश्चादेत्य तदा रिपुः । विलोडयति मद्देशं, कासारमिव कासरः ॥ २९१ ॥ अथ तत्संमुखीभूय, विगृह्ले[3] तर्हि विग्रहे । द्वयोरतिबलत्वेन, कालो लगति पुष्कलः[4] ॥ २९२ ॥ तावंतं च कथं कालं, लोकोऽयं पारदेशिकः । तिष्ठत्यत्रेति विमृशन्, यादश्चिंतार्णवेऽस्म्यहम्[5] ॥ २९३ ॥ धिग् धिग् मामधमाग्रण्यं, यस्य पुण्यमनोरथः । स्खलित्वा रथवद् विघ्न—शैलेऽभज्यत तत्क्षणम् ॥ २९४ ॥ वणिजोऽमी वरं संघ—पतयः स्युः सुखेन ये । न त्वहं सांघपत्यासि—भाग्यहीनः सुपर्ववत् ॥ २९५ ॥ अहो ममोद्भवन्नेव, धर्मकर्मांकुरः कथम् । दग्धो दावानलेनेव, दैवेन हतकेन[6] हा ॥ २९६ ॥ ततो ध्यात्वा नृपस्वांत—चिंतासंतापशांतये । सुधावृष्टिमिवोवाच, वाचं वाचंयमाग्रणीः ॥ २९७ ॥ मा विषीद नरेंद्र ! त्वं, सुरेंद्रेणेव यत् त्वया । श्रेयस्कृत्यं समारंभि, भज्यते तन्न कर्हिचित् ॥ २९८ ॥ स्वास्थ्यं द्वादशभिर्यामै—र्भावीति गुरुणा स्वयम् । धीरितोऽपि[7] रतिं चित्ते, नाऽऽप क्ष्मापः सतापवत्[8] ॥ २९९ ॥ किं भावीत्यामृशन् कामं, सौधे तिष्ठन् महीधवः । प्रभुप्रोक्तक्षणेऽभ्येत्य, व्यज्ञप्यत चरैरिति ॥ ३०० ॥ पत्तनं प्रातरेवाहं, रोत्स्ये निजबलैरिति । स्वामिन् ! भवद्रिपुः कर्णो, निशि प्रास्थित सत्वरम् ॥ ३०१ ॥ हस्तिपृष्ठमधिष्ठाय, स निशीथे समापतन् । अपुण्यप्रेरित इव, क्षणं निद्रामुपासदत् ॥ ३०२ ॥

१ व्यसनाकुलितस्वान्तै. २ चिचेष्टिरे. ३ युध्ये. ४ बहुत्वयुक्तो—महानित्यर्थ. ५ जलजंतु.. ६ नष्टप्रायेण—दुष्टेनेत्यर्थः. ७ धैर्यान्वितकृतोऽपि. ८ ज्वरान्वितवत्.

तस्याविद्राणनिद्रस्य, कंठस्था स्वर्णश्रृंखला । मार्गे न्यग्रोधशाखाग्रे, विलग्ना पाशवत् क्वचित् ॥ ३०३ ॥ अधस्तात् प्रस्थिते नागे, तयोर्लंबितविग्रहः । गलरोधेन सद्योऽपि, रिपुरानञ्च पंचताम् ॥ ३०४ ॥ तस्यौर्ध्वदेहिकं कृत्यं, सर्वं वीक्ष्य निजेक्षणैः । देवस्य पुरतो वक्तुं, वयमत्र समैयूम ॥ ३०५ ॥ हहा किमस्य संजात—मिति शोकाकुलः क्षणम् । तदूचे गुरवे भूप—स्तज्ज्ञानाऽतिचमत्कृतः ॥ ३०६ ॥ ततो महोत्सवं कृत्वा, यात्रार्थं प्रस्थितो नृपः । स्वयं भरतचक्रीव, लोकोत्तरविभूतिभृत् ॥ ३०७ ॥ भूयिष्ठत्वेन संघोऽयं, मा स्म दूयिष्ट वर्त्मनि । इति चक्रे प्रयाणानि, पंचक्रोशानि सोऽन्वहम् ॥ ३०८ ॥ पदाभ्यां निरुपानद्भ्यां, दृष्ट्वा यांतं निजं गुरुम् । नृपोऽपि महतीभक्ति—रनुपानत्पदोऽभवत् ॥ ३०९ ॥ ततोऽवोचद् गुरुर्मार्गे, मुनीनां क्रमचंक्रमः । प्राणभृद्रक्षणाद् युक्त—स्तव तु क्लेशकारकः ॥ ३१० ॥ एवं ते स्यात् प्रमादोऽपि, तेनाऽवाच्यं महत् पुनः । आद्रियस्व तदश्वादि, धत्स्व चोपानहौ पदे ॥ ३११ ॥ ततो व्यजिज्ञपत् क्ष्मापो, दौःस्थ्ये प्राक् पारवश्यतः । क्रमाभ्यां न कियद् भ्रांतं, परं तद् व्यर्थताऽऽस्पदम् ॥३१२॥ अयं तु तीर्थहेतुत्वात्, पादचारोऽतिसार्थकः । येनाऽनंता भवभ्रांति—र्मम प्रभ्रंशतेऽभितः ॥३१३॥ एवं युक्त्या गुरोर्भक्त्वा, वाहनग्राहणाग्रहम् । अभिग्रहीव राजर्षि—स्तथैव प्रास्थिताऽध्वनि ॥ ३१४ ॥ दृष्ट्वा राजगुरुं राज—राजं च पदचारिणम् । तयोर्भक्तिकृतेऽन्येऽपि, पद्भ्यां चेलुर्मुनींद्रवत् ॥ ३१५ ॥ चित्रमंगे लगंतीभिः, संघप्रस्थानधूलिभिः । यात्रिकाः कलयामासु—र्नैर्मल्यं धौतवस्त्रवत् ॥ ३१६ ॥ प्रतिस्थानं स्फुरच्चैत्य—परिपाट्यर्चनादिभिः । गृहस्थित इवाऽज्ञास्त, न कोऽपि प्रस्थितिश्रमम् ॥ ३१७ ॥

१ अनष्टनिद्रस्य. २ हस्तिनि. ३ शरीरः. ४ वहुतमत्वेन. ५ पादचारः. ६ नश्यति. ७ प्रचलनपरिश्रमम्.

धंधूकपुरमासाद्य, तद्वासिजनदर्शिताम् । नृपोऽनमद् गुरोर्जन्म—भूमिं तीर्थमिवोत्तमाम् ॥ ३१८ ॥ झोलिकायां स्थितो वाल्ये, प्रभुरत्रेति भूपतिः । चैत्यं विधाप्य तन्नाम्ना, तत्र श्रीवीरमासिसत् ॥ ३१९ ॥ ततः प्रस्थाय सर्वत्र, भासयन्नार्हतं मतम् । स प्राप वलभीद्रंगं, पुण्यरंगतरंगितः ॥ ३२० ॥ स्थाप ईर्ष्यालुरित्यद्री, विद्येते तस्य गोचरे । गुरुस्तदंतरे स्थित्वा, प्रातरावश्यकं व्यधात् ॥ ३२१ ॥ धर्मध्यानपरं तत्र, वीक्ष्य तं सूरिशेखरम् । महीशः श्रेयसीभक्ति-स्तद्गिरिद्वयमूर्धनि ॥ ३२२ ॥ कारयित्वा विहारौ द्वौ, ताविवोच्चैः समुन्नतौ । श्रीमन्नाभेयवामेय-प्रतिमे समतिष्ठिपत् ॥ ३२३ ॥ युग्मम् ॥ ततोऽपि प्रस्थितो भूप-स्तीर्थदृष्टौ कृतोत्सवः । साक्षान्मोक्षमिवारुक्षत्, पुंडरीकगिरीश्वरम् ॥ ३२४ ॥ दृष्ट्वा तत्र निजामात्य-कारितं चैत्यमुज्ज्वलम् । स मूर्त्तमिव तत्कीर्त्ति-स्तोमं मेने स्वमानसे ॥ ३२५ ॥ तस्मिन् रोमोद्गमच्छद्म-मुदङ्कुरकरम्बितः । राजर्षिर्गुरुणा सार्धं, ववंदे नाभिनंदनम् ॥ ३२६ ॥ तीर्थे लोकोत्तरां प्रौढिं, जिनधर्मस्य वीक्ष्य सः । मन्यते स भृशं धन्य-मात्मानं तदवाप्तितः ॥ ३२७ ॥ आर्चित्वा कुसुमैर्हैमै-र्मारुदेवेयमीश्वरम् । राट् चक्रे शक्रवच्चैत्य-परिपाटिमहामहम् ॥ ३२८ ॥ या बभूवुर्वताऽसूर्य-पश्याः क्षोणीशवल्लभाः । प्रतिचैत्यं भ्रमंति स्म, ता अप्यर्चनकाम्यया ॥ ३२९ ॥ मधूकपुरवास्तव्यः, प्राग्वाटकुलमंडनम् । हंसमंत्रीशतनयो, मारुकुक्षिसरोंबुजम् ॥ ३३० ॥ जगडः सपाद-कोटि-मूल्यमाणिक्यदानतः । आद्यां मालां ललौ तत्र, दुष्प्रापेंद्रपदाप्तये ॥३३१॥ युग्मम् ॥ लक्ष्मीवंतः परेऽप्येवं, वद्ध-स्पर्धाः शुभश्रियः । स्वयंवरणमालाव—न्माला जगृहुराग्रहात् ॥ ३३२ ॥ सर्वस्वेनापि को मालां, न गृह्णीयाज्जिनौकसि ।

१ मः, प्र. २ झोलिकानाम्रा—झोलिकाविहार इतिनाम्रा ३ तीर्थदर्शने. ४ महत्ताम् ५ राश्य. ६ महुवा० ७ रु, प्र.

इह लोकेऽपि यत्पुण्यैः, स्फुरेदिंद्रपदं नृणाम् ॥ ३३३ ॥ राज्ञ्यो भोपलदेव्याद्या, लीलां नृपसुताऽपि च । उद्यापनाद्यैः सत्कृत्यैः, स्वश्रियं तीर्थगां व्यधुः ॥ ३३४ ॥ क्षौमस्वर्णमणीहेम—हस्त्याद्यैर्याचकव्रजम् । जीवयंतं नृपं प्रेक्ष्य, विपश्चित् कश्चिदूचिवान् ॥ ३३५ ॥

नष्टास्तेऽर्थिभियेव कल्पतरवो नायांति पार्श्वं नृणां, मानेनेव सुरा रुषेव न वशाः स्वर्णादिसंसिद्धयः । लोकैः सैष कथं भविष्यति कलौ ध्यात्वेति वेधा ध्रुवं, तत्स्थाने विदधे भवंतमधुना चौलुक्यभूमीधव ! ॥ ३३६ ॥ ( शार्दूल० ) विहिताष्टाह्निकास्वर्ण—ध्वजारोपादिसत्क्रियः । वंदित्वाऽऽदीश्वरं भूपो, जगादैवं कृतांजलिः ॥३३७॥ स्वामिन् ! ये व्यंगलन् घस्रा—स्त्वदुपास्तिविनाकृताः । सपत्रांकुर्वते ते मां, करच्युतसुवर्णवत् ॥ ३३८ ॥ विषार्त्त इव पीयूषं, गदार्त्त इव चौषधम् । भवार्त्तस्त्वामहं प्राप्य, प्रीतिं प्राप्तोऽस्मि संप्रति ॥३३९॥ सार्वभौमोऽपि मा भूवं, त्वद्दर्शनपराङ्मुखः । त्वद्दर्शनपरः स्यां तु, त्वच्चैत्ये विहगोऽप्यहम् ॥ ३४० ॥ देवोऽर्हन् गुरुरग्रणीर्व्रतभृतां धर्मः कृपांभोनिधि—र्लोकाढ्यङ्करणी रमा परहितव्यापारपारीणता । उच्चैः सज्जनसंगमो गुणरतिश्चाध्यात्मनिष्णातता, स्वामिन् ! मे त्वदनुग्रहात् प्रतिभवं भूयासुरेतेऽनिशम् ॥ ३४१ ॥ ( शार्दूल० ) इत्याद्यर्थयमानं तं, पार्थिवं प्रेक्ष्य देवतः । नेदिष्ठश्चारणः कश्चि—दुचितं प्रोचिवानिति ॥३४२॥ यो ददात्येकपुष्पेण, नरामरशिवश्रियः । तस्य श्रीआदिदेवस्य, कदरे किंचिदार्जवम् ॥ ३४३ ॥ पुनः पुनः पठेत्युक्ते, श्लोकेऽस्मिन् पठिते सति । वारान् नव ददौ तस्मै, नवलक्षीं मुदा नृपः ॥ ३४४ ॥ पंचशक्रस्तवैर्देवान्, वंदित्वाऽऽनंदमं

१ इति नाम्नी. २ स्वर्ण—धनम्. ३ लोकोऽय स, प्र०. ४ अगमन्. ५ "सुपसुपा" इतिसमास . ६ अलन्तव्यथनं कुर्वन्तीत्यर्थ . ७ ससारात् पीडितः. ८ धूर्यता.

दिरम् । हेमाचार्योऽपि तीर्थेशं, प्रार्थयामासिवानिति ॥ ३४५ ॥ त्वमीशस्त्वं तातस्त्वमतिसदयस्त्वं हितकर—स्त्वमर्च्यस्त्वं सेव्यस्त्वमखिलजगद्रक्षणचणः । अतस्त्वत्प्रेष्योऽहं भवपरिभवत्रस्तहृदयः, प्रपन्नस्त्वामस्मि त्वरितमव मां नामितनय ! ॥ ३४६ ॥ ( शिखरिणी ) अवतीर्य ततस्तीर्था—न्न तद् ध्यानान्महीधवः । कतिभिर्दिवसैः प्राप—दुज्जयंतगिरीश्वरम् ॥ ३४७ ॥ समारोहति सूरींद्रे, नरेंद्रे च समं तदा । स चकंपे गिरिर्लंका—पत्युत्पाटितशैलवत् ॥ ३४८ ॥ तत्कंपकारणं पृष्टः, सूरिराचष्ट तं प्रति । देवास्मिन् विद्यते मार्गे, शिला छत्रशिलाह्वया ॥ ३४९ ॥ अधस्ताद् गच्छतोः पुण्य—शालिनोर्युगपद् द्वयोः । निपतिष्यत्यसौ मूर्ध्नि, श्रुतिरित्यस्ति वृद्धभूः ॥ ३५० ॥ आवां वर्तावहे पुण्य—वंतौ तद्गच्छतोरिह । रैवताचलकंपेन, कदाचन पतेदियम् ॥ ३५१ ॥ तदारुह्य भवान् पूर्वं, तीर्थं स्वार्थं व्यवस्यतु । अहं तु पश्चाद् वंदिष्ये, सामुद्रविजयं जिनम् ॥ ३५२ ॥ नृपोऽवोचन्न मे युक्त—मेवं विनयलोपतः । आरोहतु प्रभुः पूर्वं, पश्चादेष्याम्यहं पुनः ॥ ३५३ ॥ तथा कृत्वा स सूरींद्रो, गूर्जरेंद्रोऽपि संघयुक् । क्रमात् प्रणेमतुर्देवं, स्मरापस्मारघस्मरम् ॥ ३५४ ॥ जिनस्य स्नात्रपूजांग—रागाद्यैस्तत्र भूरिभिः । संचिन्वते स पुण्यानि, राजर्षिरपरेऽपि च ॥ ३५५ ॥ स एव जगडः प्राग्वत्, ताहग्माणिक्यमद्भुतम् । मालाक्षणे पुनर्दत्त्वा, जग्राहेंद्रपदं सुधीः ॥३५६ ॥ तीर्थोचितानि कृत्यानि, विरचय्याखिलान्यपि । एवं विज्ञपयामास, राजा राजीमतीप्रियम् ॥ ३५७ ॥ ध्रुवं त्वद्ध्यानवात्याभि—र्विलीना मेऽघमंडली । यन्मया

---

१ रक्षणेन प्रसिद्धः. २ तव दासः. ३ भव -संसारः. ४ प्राप्तः. ५ अव-रक्ष. ६ सप्तम्येकवचनम्. ७ अष्टापदवत्, ( कैलाशवत् दर्शनान्तरीयमते ). ८ भवान्. ९ कामरोगनाशकम्.

भगवल्लँ लेभे, भास्वतस्तव दर्शनम् ॥३५८॥ घनाघनोदके स्वामिं-श्चित्तवर्त्तिन्यपि त्वयि । व्यथते मां कथं सोऽयं, दवथु-
भवदावभूः ॥ ३५९ ॥ तथा प्रसीद विश्वेश !, त्वदेकशरणे मयि । यथा त्वद्ध्यानयोगेन, मन्मनस्त्वन्मयं भवेत् ॥३६०॥
अथोपास्य चिरं स्तोत्रैः, कुसुमैरिव कोमलैः । तीर्थनाथं ययाचैवं, हेमाचार्योऽपि हर्षुलः ॥ ३६१ ॥ मया प्राप्तो न त्वं
क्वचिदपि भवे प्रोचि नियतं, भवभ्रान्तिर्नो चेत् कथमियत्ताविरहिता । इदानीं प्राप्तोऽसि त्रिभुवनविभो ! पुण्यवशत-स्ततो
भंक्त्वा क्लेशं रचय रुचिरं मे शिवसुखम् ॥ ३६२ ॥ ( शिखरिणी ) ततो मत्वा दुरारोहं, गिरिं श्रृंखलपद्यया । सुराष्ट्र-
दंडनाथेन, श्रीमालज्ञातिमौलिना ॥ ३६३ ॥ राणश्रीआंबदेवेन, जीर्णदुर्गदिगाश्रिताम् । पद्यां सुखावहां नव्यां, श्रीचौ-
लुक्यो व्यदीधपत् ॥ ३६४ ॥ युग्मम् ॥ ततः प्रयाणमासूत्र्य, धात्रीशो देवपत्तने । चंद्रवैहासिकश्रीकं, श्रीचंद्रप्रभमान-
मत् ॥ ३६५ ॥ अत्रापि तादृग्माणिक्य—दानेन जगडः पुनः । प्रथमेन्द्रोऽभवत् पुण्ये, तृष्णा हि महती सताम् ॥३६६॥
तस्य तेन चरित्रेण, सर्वलोकातिशायिना । विस्मितात्मा स राजर्षिः, संघाध्यक्षं तमभ्यधात् ॥ ३६७ ॥ सपादकोटिमू-
ल्यानि, दुरापाणि नृपैरपि । एतानि त्रीणि रत्नानि, कुतस्त्वमुपलब्धवान् ॥ ३६८ ॥ लब्धवांश्चेत् कथं पुण्य-कर्मण्येवं
वितीर्णवान् ? । स्थाने स्थाने हि तद्रत्नं, त्वद्वद् दत्ते न कश्चन ॥ ३६९ ॥ जगौ स जगडो राजन् !, मधूक इति विश्रु-
तम् । पुरमत्रास्ति तत्रासन्, मत्पूर्वेऽतिनृपाः श्रिया ॥ ३७० ॥ मत्पूर्वजार्जितमभू—देतन्माणिक्यपंचकम् । करांबुजे मम

१ ताप. २ पूर्वस्मिन्. ३ प्रभो ! नो चेज्जन्मे कथ० प्र. ॐ प्रमाणरहिता. ४ जुनागढ इति लोके प्रसिद्धस्य नगरस्य दिगाश्रिताम्. ५ चंद्रमुखस्य शोभा यस्य तं.
६ मम पूर्वजा. ७ नृपानतिक्रम्य वर्तमाना..

पितु—र्हंससंज्ञस्य मंत्रिणः ॥ ३७१ ॥ तन्मध्ये त्रयमेतेषु, त्रिषु तीर्थेषु मत्पिता । आचैकांक्ष व्ययीकर्तुं, करे धर्तुं च निर्वृतिम् ॥ ३७२ ॥ परं चिकीर्षितोऽप्यासीत्, तस्य यात्रोत्सवो न हि । ततो मृत्युक्षणे तातः, स मामूचेऽन्तिकस्थितम् ॥ ३७३ ॥ इमानि पंचरत्नानि, स्वीक्रियंतां त्वयाऽङ्गज ! । शत्रुंजयादितीर्थेषु, देयं चैकैकमात्मना ॥ ३७४ ॥ द्वितयं च व्ययीकृत्य, निर्वाह्यं स्वकुटुंबकम् । इत्युक्त्वा तानि दत्त्वा च, मह्यं तातः परासिवान् ॥ ३७५ ॥ युग्मम् ॥ तदुक्तं तन्मया चक्रेऽ—धुना शेषं मणिद्वयम् । दृश्यतामिदमुक्त्वा त—ज्जगडः स्वामिने ददौ ॥ ३७६ ॥ मार्तंडमिव चंडार्चि—र्मंडितं तत् करोदरे । धृत्वा नृपोऽपि संघोऽपि, पश्यतः स्म पुनः पुनः ॥ ३७७ ॥ नाऽहं शस्यो महीशोऽपि, शस्योऽयं वणिगप्यलम् । यो माणिक्यमयीं पूजां, तनोति त्रिजगद्गुरोः ॥ ३७८ ॥ ध्यात्वेति दापयित्वा च, सार्धकोटीद्वयं धनम् । तस्मान्माणिक्ययुग्मं तत्, स नृमाणिक्यमग्रहीत् ॥ ३७९ ॥ युग्मम् ॥ तन्मध्यनायकीकृत्य, हारयुग्मं विधाप्य च । स प्रैषीद् रैवते शत्रुं—जयेऽपि च तदर्हतोः ॥ ३८० ॥ चौलुक्यः प्रस्थितस्तस्मात्, प्राप पत्तनमुत्सवैः । सत्कृत्य यात्रिकान् सर्वान्, विससर्ज च सादरम् ॥ ३८१ ॥

अथ जिज्ञासमानाय, चौलुक्यपृथिवीभृते । स्वरूपं सप्ततत्त्वानां, हेमसूरिरदोऽवदत् ॥ ३८२ ॥ जैनेश्वरे मते जीवाजीवावाश्रवसंवरौ । निर्जराबंधमोक्षाश्च, सप्ततत्त्वीति कीर्त्यते ॥ ३८३ ॥ तत्र जीवा जिनैः प्रोक्ता, ज्ञानदर्शनलक्षणाः । अनाद्यनंताः कर्तारो, भोक्तारः परिणामिनः ॥ ३८४ ॥ संसारिमुक्तभेदेन, ते जीवा द्विविधा मताः । तेष्वादिमाः पुन-

* लिटि–रूपम्. १ मोक्षं. २ माणिक्ययुग्मं. ३ हारयुग्मम्, रैवतशत्रुञ्जयस्थार्हतोर्वा.

द्वेधा, स्थावरत्रसभावतः ॥ ३८५ ॥ एकाक्षाः स्थावराः पृथ्वी-जलवह्न्यनिलद्रुमाः । चत्वारः प्रथमे तेषां, सूक्ष्माः स्युर्बादरा अपि ॥ ३८६ ॥ महीरुहास्तु प्रत्येक—साधारणतया द्विधा । तेष्वाद्या बादरा एव, पश्चिमाः सूक्ष्मबादराः ॥३८७॥ त्रसाश्चतुर्विधा द्वित्रि—चतुःपंचेन्द्रियत्वतः । तत्र शंखजलालोका—कृम्याद्या द्वींद्रिया मताः ॥ ३८८ ॥ लिक्षापिपीलिकायूका—कुंथ्वाद्यास्त्रींद्रियास्तथा । द्विरेफमक्षिकादंश—प्रमुखाश्चतुरिन्द्रियाः ॥ ३८९ ॥ शेषास्तिर्यग्नैरयिक—मानवत्रिदिवौकसः । ज्ञेयाः पंचेंद्रियास्तेऽपि, संज्ञ्यसंज्ञितया द्विधा ॥ ३९० ॥ समनस्कतया शिक्षो—पदेशाद्यं विदंति ये । ते संज्ञिनो मतास्तेभ्यो, विपर्यस्ता असंज्ञिनः ॥ ३९१ ॥ आयुरुच्छ्वासपंचाक्ष—हृद्भाषांगबलत्रयम् । प्राणा दशैषां संबंधाज्जीवाः प्राणभृतः स्मृताः ॥३९२॥ एकद्वित्रिचतुरक्षाऽ—संज्ञिसंज्ञिषु देहिषु । ते स्युश्चतुःषट्सप्ताष्ट—नवदिक्प्रमिताः क्रमात् ॥ ३९३ ॥ जीवाः पूर्वोदिता द्वेधा, पर्याप्तेतरभावतः । पर्याप्ताः प्राप्य पर्याप्तीः, जायंतेऽन्तर्मुहूर्ततः ॥ ३९४ ॥ सामस्त्येनोदितास्तास्तु, षड् जैनागमपारगैः । आहारकायकरणो—च्छ्वासवाङ्मनसाख्यया ॥ ३९५ ॥ पर्याप्तिकर्मणा ताः स्यु—श्चतस्रः पंच षट् तथा । एकाक्षाणां विकलानां पंचाक्षाणामपि क्रमात् ॥ ३९६ ॥ व्यवहार्यऽव्यवहारि—तया जीवाः पुनर्द्विधा । आद्याः सर्वेऽपि ते, सूक्ष्मा, निगोदा एव चांतिमाः ॥ ३९७ ॥ भवस्था एव जीवाः स्यु—र्मुक्ताः कर्मपरिक्षयात् । कांतलोकांतविश्रांताः, सिद्धानंतचतुष्टयाः ॥ ३९८ ॥ चिदानंदमयं शश्वद्, यत् सुखं निर्वृतात्मनाम् । वाग्मिनामपि तन्न स्यात्, कदाचिद् वाक्यगोचरः ॥३९९॥ धर्माधर्मनभःकाल—पुद्गलाः पंच कीर्त्तिताः । अजीवाः सह

१ एकेन्द्रिया. २ पंच इन्द्रियाणि. ३ प्राणा . ४ दिक्-दश. ५ पर्याप्तय:. ६ गर्भजानाम्, समूर्च्छजाना (असज्ञीना) तु पंचैव.

जीवेन, द्रव्याण्येते मतेऽर्हतः ॥ ४०० ॥ जीवानां पुद्गलानां च, स्वयं विष्वक् प्रसर्पताम् । सहायः कीर्त्तितो धर्मो, यथाऽम्भो जलचारिणाम् ॥ ४०१ ॥ स्वेनैव जीवाजीवानां, तिष्ठतां स्थितिकारणम् । अधर्मोऽभिमतो वृक्ष—च्छाया मार्गजुषां यथा ॥ ४०२ ॥ एकात्मप्रमितासंख्य—प्रदेशप्रचयात्मकौ । धर्माधर्मावभिव्याप्य, लोकाकाशं किल स्थितौ ॥४०३॥ अवकाशदमन्येषा—माकाशं स्वप्रतिष्ठितम् । लोकालोकौ स्थितं व्याप्य, प्रदेशाऽऽनंत्ययोगतः ॥ ४०४ ॥ लोकाकाशस्थिताः कालाऽ—णवः कालोऽग्रिमः स्मृतः । ज्योतिषे यः क्षणाद्यात्मः, स तु स्याद् व्यावहारिकः ॥ ४०५ ॥ भवद्भूतभविष्यत्ता, भावानां या विभाव्यते । सा कालक्रीडितेनैव, ज्ञेया सर्वज्ञभाषितात् ॥ ४०६ ॥ स्पर्शरसगंधवर्ण—कलिताः पुद्गला मताः । अवद्धा अणवस्ते स्यु—र्वद्धाः स्कंधा इति श्रुते ॥ ४०७ ॥ ते च ध्वांताऽऽतपोद्द्योत—रूपाः सूक्ष्माश्च वादराः । कर्मशब्दादिजनकाः, सुखदुःखादिहेतवः ॥ ४०८ ॥ चित्तवाक्कायकर्म स्या—दाश्रवः स शुभः पुनः । निबंधनं शुभस्याशां—वशुभस्त्वितरस्य च ॥४०९॥ सद्ध्यानसंगतं चेतः, शुभं कर्म प्रसूयते । दुर्ध्यानवासितं तत् तु, विपर्यस्तमसंशयम् ॥ ४१० ॥ मिथ्योज्झितं श्रुतज्ञाना—ञ्चितं च वचनं भवेत् । शुभार्जकं ततस्त्वन्य—दशुभार्जकमंगिनाम्॥४११॥ गुप्तेन वपुषा देही, कर्म वध्नाति सत्तमम् । अगुप्तेन महारंभ—कारिणा चेतरत् पुनः ॥ ४१२ ॥ आश्रवस्य निरोधः स्यात्, संवरः स तु सूरिभिः । द्रव्यभावविभागेन, द्विविधः परिकीर्त्त्यते ॥ ४१३ ॥ तत्रादिमो नवकर्म—पुद्गलादानवर्जनम् ।

१ एकजीवप्रदेशप्रमाणासंख्यप्रदेशसमूहस्वरूपौ. २ जीवपुद्गलानाम्. ३ मुख्य. ४ गौणः. ५ श्रुते कथिता.. ६ स्कंधाः. ७ क्रिया–व्यापार.. ८ शुभाश्रव—शुभव्यापार.. ९ पुण्यस्य, सुखस्य वा, १० प्राप्तौ. ११ नवीन०

द्वैतीयीकस्तु संसार-हेतुकृत्यनिर्वहणम् ॥ ४१४ ॥ कर्मणां प्रागुपात्तानां, जरणं निर्जरा स्मृता । सा सकामो यतीनां
स्या-दकामाऽन्यशरीरिणाम् ॥४१५॥ आदानं कर्मयोग्यानां, पुद्गलानां यदंगिनः । मिथ्यात्वादिसहायस्य, स बंधः पार-
तंत्र्यकृत् ॥ ४१६ ॥ प्रकृतिस्थित्यनुभाव-प्रदेशैः स चतुर्विधः । तत्र स्वभावः प्रकृति-र्ज्ञानावृत्त्यादिकर्मणाम् ॥ ४१७ ॥
जघन्योत्कर्षतः काल-नैयत्यं कर्मणां स्थितिः । तेषां रसोऽनुभावः स्यात्, प्रदेशो दलसंहतिः ॥ ४१८ ॥ मिथ्यात्वमविर-
तिश्च, कषाया योगसंयुताः । एते भवंति चत्वारः, कर्मणां बंधहेतवः ॥ ४१९ ॥ निःशेषकर्मनिर्मोक्षो, मोक्षः प्रोक्तो जिने-
श्वरैः । स भवत्यात्मनां नूनं, केवलज्ञानशालिनाम् ॥ ४२० ॥ अत्यंतदुःखनाशेन, यदस्मिन् शाश्वतं सुखम् । आत्मनां
भवतीत्येष, मोक्षः सर्वप्रियंकरः ॥४२१॥ सप्ततत्त्वीमिमां राजन्!, श्रुत्वा यः श्रद्दधात्यलम् । सम्यग्दृष्टिः स भूत्वाऽन्ते,
लभते तत् परं पदम् ॥ ४२२ ॥

अथ तीर्थंकरादीनां, चरितं श्रोतुमिच्छता । चौलुक्येनार्थयांचक्रे, हेमाचार्योऽतिगौरवात् ॥ ४२३ ॥ ततो रसाढ्यं
त्रिशष्टिशलाकामर्त्य-चरित्रं सर्वसंस्कृ-
षट्त्रिंश-त्सहस्रमितिमागतम् । स्थविरालीचरित्रांतं, दशपर्वीमनोरमम् ॥ ४२४ ॥ त्रिशष्टिशलाकामर्त्य-चरित्रं सर्वसंस्कृ-
तम् । द्राक्षापाककवित्वेन, कृत्वा स तमशिश्रवत् ॥ ४२५ ॥ युग्मम् ॥ अन्यानपि प्रभुर्योग-शास्त्रादीन् ज्ञानदीपकान् ।
ग्रंथांस्तदर्थितश्चक्रे, वीतरागस्तवानपि ॥ ४२६ ॥ योगशास्त्रं यतिश्राद्ध-जनाचारातिमेदुरम् । पठित्वा गुरुणा तेन, सम्यग्
व्याख्यापयन्नृपः ॥४२७॥ एवं सैद्धांतिकं सारं, शृण्वानः स प्रपन्नवान् । विरुदं चारु विचार-चतुर्मुख इति क्षितौ॥४२८॥

१ नाशनम्. २ योगशास्त्रापेक्षयेदम्, विशेषतः सकामाकामनिर्जराया. स्वरूप उ०यशोविजयविरचितधर्मपरीक्षा (पृष्ठ.१२२) तो ज्ञेयम्. ३ गानं प्राप्तम्. ४ पुरुष०.

आदद्रे नियमं भूभृत्, तदा भूयिष्ठभक्तितः । लेखनीया मया सर्वे, ग्रंथाः स्वगुरुकर्तृकाः ॥ ४२९ ॥ तेषु लेलिख्यमानेषु, लेखकैर्बहुभिः सदा । तालपत्रत्रुटिः कोशे, सर्वथा समपद्यत ॥ ४३० ॥ लेखनाधिकृतेनैत्य, ततो व्यज्ञापि भूपतिः । संप्रत्यभावात् पत्राणां, लेखनं निखिलं स्थितम् ॥ ४३१ ॥ तन्निपीय नृपोऽध्यासी—न्नवग्रंथविनिर्मितौ । गुरोरस्खलिता शक्ति—र्मम तल्लेखनेऽपि न ॥ ४३२ ॥ इति लज्जाभृतो राजा, सायमल्पपरिच्छदः । जगाम बहिरारामं, स्वश्रीहसितनंदनम् ॥ ४३३ ॥ खरतालद्रुमांस्तस्मि—न्नभ्यर्च्य घुसृणादिभिः । स एवं कथयामास, मंत्रसिद्ध इव स्वयम् ॥ ४३४ ॥ स्वात्मनीव मते जैने, यदि मे सादरं मनः । यूयं व्रजत सर्वेपि, श्रीतालद्रुमतां तदा ॥ ४३५ ॥ कथयित्वेति गांगेय—मयं ग्रैवेयकं नृपः । कस्याप्येकस्य तालस्य, स्कंधदेशे न्यवीविशत् ॥ ४३६ ॥ युग्मम् ॥ तस्थौ च सौधमागत्य, धर्मध्यानपरो नृपः । श्रीतालद्रुमतां तांश्च, निन्ये शासनदेवता ॥ ४३७ ॥ प्रातरारामिकाः प्रेक्ष्य, श्रीतालांस्तान् महीरुहान् । गुर्वन्तिकस्थमुर्वींद्रं, तन्निवेद्याभ्यवीवृधन् ॥ ४३८ ॥ पारितोषिकदानेन, समानंद्य स तानवक् । पत्राण्यानीय दीयंतां, लेखकेभ्यो यदृच्छया ॥ ४३९ ॥ किमेतदिति पृष्टः सन्, गुरवे राड् व्यजिज्ञपत् । तं वृत्तांतं चमत्कार—कारणं(कं) सर्वपर्षदः ॥४४०॥ हेमाचार्यस्तदाकर्ण्य—कर्णयोरमृतोपमम् । नृपेण पारिषद्यैश्च, सहारामं तमागमत् ॥४४१॥ कर्णजाहं गते तस्मिन्, वृत्तांते जनताऽऽननात् । मिथ्यात्विनोऽपि तत्राऽऽसा, द्विजाद्यास्तद्दिदृक्षया ॥ ४४२ ॥ आलोक्य खरतालेषु, श्रीतालत्वं तदातनम् । सूरिप्रभृतयः सर्वे, ते विसिष्मियिरेतमाम् ॥४४३॥ अथ मिथ्यात्विनः सर्वाञ् श्रावयन् भास्व-

१ पुन' पुन अतिशयेन वा लिख्यमानेषु ग्रन्थेषु २ हीनता—हानि.. ३ लेख्यानर्हतालवृक्षान्. ४ स्वर्णमयम्. ५ कर्णजाहं—कर्णमूलं. ६ तदा भवम्.

रस्वरः। उपश्लोकयितुं जैन-मतं प्रभुरिदं जगौ ॥४४४॥ अस्त्येवातिशयो महान् भुवनविद्धर्मस्य धर्मान्तराद्, यच्छक्त्याऽत्र
युगेऽपि तालतरवः श्रीतालतामागताः।श्रीखंडस्य न सौरभं यदि भवेदन्यद्रुतः पुष्कलं, तद्योगेन तदा कथं सुरभितां दुर्गन्धयः
प्राप्नुयुः॥४४५॥(शार्दूल०) तदुद्भूतैः प्रभूतैस्तै-र्विशालैः कोमलैर्दलैः। लिलिखुर्लेखकाग्रण्यो, ग्रंथान् प्रभुकृतान् सुखम्॥४४६॥

राजर्षिरेकदाऽश्रौषीद्, देशनायां गुरोरिति। विवेकिना न वर्षासु, निष्क्रम्यं स्वगृहाद् वहिः ॥ ४४७ ॥ वर्षतौ हि
जलौघैः स्या—दिला जीवाकुलाऽखिला। तत्र देही भ्रमन् हंति, तानुन्मत्तलुलापवत् ॥ ४४८ ॥ मिथ्यात्विनोऽपि
जल्पंति, जीवरक्षाकृते कृती। क्रोशमात्रीं भ्रमन् धात्रीं, वर्षास्वेकत्र संवसेत् ॥ ४४९ ॥ अत एव पुरा श्रीम—न्नेमिना-
थोपदेशतः। कृष्णो नियमयामास, वर्षारात्रे वहिर्भ्रमम् ॥ ४५० ॥ चतुर्भिः कलापम् ॥ तदाकर्ण्य स चौलुक्यो, विवेकी
नियमं ललौ। वर्षासु न मया चर्या, कार्या कुत्राऽप्यतः परम् ॥ ४५१ ॥ दर्शनं सर्वचैत्यानां, गुरोरपि च वंदनम्।
मुक्त्वा पुरेऽपि न प्रायो, भ्रमिष्यामि घनागमे ॥ ४५२ ॥ अंतर्वहिरपि प्रौढ—पंकाऽऽतंकाऽपनूतये। बभंज तद्व्रतं
नैव, राजकार्ये[*] महत्यपि ॥ ४५३ ॥ स तस्य नियमस्तादृक्, पृथिव्यां पप्रथे ततः। किं पुण्यकेतकस्य स्यात्, प्रच्छन्नं
कीर्त्तिसौरभम् ॥ ४५४ ॥ श्रुत्वाऽभिग्रहवार्तां तां, विष्वग्चक्रस्वचराननात्। मत्वा च गूर्जरं देशं, स्वर्गदेशीयमृ-
द्धिभिः ॥ ४५५ ॥ तं भंक्तुं दुर्धरानीकः, शकेंद्रो गर्जनात् तदा। प्रतिष्ठते स्म पृथिवीं, कृतांत इव कंपयन् ॥ ४५६ ॥
युग्मम् ॥ दृष्ट्वा तदीयं प्रस्थान—मुत्तराशाचराश्चराः। विजने गूर्जरेंद्राय, तदुक्त्वेति व्यजिज्ञपन् ॥ ४५७ ॥ स्वामिन्!

१ महिषवत्. २ अतरंग०. * राजा, प्र. ३ देशविशेषाधिपः-तुरुष्काधिपः (तुर्कस्तान वादशाह). ४ नगरविशेषात् (गिजनी शहेरथी).

परंतपं तस्य, प्रतापांहिमदीधितिम् ॥ विषोढुमक्षमाः के न, कौशिकंति महीश्वराः ? ॥ ४५८ ॥ आप्लावयन्[3] सकटकान्, महतोऽपि महीभृतः । तदीयः प्रसरन् सैन्य–वार्धिः केन निरोत्स्यते ? ॥ ४५९ ॥ आस्तां तत्सादिभिः सार्धं, स्पर्धा युद्धकथाऽपि च । तत्संमुखमपि द्रष्टुं, कोऽपि नैशिष्यते भटः ॥ ४६० ॥ श्रुत्वैतां चरविज्ञप्तिं, चिंताऽऽक्रांतो मनाग् नृपः । अमात्यसहितोऽभ्येत्य, वसतिं गुरुमब्रवीत् ॥ ४६१ ॥ चरैरद्य प्रभो ! प्रोक्तं, तुरुष्काधिपतिः स्वयम् । प्रस्थाय गर्जनादत्रा—गच्छन्नस्ति महाबली ॥ ४६२ ॥ सहिष्णुरपि तं भंक्तु—मसहिष्णुरिवास्म्यहम् । वर्षारात्रे गृहान्नैव, बहिर्यामीत्यभिग्रहात् ॥ ४६३ ॥ मयि सौधस्थिते सैन्यै—रुद्वेलांभोधिविभ्रमैः । एत्य ध्वंसेत चेद् देशं, तदाऽहं विदधामि* किम् ? ॥ ४६४ ॥ एकतो नियमोऽयं मे, रिपुरायाति चान्यतः । इतस्तटमितो व्याघ्र, इति सत्यमुपस्थितम् ॥ ४६५ ॥ व्याजहार गुरुर्धर्मे, निश्छद्माऽस्ति मतिस्तव । अतस्त्वद्विषयं नाऽयं, प्रतिपंथी मथिष्यति ॥ ४६६ ॥ त्वदाराधितसर्वज्ञ—धर्ममाहात्म्यकुंभभूः । अगाधमपि चिंताब्धिं, निपास्यति च निश्चितम् ॥ ४६७ ॥ इत्याश्वास्य नृपं सूरिः, पद्मासनमधिश्रितः । परमं दैवतं किंचि—दंतर्ध्यातुं प्रचक्रमे ॥ ४६८ ॥ अतिक्रांते मुहूर्तेऽथ, समायांतं नभोऽध्वना । पल्यंकमेकमद्राक्षीद्, दिव्यक्षौमास्तृतं नृपः ॥ ४६९ ॥ अंबरेऽसौ निरालंबो, विद्याधरविमानवत् । कथमेतीति विस्मेरः, स तं मुहुरवैक्षत ॥ ४७० ॥ गगनात् तावदुत्तीर्य, स पल्यंकः क्षणादपि । गुरोः पुरः स्थिरस्तस्थौ, सुप्तैकपुरुषाश्रितः ॥ ४७१ ॥



१ परान्–शत्रून् तापयतीति परंतपः–शत्रुतापकस्तम्. २ प्रतापसूर्यम्. ३ समन्ताद् द्रावयन्. ४ ससैन्यान् पक्षे सपर्वतमध्यभागान्. ५ राज्ञः पक्षे पर्वतान्. ६ म्लेच्छजातिविशेष . ७ वेला–उत्क्रान्तः उद्वेलः स चासौ अंभोधिश्च, तस्य विभ्रमाः–तरंगा इव विभ्रमाः येषां सैन्यानां ते तैः. * नि–प्र. ८ थि–प्र. ९ मेतीति, प्र.

पल्यंकः कोऽयमत्रायं, कः पुमाने(नि)ति वेह किम् ? । इतिप्रश्नपरं भूपं, बभाषे गुरुपुंगवः ॥ ४७२ ॥ तवोपर्यापतन् योऽस्ति, शकाधीशो महाबली । पल्यंकशयितः सोऽयं, मयाऽऽनीतोऽत्र सैन्यतः ॥४७३॥ श्रुत्वा तत् संभ्रमाद् भूभृत्, यावत् तन्मुखमीक्षते । तावत् सुप्तोत्थितः सोऽपि, शकाधीशो विमृष्टवान् ॥ ४७४ ॥ क्व तत् स्थानं क्व तत् सैन्यं, क्वाऽहं कथमिहागमम् । केऽमी मे पुरतः सर्वे[1], किमिदं स्वप्नसंनिभम् ॥ ४७५ ॥

अथ सूरिरभाषिष्ट, चतुर्दिक्षु क्षिपन् दृशौ । किं ध्यायसि शकाधीश !, शाखापतितकीशवत्[2] ? ॥ ४७६ ॥ एकातपत्रमैश्वर्यं, स्वस्य धर्मस्य च क्षितौ । कुर्वतो यस्य साहाय्यं, कुर्वंति त्रिदशा अपि ॥४७७॥ गृहमध्याच्च भूमध्या-दपि यो रिपुभूपतीन् । स्वशक्त्या दासवद् बद्ध्वा, समानाययति क्षणात् ॥ ४७८ ॥ सोऽयं कुमारपालो राड्, दृसदर्परजोमरुत् । त्वामत्रानाययद् बद्ध्वा, श्रुत्वाऽऽयांतं स्वनीवृति ॥ ४७९ ॥ शकिमेतादृशीमस्य, विमृश्य स्वहितेप्सया । शरण्यमेनं शरणी—कुरुष्व शकनायक ! ॥४८०॥ पंचभिः कुलकम् ॥ ततोऽद्भुतभयोद्वेग—चिंता[3]लज्जादिभावभृत् । दर्पेण सह पल्यंकं, त्यक्तवान् गर्जनप्रभुः ॥ ४८१ ॥ विद्योद्द्योतमिवाध्यक्षं, हेमसूरिं प्रणम्य तम् । स चौलुक्यं नमश्चक्रे, धिग् नृणां प(पा)रवश्यताम् ॥ ४८२ ॥ ऊचे च हस्तावायोज्य, राजन् ! ज्ञातं मया न ते । ईदृग् दैवतसाहाय्य—मन्यराजक[4]-दुर्लभम् ॥ ४८३ ॥ अतःपरं मया चक्रे, यावज्जीवं त्वया सह । सत्यसंध ! ध्रुवं संधि—रत्रार्थे शपथो मम ॥ ४८४ ॥ तमवोचत चौलुक्यो, मच्छौंडीर्यं[5] द्विषंतपम्[6] । शृण्वन्नपि किमित्येवं, त्वमागच्छन्नभूर्वद ॥ ४८५ ॥ स स्माह नियमस्थस्त्वं,

१ सर्वे, प्र. २ वानरवत् ३ किं कर्तव्यमिति चिंता. ४ राज्ञां समूहः राजकम्. ५ मानान्वितता-अभिमान.-पराक्रम.. ६ शत्रुतापकं.

न पुराद् वहिरेष्यसि । इति छलेन त्वद्देशं, भंक्तुं प्रस्थितवानहम् ॥ ४८६ ॥ परं त्वं छल्यसे राजन् !, कथमीदृग्गुरौ सति । मांत्रिके हि समीपस्थे, मुद्गलाः प्रभवंति न ॥ ४८७ ॥ पूर्वं श्रुतोऽपि ते वीर !, विक्रमो विस्मृतोऽभवत् । विसरिष्यत्यसौ जातु, न संप्रति पुनः पुनः ॥४८८॥ तुभ्यं स्वस्त्यस्तु मां देव !, प्रेषय स्वालयं प्रति । आकुला कलयिष्यंति, दैन्यं सैन्या ममान्यथा ॥ ४८९ ॥ राजर्षिस्तं पुनः प्रोचे, पण्मासीं स्वपुरे यदि । अमारिं कारयेस्तर्हि, त्वां विमुंचेय नाऽन्यथा ॥ ४९० ॥ ममेदमेव सर्वस्व—मेतदेव च वांछितम् । यद् वलेन छलेनापि, प्राणत्राणं शरीरिणाम् ॥ ४९१ ॥ ममाज्ञाकरणं सम्यक्,सुकृतं तव चोर्जितम् । प्राणिनां प्राणरक्षा च, किममानं शुभं न हि ? ॥ ४९२ ॥ एतावत् त्वं प्रपद्यस्व, गृहं गंतुं यदीप्ससि । अन्यथा त्वमिह स्थाता, गुप्ताविव मदोकसि ॥ ४९३ ॥ इतो मे नान्यथा मुक्ति—रिति ध्यात्वा शकप्रभुः । चौलुक्यवचनं मेने, वलिष्ठे का विचारणा ? ॥४९४॥ ततः स्वसौधं तं नीत्वा, सत्कृत्य च सहस्रधा । अतिष्ठिपत् त्र्यहं भूपो, लोकज्ञापनकाम्यया ॥ ४९५ जीवरक्षाकृते शिक्षां, दत्त्वाऽऽप्तांस्तत्समं निजान् । आदिश्य च शकेंद्रं तं, स्वस्थानं प्रापयन्नृपः ॥ ४९६ ॥ तत्र गत्वा नृपाऽऽप्तास्ते, पण्मासीं गर्जनांतरे । शकाधीशनिदेशेन, प्राणित्राणमचीक्लृपन् ॥ ४९७ ॥ समर्प्य प्राभृतं भूरि, हयाद्यं क्षितिपोचितम् । विसृष्टा यवनेशेन, पत्तनं ते प्रपेदिरे ॥ ४९८ ॥ तत्प्राभृतं पुरो मुक्त्वा, ते नियुक्ताः स्वनायकम् । भृशमानंदयामासु—रमारिकरणोक्तिभिः ॥ ४९९ ॥

अथ स्वयं स राजर्षि—रित्यभिग्रहमादधे । यादृशस्तादृशो वाऽपि, वंद्यो जैनमुनिर्मया ॥५००॥ अपरेद्युः ससैन्योऽपि,

१ असौ विक्रम . २ सप्रतितन , प्र. ३ वाञ्छसीत्यर्थः. ४ अतिष्ठिपत्,–प्र. ५ जिनमुनि , प्र.

श्रीपथं सोऽतिहस्तंयन् । नागवल्लीदलव्यग्र—करं चंचदुपानहम् ॥ ५०१ ॥ पण्यस्त्रीस्कंधविन्यस्त—हस्तं मन्मथविभ्रमैः । दुश्चेष्टमानं विटव—न्मुनिं कंचिन् निरैक्षत ॥५०२॥ युग्मम् ॥ दृष्ट्वाऽपि तं तथा भ्रष्टं, नृपः श्रेणिकभूपवत् । कुंभिकुंभ-स्थलन्यस्त—मस्तकः प्राणमन्मुदा ॥ ५०३ ॥ दध्यौ च न मुनेरस्य, मनागप्यस्ति दूषणम् । निर्माप्यते कुकर्माणि—यद् धर्मज्ञोऽपि कर्मभिः ॥ ५०४ ॥ कर्हिचिज्जायते जीवो, बली कर्म च कर्हिचित् । अत एवानयोर्द्वेषः, शाश्वतोऽस्ति महान् मिथः ॥ ५०५ ॥ तस्यावकीर्णिनैः साधु—प्रष्ठस्येवाऽऽनतं नृपम् । दृष्ट्वा जहास नड्डूल—नृपतिः पृष्ठतः स्थितः ॥ ५०६ ॥ तं वीक्ष्य वाग्भटामात्यो, लज्जितो व्यथितोऽपि च । श्रीहेमचंद्राचार्याय, तत्स्वरूपं न्यवेदयत् ॥ ५०७ ॥ नमस्याहोऽनम-स्यार्हे—विचारज्ञापनाकृते । उपादिशत् ततः सूरि—श्चौलुक्यपृथिवीभुजे ॥ ५०८ ॥ ज्ञानदर्शनसंपन्नो, निष्कषायो जितें-द्रियः । सामायिकपरः साधु—र्वन्दनीयः सतां मतः ॥ ५०९ ॥ एते पुनरवंद्याः स्युः, पार्श्वस्थश्चावपण्णकः । तथा कुशी-लसंसक्त—यथाछंदाः श्रुतोदिताः ॥ ५१०॥ पार्श्वस्थः सर्वदेशाभ्यां द्विविधस्तत्र सर्वतः । सज्ज्ञानदर्शनादीनां, पार्श्वे तिष्ठन्निवेदितः ॥ ५११ ॥ शय्यातराद्युपजीवी, पार्श्वस्थो देशतः स्मृतः । द्विधा स्यादवपण्णोऽपि, सर्वदेशप्रभेदतः॥५१२॥ तत्राद्यो बहुशय्यादि—ग्राही स्थापितभोज्यपि । परस्त्वावश्यकादीनां, न्यूनाधिक्यादिकारकः ॥ ५१३ ॥ कुशीलस्त्रि-विधो ज्ञाने, दर्शने चरणेऽपि च । तत्र ज्ञानकुशीलः स्या—दकालेऽध्ययनादिकृत् ॥ ५१४ ॥ सद्दर्शनकुशीलः स्या—च्छंकाद्यासेवनापरः । व्रतकुशीलो निमित्त—भूतिकर्मादियोजकः ॥ ५१५ ॥ पंचाश्रवपरः प्रौढ—गौरवत्रयगर्वितः ।

१ हस्तिनाऽतिक्रामयन्. २ कामचेष्टाभिः. ३ क्षतव्रतस्य. ४ साधुपुंगवस्येव. ५ अनमस्यनमस्यार्हं, प्र. ६ संमतः. ७ ज्ञानप्राद्युपागदर्शनादि.

योपिद्गेहादिसंक्लिष्टः, संसक्तः प्रणिगद्यते ॥ ५१६ ॥ उत्सूत्रमाचरँल्लोके, दिशत्युत्सूत्रमेव यः । यथाछंदः स विज्ञेयः, स्वच्छंदविहितस्थितिः ॥ ५१७ ॥ अमीषां वंदनाद् देव !, न कीर्त्तिर्नापि निर्जरा । कायक्लेशस्तथा कर्म—बंधः प्रत्युत वल्गतः ॥ ५१८ ॥ श्रुत्वा तद् ध्यातवान् भूमान्, मम तन्मुनिवंदनम् । नूनं न्यवेदयत् कोऽपि, व्याचष्टे यदिदं प्रभुः ॥ ५१९ ॥ ततः स्मित्वा जगादासौ, सम्यगस्म्यद्य शिक्षितः । अतः परं विधास्यामि, भवदुक्तमिदं सदा ॥ ५२० ॥

अथ भूपनमस्काराद्, यतिपाशः[1] स लज्जितः । एवं ध्यातुं समारेभे, भव्यात्मकतया हृदि ॥५२१॥ धिग् मामधममूर्धन्यं, यो लब्ध्वाऽप्यतिदुर्लभम् । व्रतचिंतामणिं मोहात्, प्रमादाब्धौ न्यमज्जयम् ॥ ५२२ ॥ सतोऽपि प्रथमे[2] भोगान्, विमुच्य व्रतमादधुः । अहं पुनर्व्रतस्थोऽपि, स्पृहयाम्यसतोऽपि तान् ॥ ५२३ ॥ स वरं शक्तिहीनत्वाद् यो नांगीकुरुते व्रतम् । तद्[3]दूरीकृत्य मुंचंस्तु, न स्तुतेर्भाजनं जनः ॥ ५२४ ॥ धन्योऽयं भूधवो येन, नतोऽहमवकीर्ण्यपि[4] । अहं पुनरधन्यो यो, वंदये तादृशं नृपम् ॥ ५२५ ॥ यः स्वयं स्खलिताचारः, सदाचारान् प्रणामयेत् । तस्य स्वात्माऽनभिज्ञस्य, नरकेऽपि गतिर्न हि ॥ ५२६ ॥ ततः सर्वं परित्यज्य, तत् किंचिद् विदधेऽधुना । येनाहं सोऽपि राजर्षि—र्नैव लज्जावहे क्वचित् ॥५२७॥ सप्तभिः कुलकम् ॥ अथ बंधनवत् त्यक्त्वा, धनाद्यं स महाशयः । गुरोरालोचनापूर्वं, पुनर्व्रतमशिश्रियत्॥५२८॥ विनाऽनशननीरेण, पापतापमहापदः । संशमिष्यंति मे नेति, स तदैव तदादधे ॥ ५२९ ॥ दुस्त्यजोऽपि महामोहः, सुत्यजस्त्यागतोऽनयोः[5] । इतीव साधुरत्याक्षीद् रागद्वेषौ शुभद्विषौ ॥ ५३० ॥ भवदावाग्निदग्धस्य, शांतिर्जीवस्य जायते ।

१ निंद्यो यति यतिपाशः. २ पूर्वमुनय.. ३ व्रतं स्वीकृत्य. ४ ध्वस्तव्रतोऽपि. ५ रागद्वेषयो..

अनेनेति मुनिर्मत्वा, स पपौ[1] समतामृतम् ॥ ५३१ ॥ तस्य[2] प्रत्यहमभ्येत्य, नानापाटकवासिनः । चक्रिरे पत्तनजना, भावनाभिः प्रभावनाः[3] ॥ ५३२ ॥ तं निशम्यानशनिनं, राजर्षिरपि हर्षतः । प्रभावनार्थं तत्रागात्, पुण्यांशं को हि नेष्सति[4] ? ॥ ५३३ ॥ गुरुं नत्वा मुनींद्रं तं, यावन्नमति भूपतिः । नमस्कारान्निषिध्यैव, स तावत् तमभाषत ॥ ५३४ ॥ देव ! त्वं मे गुरुः साक्षा—दसि त्वां वंदये कथम् ? । यतोऽसि त्वन्नतेर्बुद्धो, व्रतानशनभागहम् ॥ ५३५ ॥ तदा तादृगवस्थोऽपि, न वन्द्येयं[5] यदि त्वया । तदा शिवंकरे स्यातां, क्व व्रतानशने मम ? ॥ ५३६ ॥ मज्जतो मे भवांभोधौ, नमस्कारस्तवाभवत् । करावलंबनकरो, महापोत इव स्वयम् ॥ ५३७ ॥ असौ भवत्प्रसादो मे, सर्वोऽप्यस्ति पचेलिमः । प्रभावनां वितन्वंति, यदमी धार्मिका मुदा ॥ ५३८ ॥ ज्ञात्वा राज्ञाऽपि स प्रोचे, भवान् भव्याशयो भृशम् । अत एव नमस्कार—मात्राद् द्रागप्यबुध्यत ॥ ५३९ ॥ अभव्यास्तु स्वयं विश्व—विदाऽपि प्रतिबोधिताः । न कर्हिचित् प्रबुध्यंते, स्थूलोपलमया इव ॥ ५४० ॥ सुखासुखाप्तिवद् धर्मा—धर्मासावपि देहिनाम् । हेतुर्भवेत् स्वकर्मैव, परः सान्निध्यमात्रकृत् ॥ ५४१ ॥ त्वमेवास्यधुना धन्यो, येनेदृग् दुष्करं कृतम् । सुखमल्पमपि त्यक्त्वा, कश्चरेद् दुश्चरं यतः ? ॥ ५४२ ॥ पंकमग्नो यथा दंती, कश्चिदेव स्वमुद्धरेत् । मोहमग्नस्तथा देही, कोऽपि भ्रष्टं व्रतं खलु ॥ ५४३ ॥ भूयास्त्वं सुकृते स्थेया—ननुभूयाः परं महः । प्रभूया[6] भवनिर्भेदे, विभूयाः[7] शिवशर्मणि ॥ ५४४ ॥ इति स्तुत्वा बलान्नत्वा, तं मुनींद्रं महीपतिः । चक्रे प्रभावनां पुण्य—

---

१ समतामृतेन. २ मुने.. ३ उन्नतीः. ४ न आप्तुमिच्छति ? ५ वन्देय, प्र. ६ समर्थो भव. ७ व्याप्तो भव.

काननामृतसारणिम् ॥५४५॥ शुभध्यानसमीरेण, विरजीभूतमानसः । कतिभिर्दिवसैः स्वर्गं, श्रितः सोऽनशनी मुनिः ॥५४६॥ शत्रुंजयाद्युत्तमतीर्थयात्रा—सिद्धांतसारश्रवणादिकृत्यैः । एवं शुभश्रीसुभगंभविष्णून्, घस्रान् स चौलुक्यनृपस्ततान ( इन्द्रवज्रा ) ॥ ५४७ ॥

इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपालभूपालचरित्रे महाकाव्ये देवाधिदेवप्रतिमाऽऽनयनतीर्थयात्रादिवर्णनो नाम नवमः सर्गः

नवानां सर्गाणां मिलने ग्रंथाग्रं ५७७७

१ पुण्यश्रिया प्रियं भवनशीलान्. २ घस्रान्-दिवसान्. ३ विस्तारयामास-निर्गमयामास.

## अथ दशमः सर्गः ॥

नृपः कुमारपालोऽथ, प्रश्नयामास तं गुरुम् । कोऽहं पूर्वभवेऽभूवं ?, भविता कश्च भाविनि ? ॥ १ ॥ सिद्धराजः कुतो मह्यं, प्रसह्य द्रुह्यति स्म च ? । कस्मादुदयनामात्यो, यूयं च मयि वत्सलाः ? ॥२॥ न हि प्राग्जन्मसंबंधं, विना कस्यापि कुत्रचित् । वैरं च सौहृदय्यं च, स्यातामात्यंतिके ध्रुवम् ॥३॥ कथ्यतां तथ्यमेतन्मे, ज्ञात्वा ज्ञानेन केनचित् । प्रभुं विना न कोऽप्यन्यः, संदेहं भंक्तुमीश्वरः ॥ ४ ॥ स व्याजहार नेदानीं, ज्ञानं यद्यपि किंचन । तथापि देव्याद्यादेशात्, सर्वं ते कथयिष्यते ॥ ५ ॥ ततो विसृज्य भूजानिं, गत्वा सिद्धपुरं च तत् । सरस्वतीसरित्तीरं, पवित्रं सूरिराश्रयत् ॥ ६ ॥ तत्र मंत्रमयस्नान—पवित्रीकृतविग्रहः । ध्यानोदारः स सस्मार, सूरिमंत्रं[1] दिनत्रयम् ॥ ७ ॥ ततस्तस्याद्यपीठाधि-ष्ठात्री[2] स्फूर्त्ति[3]-रिवांगिनी । देवी त्रिभुवनस्वामि—न्याविरासीत् तदग्रतः ॥८॥ ध्याताऽस्मि केन कार्येण, शंस सूर्यवतंस ! मे ? । देव्यै-वमुदितः कामं, मुदितः स जगाद ताम् ॥ ९ ॥ देवि ! दिव्येन नेत्रेण, सम्यग् विज्ञाय मां वद । चौलुक्यभूपतेर्भूतान्, भाविनोऽप्यखिलान् भवान् ॥ १० ॥ हस्तस्थमुक्ताफलवत्, कलयंती किलाखिलम् । सूरिपृष्टं तदावेद्य[4], सा देवी स्वपदं ययौ ॥ ११ ॥ प्रातः स्वस्थानमागत्य, गुरुर्विहितपारणः । वक्तुं प्रचक्रमे पूर्व—भववृत्तं नृपाग्रतः ॥ १२ ॥

देशे श्रीमेदपाटाख्ये, क्वचिदभ्रंकशे गिरौ । परमारान्वयी जज्ञे, पल्लीशो जयताह्वयः ॥ १३ ॥ द्विषतां रणकंडूति[5]—चंडदोर्दंडशालिनाम् । दर्पज्वरं शमयितुं, यद्भुजोऽभेषजायत ॥१४॥ भंजं भंजं परग्रामान्, स चक्रे वीरकुंजरः । निज-

---

* मंत्रत्रयस्नानपूर्वं, प्र. १ सूरिमंत्रस्य. २ आद्या-प्रधाना सूरिमंत्रपीठपंचकाधिष्ठायिनी देवी. ३ विकाश -प्रभाव ४ कथयित्वा. ५ तिम्, प्र.

मैश्वर्यमूर्जस्वि, किं शौर्येण हि दुष्करम् ? ॥१५॥ अन्येद्युर्धनदत्ताख्यः, सार्थवाहो महार्थभृत् । स्वपल्लीं समया गच्छ—न्मार्गे तेन व्यलोक्यत ॥ १६ ॥ तस्मिन्निपत्य सार्थेऽसौ, लुंटाकैः स्वभटैः सह । जग्राह सकलं सार्थं—पतिस्तु क्वापि नेशिवान् ॥ १७ ॥ ततः सर्वस्वनाशेन, निराकाराग्निनापि च । दंदह्यमानहृदयो, धनदत्तो विमृष्टवान् ॥ १८ ॥ वृतो मलिम्लुचैः क्रूरैः, पिशाचैरिव राक्षसः । उन्मदिष्णुरयं लोका—नुपदोद्रूयते कथम् ॥ १९ ॥ इदानीं चेत् प्रतीकारं, न विधास्येऽस्य दुर्धियः । पौनःपुन्येन मे सार्थं, ग्रहीष्यति तदैषकः ॥ २० ॥ ततोऽन्यदपि कोशस्थं, व्ययीकृत्य स्वकांचनम् । एनमुन्मूलयिष्यामि, नृपसैन्येन कंदवत् ॥ २१ ॥

अथ प्राभृतमादाय, महीयः सार्थनायकः । दृष्ट्वा च मालवाधीशं, तत्पराभवमूचिवान् ॥ २२ ॥ बभाषे मालवेंद्रस्तं, त्वं निजाश्रयमाश्रय । तं पल्लीतः समुन्मूल्य, प्रहेष्यामि धनं तव ॥२३॥ धनदत्तः पुनः प्रोचे, नार्थो मेऽर्थेन पार्थिव ! । प्रतिज्ञातं मया किंतु, तदुन्मूलनमात्मना ॥ २४ ॥ तद् देहि निजसैन्यं मे, पूरयामि यथेप्सितम् । वैरनिर्यातनेनाऽस्तु, सुखं भवदनुग्रहात् ॥ २५ ॥ तद्वाक्यमुररीकृत्य, प्रसन्नोऽवंतिनायकः । तस्य व्यश्राणयद् दत्तं, सेनान्यं सैन्यसंगतम् ॥ २६ ॥ धनदत्तः पुरस्कृत्य, तत्सैन्यमुपगम्य च । रुरोध परितः पल्लीं, वल्लीमिव मतंगजः ॥ २७ ॥ दैत्यसैन्यमिवामृश्य, तत्सैन्यमतिदुर्धरम् । सांयुगीनोऽप्यदीनोऽपि, जयताकः पलायत ॥ २८ ॥ योधान् युद्धोद्धतान् हत्वा, पल्लीं प्रज्वाल्य चाखिलाम् । नश्यंतीं पल्लीराट्पत्नी—मंतर्वत्नीं दधार सः ॥ २९ ॥ स्वकरेणोदरं तस्या, दारयित्वा च दारु-

॰: मैश्वर्यसाम्राज्यम्. प्र. १ पल्लीशेन. २ सु-प्र. ३ तिरस्काररूपाग्निना. ४ भृशं दह्यमानहृदयः. ५ वैरप्रतीकारेण. ६ भवदुपकारेण-भवत्माहात्म्यात्. ७ यितः प्र.

वत् । बालमास्फालयामास, शिलायां निष्कृपाशयः ॥ ३० ॥ ततः स्वश्रियमादाय, सकलां सकलांतराम् । धनदत्तः कृतार्थः स—न्नपश्यन्मालवाधिपम् ॥ ३१ ॥ कुकृत्यमिव तत्कृत्यं, श्रुत्वा तत् कुपितः स राट् । विकटभ्रुकुटीकोटि—स्पृष्टभालस्तमालपत् ॥ ३२ ॥ त्वं वाणिजोऽपि जात्या रे, कर्मणाऽसि जनंगमः । निर्घृणो यत् स्वहस्तेन, स्त्रियं बालं च जघ्निवान् ॥ ३३ ॥ अथैतत् कर्म निर्माति, चांडालोऽपि न कर्हिचित् । यत् त्वया निर्मितं रेरे, लोकद्वयविरोधकम् ॥३४॥ अद्रष्टव्यमुखस्तस्माद्, दूरीभव मदग्रतः । पाप ! त्वद्दर्शनेनापि, लिप्येऽहं पातकैर्हहा ॥ ३५ ॥ इत्थं निर्भर्त्स्य सर्वस्वं, तस्योद्दाल्य च भूपतिः । तं निर्वासितवांस्तीव्रं, पापं हि द्राक् फलेग्रहि ॥ ३६ ॥ तेन नार्थनिकारेण—भृशं म्लास्नुः स सार्वराट् । विपिने तापसीभूय, तपस्तेपेऽतिदुस्तपम् ॥ ३७ ॥ स मृत्वा तपसा तेन, जयसिंह इति श्रुतः । गूर्जराधिपतिर्जज्ञे, मंडिताखंडलद्युतिः ॥ ३८ ॥

इतश्च क्वाप्यरण्यान्यां, निःशरण्यस्य नश्यतः । संजग्मे जयताकस्य, श्रीयशोभद्रसूरिराट् ॥ ३९ ॥ भाविभद्रतया भक्ति—नम्रं सूरिर्जगाद तम् । किं न्यक्कृतोऽसि केनापि, यद् दीन इव दृश्यसे ? ॥ ४० ॥ सोऽपि चैर्योण सार्थेशात्, पराभवपदं निजम् । निगद्य शंबलं किंचि—दयाचीत् सूरिकुञ्जरम् ॥ ४१ ॥ ततो गुरुर्बभापे तं, त्वं श्रितोऽपि परां

१ कलान्तरेण ( व्याज ) सहिताम्. २ निर्घृणः, प्र, निष्कृप.. ३ चं, प्र. ४ लुंटयित्वा. ५ फलं-कर्मण आचारविवक्षया फले गृह्णाति-धारयति स्वीकरोति वेति अलुक् समास शीघ्रफलस्वीकारि. ६ राजतिरस्कारेण. ७ भूषितेन्द्रद्युतिः. ८ पूर्ववर्णितो यशोभद्रसूरिः पूर्णतल्लगच्छीयः ( चंद्रगच्छीयोऽन्नोक्त. ) अयं तु संडेरगच्छनायकः इति राजशेखरसूरिरचितचतुर्विंशतिप्रबंधे. ९ भावि-भविष्यत् भद्रं यस्य तद्भावस्तया. १० तिरस्कृतः.

श्रियम् । चौर्यं सुधा व्यधाः कस्मात्, येनास्येनं विडंबितः ॥ ४२ ॥ निःस्वस्यापि न यत् कर्तुं, न्याय्यं राज्याधिपोऽपि सन् । तत् त्वं चौर्यं वितन्वानः, स्थाने तेनाभ्यभूयथाः ॥ ४३ ॥ स्थानभ्रंशं कुलध्वंसं, निःशेषविभवक्षयम् । तत्कालं फलयन् स्तेयात्, कः सुधीर्विदधीत तत् ? ॥ ४४ ॥ वरमाजन्म दारिद्र्यं, परं दास्यं परौकसि । न तु प्राणहरस्तेय—संभवो विभवो महान् ॥ ४५ ॥ यावज्जीवं ततश्चौर्यं, वर्जयिताऽस्यतर्जितम् । यशस्यं कर्म निर्माहि, निर्मोहः सन् महाशय ! ॥ ४६ ॥ गुरुवाक्येन तेनोरु-प्रदीपेनेन तत्क्षणम् । स परिज्ञातसन्मार्ग—स्तोममार्गमगुंफत ॥४७॥ सूरिणा सूरिवात्सल्यात्, श्राद्धेभ्योऽर्पितशंबलः । जयताको ययौ भ्राम्यन्, पुरीमेकशिलाह्वयाम् ॥ ४८ ॥ श्रीओढरोढरस्तत्र, वणिगासीन्निधिः श्रियाम् । कर्मकारतया तस्य, गेहे दुःस्थः स तस्थिवान् ॥४९॥ क्रमेण सोऽपि सूरीन्द्रो, यशोभद्रोऽतिभद्रकृत् । विहरन्नागतस्तत्र, जयताकस्य संगतः ॥५०॥ हितोपदेशं दुःस्थत्वे, तस्य पाथेयदापनम् । स्मरन् कृतज्ञमानी स, शुश्रूषामास तं गुरुम् ॥ ५१ ॥ पृष्टनाओढरोऽन्येद्यु—स्त्वं भूतं जयताकनम् । अथ कल्ये दिनं सर्गं, भगवान् कुत्रात्र तिष्ठते ? ॥ ५२ ॥ स जगाद ममात्रास्ति, यशोभद्राभिधो गुरुः । तद्वेदिष्ठोऽनतिष्ठेऽहं, पिबंस्तद्वचनामृतम् ॥ ५३ ॥

ओढरोऽथ समुत्पन्न—गुरुदर्शनवासनः । [5]तं विवेकं च कृत्वाऽग्रे, ववंदे सूरिपुंगवम् ॥ ५४ ॥ तस्य भद्रकतां दृष्ट्वा, गुरुर्विश्वैकवत्सलः । किंचिदार्हतधर्मस्य, स्वरूपमुपदिष्टवान् ॥ ५५ ॥ शय्योत्थानं समागत्य, शृण्वन्तौ तौ गुरूदितम् । शुद्धया श्रद्धया श्राद्ध—धर्मं जगृहतुस्ततः ॥ ५६ ॥ ओढरो मुदितोऽजल्पत्, प्रभो ! मे त्वदनुग्रहात् । अभूत् जिनध-

१ स्तेन०. प्र. २ विलंबयैश्वर्यं तुरंगनामकं नगरम्. ३ ओढर इति नाम. ४ विना नेत्रेण स्वपनेतरेण भोजनमात्रेण या सहायीकारतमा. ५ गुरुं- जयताकम्

र्मांशिः, कां ददे गुरुदक्षिणाम् ? ॥५७॥ महाऋषिस्तमाचष्ट, निःसंगं दर्शनं हि नः । अतो ब्राह्मणवन्नैव, स्वीकुर्वे दक्षिणामहम् ॥ ५८ ॥ कुर्वे तथाऽपि कां भक्ति—मिति जल्पंतमोढरम् । आदिदेश गुरुस्तर्हि, चैत्यं चारु विधापय ॥ ५९ ॥ ततः स सुकृती श्रीम—द्वीरचैत्यमचीकरत् । व्योमगंगायितोद्दाम—पताकास्थगितांबरम् ॥ ६० ॥ हस्तेन श्रीयशोभद्र–सूरेर्दूरीकृतांहसा । तत् प्रतिष्ठापयामास, वितत्य च महामहम् ॥ ६१ ॥ प्रतिष्ठासुरपि स्थाना—न्तरं तत्रैव सूरिराट् । ओढराभ्यर्थितोऽत्यर्थं, वर्षारात्रमवास्थित ॥ ६२ ॥ तदा मेघश्च सूरिश्च, गर्जन्तौ मधुरध्वनि । क्षेत्रेषु भूरिभाग्यानां, पुण्यांकुरान् वितेनतुः ॥ ६३ ॥ गुरौ घने च धारालं, सद्धर्मामृतमुज्झति । अंतर्बहिश्च पंकौघं, क्षालयंति स्म केचन॥६४॥ प्राप्ते पर्युषणापर्व—ण्योढरेण सहार्चयत् । जयताको जिनं पंच—वराटकमणीवकैः ॥ ६५ ॥ उपोष्य तद्दिने धर्म—कर्मकर्मठमानसः । प्रतिलाभ्य च भक्त्याऽन्नं, मुनीन् सोऽपारयत् ततः ॥ ६६ ॥ ओढरः स विपद्यांते, बभूवोदयनाह्वयः । मंत्रिराजः पुरोपात्त—पुण्यप्राग्भारभासुरः ॥ ६७ ॥ कालधर्ममुपागत्य, जयताकः स जातवान् । कुमारपालनामा त्वं, राजन् ! गूर्जरनायकः ॥६८॥ यशोभद्रप्रभुरपि, प्रमीतः स्फीतपुण्यतः । हेमचंद्राभिधानोऽहं, बभूवांस्तावको गुरुः ॥६९॥ प्राग्वैरात् सार्थवाहस्य, जीवः सिद्धमहीपतिः । जिघांसामास कामं त्वां, वैरं न हि चिरंतनम् ॥ ७० ॥ अमात्योदयनोऽहं च, प्राग्भवस्नेहमोहितौ । त्वयि स्निग्धतमावास्व, स्नेहोऽपि हि भवानुगः ॥ ७१ ॥ दिनानि कतिचित् पूर्वं, यच्चौर्यादिर-

1 मतं–साधुधर्मः. २ विस्तार्य. ३ प्रस्थातुमिच्छुरपि. ४ यथासात्तथा. ५ निम्, प्र. ६ शरीरेषु. ७ मणीवकैः–पुष्पैः. ८ कुशल०. ९ समूह०. १० दत्तसूरेः–शिष्यादन्योऽयमाचार्य. यशोभद्र.. ११ मृत . १२ हंतुमियेष. १३ जीर्णं न भवति. १४ असूघातो. लट्.

तोऽभवः । तत्पापेन तव क्लेशः, कियत्कालमभूदिह ॥ ७२ ॥ यच्च पूजितवान् पंच—वराटकुसुमैर्जिनम् । यतिभ्यो ज्यायसीभक्ति—दानं त्वं यच्च दत्तवान् ॥ ७३ ॥ सुकृतैस्तत्समुत्पन्नै—र्निधानैरिव संपदाम् । अर्जनिष्ठा महिष्ठश्री—स्त्वं राजा परमार्हतः ॥७४॥ क्व तावती जिनेंद्रार्चा, मुनिदानं सकृत् क्व तत् । क्व चेदृशं तवैश्वर्य—महो महिम धर्मजम् ॥७५॥ उक्तः पूर्वभवस्तेऽसौ, प्रतीतिश्चेन्न मद्गिरा । प्रहित्यैकशिलापुर्यां, त्वदाप्तेनानुयोज्यताम् ॥ ७६ ॥ वेश्मन्योढरपुत्राणां, स्थिरदेवीति काचन । वृद्धा दास्यस्ति सा सर्व—मिदं वक्ष्यति मूलतः ॥ ७७ ॥

इतश्च परिपूर्याऽऽयुः, प्रांते पंडितमृत्युना । त्वं गतौ व्यंतरीयायां, राजन् !, भावी सुरोत्तमः ॥ ७८ ॥ श्रेयस्कामी स तत्रापि, वृंदारकपरिष्कृतः । भ्रमं भ्रमं महीपीठे, नित्यचैत्यानि नंस्यति ॥७९॥ नंदीश्वरादिद्वीपेषु, स्पष्टमष्टाहिकोत्सवम् । स करिष्यति भावेन, सौधर्मसुरनाथवत् ॥ ८० ॥ क्षेत्रे महाविदेहादौ, नामं नामं स सन्मुनीन् । पास्यति श्रोत्रपेयं त—द्देशनारसमादृतः ॥ ८१ ॥ अनेकाभिरिव श्रीभि—रमरीभिः परिष्कृतः । विलसिष्यति च स्वैरं, नंदनादिवनांतरे ॥८२॥ व्यंतरेंद्रस्ततश्च्युत्वा, क्षेत्रेऽस्मिन्नेव भारते । श्रीभद्दिलपुरे राज्ञः, शतानंदस्य मंदिरे ॥ ८३ ॥ धारिणीकुक्षिसंभूतः, प्रभूतरवैभवः । भविष्यति तनूजन्मा, ख्यातः शतबलाख्यया ॥ ८४ ॥ युग्मम् ॥ स्थित्वोपविदुषं शश्वत्, कलास्वविकलास्वसौ । छेकिलो भविताऽत्यर्थं, शैशवेऽपि सुरेज्यवत् ॥ ८५ ॥ वृषस्यंतीरपि पर—प्रमदाः परिवर्जयन् । सुश्राद्धवद्

1 लुडि यासि रूपं. 2 आपृच्छयताम्. 3 आराध्य सम्यग् जिनधर्ममत्र, धर्मोन्नतिं भूरितरां विधाय । विषप्रयोगात् समवाप्य मृत्युं, स्वर्धाम याताऽसि समाधिलीन.॥ चारित्रयु० 4 सुरोत्तमः. 5 देवैरलंकृतः. 6 शाश्वत०. 7 श्रीभी—रमणीभि. प्र०. 8 निपुण॰. 9 बृहस्पतिवत्.

युवत्वेऽपि, स शीलं शीलयिष्यति ॥ ८६ ॥ ततः शतवलो राज्यं, लब्ध्वा शिक्षां विनाऽपि हि । प्राच्यकारुण्ययोगेन, न हिंसाद्यं तनिष्यति ॥ ८७ ॥ अगेहेनर्दिभिः सैन्यै—श्चाक्षुपैरिव विक्रमैः । लीलयैव स भूपीठं, चक्रवर्तीव जेष्यति ॥ ८८ ॥

तदा च निरयादाद्या—च्छ्रेणिकात्मा विनिर्गतः । जिनेंद्रः पद्मनाभाख्यो, भविताऽत्रैव भारते ॥ ८९ ॥ स प्रव्रज्य तपः-क्षीण—कर्मा संजातकेवलः । सेवितः साधुकोटीरै—र्दानशौंड इवार्थिभिः ॥ ९० ॥ विहरन् पृथिवीपीठे, श्रीभद्दिलपुरेऽन्यदा । आगमिष्यति पुण्येन, कल्पद्रुरिव जंगमः ॥ ९१ ॥ युग्मम् ॥ सज्जनो धार्मिकस्येव, श्रुत्वा तस्यागमं जनात् । हर्षुलः श्रीशतवल—स्तमुपेत्य प्रणंस्यति ॥ ९२ ॥ निपास्यति च संसार—तापतप्त इवोच्चकैः । विश्वातिशायिमाधुर्यं, भगवद्देशनामृतम् ॥ ९३ ॥ प्रबुद्धः स ततो राज्यं, संक्रमय्य तनूरुहे । जिनाद् ग्रहीष्यते दीक्षां, पुण्यश्रीसहचारिणीम् ॥ ९४ ॥ एकादशो गणधरः, स भूत्वा द्वादशांगवित् । तपोभिर्बहुभिः क्षिप्त—कर्मा केवलमाप्स्यति ॥ ९५ ॥ प्रबोध्य पद्मवद् विश्वं, केवलज्ञानभानुना । महाशयः शतवलो, भावी मुक्तिरमावरः ॥ ९६ ॥ एवं राजन्! भवादस्मात्, तार्तीयीके भवे तव । जिनधर्मप्रभावेण, मुक्तिश्रीर्भविता ध्रुवम् ॥ ९७ ॥ इति श्रीसूरिमंत्राधि—ष्ठातृदेवीगिरा मया । कथयामासिरे सम्यग्, भवास्ते भूतभाविनः ॥ ९८ ॥ आसन्नसिद्धिश्रवणात्, तल्लाभादिव निर्वृतः । अथ विज्ञपयामास, प्रांजलिर्गूर्ज-

---

१ शब्दकारकैः. २ कोटिरैः, प्र. ३ शतवल. ४ तृतीये–इत्यर्थः. ५ वयमपि चिरकालं संयमं पालयित्वा, स्वनशनविधिना च प्राप्य मृत्युं सुखेन । निरिलसुखमनोज्ञं देवलोकं तुरीयं, निहतसकलशोकं संगमिष्याम आर्य ! ॥ भरतभुवि नरत्वं प्राप्य भूयोऽपि भव्यं, कृतसुकृतमनस्कौ त्यक्तभोगाभिलाषौ । चरमवयसि शुद्धं संयमं पालयित्वा, शिवपदमपसादं भूप ! यास्याव आवाम् ॥ इति श्रीचारित्रसुन्दरगणयः ॥ ६ सुस्थः–सुखी.

रप्रभुः ॥ ९९ ॥ ज्ञानंगिले कलावस्मिन्, सर्वज्ञ इव संप्रति । अतीतानागतं ब्रूते, कः पूज्यादपरो ननु? ॥ १०० ॥ यथा भागवती भाषा, भवेन्न व्यभिचारिणी । प्राभव्यपि तथैवेयं, तद्ध्यानातिशयादिव ॥ १०१ ॥ परं कौतुकमात्रेण, दासीं तां प्रच्छयाम्यहम् । आप्तमेकशिलां प्रेष्य, यथादिशति मां प्रभुः ॥ १०२ ॥ विशिष्य पृच्छयतामेवं, जल्पिते गुरुणा नृपः । प्रैषीदाप्तजनं तत्र, कौतुकी नालसः क्वचित् ॥ १०३ ॥ स गत्वैकशिलास्थान-मोढरांगजसद्मनि । तां दासीं स्थिर-देव्याख्यां, पृष्ट्वा तद्वृत्तमादितः ॥ १०४ ॥ दृष्ट्वा श्रीवीरचैत्यं च, स्वयमोढरकारितम् । आगत्य च महीभर्त्रे, जगौ सर्वं यथास्थितम्॥१०५॥युग्मम् ॥ प्रतीतोऽथ नृपः संघ-प्रत्यक्षं गुरवे मुदा । विरुदं कलिकालश्री-सर्वज्ञ इति दत्तवान्॥१०६॥

अथ वार्धकमालोक्य, चौलुक्यः पृथिवीपतिः । स्थित्वानुरहसं रात्रौ, गुरुं प्रत्येवमूचिवान् ॥ १०७ ॥ सत्यपि त्वादृशे सर्व—विद्यांभोधौ गुरौ मम । फलं गार्हस्थ्यवृक्षस्य, नाभाग्यैस्तनयोऽजनि ॥ १०८ ॥ दिने दिने जरा चैषा, जनयंती कृशांगताम् । ओजायते समं राज्य—लक्ष्मीदानार्हचिंतया ॥ १०९ ॥ राज्यसूत्रमतः किंचि—दासूत्र्य भगवन्नहम् । हंसायितुमभीप्सामि, समतामृतवारिधौ ॥ ११० ॥ ददाम्यजयपालाय, स्वराज्यं भ्रातृसूनवे ? । उत प्रतापमल्लाय, दौहि-त्राय ? निवेद्यताम् ॥ १११ ॥ विमृश्य सूरिणाऽभाणि, भ्रातृव्यस्ते दुराशयः । अतो राज्ये न योग्योऽसौ, दासेय इव सर्वथा ॥ ११२ ॥ किंचैश्वर्यमवाप्तोऽयं, मत्तेभ इव भंक्ष्यति । वैरायमाण इव ते, धर्मस्थानावलीं वनीम् ॥ ११३ ॥ अयं प्रतापमल्लस्तु, न तथा दुष्टधीरिति । अस्मै स्ववैभवं दत्तं, परिणामे हितावहम् ॥ ११४ ॥ न्यस्यते श्रीर्गुणिन्येव, न संवं-

१ प्राभव्यपि, प्र. २ भगवद्ध्यान०. ३ वार्द्धक्यं-वृद्धत्वमित्यर्थः ४ तु, प्र ५ धर्मस्य० प्रबंधे. ६ राज्यव्यवस्थाम्

धिनि यद् रविः । शनौ सत्यपि पुत्रे स्वे, दीपे न्यास्थत् प्रकाशिताम् ॥ ११५॥ करिष्ये पूज्यपादोक्तं, समये समुपागते । उदित्वेति समुत्तस्थौ, गूर्जरक्षितिवासवः ॥ ११६ ॥ गोशाल इव देवार्ये, गुरावपि दुराशयः । बालचंद्राभिधः शिष्यः, श्रुत्वा तं मंत्रमंतिकात् ॥ ११७ ॥ आबालकालसुहृदेऽ—जयपालाय तत्क्षणम् । कथयामासिवानेतत्, खलानामुचितं खलु ॥ ११८ ॥ युग्मम् ॥ तमूचेऽजयपालोऽपि, विकसन्मुखपंकजः । एष मंत्रोऽतिगुप्तोऽपि, साधु ज्ञातस्त्वया मुने ! ॥ ११९ ॥ इयं मैत्रीलता चक्रे, त्वयैव फलशालिनी । नृपाशयस्थितो मंत्रो, यदूचेऽयं ममाग्रतः ॥ १२० ॥ यदि जायेत राज्यं मे, भवानेव तदा गुरुः । यथा कुमारपालस्य, हेमाचार्योऽधुनाऽस्त्ययम् ॥ १२१ ॥ निवेद्यैवं पुरस्तस्य, तद्दिनादजयः कुधीः । श्रेणिके कोणिक इव, द्वेषं निहितवान्नृपे ॥ १२२ ॥

अथ नूतनशब्दानु—शासनप्रमुखैः शुभैः । त्रैविद्यो[1]धिष्ठितैर्ग्रंथै—र्ज्ञानसत्रं[3] प्रवर्तयन् ॥ १२३ ॥ स्वयं तिष्ठन् क्रियामार्गे, स्थापयन्नपरानपि । षष्ठाष्टमप्रभृतिभि—स्तपोभिर्धर्ममेधयन् ॥ १२४ ॥ उल्लासयन् मतं जैनं, शशीव कुमुदाकरम् । आयुश्चतुरशीत्यब्दान्, हेमाचार्यः समापयत् ॥ १२५ ॥ त्रिभिर्विशेषकम् ॥ सम्यग्ज्ञानेन केनापि, ज्ञात्वा पर्यंतमात्मनः । गच्छशिक्षां च विश्राण्य, भ्रातृप्रद्युम्नसूरये ॥ १२६ ॥ आहूय संघं भूपं च, तत्प्रत्यक्षं यथाविधि । वैरंगिकः स्वगात्रेऽपि, शिश्रियेऽनशनं गुरुः ॥ १२७ ॥ युग्मम् ॥ अवीक्षितमिवाजन्म, वीक्षितुं तन्मुखांबुजम् ॥ अहंपूर्विकया लोका, मिमिलुः

---

१ अभिप्राय० चित्तः० २ ऋग्वेदयजुर्वेदसामवेदरूपास्तिस्रो विद्या ज्ञानदर्शनचारित्राणा वा सर्वंधिन्यस्तिस्रो विद्या व्याकरणकाव्यकोशरूपा वा तिस्रो विद्याः समाहतास्त्रिविद्यं ततः स्वार्थेऽण्. ३ दानम्.

सकलास्तदा ॥ १२८ ॥ ततोऽव्यवहिते राज्ञि, संघे च सकले प्रभुः । वैराग्यैकमयीं चक्रे, देशनामन्तिमामिमाम् ॥१२९॥
संसारेऽत्र गलत्सारे, भविनां कर्मयोगतः । चतुर्ष्वपि भवेष्वस्ति, न मनागपि निर्वृतिः[4] ॥ १३० ॥

तथाहि प्रथमं जीवा, निगोदेषु वसंत्यमी । कायस्थितिं समाश्रित्य, संख्यातीतमनेहसम् ॥ १३१ ॥ एकोच्छ्वासांतरे सप्त—दशभिर्मृत्युभिः किल । भुंजते तेऽनिशं तत्र, दुःखं किमपि दुस्सहम् ॥ १३२ ॥ नरके नारकाणां य—ज्जायते कष्टमुत्कटम् । ततो निगोदजीवानां, तदनंतगुणं मतम् ॥ १३३ ॥ ततः कृच्छ्रेण निर्गत्य, पृथ्वीनीराग्निवायुषु । उत्सर्पिणीरसंख्याता—स्तिष्ठंति ननु देहिनः ॥ १३४ ॥ कथंचिन्निर्गतास्तेभ्यो, विकलाक्षेषु जंतवः । वसंत्यब्दसहस्राणि, संख्यातान्यतिकष्टिताः ॥ १३५ ॥ ततो नानाभवान् भ्रांत्वा, पंचाक्षत्वमुपेत्य च । जीवास्तिर्यक्षु जायंते, जलस्थलखचारिषु ॥ १३६ ॥ तत्र जालैर्जलात् कृष्ट्वा, मत्स्याद्याः स्थूलविग्रहाः । दार्यंते दारुवत् क्रूरैः, कैवर्तैः शितपर्शुना ॥ १३७ ॥ क्षुत्तृष्णांगच्छविच्छेद—डंभवाहादिकर्मभिः । गवादयो यथाऽत्यार्त्ताः, प्रत्यक्षा एव ते तथा ॥१३८॥ वागुरादिप्रयोगेण, बद्धा वातमजादयः । तैलादिषु विपच्यंते, व्याधैर्मांसपाककोविदैः ॥ १३९ ॥ विविधैश्छद्मभिर्धृत्वा, चटकाद्याः पतत्रिणः । शूलीक्रियंतेऽस्तकृपैः, कथं जीवांतकैर्हहा ॥ १४० ॥ तत्र क्रूरतयाऽघानि, कारं कारं सहस्रधा । लभंते नारकीं योनिं, निःशरण्याः शरीरिणः ॥ १४१ ॥ उत्पन्ना एव ते तत्र, सहंते यातना घनाः । प्रत्यंगच्छेदवज्राग्नि—दाहहृत्कर्षणादिभिः ॥ १४२ ॥



---

१ ऽव्यवहिते, प्र०. २ अतिसावधाने. ३ गतिषु. ४ सुखम्. ५ अनंतशब्दपरकः संख्यातीतशब्द. ६ कालम्. ७ कष्टम्, ८ अतिकष्टं सजातं येषां ते, ९ जाल०. १० वातमनुलक्ष्य अजति-गच्छतीति वातमजः-मृगविशेषः, ११ पक्षिणः. १२ लोहादिकीलकेन विद्धा मांसस्य पचनं-शूलाकरणम्. १३ पापानि.

स्मृत्वा च प्राक्तनं[1] वैरं, शस्त्रघातैः परस्परम् । भवंति मुशलक्षुण्ण—कणवल्लवशः स्वयम् ॥ १४३ ॥ नरके पच्यमानानां, नारकाणां दिवानिशम् । यद्दुःखमस्ति तद् वक्तुं, लक्षजिह्वोऽपि न क्षमः ॥ १४४ ॥ ततः कथंचिदुद्धृताः, किंचित्सुकृतयोगतः । जायंते जंतवो गर्भे, नारीणां नरकोपमे ॥ १४५ ॥ प्रतिरोमोष्णसूचीभि—र्भिद्यमानस्य देहिनः । यत् कष्टं गर्भमध्ये तद्[2], भवत्यष्टगुणं ततः ॥ ॥ १४६ ॥ उत्कर्षाद्[3] द्वादशाब्दानि, स्थित्वा तस्मिन्नधोमुखाः । भवंति जन्मवेलायां, व्यथया ते मृता[4] इव ॥ १४७ ॥ अशुचित्ववियोगाग्नि—वैकल्योग्रगदादिभिः । बाल्याद्यवस्थात्रितये, मर्त्या दौःस्थ्यविसंस्थुलाः ॥ १४८ ॥ नैस्व्यस्त्रीतनयाऽभाव—दास्यवैररणादिभिः । जनकादिनिकारैश्च[5], नराः सौख्यविवर्जिताः ॥ १४९ ॥ ततोऽपि सुकृतं कृत्वा, दानाद्युत्तमकर्मभिः । लभंते त्रिदशीभावं, केऽपि भद्राशया नराः ॥ १५० ॥ तत्रापि केऽपि दुष्कर्मो—दयात् किल्विषिकादयः । किंकरा इव खिद्यंतेऽ—तितमां[6] स्वामिसेवया ॥ १५१ ॥ श्रियः स्त्रियोऽपि चोत्कृष्टा, दृष्ट्वाऽन्येषां दिवौकसाम् । दह्यंते केऽपि वज्राग्नि—कीलाँ[7]कवलिता इव ॥ १५२ ॥ परदेवीः शुभा हृत्वा, कामांधाः कतिचित् सुराः । कृष्णराजीविमानेषु, लीयंते तस्करा इव ॥ १५३ ॥ तज्ज्ञात्वा ते तदिंद्रेण[8], मूर्ध्नि दंभोलिना हताः । क्रंदंत्यमंदं षण्मासीं, पीडया मूर्च्छिता इव ॥ १५४ ॥ भाविनीं दुर्गतिं मत्वा, तादृग्दृष्ट्वा च वैभवम् । अरतिं यां श्रयंते ते, सुवचाः सा न कैश्चन[9] ॥ १५५ ॥ इत्यसूयां[10]मानमाया—लोभोद्वेगभयादिभिः । भृशमाकुलितात्मानो, देवाः

१ प्राकृतम्, प्र. २ कष्टम्. ३ उत्कृष्टात्, प्र. सिद्धराजो द्वादशवर्षाणि मयणल्लाकुक्षौ अस्थादिति ऋषभदासकृतकुमारपालरासके ४ प्रस्ताः. ५ परिभवैः. ६ नितमाम्, प्र,-सुतरामित्यर्थः. ७ शीखा०. ८ तेषामिन्द्रेण. ९ यावदिति शेषः. १० असूया -परगुणेषु दोषाविष्करणं, क्रोधजो दोषो वा

स्युः सुखिनः कुतः ? ॥ १५६ ॥ एवं विमृश्य निःशेषं, दुःखैकांतमयं भवम् । सुखैकांतमयी मुक्तिः, साधनीया विवेकिभिः ॥ १५७ ॥ तत्साधनं भवेदात्म—ज्ञानमेवादिमं सताम् । न हि बीजात् परं किंचि—दंकुरोत्पत्तिकारणम् ॥ १५८ ॥ तच्छास्त्रं तद् विवेकित्वं, तच्चारित्रं तपोऽपि तत् । तद् ध्यानं स समाधिश्च, येन स्वात्मैष वेद्यते ॥ १५९ ॥ ये स्वं वाचस्पतीयंति, ज्ञातुं सकलमप्यदः । क्षेत्रज्ञं वेदितुं तेऽपि, कुंठीयंति जडा इव ॥ १६० ॥ स्फुरन्मोहमहानिद्रा—मुद्रिते जगतीत्रये । नूनमात्मज्ञ एवैको, जागर्ति ज्ञानलोचनः ॥१६१॥ तावच्छुध्यति नात्माऽयं, लीनकश्मलकालिकः । यावत् सद्ध्यानपीयूष—पूरैः प्रक्षाल्यते न हि ॥ १६२ ॥ वशंवदेंद्रियग्रामो, निष्कषायो विरक्तहृत् । मैत्र्यादिवासितस्वांतः, सुधीर्ध्यानोचितो भवेत् ॥ १६३ ॥ पिंडस्थं च पदस्थं च, रूपस्थं रूपवर्जितम् । चतुर्धा ध्यानमादध्या—दात्मजिज्ञासया बुधः ॥ १६४ ॥ कायस्थः कर्मनिर्मुक्तो, ज्ञानवान् परमेश्वरः । जिनेंद्रः स्मर्यते यत्र, तत् पिंडस्थं प्रकीर्त्तितम् ॥ १६५ ॥ अर्हन्मयानि यन्मंत्र—पदानि हृदयांबुजे । चिंत्यंते शशिशुभ्राणि, तत् पदस्थमिहोदितम् ॥ १६६ ॥ सप्रातिहार्यसमव—सरणस्थो जिनेश्वरः । यद् ध्यायतेऽथ तद्बिंबं, तद् रूपस्थं निरूपितम् ॥ १६७ ॥ अमूर्त्तश्चिन्मयः सिद्धो, ज्योतीरूपो निरंजनः । परमात्मा स्मर्यते यत्र, रूपातीतं हि तन्मतम् ॥ १६८ ॥ एतच्चतुर्विधं ध्यानं, कुर्वंस्तद्भावभावितः । ध्याता तन्मयतामेति, भ्रमरीभूतकीटवत् ॥१६९॥ निलीयतेऽन्तरात्माऽयं, परात्मनि तदा तथा । यथा भजति तेनैक्यं, ध्यातृध्यान-



१ संसारम्. २ ज्ञायते. ३ आत्मानम्. ४ आत्मानम्. ५ ज्ञातुम्. ६ कुंठं-मन्दमिव आचरतीति कुंठीयंति. ७ व्याप्ते. ८ मैत्रीप्रमोदकारुण्यमाध्यस्थ्य०. ९ कुर्यात्
१० तद्बिंबं च यद् ध्यायते ११ भावनावासितः.

द्वयच्छिदा ॥ १७० ॥ ततो घातीनि कर्माणि, निर्मथ्यावाप्तकेवलः । कलयत्यखिलं विश्वं, पुरोवर्तिष्णुवस्तुवत् ॥ १७१ ॥ विलीनसकलक्लेशो, जीवन्मुक्तत्वमाश्रितः । इहाप्यात्मा परानंदं, विंदते परमात्मवत् ॥ १७२ ॥ अंते शैलेश्यधिक्षिप्त—कर्मशेषस्तनूज्झनात् । आत्मा भूत्वा परात्मैव, मुक्तिशर्मणि मज्जति ॥ १७३ ॥ सर्वेषामपि देवानां, यत् सुखं सार्वकालिकम् । अनंतेनापि भागेन, न स्यान्मुक्तिसुखस्य तत् ॥ १७४ ॥ तत् प्रमादं परित्यज्य, भो भव्या ! यत्यतां तथा । यथा करप्रचेयं स्याद् , भवतां शिवशर्म तत् ॥ १७५ ॥ कालानुभावतो मुक्ति—र्नेह यद्यपि विद्यते । तथाऽप्यात्मरतत्वेन, भवेत् साऽन्यभवेऽपि हि ॥ १७६ ॥ एवमुक्त्वा स्थिते सूरौ, तं मत्वा दुर्लभं पुनः । केचिदाददिरे भव्याः, सम्यक्त्वाभिग्रहादिकम् ॥ १७७ ॥

पतित्वाऽथ पदांभोजे, राजर्षिः क्षामणाक्षणे । वाष्पायमाणो नेत्राभ्यां, प्रभुमूचे सगद्गदम् ॥ १७८ ॥ ईषल्लभं प्रतिभवं, स्त्रैणराज्यसुखादिकम् । कल्पद्रुरिव दुष्पाप—स्त्वादृग्भद्रंकरो गुरुः ॥ १७९ ॥ न केवलमभूस्त्वं मे, भगवन् ! धर्ममात्रदः । जीवितव्यप्रदः किंतु, ततस्त्वत्तोऽनृणः कथम्? ॥ १८० ॥ त्वयि स्वर्गोन्मुखे स्वामिन् !, कोऽधुना शिक्षयिष्यति । मामखंडतमं पुण्य—प्रक्रियाकांडतांडवम्? ॥ १८१ ॥ अगाधे मोहपाथोधौ, पर्यंते मज्जतो मम । निर्यामणाकरालंबं, त्वां विना कः करिष्यति? ॥ १८२ ॥ यदि मे त्वत्पदोपास्ति—रस्ति कामितदायिनी । जनिषीष्ठास्तया तर्हि, त्वमेव गुरुराशिवम् ॥ १८३ ॥ इति भूभृद्विलापेन, विभिन्नहृदयः प्रभुः । नेत्रकूलंकषान् वाष्पान् , सन्निरुध्य कथंचन

१ विनष्ट० २ लभते. ३ लीनो भवति. ४ डा–प्र, धर्मक्रियासमूहनृत्यम्. ५ आयुरन्ते. ६ भूयाः. ७ नेत्रान्तव्यापकान्.

॥ १८४ ॥ उत्थाप्य चातिकष्टेन, पादलग्नं तमात्मनः। ऊचे वाचं शुचीं सौरें—सैंधवीं लहरीमिव ॥ १८५ ॥ युग्मम् ॥ आजन्म राजन्! निर्व्याज—भक्तेऽहं हृदि तावके। समुत्कीर्ण इव स्वर्गं, गतोऽपि स्यां पृथग् न हि ॥ १८६ ॥ मनःशुद्ध्या समाराद्ध—जिनधर्मस्य ते पुरः। मोक्षोऽपि नातिदुर्लभः, सद्गुरुस्तु किमुच्यते ॥ १८७ ॥ अस्मदुक्त्याऽऽर्हतं धर्मं, प्रपद्य क्षितिमंडले। कृत्वा च तस्यं साम्राज्यं, नापर्णस्त्वमभूः कथम्? ॥१८८॥ कुर्वाणस्य क्रियामार्गे क्रियाभ्रष्टान् परांस्तव। सत्क्रियास्थापनाचार्य!, का शिक्षा युज्यतेऽधुना? ॥ १८९ ॥ जगज्जनसमक्षं यः, पराजिग्ये पुरा त्वया। पर्यंतेऽपि कथं मोहः, स त्वामभिभविष्यति? ॥ १९० ॥ ततः सहजधैर्येण, संवर्मय निजं मनः। यतोऽस्मन्मृत्युतो मृत्यु—र्न दूरे तव वर्तते ॥ १९१ ॥ तदा सम्यग् वितन्वीथाः, क्षामणाऽनशनादिकम्। यद् भस्मनि हुतमिव, तद्विना प्राक्तनं शुभम् ॥ १९२ ॥ स्वयमेव च कुर्वीथाः, सर्वामामुष्मिकीं क्रियाम्। निरपत्यतया कर्ता, न पश्चात् कश्चनापि ताम् ॥ १९३ ॥ ऊरीकृत्य गुरूक्तं तत्, सूक्तवत् क्षितिनायकः। उदतिष्ठत भूयिष्ठ—भक्तिः कर्तुं प्रभावनाम् ॥ १९४ ॥ कुमारा ननृतुः स्वैरं, श्रावका रासकान् ददुः। भट्टा भोगावलीः पेठु—र्जगुर्गीतानि गायनाः ॥१९५॥ धर्मव्ययेऽभिदधिरे, भूपाद्याः पारिपार्श्विकाः। परोलक्षान्नमस्कारान्, पुष्पाणि (पुण्यानि) च सहस्रशः ॥ १९६ ॥ अत्यासन्नं व्ययं ज्ञात्वा, सूरिर्ध्यानविधित्सया। कोलाहलं प्रसमरं, समंतात् प्रत्यषीषिधत् ॥ १९७ ॥ निर्वृत्तिवल्गयाऽत्युच्चै, रुद्ध्वाऽक्षाण्युत्कटाश्ववत्। बद्ध्वा च



१ गगासंबंधिनीम्. २ धर्मस्य. ३ मरणावसरे. ४ उन्नतिम्. ५ स्तुतीः-बिरुदावलीः. ६ परिपार्श्वं वर्तते 'ते "परिमुखश्च" इति चात् ठक् पार्श्वस्थायिन इत्यर्थः. ७ नमस्कारमहामंत्रान्. ८ अप्रवृत्त्यभावरूपा वल्गा (लगाम) तया.

ध्यानपाशेन, चित्तं लोलं प्लवंगवत् ॥ १९८ ॥ चिंतयन् सुचिरं किंचित्, परमात्ममयं महः । ब्रह्मरंध्राध्वना प्राणान्, हेमाचार्यो विमुक्तवान् ॥ १९९ ॥ युग्मम् ॥ दृष्ट्वा तस्य व्ययं जज्ञे, चौलुक्यश्चेतनोज्झितः । गुरुजीवं स्वजीवेनाऽ—नुयात इव तत्क्षणम् ॥ २०० ॥ क्षणोर्ध्वं चेतनां प्राप्य, शून्यं पश्यन्निवाखिलम् । इष्टानां घटयन् कष्टं, स जगादेति गद्गदम् ॥ २०१ ॥ इयत्कालं प्रभो! धृत्वा, धर्मस्नेहं मयीदृशम् । इदानीं निर्ममः कस्मा—न्मामहासीरिहैव यत् ॥ २०२ ॥ यद्वा त्वयि स्वदेहेऽपि, निःस्नेहे स्नेहमुच्चकैः । अपश्यं भ्रांत एवाहं, संप्रत्यस्ति यतो न सः ॥ २०३ ॥ बोधयित्वा नरान् देव—बुबोधयिषया दिवम् । त्वं प्राप्तोऽस्यधुना नूनं, संतः सर्वहिता यतः ॥ २०४ ॥ एतदेवानुशाशोच्ये, निष्पुण्योऽहं पुनः पुनः । राजपिंडतया यन्मे, किंचिन्नोपकृतं तव ॥ २०५ ॥ शिष्याश्च रामचंद्राद्या—स्तदानीमेवमूचिरे । स्वगुरुव्ययदूनांतः—करणाः करुणस्वरम् ॥ २०६ ॥ अद्य शुष्कः प्रभावाब्धि—र्मुद्रितः सद्गुणाकरः । ज्ञानसत्रं परिक्षीणं, प्रभो! त्वयि गते दिवम् ॥ २०७ ॥ उदरंभरयः संति, भूरयः सूरयः परम् । नृपं प्रबोध्य कस्त्वद्व—ज्जगदुज्जीवयिष्यति ॥ २०८ ॥ ज्ञानप्रदीपे भगवं—स्त्वयि निर्वाणमाश्रिते । प्लावयिष्यंति पृथिवी—मज्ञानध्वांतवीचयः ॥ २०९ ॥ मूलादपि समुन्मूल्य, मिथ्यात्वं विषवृक्षवत् । सम्यक्त्वं कल्पतरुवत्, तत्पदे कः करिष्यति? ॥ २१० ॥

ततः क्ष्मामोऽपि संघोऽपि, कृतशोकाश्रुपल्वलौ । शिविकां दिव्यविच्छित्तिं, निरमीमपतां रयात् ॥ २११ ॥ स्नातानु-

---

१ मृगवद् वानरवद्वा. २ उत्तमांगस्थितेन ब्रह्मप्राप्तिहेतुकेन छिद्रस्थानेन. ३ अत्याक्षीः. ४ स्नेहः. ५ अनुपूर्वक शीङ् इत्यस्य यङन्तरूपम्, अतिशयेन पश्चात्तापं करोमीत्यर्थः. ६ ब्रूडयिष्यंति. ७ मनोहररचनायुक्ताम्.

लिप्तां सत्क्षौम—संवृतां मालभारिणीम् । तत्र न्यवीविशन् सूरे—स्तनूं वृद्धानगारिणः ॥ २१२ ॥ उत्सवेन बहिर्नीत्वा, शिविकां श्रावकोत्तमैः । संचस्करे गुरुवपुः, कर्पूरागु(ग)रुचंदनैः ॥ २१३ ॥ तदाऽर्कः परिवेष्यासीद्, दिशः सर्वा रजस्वलाः । दिनं च धूसरं तादृग्—व्ययः केषां न दुःखदः ? ॥ २१४ ॥ विध्यापितायां चित्यायां, गुरौ निर्भरभक्तितः । तद्भस्म स्वयमादाय, नृपो मूर्ध्नि न्यवेशयत् ॥ २१५ ॥ ततो देशाधिपैः श्राद्धैः, सर्वैः पौरैश्च लेशशः । आत्ते भस्मनि गर्ताऽसी—ज्जानुदघ्नी चिताक्षितौ ॥ २१६ ॥ साऽद्यापि पत्तनांतेऽस्ति, हेमगर्तेति विश्रुता । ख्यातिमेति गरिष्ठाना—महो संस्कारभूम्यपि ॥ २१७ ॥ ततश्चौलुक्यभूमीभृत्, पत्तनेऽन्यपुरेष्वपि । विस्तरात् कारयामास, गुरोरष्टाहिकामहम् ॥ २१८ ॥ श्रीविक्रमनृपाद् वर्षे, शराब्धिशिवसंमिते ( ११४५ ) । आसीत् कार्तिकराकायां, हेमसूरिगुरोर्जनिः ॥ २१९ ॥ तस्य दीक्षा च पाथोधि—बाणरुद्रेष्वजायत ( ११५४ ) । पट्षट्शिवेषु ( ११६६ ) सूरित्वं, नवद्व्यर्केषु ( १२२९ ) च व्ययः ॥२२०॥ हेमाचार्यवियोगेन, शून्यात्मेव समंततः । विदांचकार चौलुक्यो, न किंचित् कृत्यमात्मनः ॥ २२१ ॥ ततः स रामचंद्राद्यै—र्बुधैः संबोध्य नित्यशः । दिनैः कतिपयैश्चक्रे, स्तोकशोकः कथंचन ॥ २२२ ॥

अथ चौलुक्यराड् दध्यौ, गणयित्वाऽग्रिमं दिनम् । प्रतापमल्लं दौहित्रं, निजैश्वर्ये निवेशये ॥ २२३ ॥ तावद् विस्तारयंस्तापं, ज्वालाजिह्वालवह्निवत् । आकस्मिको ज्वरस्तस्य, शरीरे समजृंभत ॥ २२४ ॥ नृपं ज्वरातुरं दृष्ट्वाऽ—गदंकाराः

१ संस्करोति स्म, परोक्षे आत्मनेपदम्. २ सूर्यचंद्रयोर्वेष्टनाकारोऽशुभादिसूचकः प्रभाविशेषः परिवेषस्तद्वान्. ३ धूलियुक्तम्. ४ तस्य दीक्षा तथाऽब्देषु, वार्द्धि बाणेश्वरेष्वभूत्. ( ११५४ ) प्र. ५ मृगयित्वा–दृष्ट्वा. ६ श्रेष्ठम्.

समुत्सुकाः । विधातुं तत्प्रतीकारं, सँारमारेमिरेऽभितः ॥ २२५ ॥ तदैव छलमासाद्या—जयपालः स दुष्टधीः । कथंचन पयोमध्ये, भूभृते दत्तवान् विषम् ॥ २२६ ॥ कोशस्य कुंचिकां लात्वा, बलात् सैन्यं च किंचन । विरंचय्यात्मसात्[1] तस्थौ, स राज्यग्रहणोत्सुकः ॥ २२७ ॥

इतो राज्ञा परिज्ञाय, स्वकाये विषसंक्रमम् । कोशादानाययामासे, शिप्रा (शुक्तिः) क्षिप्रं विषापहा ॥ २२८ ॥ कोशाधिपतिराचष्ट, कुंचिकामजयः स्वयम् । आदाय मत्करात् कोशं, रुद्ध्वा च परितः स्थितः ॥२२९॥ तदाकर्ण्य विविक्तात्मा, स चुकोप न तं प्रति । केवलं ध्यातवान् नून—मीदृशी भवितव्यता ॥ २३० ॥ आनायितां नृपेणापि, प्रेक्ष्य शिप्रामनागताम् । पारिपार्श्विकतामाप्त—श्चारणः प्रोचिवांस्तदा ॥२३१॥ एतावंतस्त्वया राजन्!, प्रासादाः कारिताः कुतः? । कस्ताञ् शुश्रूषिता? नाऽगा—च्छिप्रा ते स्वामिनोऽपि यत् ॥ २३२ ॥ अनेन सत्यमेवोक्त—मिति राट् स चमत्कृतः । दारिद्र्यद्रावकं तस्मै, ददिवान् पारितोषिकम् ॥ २३३ ॥ तदैव सर्वचैत्येषु, पूजाः साधर्मिकार्चनम् । अन्नादिदानं दीनेभ्यो, नृपश्चक्रे निरंतरम् ॥ २३४ ॥

अथ राजर्षिराकार्य, रामचंद्रं मुनीश्वरम् । पर्यंताराधनां कर्तुं, विधिनैवं प्रचक्रमे ॥ २३५ ॥ पुरतः स्थापयित्वाऽर्हद्बिंबं तपनबिंबरुक् । अर्चयित्वा स विधिव—न्नमस्यामासिवान् मुहुः ॥ २३६ ॥ साक्षीकृत्य जिनाधीशं, मनःशुद्ध्या मुनेः पुरः । भूभृदेवमभाषिष्ट, पापप्रक्षालनाचिकीः ॥ २३७ ॥ स्थावराणां त्रसानां च, प्राणिनां[3]माभवं मया । वधो व्यधायि

❀ उचितम्. १ कृत्वैव स्वात्मसात्, प्र. २ ततो. प्र. ३ आभवं-जन्मन आरभ्य.

यः कोऽपि, तं गर्हेऽहं मुहुर्मुहुः ॥ २३८ ॥ स्वार्थेनाथ परार्थेन, स्थूलं तदितरच्च यत् । कथयामास मिथ्याऽहं, तज्जुगुप्सेऽतियत्नतः ॥ २३९ ॥ नयेन दुर्नयेनापि, परकीयं धनादिकम् ॥ अदत्तं यन्मयोपात्तं, तत् त्यजामि निरीहधीः ॥२४०॥ स्वपरस्त्रैणयोगेन, यदसेव्यत मैथुनम् । अचिंत्यत च यद् दिव्यं, तन्निंदामि पुनः पुनः ॥ २४१ ॥ धनधान्यक्षेत्रवास्तु—स्वर्णदासहयादिषु । अधिकां वर्द्धितां तृष्णां, वर्जयामि समाहितः ॥ २४२ ॥ आजन्म यन्मयाऽभोजि, निशायामशनादिकम् ॥ अभक्ष्यमपि चाभक्षि, तद् गर्हे सर्वगर्हितम् ॥२४३॥ एवं च दिग्विरत्यादौ, तथा सामायिकादिषु । यदतीचारयाञ्चक्रे, तन्मुंचाम्यपुनःकृते ॥ २४४ ॥ पृथ्वीकायादिरूपेण, स्थावरेषु वसन्नहम् । पीडयामास याञ् जीवान्, समस्तान् क्षमयामि तान् ॥ २४५ ॥ त्रसत्वे तिर्यग्नरक—नरदेवभवेष्वहम् । वसञ् यान् दूनवानस्मि, क्षाम्यंतु मयि तेऽङ्गिनः ॥२४६॥ दुर्वाक्याद्यभिधानेन, संघे ये केऽपि पीडिताः । तानहं क्षमयन्नस्मि, त्रिशुद्ध्या रचिताऽञ्जलिः ॥ २४७ ॥ जीवजातिषु सर्वासु, भ्रमञ् यत् कृतवानहम् । कायवाङ्मानसैस्तन्मे, मिथ्या भवतु दुष्कृतम् ॥ २४८ ॥ दाक्षिण्येनाथ लोभेन, परस्मै जातु यन्मया । मिथ्यात्वमुपदिष्टं त—न्मृषाऽऽस्तामखिलं मम ॥ २४९ ॥ अलसत्वादियोगेन, यदहं धर्मकर्मणि । बलं गोपितवान् व्यर्थं, धर्मस्खलितमस्तु तत् ॥ २५० ॥ प्रतिमापुस्तकादीनां, चरणादिविघट्टनैः । आशातना व्यरचि या, सा सर्वाऽपि विलीयताम् ॥ २५१ ॥ निष्पापीकरणेनैवं, सवनेनेव सर्वतः । विशुद्धात्मा स राजर्षिः, शिश्रियेऽनशनं ततः ॥२५२ ॥ ऊचे च यन्मया वित्त—मर्जित्वा न्यायवर्त्मना । सप्तक्षेत्र्यां किमप्युप्तं, तत्पुण्यमनुमोदये ॥ २५३ ॥

१ अनृतम्. २ आदिना रूप्यं कुप्य च प्राह्यम्. ३ एकाग्रचेताः सन्. ४ मृषा स्यादखिलम्, प्र०-मिथ्या भवतु. ५ मिथ्या (भवतु). ६ दुष्कृतम्. ७ सवनं-स्नानम्.

॥२५४॥ शत्रुंजयादितीर्थानां, सद्देवगुरुपूजाभि—रमारिकरणेन च। निर्वीरा वित्तमुक्त्याऽपि, यत् पुण्यं तत् स्मराम्यहम् ॥२५४॥ शत्रुंजयादितीर्थानां,
यात्राः क्षपितपातकाः। निर्माय यन्मया चक्रे, श्रेयस्तत् परिभावये ॥ २५५ ॥ शरणं तीर्थकृत्सिद्ध—साधुधर्मा भवंतु
मे। एत एव जगत्पूज्या—श्चत्वारः संतु मंगलम् ॥ २५६ ॥ मामकोऽयं ममात्मैव, चैतन्यमयविग्रहः। देहाद्याः सर्वे
एवैते, भावाः सांयोगिकाः पृथक् ॥ २५७ ॥ जीवानामिह यद् दुःखं, तद् देहाद्यैरसंशयम्। तस्मादवश्यहातव्यां—स्त्रिधा
तान् व्युत्सृजाम्यहम् ॥२५८॥ ततश्चित्तमुपस्कृत्य, शुभध्यानेन भूधवः। निष्प्रपंचोऽस्मरत् पंच—परमेष्ठिनमस्क्रियाः॥२५९॥
सर्वज्ञं हृदि संस्मरन् गुरुमपि श्रीहेमचंद्रप्रभुं, धर्मं तद्गदितं च कल्मषमषीप्रक्षालनापुष्करम्। व्योमाग्न्यर्यमवत्सरे (१२३०)
विपलहर्युत्सर्पिमूर्च्छाभरो, मृत्वाऽवाप कुमारपालनृपतिः स व्यंतराधीशताम् ॥ २६० ॥ ( शार्दूलविक्रीडितम् ) तस्मिन्
गरासौ क्षितिपे तदीयः, परिच्छदो म्लानिपदं बभूव। अस्तं समाजग्मुषि धामधाम्नि, विकस्वरः किं कमलाकरः स्यात् ?
॥ २६१ ॥ ( उपजातिः ) विधाय संस्कारविधिं महर्द्ध्या, चौलुक्यभूमीपतिपुंगवस्य। अंत्याः क्रियास्ता विदधुः समस्ता—
स्तन्नातृपुत्राजयपालमुख्याः ॥ २६२ ॥ ( उपजातिः ) अथ तथाविधधार्मिकगूर्जरा—धिपविपत्तिविषादितचेतसः। कवि-
वराः स्मृततद्गुणगौरवा, व्यरचयन्निति काव्यपरंपराम् ॥ २६३ ॥ ( द्रुतविलंबितम् ) क्षीणो धर्ममहोदयोऽद्य करुणा प्राप्ता
कथाशेषतां, शुष्का नीतिलता विचारसरणिः शीर्णा गता साधुता। औचित्यं च परिच्युतं जिनमतोल्लासः कशीयानभू—
च्छ्रीचौलुक्यमहीपतौ क्षितितलात् स्वर्लोकमासेदुषि ॥ २६४ ॥ ( शार्दूलविक्रीडितम् ) निर्दग्धस्त्रिदशद्रुमः सुरगवी प्रच्या-

१ क्षिपित० प्र० २ संयोगिकाः, प्र. ३ देहादीन्. ४संस्कृत्य. ५ जलम्. ६ पंक्तिः. ७ प्राप्ते.

विता प्राणतो, नीतः कामघटः कपालघटनां चिंतामणिश्चूर्णितः । एकैकोचितदत्तलक्षकनकप्रोज्जीवितार्थिव्रजं, दैवेनाद्य कुमारपालनृपतिं नीत्वा यशःशेषताम् ॥ २६५ ॥ ( शार्दूल० ) भूयांसोऽपि भवंतु भूमिपतयो निःसीमदोर्विक्रमा—स्तन्मध्ये दधते न कोऽपि समतां चौलुक्यधात्रीभृतः । द्यूतादिव्यसनं निवार्य रुदतीवित्तं च मुक्त्वैव यो, मारिं वारितवांश्चतुर्दशसमा विष्वक्क्षमामंडले ॥ २६६ ॥ ( शार्दूल० ) लोको मूढतया प्रजल्पतु दिवं राजर्षिरध्यूषिवान्, ब्रूमो विज्ञतया वयं पुनरिहैवास्ते चिरायुष्कवत् । स्वांते सच्चरितैर्नभोऽब्धिमनुभिः ( १४४० )कैलासवैहासिकैः, प्रासादैश्च बहिर्यदेष सुकृती प्रत्यक्ष एवेक्ष्यते ॥ २६७ ॥ ( शार्दूल० )

अथ भुजविभवेन राज्यलक्ष्मीं, स्वयमपि तां कलयंतमाकलय्य । महमहिम विधाय राज्यधुर्या—स्तमजयपालमतिष्ठिपन्नृपत्वे ॥ २६८ ॥ ( पादाकुलकम् ) निरीक्ष्य राजानमुदित्वरं तं, विलोचनाऽऽसेचनकं स्वकांत्या । उल्लासमासाद्य महांतमंतः, पौरास्तदानीं कुमुदांबभूवुः ॥ २६९ ॥ ( उपजातिः ) एवं चैतदनेकधार्मिककथासारं विचारांचितं, संक्षेपेण कुमारपालनृपतेः पूर्तिं चरित्रं ययौ । विस्तारेण तु तस्य पुण्यपुरुषस्यामूलचूलं न तद्, वक्तुं सोऽपि सहः सहस्ररसनो यः स्यात् स्वयं वाक्पतिः ॥ २७० ॥ ( शार्दूल० ) प्रपंचिताः संति यथोचितं ते, धर्मादयोऽस्मिन् सकलाः पुमर्थाः । तदर्थिना भव्यजनेन सम्यग्, निशम्यमेतच्चरितं सदैव ॥ २७१ ॥ ( उपजातिः ) न प्राचीनकवीनलीनयशसे नैदंयुगीनस्फुर—द्विद्वत्साम्यकृते न चात्मधिषणाज्ञप्त्यै ममायं श्रमः । किंतु स्याच्चरितं सतां विरचितं निस्सीमपुण्यर्द्धये, ध्यात्वैवं

१ वर्षान् यावत्. २ गतवान्. ३ हिमालयहास्यकर्तृभिः. ४ राज्यकार्यवाहका पुरुषाः. ५ पक्षे चंद्रम्. ६ समर्थः. ७ चरित्रे

दद्दंभे मया किमपि तच्चौलुक्यपृथ्वीपतेः ॥ २७२ ॥ ( शार्दूल० ) नेदृग् राजकथेश्चिरंतनमनुस्यूतं चरित्रं क्वचि—न्नाना-
कारतया चकासति सतां वक्त्रे प्रबंधाः पुनः । यादृग्दृष्टमिदं प्रभावकचरित्रादौ मया तादृशं, दृब्धं तेन न मे बुधैरधि-
कता वाच्या न च न्यूनता ॥२७३॥ ( शार्दूल० ) न पदंपदवी नव्या भव्या न वाच्या(स्य) विचिलता, न च शुचिरलं-
कारः स्फारश्चकास्ति रसोऽत्र न । तदपि चरितं विज्ञायैतत् कुमारमहीभृतः, सुकृततृषया दृश्यं शुद्धं विधाय विशारदैः
॥ २७४ ॥ ( हरिणी ) श्रीविक्रमनृपाद् द्विद्वि-मन्वब्देऽ ( १४२२ ) यमजाऽयत । ग्रंथः ससप्तत्रिशती-षट्सहस्राण्यनुष्टु-
भाम् (६३०७) ॥ २७५ ॥ यावद् द्योतयतः स्वदीधितिभरैर्द्यावापृथिव्यंतरं, सूर्याचंद्रमसौ निरस्ततमसौ नित्यप्रदीपाविव ।
तावत् तर्पयतादिदं नवसुधानिस्यंदवत् सुंदरं, पृथ्वीपालकुमारपालचरितं चेतांसि पुण्यात्मनाम् ॥ २७६ ॥ ( शार्दूल० )

१ विहितम्. प्र० २ प्रथितम्. ३ पदशोभा—पदरचना—पदपाण्डित्यमितियावत्. ४ अपूर्वा. ५ सुन्दरा.

इति श्रीकृष्णर्षीयश्रीजयसिंहसूरिविरचिते महाकाव्ये परमार्हतश्रीकुमारपालभूपालचरित्रे
श्रीकुमारपालस्वर्गगमनवर्णनो नाम दशमः सर्गः ॥ दशानां मिलने वृत्तसंख्या ६०५२ ॥

## अथ ग्रन्थकर्तुः प्रशस्तिः ॥

वंशे वीरजिनाधिराजगणभृच्छ्रीमत्सुधर्मप्रभो—रासीदार्यसुहस्तिशिष्यमुकुटः श्रीगुप्तसूरिप्रभुः । तस्माच्चारणलब्धिकेलिशरणाच्छ्रीचारणाख्यो गणः, ख्यातः स्वस्तरुवत् सदैव सुमनःस्तोमेन संसेवितः ॥ १ ॥ (शार्दूल०) शाखा तस्य तुरीयका ततककुप्श्रीवज्रनागर्यलं, वर्या श्रीस्थितिधर्मनाम विटपप्रख्यं द्वितीयं कुलम् । तत्रासीदपसीमलब्धिवसतिर्वंदारुवृंदारक—व्रातख्याततपाः कृपाजलनिधिः श्रीकृष्णनामा मुनिः ॥ २ ॥ ( शार्दूल० ) यो मित्रव्ययदुःखतो व्रतमधाद् योऽभिग्रहान् दुर्ग्रहान्, दध्रे व्यालविपाकुलान् पदजलैरुज्जीवयामास यः । प्रत्यब्दं चतुरुत्तरां व्यरचयद् यः पारणात्रिंशतं (३४), स क्ष्मापालविबोधनः शमधनः कृष्णर्षिरास्तां मुदे ॥ ३ ॥ (शार्दूल०) श्रीमन्नागपुरे पुरा निजगिरा नारायणश्रे-

---

१ थेरे अज्जरोहणे १, भद्दजसे २ मेह ३ गणि य कामिड्ढि ४, सुट्ठिय ५ सुप्पडिबुद्धे ६, रक्खिय ७ तह रोहगुत्ते य ८ ॥१॥ इसिगुत्ते ९ सिरिगुत्ते १०, गणी य बंभे ११ गणी य तह सोमे १२। दश दो य गणधरा खलु, एए सीसा सुहत्थिस्स ॥ २ ॥

[ स्थविरः आर्यरोहण' १, भद्रयशाः २ मेघः ३ गणिश्च कामर्द्धि' ४। सुस्थित ५ सुप्रतिबुद्धः ६, रक्षितः ७ तथा रोहगुप्तश्च ८ ॥ १ ॥ ऋषिगुप्तः ९ श्रीगुप्तः, १० गणी च ब्रह्मा ११ गणी च तथा सोमः १२। दश द्वौ च गणधरा. खलु, एते शिष्या' सुहस्तिनः ॥ २ ॥ ] इति कल्पसूत्रेऽष्टमक्षणे

२ थेरेहिंतो णं सिरिगुत्तेहिंतो हारियसगुत्तेहिंतो इत्थ णं चारणगणे नामं गणे निग्गए तस्सणं इमाओ चत्तारि साहाओ सत्त य कुलाइ एवमाहिज्जन्ति, से किं तं साहाओ ? साहाओ एवमाहिज्जंति तंजहा हारियमालगारी १ संकासिया २ गवेधुया ३ वज्जनागरी ४ से तं साहाओ से किं तं कुलाइं ? कुलाइ एवमाहिज्जंति तं जहा पढमित्य वत्थलिज्जं बीयं पुण पी(ट्ठी)इधम्मियं होइ इत्यादि श्रीकल्पसूत्रेऽष्टमक्षणे. ३ प्रसिद्धिं गतः. ४ पल्लवसदृशम्.

ष्ठितो, निर्माप्योत्तमचैत्यमंतिमजिनं तत्र प्रतिष्ठाय च । श्रीवीरान्नवचंद्रसप्तशरदि ( ७१९ ) श्वेतेपुंतिथ्यां शुचौ, वंभाद्यान् समतिष्ठेपत् स मुनिराड् द्वासप्ततिं गोष्ठिकान् ॥ ४ ॥ ( शार्दूल० ) तस्माद् विस्मयनीयचारुचरिते श्रीसूरिचक्रे क्रमा—ज्जाते श्रीजयसिंहसूरिरुदभून्निर्ग्रंथचूडामणिः । संवद्विक्रमतस्त्रयोदशशतेष्वेकोत्तरेष्व ( १३०१ ) केरुक्, क्रान्तं संघमजीजिवज्जलभरैर्यो मंत्रकृष्टैर्मरौ ॥ ५ ॥ (शार्दूल०) प्रभावकशिरोमणिः प्रणतलोकचिंतामणिः, प्रसन्नशशभृत्प्रभुस्तदनु दिद्युते दीप्रधीः । यदीयचरणांबुजं निजशिरःकिरीटाकरु—ग्भरेण धरणीभुजो विकसितत्वमानिन्यिरे ॥ ६ ॥ ( पृथ्वी ) प्रत्यब्दं दीनदुःस्थोद्धृतिसुकृतकृते दीयमानं समानं, साक्षाद् दीनारलक्षं तृणमिव कटंति प्रोज्झ्य निर्लोभभावात् । एकः सोऽयं महात्मा न पर इति नृपश्रीमहम्मदसाहेः, स्तोत्रं प्रापत् स तापं क्षपयतु भगवान् श्रीमर्हेंद्रप्रभुर्नः ॥ ७ ॥ ( स्रगधरा ) तत्पट्टपूर्वाचलमंडनैक–चंडद्युतिः श्रीजयसिंहसूरिः । कुमारपालक्षितिभृच्चरित्र—मिदं व्यधत्त स्वगुरुप्रसादात् ॥ ८ ॥ ( उपजातिः ) अवधानसावधानः, प्रमाणनिर्ष्णः कवित्वनिष्णातः । अलिखन्मुनिनयचंद्रो, गुरुभक्त्याऽस्याऽऽद्यमादर्शम् ॥ ९ ॥ ( आर्या ) उच्चैर्हारिविसारिवारिधिजले दिक्पत्रमालाकुले, पातालस्थितशेषनालकलिते लक्ष्मीविलासोचिते । यावत् पुष्यति मेदिनीसरसिजे स्वर्णाचलः कर्णिका—भावं तावदिदं चरित्रममलं प्रीणातु विद्वज्जनम् ॥ १० ॥ ( शार्दूल० ) इति

इति श्रीकुमारपालभूपालचरित्रं संपूर्णम् ॥

---

१ शुक्लपंचमीतिथौ. २ छि० प्र. ३ समूहे. ४ घा० प्र. ५ झटिति. प्र. ६ स्तुतिम्. ७-८-९ कुशलः.

परिशिष्टम्, नं० १

## अथ टिप्पणकारप्रशस्तिः ॥

वीरो वीरशिरोमणिर्जिनपतिर्वीरं स्तुवेऽहं सदा, वीरेणापि विनाशिता भवततिर्वीराय तन्वे नमः ।
वीराच्छासनमेतदेव चलितं वीरस्य तीव्रं व्रतं, वीरेऽनन्तगुणाः शुभाः प्रकटिताः श्रीवीर ! सिद्धिं कुरु ॥ १ ॥ शार्दूल० ॥
श्रीमद्वीरजिनस्य मुख्यगणभृत् पट्टे सुधर्मा ततः, संजाता अतिराजमानचरणा देवेन्द्रसेवाभृतः ।
तेषां पट्टपरंपरासुविदिते श्रीसूरिचक्रे क्रमा–ज्जातो भूमिविभूषको जनगुरुः सान्द्रात्सुबोधप्रदः ॥ २ ॥ शार्दूल० ॥
लोके लब्धजयः स हीरविजयः सूरीशचिन्तामणि–स्तच्छिष्यो विदितागमो विजयसेनः सर्वलोकैर्नतः ।
श्रीदेवो विजयैर्युतोऽभिरमते सास्यास्पदे सूरिराट्, सूरीणां प्रमुखो बभौ विजयसिंहस्तत्पदे शर्मदः ॥ ३ ॥ शार्दूल० ॥
भेजे तस्य पदं स सत्यविजयः पन्न्यासचूडामणिः, कर्पूरोऽपि गणिर्बभौ च सततं संवेगपूर्णः सदा ।
धर्मोद्द्योतकरः क्षमाविजय आसीत्तस्य पट्टे गणि–र्योगीन्द्रो विजयैर्युतो जिनगणिर्ज्ञानी सतामग्रणीः ॥ ४ ॥ शार्दूल० ॥
पूज्योऽसौ विजयामृतोऽपि च गणिर्जातो गुमानस्ततस्–तेजस्को गणिकस्ततोऽपि घनको भूतो गणीशो गुणी ।
मान्योऽयं मुनिपुंगवोऽपि विनयः श्रेयस्करः सर्वदा, ज्ञातो बुद्धिमताम् उमेद्विजयः पंन्यासभूपाधरः ॥ ५ ॥ शार्दूल० ॥
तच्छिष्यो मुनिराट् शुभो विजयते प्रज्ञालचूडामणिः, श्रीमान् क्षान्तिगणी च शोभनतरो विख्यातसिद्धान्तवित् ।
पुष्पो नाम मुनिः प्रसिद्धचमरेन्द्रो यस्य शिष्यौ च द्वौ, राजेते विनयान्वितौ मुनिवरौ ज्ञानस्य चाभ्यासिनौ ॥ ६ ॥ शार्दूल० ॥

तृतीयो यस्य शिष्योऽस्ति, क्षमादिगुणधारकः । श्रीक्षमाविजयो नाम्ना, मासक्षपणकारकः ॥७॥ युग्मम् ॥ अनुष्टुप् ॥

लूनारे विहिता सुसूत्रकथिता मूर्तिप्रशंसा घना । येनाकारि च वाचना भगवतीसूत्रस्य मुम्बापुरे
यज्ज्ञानामृतपानतो भुवि तले भव्याः सुबोधं गताः । सोऽयं क्षान्तिगणी मुदं ददतु वः संसारपारंगमी ॥८॥शार्दूल०॥

टीप्पणं शोधनं चास्य, वाचनं भगवत्यनु । मुम्बापुर्यां कृतं यैश्च, मुद्रणस्योपदेशनम् ॥ ९ ॥ अनुष्टुप् ॥

उषर्बुधज्वलद्विद्या-प्रतापा मोहनाशकाः । श्रीक्षान्तिविजयास्ते च, जयन्ति गणिसत्तमाः ॥ १० ॥"

मुम्बापूरे कृता येषां, प्रशस्तिरतिशोभना । तेभ्योऽनुयोगसूरिभ्यो, नमोऽस्तु 'शिव' कारणम् ॥ ११ ॥"

## परिशिष्टम्, नं० २

पं० श्रीक्षान्तिविजयगणिकृता संखेश्वरमण्डनश्रीपार्श्वनाथस्तुतिः ॥ शार्दूलविक्रीडितम् ॥

श्रीसंखेश्वरमंडनं जिनवरं पार्श्वं स्तुवे कामदं, श्रीमन्तोऽन्यजिनेश्वरा जगति ये तान् नौम्यहं सर्वदान् ।
निःश्रेयस्पददायकं नतसुरं वंदे तथा चागमं, श्रीपद्मावति ! देवते ! भव सदैवोमेदशिष्ये शुभा ॥ १ ॥

पं० श्रीक्षान्तिविजयगणिकृता लोद्रवापत्तन ( जेसलमेर ) मण्डनश्रीचिंतामणिपार्श्वनाथस्तुतिः ॥ अनुष्टुप् ॥

वामाकुक्षिसरो हंसं, श्रीचिन्तामणिसंज्ञितम् । श्रीमत्पार्श्वजिनं नौमि, लोद्रवापत्तनस्थितम् ॥ १ ॥
देवेन्द्रवन्दिताः सार्वा-स्तीर्थेशाः सर्वदर्शिनः । विश्वोपकारकर्तारो, जिनाः सर्वे जयन्तु ते ॥ २ ॥
मुक्तिमार्गोपदेष्टारं, मिथ्याध्वान्तविनाशकम् । सर्वज्ञदेशितं वन्दे, सिद्धान्तार्कं सुभावतः ॥ ३ ॥

पार्श्वयक्षाश्चतुर्हस्ताः, पद्मावत्या समन्विताः । विभुवन्द्यस्य संघस्य, भवन्तु क्षान्तिदाः सदा ॥ ४ ॥

पं० श्रीक्षान्तिविजयगणिकृता सूरिस्तुतिः ॥ अनुष्टुप् ॥

नमस्कृत्य महावीरं, स्तुवे वीरं मुनीश्वरम् । चन्द्रात् को[1] लभ्यते लोकैः ?, साहित्यवाचनेन किम्[2] ? ॥ १ ॥

'लण्' सूत्रस्थेन कः[3] साध्य-श्चावर्णैत्संज्ञकेन वै ? । केषां[4] संगः शुभो लोके, सज्जनैः परिकीर्तितः ? ॥ २ ॥

साधुलोकैश्च कः[5] सेव्यः ? कामुकानां च कः[6] प्रियः ? । प्राणार्पणप्रयोगेण, सैनिकैः को[7] हि प्राप्यते ? ॥ ३ ॥

आशीर्वादे च किं[8] वाच्यं ?, कस्य[9] धर्मः शिवप्रदः ? । प्रश्नोत्तराद्यवर्णेन, भव[10] क्षान्तेर्वरप्रदः ॥ ४ ॥

चतुर्भिः कलापकम् ।

पंन्यासश्रीवीरविजयगणि ( जैनाचार्यविजयवीरसूरि ) स्तुत्यष्टकम् पं० श्रीक्षान्तिविजयनिर्मितम् ॥ अनुष्टुप् ॥

नत्वा विश्वेश्वरं देवं, वर्द्धमानं जिनेश्वरम् । धृत्वा श्रीस्वगुरुं चित्त, उमेदविजयं गणिम् ॥ १ ॥

स्मृत्वा सरस्वतीं देवीं, सर्वदा ज्ञानदायिनीम् । क्षान्त्यादिविजयेनेद-मष्टकं सुविरच्यते ॥ २ ॥ युग्मम् ॥

सर्वशान्तिप्रदं नित्यं, सर्वशास्त्रविशारदम् । सूर्यवत् सर्वजीवाना-मज्ञानान्धनिशापहम् ॥ ३ ॥

निशेशवच्छुभाकारं, प्रत्यूहव्यूहवारकम् । संसारभयभीतानां, मोक्षाभयप्रदायकम् ॥ ४ ॥

---

१ आह्लादः. २ चातुर्यम्. ३ दूरप्रत्याहारः. ४ यतीनाम् ५ वीरप्रभुः. ६ रतिपतिः. ७ विजयः. ८ जय इति. ९ यतेः. १० (हे) आचार्यवीरविजय ! क्षान्तेः- क्षान्तिविजयस्य वरप्रदो भव इति प्रार्थना ॥

गुर्जरस्य शिरोरत्नं, राजते राधिकापुरी । रसद्वि ( २६ ) संख्यकैः श्रेष्ठै-र्जिनगेहैर्विभूषिता ॥ ५ ॥
यस्यां श्राद्धा धनैर्युक्ता, वसन्ति च प्रमोदगाः । जिनभक्तौ रताः श्रेष्ठाः, सद्गुरूपासिनः सदा ॥ ६ ॥
तत्रस्थं स्वगृहं त्यक्त्वा, योषिद्द्रविणसंयुतम् । गृहीतः संयमो येन, सम्यग् मोक्षप्रदायकः ॥ ७ ॥
सदाचाररतैरद्य-तनैर्मुनिवरैस्तु यः । उमेदविजयो वंद्य—स्तस्मादर्हत्पदानुगात् ॥ ८ ॥
पंन्यासपदवीप्राप्तं, गणीतिपदभूषितम् । मुक्तं चाशेषपापेभ्यो, ज्ञानरत्नसमन्वितम् ॥ ९ ॥
परोपकारकर्तारं, जिनाज्ञाप्रतिपालकम् । गुरुं(सूरिं)विजयवीराख्यं, तं वन्दे पूज्यशासनम् ॥१०॥ अष्टभिः कुलकम् ॥
गुर्वष्टकमिदं पुण्यं, ये पठन्ति दिने दिने । भुक्त्वेह सकलान् भोगान्, मोक्षं यास्यन्ति शाश्वतम् ॥ ११ ॥
अष्टषण्णवभू ( १९६८ ) वर्षे, द्वादश्यां रविवासरे । नभः शुक्लस्य चैतद्धि, स्तोत्रं संपूर्णतामगात् ॥१२॥ युग्मम् इति ॥

## परिशिष्टम्, नं० ३

सुमेरुशिखरं दृष्ट्वा, गौरी पृच्छति शंकरम् । कोऽयं पर्वत इत्येष ?, कस्येदं मंदिरं ? प्रभो ! ॥१॥ कोऽयं मध्ये पुनर्देवः ?, पादान्ता का च नायिका ? । किमिदं चक्रमित्यत्र ?, तदन्ते को मृगो मृगी ? ॥ २ ॥ के वा सिंहा ? गजाः के वा ?, के चासी पुरुषा नव ? । यक्षो वा यक्षिणी केयं ?, के वा चामरधारकाः ? ॥३॥ के वा मालाधरा एते ?, गजारूढाश्च के नराः ? । ॥ ४ ॥ एतावपि महादेव !, कौ वीणावंशवादकौ ? ॥ ४ ॥ दुन्दुभेर्वादकः को वा ?, को वाऽयं शंखवादकः ? । छत्रत्रयमिदं किंवा ?, किंवा भामण्डलं प्रभो ! ॥ ५ ॥ ईश्वरो ( र उ ) वाच—

श्रृणु देवि ! महागौरि !, यत्त्वया पृष्टमुत्तमम् । कोऽयं पर्वत इत्येष?, कस्येदं मन्दिरं ? प्रभो ! ॥ ६ ॥ पर्वतो मेरु-
रित्येष, स्वर्णरत्नविभूषितः । सर्वज्ञमन्दिरं चैतद्, रत्नतोरणमण्डितम् ॥ ७ ॥ अयं मध्ये पुनः साक्षात्, सर्वज्ञो जगदी-
श्वरः । त्रयस्त्रिंशत्कोटिसंख्या, यं सेवन्ते सुरा अपि ॥ ८ ॥ इन्द्रियैर्न जितो नित्यं, केवलज्ञाननिर्मलः । पारंगतो भवां-
भो धे-र्यो लोकान्ते वसत्यलम् ॥९॥ अनन्तरूपो यस्तत्र, कषायैः परिवर्जितः । यस्य चित्ते कृतस्थाना, दोषा अष्टादशा-
पि न ॥ १० ॥ लिङ्गरूपेण यस्तत्र, पुंरूपेणात्र वर्तते । रागद्वेषव्यतिक्रान्तः, स एष परमेश्वरः ॥ ११ ॥ आदिशक्ति[1]-
र्जिनेन्द्रस्य, आसने[2] गर्भसंस्थिता[3] । सहजा[4] कुलजा[5] ध्याने[6], पद्महस्ता वरप्रदा[7] ॥ १२ ॥ धर्मचक्रमिदं देवि !, धर्ममार्गप्रवर्त-
कम् । सत्त्वं नाम मृगस्सोऽयं, मृगी च करुणा मता ॥ १३ ॥ अष्टौ च दिग्गजा एते, गजसिंहस्वरूपतः । आदित्याद्या
ग्रहा एते, नवैव पुरुषाः स्मृताः ॥ १४ ॥ यक्षोऽयं गोमुखो नाम, आदिनाथस्य सेवकः । यक्षिणी रुचिराकारा, नाम्ना
चक्रेश्वरी मता ॥ १५ ॥ इन्द्रोपेन्द्राः स्वयं भर्तु-र्जाताश्चामरधारकाः । पारिजातो वसन्तश्च, मालाधरतया स्थितौ ॥१६॥
अन्येऽपि ऋतुराजा ये, तेऽपि मालाधराः प्रभोः । भ्रष्टेन्द्रा गजमारूढाः, कराग्रे कुंभधारिणः ॥ १७ ॥ स्नात्रं कर्तुं समा-
याताः, सर्वसंतापनाशनम् । कर्पूरकुङ्कुमादीनां, धारयन्तो जलं बहु ॥ १८ ॥ यथा लक्ष्मीसमाक्रान्तं, याचमाना निजं प-
दम् । तथा मुक्तिपदं कान्त—मनन्तसुखकारणम् ॥ १९ ॥ हूहूतुम्बरुनामानौ, तौ वीणावंशवादकौ । अनन्तगुण-
संघातं, गायन्तौ जगतां प्रभोः ॥ २० ॥ वाद्यमेकोनपञ्चाश—द्भेदभिन्नमनेकधा । चतुर्विधा अमी देवा, वादयन्ति

१ देवीमूर्त्ति . २ पद्मासने ( पवासणमा ). ३ मध्यस्था ४ सहजाता ५ उत्तमशिल्पिविनिर्मिता. ६ ध्यानविषया-ध्यानस्था. ७ वरदमुद्रायुक्ता.

स्वभक्तितः ॥ २१ ॥ सोऽयं देवो महादेवि !, दैत्यारिः शङ्खवादकः । नानारूपाणि बिभ्राण—रेककोऽपि सुरेश्वरः ॥२२॥
जगत्त्रयाधिपत्यस्य, हेतुर्छत्रत्रयं प्रभोः । अमी च द्वादशादित्या, जाता भामण्डलं प्रभोः ॥ २३ ॥ पृष्ठलग्ना अमी देवा,
याचन्ते मोक्षमुत्तमम् । एवं सर्वगुणोपेतः, सर्वसिद्धिप्रदायकः ॥ २४ ॥ एष एव महादेवि !, सर्वदेवनमस्कृतः । गोप्याद्-
गोप्यतरः श्रेष्ठो, व्यक्ताव्यक्ततया स्थितः ॥२५॥ आदित्याद्या भ्रमन्त्येते, यं नमस्कर्तुमुद्यताः । कालो दिवसरात्रिभ्यां, यस्य
सेवाविधायकः ॥२६॥ वर्षाकालोष्णकालादि—शीतकालादिवेषभृत् । यत्पूजार्थं कृता धात्रा, आकरा मलयादयः ॥२७॥
काश्मीरे कुङ्कुमं देवि !, यत्पूजार्थं विनिर्मितम् । रोहणे सर्वरत्नानि, यद्भूषणकृते व्यधात् ॥ २८ ॥ रत्नाकरोऽपि रत्नानि,
यत्पूजार्थं च धारयेत् । तारकाः कुसुमायन्ते, भ्रमन्तो यस्य सर्वतः ॥ २९ ॥ एवं सामर्थ्यमस्यैव, नापरस्य प्रकीर्त्तितम् ।
अनेन सर्वकार्याणि, सिध्यन्तीत्यवधारय ॥ ३० ॥ परात्परमिदं रूपं, ध्येयाद् ध्येयमिदं परम् । अस्य प्रेरकता दृष्टा,
चराचरजगत्त्रये ॥ ३१ ॥ दिग्पालेष्वपि सर्वेषु, ग्रहेषु निखिलेष्वपि । ख्यातः सर्वेषु देवेषु, इन्द्रोपेन्द्रेषु सर्वदा ॥ ३२ ॥
इति श्रुत्वा शिवाद् गौरी, पूजयामास सादरम् । स्मरन्ती लिंगरूपेण, लोकान्ते वासिनं जिनम् ॥ ३३ ॥ ब्रह्मा विष्णु-
स्तथा शक्रो, लोकपालास्सदेवताः । जिनार्चनरता एते, मानुषेषु च का कथा ? ॥ ३४ ॥ जानुद्वयं शिरश्चैव, यस्य घृष्टं
नमस्यतः । जिनस्य पुरतो देवि !, स याति परमं पदम् ॥ ३५ ॥

इति श्रीविश्वकर्माविरचिताऽपराजितवास्तुशास्त्रमध्ये श्रीजिनमूर्त्तिश्लोकाः ॥ एतावानेव ग्रन्थाभासः ॥

॥ इति श्रीकुमारपालभूपालचरित्रम् ॥

न. ५०००

श्रीमज्जैनसिद्धान्तवाचनाप्रकाशनकारिका

# श्रीमती आगमोदयसमितिः

स्थापना-श्रीमद्वीरतीर्थे २४४१ माघशुक्लदशम्यां




वीरसंवत् २४४५ आषाढशुक्लत्रयोदशी । शास्त्रं सर्वत्रगं चक्षुः, सर्वज्ञानशिरोमणिः । विक्रमसंवत् १९७६ क्राइस्टसन १९१९